"ओ३म्"

महर्षि दयानन्द सरस्वती स्वामी विरचितः

# सत्यार्थ प्रकाशः

(संस्कृतानुवादः)

प्रकाशिका
सार्वदेशिक आर्यप्रतिनिधि सभा
महर्षि दयानन्द भवन, रामलीला मैदान, नई दिल्ली-२

॥ ओ३म् ॥

# सत्यार्थप्रकाशः

(संस्कृतानुवादः)

वेदादिविविधसच्छास्त्रप्रमाणसमन्वितः
श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीमद्दयानन्दसरस्वतीस्वामिविरचितः

वृन्दावनगुरुकुलाधीतविद्येन काव्यतीर्थोपाधिभृता
पण्डितशंकरदेवपाठकेन देवगिरालंकृतः

परमहंसस्वामिजगदीश्वरानन्देन सम्पादितः

प्रकाशिका
सार्वदेशिक-आर्यप्रतिनिधि सभा,
महर्षि दयानन्द भवन, रामलीलाशाद्वलः, नयी दिल्ली-२

प्रकाशक:
सार्वदेशिक-आर्यप्रतिनिधि सभा,
महर्षि दयानन्द भवन,
रामलीला मैदान,
नई दिल्ली-११०००२

© सर्वाधिकारा: सभाधीना:

संस्करणम् : द्वितीयम्, जून १९८६
दयानन्दाब्द: १६२

मूल्यम् : पञ्चाशत-(५०)-रुप्यकाणि

मुद्रक :
दुर्गा मुद्रणालय,
५४, सुभाषपार्क एक्सटेंशन,
नवीन शाहदरा, दिल्ली-११००३२

# सम्पादकीयम्

सद्धार्मिकक्षेत्रे देवर्षिदयानन्दविरचितः "सत्यार्थप्रकाशः" सर्वोत्कृष्टधर्मसंरचनाया गौरवमावहति। ग्रन्थरत्नमिदं वैदिकधर्मस्य विश्वकोषरूपेणस्थितम्। वस्तुतश्चतुर्दशगोलिकायुतं पिस्तौलशस्त्रमिदं येनैकतोधर्मक्षेत्रे सद्धर्मपरायणो मानवलोको भ्रान्तासत्यमतमतान्तरेभ्यः स्वात्मानं संरक्षितुं पारयति, अपरतश्च भ्रान्तिमावहतोऽसत्य मतानुयायिनः समाक्रान्तुञ्च प्रभवति।

ग्रन्थरत्नस्यास्यदशसमुल्लासात्मके पूर्वभागे मानवलोकस्य सर्वे ह्येव जीवनोन्नतिक्रमविन्दवः सुप्रकाशिता भवन्ति। शिक्षाग्रहणादारभ्यमोक्षप्राप्तिपर्यन्तं सकलमभ्युपायजातमस्मिन्नुपवर्णितम्, अर्थात् वर्णाश्रमधर्मविवेचनम्, सृष्टिश्रुत्योरुत्पत्तिवर्णनम्, राजनीतिदिग्दर्शनादिकञ्च सर्वमपि जीवनतत्त्वमत्र संग्रहीतम्। उत्तरभागे च समुल्लासचतुष्टये भारतवर्षे देशान्तरेषु च प्रचलितानां सद्धर्मप्रदूषक-अवैदिकमतमतान्तराणां विखण्डनञ्चात्र विशदरूपेणोपवर्णितम्।

एकस्यैव धर्मग्रन्थस्यास्य पूर्णाध्ययनेन शतशोधर्मग्रन्थानां विषया अधिगता भवन्ति। अस्य ग्रन्थस्य अंग्रेजी-फ्रैञ्च-चीनी-बंगला-गुजराती-मराठी-मलयालम-तेलगु-पञ्जाबी-उड़िया-असमिया-उर्दू-आद्यनेकभाषासु-अनुवादः सञ्जातः। संस्कृतज्ञेभ्यश्च संस्कृतभाषायामपिग्रन्थस्यास्यानुवादः समजनि। प्रस्तुतसंस्कृतानुवादो द्वाषष्ठिवर्षपूर्वं सम्पन्नमासीत्। संस्करणमिदमस्यैव संस्कृतानुवादस्य पुनर्मुद्रणरूपम्। क्रियमाणे च सम्पादनकार्ये या हि मुद्रणादिविषयका अशुद्धयोऽवशिष्टा आसन्, सर्वा ह्येव ताः पूर्णतः संशोधयितुं पूर्णप्रयासो व्यधायि। यत्र तत्र च कासाञ्चित् पंक्तीनामनुवादोऽप्यवशिष्ट आसीत्, सोऽपि मूलग्रन्थमनुरुध्य सर्वत्रैव परिपूर्णीकृतः। मुद्रणाङ्कनमपि पूर्वापेक्षया विशदीकृतम्—स्थूलीकृतञ्च। वयं न केवलमाशान्विता अपितु पूर्णविश्वस्ताः, यत्पूर्वापेक्षया भवन्तो ग्रन्थमिममतीवोपयोगिनमधिगमिष्यन्ति-इति। प्राक्तनानूदितग्रन्थेऽवशिष्टः "स्वमन्तव्यामन्तव्यप्रकाश-" प्रकरणस्यानुवादोऽपि संस्करणेऽस्मिन् परिपूर्णतामानीय सम्पूर्णग्रन्थस्यानुवादः सुपूरितः।

ग्रन्थस्य "ईक्ष्यवाचने" आचार्य-श्रीरविदत्त"गौतम" M. A. शास्त्री साहित्याचार्यमहोदयेन, कर्मवीरशास्त्रिमहोदयेन च यो महान् परिश्रमो व्यधायि तत्कृते सम्मान्यविद्वद्युगलायास्मै हार्दिकं—धन्यवादं व्याहरामि। प्रेससञ्चालकाय श्रीपण्डितरामसेवकमिश्राय, रामकृष्ण शर्मणे, बालकृष्ण शर्मणे, कर्मचारिवर्गाय च विशेषतः सर्वश्री राधेलाल-मुरारीलाल-प्रभृतिभ्योऽपि सस्नेहं साधुवादं वितरामि, येषां परिश्रमेण-ग्रन्थोऽयं परिशुद्धरूपेण युष्मत्समक्षे विराजते। इति।

विदुषामनुचरः
—जगदीश्वरानन्दः सरस्वती

वेदसदनम्
एच १/२, माडल टाउन,
दिल्ली-११०००९

# प्रकाशकीय

बहुत समय से हमारी प्रबल इच्छा और पावन भावना थी कि जहाँ महर्षि दयानन्द सरस्वती का अमर ग्रन्थ 'सत्यार्थ प्रकाश' उर्दू, पञ्जाबी, मराठी, तेलुगु, तमिल, मलयालम, कन्नड़, गुजराती, बंगाली, फ्रेञ्च, अंग्रेजी आदि अनेक भाषाओं में उपलब्ध है वहाँ संस्कृत के पण्डितों के लिए जो हिन्दी के ग्रन्थों को पढ़ना नहीं चाहते, इस ग्रन्थ का संस्कृत अनुवाद भी प्रकाशित किया जाए।

सत्यार्थप्रकाश का संस्कृत अनुवाद महर्षि दयानन्द की जन्मशताब्दी के अवसर पर पं० शंकरदेवजी पाठक ने किया था। यह ६२ वर्ष पुरानी बात है। इस समय यह ग्रन्थ उपलब्ध नहीं है।

सार्वदेशिक सभा इस ग्रन्थ को आफसैट द्वारा छपवाना चाहती थी। किन्तु स्वामी जगदीश्वरानन्दजी ने प्रकाशन सम्बन्धी उत्तरदायित्व अपने ऊपर लेकर प्रस्ताव किया कि महर्षि का यह अमर ग्रन्थ देववाणी संस्कृत में अति सुन्दर आधुनिक टाईप में छपना चाहिए।

अत: श्री स्वामीजी ने प्रकाशन सम्बन्धी देख-रेख तथा प्रूफ संशोधन की भी जिम्मेदारी स्वयं ही लेने का आग्रह किया। इस ग्रन्थ के प्रकाशन में जो परिश्रम श्री स्वामीजी ने किया है उसके लिए हम सब उनके आभारी हैं। हमें पूर्ण विश्वास है कि संस्कृत के विद्वान हमारे इस प्रयास से पूर्ण लाभ उठाकर ऋषिऋण से उऋण होंगे।

**रामगोपाल वानप्रस्थ**
प्रधान
सार्वदेशिक आर्यप्रतिनिधि सभा
रामलीला मैदान, नई दिल्ली

॥ ओ३म् ॥

# प्रास्ताविकम्

अयि सहृदयाः पाठकवर्य्याः !

अद्य भवतां पुरस्तात् समुपस्थाप्यते सभ्यसामाजिकानां हृदयाधिष्ठातृदैवतमज्ञानतमोपहं, वेदाप्रतिपादितमतखण्डकं सनातनवैदिकधर्ममण्डकं श्रीमतां महर्षिप्रवराणां दयानन्दस्वामिनां कृतिसर्वस्वं सत्यार्थप्रकाशनामकमनर्घग्रन्थरत्नम्। अत्र हि निर्भीकतया निष्पक्षपातया च सरण्या वेदविरुद्धा अर्थाः परित्याज्यत्वेन, श्रुतिस्मृतिप्रतिपादिताश्च विषयाः परिग्राह्यत्वेन सङ्गृहीताः सन्ति। नह्येवंविधो निष्पक्षो ग्राह्याग्राह्ययोः सत्यासत्ययोर्विशदो निर्णयः क्वापि मतान्तरपुस्तकेषु समवलोक्यते। अत्र प्रमाणत्वेन सञ्चिता मन्त्रसूत्रादिभागास्तत्तद्ग्रन्थानधीतानां साधारणमेधसामप्युपकारबाहुल्यमावहन्ति। एतत्पुस्तकस्य सर्वहितसाधकत्वेनैव स्वाध्यायरूपता सुतरां सङ्गच्छते। न केवलं पुस्तकमिदमुपकरोति सामाजिकानार्यान्, अपि तु सकलभूमण्डलवास्तव्यान् सर्वमतानुयायिनः। यतो हि एतन्निर्मातॄणां स्वामिपादानां स्वजन्मभूमेर्भारतवर्षस्यैवोपकारो नाभिप्रेत आसीत् प्रत्युत विश्वस्य भूगोलस्य। एवंविधः समुपयुक्तो ग्रन्थो यावानादृतो भवेत्तावान् तस्य समादरः स्वल्प एव।

सत्यार्थप्रकाशो हि अनेकासु भाषासु विविधेषु च रूपेषु सहस्रशो मुद्रितो दृग्गोचरीक्रियते। केवलं हिन्दीभाषायामेवस्य विराजते षोडशं संस्करणम्।

एवंसत्यपि सर्वभाषाजनन्यां, परमात्मसमादृतायां देवगिरि एतदभावो मनस्विनां प्रशस्तविदुषां मनःक्षोभं सततं जनयति स्मैव।

एतादृक्ष्वेव महानुभावेषु आर्यसमाजरत्नैर्महामान्यैः सुविख्यातमहिमभिः श्रीनारायणस्वामिभिः सदवसरोऽयं शताब्दिरूपः श्रीयुतां महर्षिवर्याणां चरणयोः संस्कृतभाषानूदिततत्कृतिभक्त्युपहारसमर्पणस्येत्यालोचमानैरतद्योग्येऽपि मयि दुर्वहोऽयं भारो न्यस्तः। एतद्दुष्करकार्यसम्पादनाक्षमोऽप्यहं महतामादेश इति तदाज्ञां शिरोधार्यां विधाय तत्परोऽभूवमनुवादकरणाय। एतत् कार्यं विदधता मया भूयांसि काठिन्यान्यनुभूतानि। तद्यथा केचित् शब्दार्थगभीरां शोभनालङ्कारालङ्कृतां निरवद्यामभिधेयसम्पदमुक्तिं गुर्वीं मन्यन्ते। अपरे तु शब्दानुरूपां सुरम्यां संस्कृतरचनां मान्यां प्राहुः। इतरे च गुरुभाव-परिपूर्णां प्रसादमाधुर्यवतीं सरसां भाषां लेख्यामभिदधते। इत्यादिभिर्बहुभिः काठिन्यैर्व्याहन्यमानेन मया शब्दानुवाद एवावलम्बितः।

यद्यपि सावहितेनैव मयैवं यतितं यथा नात्र समापतन्तु स्खलितानीति। तथापि मानुषस्याल्पज्ञतया तासामभ्युपगमः सर्वथा साहजिक एव। अतो ग्रन्थावसित्य-

ग्रन्थस्यास्य निर्माणे सत्यार्थस्य प्रकाश एव ममाभिप्रेतः। यथार्थस्य याथार्थ्ये-नालीकस्य चालीकत्वेन प्रतिपादनमेव सत्यार्थस्य प्रकाशः। नहि सत्यस्यासत्यत्वेना-सत्यस्य च सत्यत्वेन प्रकाशः सत्यमुच्यते अपितु यथावस्थितस्य पदार्थस्य याथार्थ्येन स्थापनं सत्यमिति गीयते। पक्षपातिनो जनाः स्वालीकस्यापि सत्यत्वप्रतिपादने ऽपरविरोधिमतावलम्बिनाञ्च सत्यस्याप्यलीकत्वसंसाधने प्रवृत्ता भवन्ति। तस्मान्न ते कर्हिचित्सन्मतमधिगन्तुमर्हन्ति। अत एवाप्तविदुषामुपदेशेन लेखेन वा सकलजनसमक्षे सत्यासत्ययोः स्वरूपसमुपख्यापनमेव प्रधानं कर्त्तव्यम्। तदनु ते स्वयमात्मनो हिताहिते समवबुध्य सत्यार्थं सङ्गृह्यायथार्थञ्च परित्यज्यानन्दनिमग्ना भवेयुः। यद्यपि मानवानामन्तःकरणं सत्यासत्ये विजानीते तथापि स्वप्रयोजनसिद्धये दुराग्रहाविद्यादि-दोषैः सत्यमपहायासत्योन्मुखं सञ्जायते। परमत्र ग्रन्थे नैवं व्यवहृतम्। नह्यस्माकं कस्यचिन्मनो व्यथयितुं हानिसम्पादनार्थं वैष प्रयत्नोऽपितु येन मानवजातेः समुन्नति-रुपकारश्च जायेत, मानवाः सत्यासत्यं परिज्ञाय सत्यं गृह्णीयुरसत्यञ्च परित्यजेयुरे-तदर्थमेवैष सर्वो यत्नः। नहि सत्योपदेशमन्तरा किमपि मानवजातेः, समुन्नतिकारणम्।

ग्रन्थेऽस्मिन् यत्र क्वापि भ्रमेण संशोधने मुद्रणे वा स्खलितानि भवेयुस्तानि विज्ञानेन ज्ञापनेन वा याथार्थ्येन संशोधयिष्यन्ते यस्तु पक्षपातेनान्यथा सन्धेक्ष्यति खण्डनमण्डने वा विधास्यति तत्र किमपि नावधास्यते। मानवानां हितैषिणावबोधितं तु सत्यं तन्मतं सङ्ग्रहीष्यते। अद्यत्वेऽपि सन्ति प्रत्येकस्मिन्मते भूयांसो विद्वांसस्ते पक्षपातं विहाय सर्वतन्त्रसिद्धान्तान् प्रतिपादयेयुः सर्वेष्वेव मतेषु यद्यत्सत्यं सर्वेषामनुकूलं तस्य परिग्रहणं, यच्चान्योऽन्यविपरीतं तस्य परित्यागं विधाय मिथः प्रीतिपूर्वकं व्यवहरेयुश्चेत् जगतो हितं जायेत। यतो हि विदुषां विरोधेनाविद्वत्स्वपि विरोधः संप्रवर्धते तेन नानाविधदुःखानां परिवृद्धिः सुखसंक्षयश्च सञ्जायते। स्वार्थिजनप्रिय-यानयैव दुर्बुद्ध्या सर्वे मानवा दुःखाम्बुधौ निमज्जिताः। यद्यपि स्वार्थैकपरायणमानवा सर्वजनहितसाधनेच्छया प्रवर्तमानानां कार्येषु विरोधतत्पराः सन्तो नानाविधविघ्नानि समाचरन्ति तथापि "सत्यमेव जयति नानृतं, सत्येन पन्था विततो देवयानः" इति-स्थिरनिश्चयावलम्बेनाप्ताः परोपकारानुष्ठाने निरुत्साहाः सन्तः सत्यार्थस्य प्रकाशनान्न विरमन्ति। "यत्तदग्रे विषमिव परिणामेऽमृतोपमम्" इति गीतावाक्यम्। "विद्याधर्मयोः प्राप्तिजनकानि सर्वाण्येव कर्माण्यादौ विषतुल्यानि परिणामे चामृतसमानानि भवन्ति" इत्यस्याभिप्रायः। इमा एव वार्ता हृदि निधायाहं ग्रन्थमिमं व्यरचयम्। श्रोतारः पाठकाश्च स्वच्छान्तःकरणेन ग्रन्थमिमं संवीक्ष्याभिप्रायमवगम्य च यथेष्टमाचरन्तु।

ग्रन्थेऽस्मिन् यद्यत्सर्वमतेष्ववितथं तत्तत्सर्वत्राविरोधेन सङ्गृहीतं यत्पुनर्मत-मतान्तरेष्वलीकं तन्निराकृतम्। किञ्चात्र मतमतान्तराणां प्रच्छन्नानि सुप्रकाशानि वा निन्द्यकर्माणि प्रकाश्य विदुषामविदुषां वा सर्वेषां पुरः सन्निहितानि येन सर्वे परस्परं सुविचार्य प्रेम्णा सत्यमतवर्त्तिनो भवेयुः।

आर्यावर्तदेशे समुत्पन्नो निवसंश्चाहं यथैतद्देशीयमिथ्यावार्ता निष्पक्षपातं याथातथ्येन प्रकाशयामि तथैवापरदेशस्थमतवादिभिरपि समं व्यवहरामि। मानवा-नामुन्नतौ चापि स्वदेशवासिभिरिव वैदेशिकैरपि सह संवर्ते। सकल विद्वद्भिरपि तथैव

र्वाततव्यम् । यद्यहमपि कस्यचनैकस्य मतस्य पक्षपाती समभविष्यन्तर्हि यथाद्यतनीनाः स्वमतस्य स्तवनं मण्डनं प्रचारञ्च, परेषां निन्दामनिष्टं तदुपरामसमुद्योगञ्च विदधति तथैवाहमपि व्यधास्यम् । परं सर्वमिदं मनुष्यत्वविवर्जितं कर्म । यतः खलु बलवन्तः पशवो निर्बलान् पीडयन्ति व्यापादयन्ति च तथैव यदि मानवा मनुष्यदेहं प्राप्यापि तथाचरेयुस्तर्हि न ते मानवस्वभावसंयुक्ता अपितु पशुसमाना भवेयुः । यस्तु बलमासाद्य निर्बलान् संरक्षति स एव मनुष्य इति कीर्त्यते । ये पुनः स्वार्थवशाङ्गताः केवलं परेषां ज्यानिं सम्पादयन्ति ते पशूनप्यतिशेरते ।

आर्य्यावर्तीयमतविषये एकादशसमुल्लासपर्यन्तं विशेषतो विलिखितम् । समुल्लासेष्वेषु प्रकाशितं सत्यमतं वेदोक्तत्वान्मम सर्वथैव मन्तव्यं वर्तते । नूतनपुराण-तन्त्रादिग्रन्थोक्ता निराकृता वार्ताश्च परिहेया वर्तन्ते ।

द्वादशसमुल्लासे समीक्षितं चार्वाकमतं यद्यपि साम्प्रतं लुप्तप्रायमिव वर्तते तथापीदमनीश्वरवादादिविषयेषु बौद्धजैनमताभ्यां भूयस्साम्यमावहति । किञ्चेदं चार्वाकमतं नास्तिकत्वे सर्वाणि मतान्तराण्यतिशेते । अतस्तत्प्रसारोऽवश्यं निरोद्धव्यः । अलीकव्यवहाराणामनिरोधेन हि लोके भूयांसो ऽनर्थाः प्रवर्त्तेरन् । चार्वाकबौद्धजैनानां मतं संक्षेपतो द्वादशे समुल्लासे विन्यस्तम् बौद्धजैनमतयोरपि चार्वाकेण सह साम्यं वर्तते । केषुचिदेव विषयेषु पार्थक्यमपि विद्यते । अतएव जैनाः पृथक् परिगण्यन्ते । एषां मिथो भेदस्तत्र १२ समुल्लासे समुपन्यस्तः । तत्र बौद्धमतं तेषां दीपवंशादिप्राचीन-ग्रन्थेभ्यो बौद्धमतसङ्ग्रहसर्वदर्शनसंग्रहाभ्याञ्च सङ्गृहीतम् । जैनानाञ्चाधो निर्दिष्टाः सिद्धान्तग्रन्था वर्तन्ते ।

### (अ) चत्वारः सूत्रग्रन्थाः—

(१) आवश्यकसूत्रम्, (२) विशेषावश्यकसूत्रम्, (३) दशवैकालिक सूत्रम् (४) पाक्षिकसूत्रम् ।

### (आ) एकादशाङ्गानि—

(१) आचाराङ्गसूत्रम् (२) सुगडाङ्गसूत्रम्, (३) थाणाङ्गसूत्रम् (४) समवायाङ्गसूत्रम्, (५) भगवतीसूत्रम् (६) ज्ञातधर्मकथासूत्रम् (७) उपासकदशा-सूत्रम् (८) अन्तगडदशासूत्रम् (९) अनुत्तरोबवाई सूत्रम् (१०) विपाकसूत्रम् (११) प्रश्नव्याकरणसूत्रञ्चेति ।

### (इ) द्वादशोपाङ्गसूत्राणि—

(१) उपवाई सूत्रम्, (२) रायपसेनीसूत्रम्, (३) जीवाभिगमसूत्रम्, (४) पन्नवणासूत्रम् (५) जंबुद्वीपपन्नतीसूत्रम्, (६) चन्दपन्नतीसूत्रम्, (७) सूरपन्नतीसूत्रम्, (८) निरियावलीसूत्रम्, (९) कप्पियासूत्रम्, (१०) कपबड़ीसयासूत्रम्, (११) पुष्पियासूत्रम्, (१२) पुप्यचूलियासूत्रम् ।

### (ई) पञ्च कल्पसूत्राणि—

(१) उत्तराध्ययनसूत्रम्, (२) निशीथसूत्रम्, (३) कल्पसूत्रम्, (४) व्यवहार-सूत्रम्, (५) जीतकल्पसूत्रञ्च ।

**(उ) षट् छेदाः—**

(१) महानिशीथबृहद्वाचनासूत्रम्, (२) महानिशीथलघुवाचनासूत्रम्, (३) मध्यमवाचनासूत्रम्, (४) पिंडनिरुक्तिसूत्रम्, (५) ओघनिरुक्तिसूत्रम्, (६) पर्य्यूषणासूत्रम्।

**(ऊ) दश पयन्नासूत्राणि—**

(१) चतुस्सरणसूत्रम्, (२) पञ्चखाणसूत्रम्, (३) तदुलवैयालिकसूत्रम्, (४) भक्तिपरिज्ञानसूत्रम्, (५) महाव्रत्याख्यानसूत्रम्, (६) चंदाविजयसूत्रम्, (७) गणीविजयसूत्रम्, (८) मरणसमाधिसूत्रम्, (९) देवेन्द्रस्तवनसूत्रम्, (१०) संसारसूत्रम्, तथा नन्दीसूत्रयोगोद्धारसूत्रेऽपि प्रामाणिकतयाऽभ्युपेयेते।

**(ऋ) पञ्चाङ्गानि—**

१ प्रथमवर्णितग्रन्थानां टीका, निरुक्तिः, चरणी भाष्यञ्चेति चत्वारोऽवयवा मूलग्रन्थाश्च पञ्चाङ्गान्युच्यन्ते। तेष्वपि ढूंढियासमाख्या अवयवान् नाङ्गीकुर्वते। एतदतिरिक्ता अपि जैनैरङ्गीकृता बहवो ग्रन्था वर्तन्ते। जैनमतविषये १२ समुल्लासे सविशेषं विचारः समकारि, तत्र द्रष्टव्यम्। जैन ग्रन्थेषु सहस्रशः पुनरुक्तिदोषा वेविद्यन्ते। किञ्चैषु केचन स्वग्रन्थं परमतावलम्बिजनानां हस्तेषु संवीक्ष्व अयमप्रमाणमिति भाषन्ते परमिदं सर्वथैवासत्यं नहि केषाञ्चिदनङ्गीकारेण तद्ग्रन्थस्याप्रामाण्यं भवितुमर्हति। आम्! यो वै ग्रन्थः केनापि न मन्येत न च कस्मिंश्चिदपि समये केनापि स्वीकृतस्तस्याप्रामाण्यं भवेदिति समीचीनमेव। परं नास्ति तादृशः कोऽपि ग्रन्थो यः खलु केनापि जैनमतावलम्बिना नाङ्गीक्रियते। अतो यो यं ग्रन्थमभ्युपगच्छति तद्ग्रन्थस्य खण्डनमण्डने अपि तदर्थे एवेति विज्ञेयम्। केचिद्यं कमपि ग्रन्थमभ्युपगच्छन्तोऽपि संसदि संवादे वा तं प्रत्यादिशन्ति। अतएव जैनाः स्वग्रन्थान् निगूहन्ते। परमतावलम्बिने च न प्रयच्छन्ति न तं श्रावयन्ति नाप्यध्यापयन्ति यतः खलु तेऽसम्भववार्ताभिः परिपूर्णा यासामुत्तरं प्रदातुं जैनेषु केऽपि न प्रभवन्ति। वस्तुतोऽसत्यवार्तानां परित्याग एवोत्तरम्। १३ समुल्लासे क्रिश्चीनमतं समीक्षितम्। एते हि बाइबिलग्रन्थं स्वधर्मपुस्तकं मन्यन्ते। एषां सविशेषवर्णनं तत्रैव द्रष्टव्यम्। चतुर्दशे च समुल्लासे यवनमतविषये विलिखितम्। एते कुराणग्रन्थं निजधर्ममूलपुस्तकमभ्युपगच्छन्ति। एषामपि व्याख्यानं तस्मिन्नेव समुल्लासे द्रष्टव्यम्। ततः परं वैदिकमतविषयो व्याख्यातः।

यः कोऽपि ग्रन्थमिमं तत्कर्त्तुरभिप्रायविरुद्धं द्रक्ष्यति स कमप्याशयं न प्रतिपत्स्यते। यतो वै वाक्यार्थबोधे आकाङ्क्षायोग्यतासत्तितात्पर्याख्याणि चत्वारि कारणानि भवन्ति। चतुःसाधनैरेभिर्ग्रन्थस्य द्रष्टैव यथार्थमभिप्रायमधिगच्छति। तत्र कस्मिँश्चिद्विषये वक्तुर्वाक्यस्थपदानाञ्चाकाङ्क्षा सञ्जायते। येन यत्सिद्ध्येत सा योग्यता यथा जलेन सेचनम्। यत्पदस्य येन सह सम्बन्धस्तस्य तेनैव सह समुच्चारणं विलेखनं वा आसत्तिः। यन्निमित्तं वक्त्रा शब्दः समुच्चारितो विलिखितो वा तदभिप्रायेणैव वचसो लेखस्य वा संयोजनम् तात्पर्यम्। बहवो दुराग्रहवन्तो मानवा वक्तुरभि-

प्रायविरुद्धं कल्पयन्ति विशेषतो मतवादिनो, यतः खलु मताग्रहेण बुद्धिस्तेषामज्ञाननिमग्ना सती विनश्यति। तस्माद् यथाऽहं पुराणजैनग्रन्थबायबिलकुराणप्रमुखग्रन्थानादावेव निन्द्यदृशाऽसंवीक्ष्य तद्गुणानादातुं दोषाँश्च परिहर्त्तुं मानवजातेः समुन्नतये च प्रयते तथैव सर्वैर्विधातव्यम्। एषां मतानामल्पीयांस एव दोषाः प्राकाश्यमुपनीता येन मानवाः सत्यासत्ये विनिर्णेतुं क्षमेरन्। किञ्च सत्यसंग्रहणेऽसत्यपरित्यागे च समर्था भवेयुः। मानवान् प्रतार्य मिथो द्वेषञ्च समुत्पाद्य कहलप्रवर्तनं नास्ति विदुषां स्वभावः। यद्यपि ग्रन्थमिमं विलोक्य विद्वाँसोऽन्यथैव ममाभिप्रायं कल्पयिष्यन्ति तथापि कृतधियो याथातथ्येनाभिप्रायं विज्ञास्यन्ति ततो निजपरिश्रमं सफलं मन्ये स्वाभिप्रायञ्च विदुषां पुरो निदधे। इमं सम्प्रेक्ष्य सफलयन्तु मामकीनं परिश्रमम्। इत्थमेव पक्षपातं विहाय सत्यार्थस्य प्रकाशो मम सर्वेषाञ्च विदुषां प्रधानं कर्त्तव्यम्। सर्वात्मा सर्वान्तर्यामी सच्चिदानन्दः परमेश्वरः स्वकृपाकटाक्षेण ममाशयं सर्वत्र प्रसारयतु चिरस्थायिनञ्च कुर्वीत।

**अलमतिविस्तरेण बुद्धिमद्वरशिरोमणिषु।**

इति भूमिका॥

स्थानम्—उदयपुरम्<br>
भाद्रप० शु० प० सं० १९३९

**(स्वामी) दयानन्द सरस्वती**

# विषयानुक्रमणिका

✧ ओ३म् ✧

सच्चिदानन्दायेश्वराय नमो नमः ।

# अथ सत्यार्थप्रकाशः

## अथ प्रथमसमुल्लासः

ओ३म् । शन्नो॑ मि॒त्रः शं वरु॑णः शन्नो॑ भवत्वर्य॒मा । शन्न॒ इन्द्रो॒ बृह॒स्पति॑ः शन्नो॒ विष्णु॑रुरुक्र॒मः ।। नमो॒ ब्रह्म॑णे॒ नम॑स्ते वायो त्वमे॒व प्र॒त्यक्षं॒ ब्रह्मा॑सि । त्वामे॒व प्र॒त्यक्षं॒ ब्रह्म॑ वदिष्यामि ऋ॒तं व॑दिष्यामि स॒त्यं व॑दिष्यामि । तन्माम॑वतु॒ तद्व॒क्तार॑मवतु । अवतु॒ माम॑वतु॒ व॒क्तार॑म् । ओं शान्ति॒श्शान्ति॒श्शान्ति॑ः ।।१।।

अर्थ—(ओ३म्) अ, उ, म्, इत्यक्षरत्रयसमाहारेण निष्पन्नोऽयमोङ्कारशब्दः परमेश्वरस्याखिलनामधेयेषु प्रशस्यतमः, यतः एकेनैवानेन नाम्ना परमात्मनो बहूनि नामानि संगृहीतानि भवन्ति । तथाह्यकारेण विराडग्नि-विश्वादीनामुकारेण हिरण्यगर्भवायुतैजसादीनां मकारेणेश्वरादित्यप्राज्ञादीनाञ्च नाम्नां वाचको ग्राहकश्च । सर्वाण्यपीमानि नामानि प्रकरणानुकूल्येन ब्रह्मण एव सन्तीति वेदादिसच्छास्त्रेषु स्पष्टं व्याख्यातम् ।

**प्रश्नः**—विराट् प्रभृतयः शब्दाः परमेश्वरातिरिक्तपदार्थान् कथं नाभिदधति ? ब्रह्माण्ड-पृथिव्यादिभूतानामिन्द्रादिदेवानामायुर्वेदशास्त्रे च शुण्ठ्याद्यौषधीनामपि सन्तीमानि नामानि न वा ?

**उत्तरम्**—सन्त्येव परं परमात्मनोऽपि वर्तन्ते ।

**प्रश्नः**—केवलं देवानामेव ग्रहणमेभिर्नामभिः कुतो न क्रियते ?

**उत्तरम्**—देवानामेव केवलं ग्रहणमित्यत्र "किं प्रमाणम्" ?

**प्रश्नः**—प्रसिद्धत्वादुत्तमत्वाच्च देवा एव ग्राह्या इति मन्ये ।

**उत्तरम्**—किमप्रसिद्धः परमेश्वरः ? किं वा तस्मादप्युत्कृष्टतरः

कश्चित् ? तथाच परमेश्वरस्यापीमानि नामानि कथं नाङ्गीक्रियन्ते ? यदि च परमेश्वरो नास्त्यप्रसिद्धः नापि कश्चित्तत्समः, कथमिव कोऽपि तदधिको भवेत् तस्माद्भवदुक्तमसत्यमेव। अपि च—भवद्वचनाङ्गीकारे दोषा अपि परापतन्ति यथा—**"उपस्थितं परित्यज्यानुपस्थितं याचत"** इति बाधित-न्यायः। कश्चिद्भोजनसामग्रीमुपस्थाप्य "भवान् भोजनं कुरुतामिति" वदेत् स तु तत्परित्यज्याप्राप्तभोजनलाभायेतस्ततो भ्रमेन्नहि स बुद्धिमानव-गन्तव्यः। स ह्युपस्थितं—समीपवर्त्तिनं पदार्थं परित्यज्य, अनुपस्थितस्यार्थाद-प्राप्तवस्तुनो लाभाय यतते। भवदुक्तमपि तत्सदृशमेव बुद्धिरहितम्। भवान् हि विराट्प्रभृतिशब्दानां प्रसिद्धान् प्रमाणसिद्धान् परमेश्वरब्रह्माण्डाद्युप-स्थितार्थान् परित्यज्यासम्भवानुपस्थितानां देवादीनां ग्रहणे श्रमं कुरुते, नास्त्यत्र किञ्चिदपि प्रमाणं युक्तिर्वा। प्रकरणमनुसृत्यैवार्थग्रहणं विधेयम्। यथाहि कोऽपि भृत्यं समादिशेत् 'हे भृत्य ! त्वं सैन्धवमानयेति', तत्र भृत्येन समयस्यार्थात्प्रकरणस्य विचारः कर्त्तव्यः, यतः सैन्धवमित्यश्वलवणयोर्वाच-कम्। तत्र स्वामिनः प्रस्थानवेलायामश्वः समानेयोऽशनकाले च लवणम्। गमनसमये लवणस्य भोजनकाले चाश्वस्य समानयने 'मूर्खः खलु त्वं, किमत्र भोजनवेलायामश्वस्य प्रस्थानावसरे च लवणस्य प्रयोजनमासीत्त्वं न वेत्सि प्रकरणमिति' स्वामिन आक्रोशविषयतां गमिष्यति। समयमपेक्ष्यैव त्वया लवणमश्वो वा समानेय असीत्। कर्त्तव्यमपि प्रकरणविचारं त्वं नाकरोरतो मूर्खस्त्वमपेहि मत्सकाशात्। सिद्धमतो—'यत्र यस्य ग्रहणं समुचितं तत्र तस्यैव ग्रहणं कर्त्तव्यम्'। इत्थमेवास्मदादिभिः सर्वैर्मन्तव्यं व्यवहर्तव्यञ्च।

## अथ मन्त्रार्थः

**ओ३म् खम्ब्रह्म** ॥१॥—यजु० अ० ४०। मं० १७

दृश्यताम्—वेदेष्वेतादृशप्रकरणेषु परमेश्वरस्य "ओ३म्" आदीनि नामानि विद्यन्ते।

**ओमित्येतदक्षरमुद्गीथमुपासीत** ॥२॥—छान्दो० उप० १।१

**ओमित्येतदक्षरमिदँ सर्वं तस्योपव्याख्यानम्** ॥३॥

—माण्डूक्य० मं० १

**सर्वे वेदा यत्पदमामनन्ति तपाँसि सर्वाणि च यद्वदन्ति।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्** ॥४॥

—कठोपनिषत्, वल्ली २, मं० १५

**प्रशासितारं सर्वेषामणीयांसमणोरपि।**
**रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम्** ॥५॥

एतमेके वदन्त्यग्निमनुमन्ये प्रजापतिम् ।
इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥६॥

—मनु० अ० १२, श्लोक १२२-१२३

स ब्रह्मा स विष्णुः स रुद्रस्स शिवस्सोऽक्षरस्स परमः स्वराट् ।
स इन्द्रस्स कालाग्निस्स चन्द्रमाः ॥७॥ —कैवल्योपनिषत्

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥८॥

—ऋ० मं० १ । अनु० २२ । सू० १६४ । मं० ४६

भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री ।
पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीः ॥९॥

—यजु० अ० १३ । मं० १८

इन्द्रो मह्ना रोदसी पप्रथच्छव इन्द्रः सूर्यमरोचयत् ।
इन्द्रे ह विश्वा भुवनानि येमिर इन्द्रे स्वानास इन्दवः ॥१०॥

—सामवे० उ० प्रपा ७।३ त्रिक । ८ । मं० २

प्राणाय नमो यस्य सर्वमिदं वशे ।
यो भूतः सर्वस्येश्वरो यस्मिन्त्सर्वं प्रतिष्ठितम् ॥११॥

—अथर्ववेद काण्ड ११ । अ० २ सू० ४ मं० १

अत्रैषां प्रमाणानां समुद्धरण इदमेव तात्पर्यं यदेतादृशस्थलेषु ओङ्कारादिपदैः परमात्मन एव ग्रहणं भवति यथास्माभिः पूर्वं प्रदर्शितमिति ।

परमात्मनः किमपि नामधेयं नास्ति निरर्थकं यथा लोकेऽकिञ्चनानामपि 'धनपती'त्यादि नामधेयानि भवन्ति। सिद्धञ्चातः "परमात्मनः सर्वाण्यपीमानि नामानि क्वचिद् गौणमपरत्र कार्मिकमन्यत्र स्वाभाविकमर्थमभिदधत इति" ।

(१) अर्थवत्यः खलु 'ओ३म्' इत्यादयः संज्ञा यथा—(ओ३म् खं०) अवतीत्यो३म्, आकाशमिव व्यापकत्वात्खम्, सर्वेभ्यो बृहत्वाद् ब्रह्म ।

(२) ओ३मिति तस्य नाम यश्च कदाचिदपि न प्रणश्यति तस्यैवोपासना कार्या नान्यस्य ।

(३) (ओ३मित्येत०) समस्तेष्वपि वेदादिशास्त्रेषु 'ओ३मि'त्येतदेव परमात्मनो नामसु प्रधानं निजनाम चेत्युपवर्णितं, संज्ञान्तराणि तु गौणानि ।

(४) (सर्वे वेदाः०) सर्वे वेदाः, धर्मानुष्ठानरूपाणि तपश्चरणानि च

यत्कीर्तयन्त्याद्रियन्ते च यच्चाभीप्सवो मानवा ब्रह्मचर्याश्रमं चरन्ति ओमाख्यं तत्पदम् ।

(५) (प्रशासितारम्०) यः खलु सर्वेषां शिक्षकः, सूक्ष्मादपि सूक्ष्मः, स्वप्रकाशस्वरूपः, समाधिस्थचेतसा च वेद्यः स परमपुरुषोऽधिगन्तव्यः ।

(६) किञ्च परमात्मनः स्वप्रकाशकत्वाद् "अग्निः" विज्ञानस्वरूपत्वाद् "मनुः" सर्वेषां पालकत्वात्परमैश्वर्यवत्वाच्च "इन्द्रः" सर्वेषां जीवनमूलत्वात् "प्राणः" नैरन्तर्येण व्यापकत्वाच्च "ब्रह्म" इति नामधेयम् ।

(७) (स ब्रह्मा०) स एव पुरुषो जगतो निर्मातृत्वाद् "ब्रह्मा" । सर्वत्र व्यापकत्वाद् 'विष्णुः' । दुष्टानां दण्डप्रदानेन रोदनाद् "रुद्रः" । मङ्गलमयत्वात् सर्वेषां कल्याणकर्त्तृत्वाच्च 'शिवः' । यः सर्वमश्नुते न क्षरति न विनश्यति तद् "अक्षरम्" । यः स्वयं राजते स 'स्वराट्' । योऽग्निरिव कालः कलयिता प्रलयकर्त्ता स 'कालाग्निः' ईश्वरः ।

(८) (इन्द्रं मित्रम्०) यदेकमद्वितीयं सत्यं ब्रह्मरूपं वस्तु विद्यते तस्यैवेन्द्रादीनि सर्वाणि नामानि । द्युषु (प्रकृत्यादिषु) शुद्धेषु पदार्थेषु भवो (व्यापको) "दिव्यः" । शोभनानि पर्णानि पालनानि पूर्णानि कर्माणि यस्य सः "सुपर्णः" । यो गुर्वात्मा (स्वरूपेण महान्) स "गरुत्मान्" । यो मातरिश्वा वायुरिवानन्तबलवान् स "मातरिश्वा" । अतएव परमात्मनो दिव्यः सुपर्णो गरुत्मान् मातरिश्वा च नामानि विद्यन्ते । अवशिष्टनाम्नामर्थानग्रे व्याख्यास्यामः ।

(९) (भूमिरसि०) भवन्ति भूतानि (प्राणिनः) यस्यां सा "भूमिः" । अवशिष्टनाम्नामर्थानग्रे वर्णयिष्यामः ।

(१०) (इन्द्रो मह्ना०) अस्मिन्मन्त्रे 'इन्द्रः' इति परमेश्वरस्यैव वाचकमित्येतदर्थं प्रमाणमिदमुद्धृतम् ।

(११) (प्राणाय०) यथा सर्वं शरीरमिन्द्रियाणि च प्राणवश्यानि भवन्ति तथैव सर्वमिदं जगत् परमेश्वरस्यैव वशेऽवतिष्ठते ।

इत्यादिप्रमाणानां याथार्थ्येनार्थावगमेनैभिर्नामभिः परमात्मन एव ग्रहणं भवति । ओमग्न्यादिसंज्ञा मुख्यार्थेन परमेश्वरस्यैव वाचिकाः, व्याकरण-निरुक्त-ब्राह्मण-सूत्रादिषु हि ऋषि-मुनिकृतव्याख्यानेषु परमात्मन एव ग्रहणमवलोक्यतेऽतः सर्वमानवैस्तदनुरूपमेव मन्तव्यम् । ओमितीदं तु केवलं परमेश्वरस्यैव नाम, अग्न्यादिनामभिः पुनः परमात्मनो ग्रहणे प्रकरणं विशेषणानि वा नियामकानि । तेन "यत्र तत्र स्तोतव्य-प्रार्थनीयोपासनीय-सर्वज्ञ-व्यापक - शुद्ध-सनातन - सृष्टिकर्त्रेत्यादिविशेषणानि भवेयुस्तत्र तत्रैव संज्ञाभिरमूभिः परमात्मा गृह्यत इति" सिद्धान्तः ।

**ततो॑ वि॒राड॑जायत वि॒राजो॒ अधि॒ पूरु॑षः ।—यजु० ३१।५**

श्रोत्रा॑द्वा॒युश्च॑ प्रा॒णश्च॒ मुखा॑द॒ग्निर॑जायत ।—यजु० ३१।१२
तेन॑ दे॒वा अ॑यजन्त ।—यजु० ३१।९
प॒श्चाद्भूमि॒मथो॑ पु॒रः ॥—यजु० ३१।५

**तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधिभ्योऽन्नम्। अन्नाद्रेतः। रेतसः पुरुषः स वा एष पुरुषोऽन्नरसमयः।**

—तै० ब्रह्मान० १। अ० १

ईदृशस्थलेषु विराट्-पुरुष-देव-आकाश-वायु-अग्नि-जल-भूमिप्रभृतीनि पदानि लौकिकार्थान् बोधयन्ति। यत्र यत्रोत्पत्तिस्थितिप्रलयवर्णनमल्पज्ञजडदृश्यादीनि विशेषणानि वा दृश्यन्ते तत्र तत्र परमेश्वरस्य ग्रहणं निषिध्यते। परमेश्वरो ह्युत्पत्त्यादिव्यवहारेभ्यः पृथगवतिष्ठते, मन्त्रेष्वेषु चोत्पत्त्यादिवर्णनमभिलक्ष्यते तस्मादत्र विराजादिपदानि सांसारिकपदार्थानामेव ग्राहकाणि न तु परमात्मनः। एवमेव सत्सु सर्वज्ञत्वादिविशेषणेषु परमात्मनः, इच्छा-द्वेष-सुख-दुःखाल्पज्ञत्वादिविशेषणेषु पुनरात्मनो (जीवस्य) ग्रहणं कार्यमेष सार्वत्रिकः सिद्धान्तः।

नहि कदाचित् परमेश्वरो जायते म्रियते वा तस्माद्विराजादिनामभिर्जन्मादिविशेषणैश्च जडजगज्जीवो वा ग्राह्यो नतु परमेश्वरः।

**अथ विराजादिपदैः परमात्मनो बोधप्रकारः समुपवर्ण्यते।**

**ओ३म् 'शन्नो मित्रः', इत्यादिमन्त्रव्याख्यान आदावोंकारार्थः—**

**(अ) विराट्**—व्युपसृष्टाद्राजृदीप्तावित्यस्माद्धातोः क्विप्प्रत्यये "विराट्" शब्दः सिद्ध्यति। यो विविधं नाम चराचरं जगद् राजयति प्रकाशयति स 'विराट्'।

**अग्निः**—अञ्चु गतिपूजनयोः, अग् अगि इण् इति गत्यर्थकधातुभ्योऽग्निशब्दः सिद्ध्यति। तत्र गतेस्त्रयोऽर्था ज्ञानं गमनं प्राप्तिश्चेति, पूजनं नाम सत्कारः। "योऽञ्चत्यच्यतेऽगत्यङ्गत्येति वा सोऽयमग्निरीश्वरः। यः खलु ज्ञानस्वरूपः सर्वज्ञो ज्ञातव्यः प्राप्तव्यः संपूज्यश्चास्त्यतः परमेश्वरस्येदं नामाग्निरिति।

**विश्वः**—'विश प्रवेशने', अस्माद्धातोर्विश्व इति पदं निष्पद्यते। विशन्ति प्रविष्टानि सर्वाण्याकाशादीनि भूतानि यस्मिन्यो वाऽऽकाशादिषु सर्वभूतेषु प्रविष्टः स "विश्वः" ईश्वरः। अकारमात्राद्विराडादिनामानि गृह्यन्ते।

**(उ) हिरण्यगर्भः**—"ज्योतिर्वै हिरण्यं, तेजो वै हिरण्यम्" इत्यैतरेये शतपथे च ब्राह्मणे।

**यो हिरण्यानां सूर्यादीनां तेजसां गर्भ उत्पत्तिनिमित्तमधिकरणं स**

हिरण्यगर्भः । सूर्यादयस्तेजसां लोका यस्मिन्नुत्पन्ना यं वाधितिष्ठन्ति, यो वा ज्योतिष्मतां पदार्थानां योनिरधिष्ठानञ्चास्त्यतः परमेश्वरो हिरण्यगर्भशब्देन समाख्यायते भवति चात्र यजुषः प्रमाणम्—

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥
—यजु० अ० १३ । मं० ४

इत्यादिस्थलेषु 'हिरण्यगर्भ'-शब्दात्परमात्मैव गृह्यते ।

**वायुः**—'वा गतिगन्धनयोः' धातोरमुष्माद् 'वायु'-शब्दः सिद्ध्यति । गन्धनं हिंसनम् । यो वाति चराचरं जगद्धरति (जीवयति संहरति च) बलिनां बलिष्ठः स "वायुः" ।

**तैजसः**—"तिज निशानेऽस्माद्धातोस्तेजः" शब्दस्ततोऽपि तद्धितप्रत्यये "तैजस्" शब्दः समुत्पद्यते । यो वै स्वयंप्रकाशः सूर्यादितेजस्विलोकानां प्रकाशकश्च स 'तैजस' ईश्वरः । इत्यादयो नामार्था उकारेण गृह्यन्ते ।

(म्) **ईश्वरः**—'ईश ऐश्वर्ये' । अस्माद्धातोरीश्वर इति पदं जायते य ईष्टे सर्वैश्वर्यवान् (सत्यविचारशीलः ज्ञानसम्पन्नोऽनन्तैश्वर्यवाँश्च) वर्तते स "ईश्वरः" ।

**आदित्यः**—'दो अवखण्डने' इति धातोरदितिशब्दस्तद्धितप्रत्यये 'आदित्यः' शब्दः सिद्ध्यति । न विद्यते विनाशो यस्य सोऽयमदितिः, अदितिरेवादित्यः ।

**प्राज्ञः**—प्रोपसृष्टाज्ज्ञा अवबोधनेऽस्माद्धातोः प्रज्ञस्तस्मात्तद्धितप्रत्यये प्राज्ञ इति पदं निष्पन्नं भवति । यः प्रकृष्टतया चराचरस्य जगतो व्यवहारं जानाति स प्रज्ञः, प्रज्ञ एव प्राज्ञः । निर्भ्रान्तिज्ञानसंयुक्तो निखिलस्यास्य चराचरजगतो व्यवहारस्य यथावज्ज्ञातेति यावत् । इत्यादीनि नामानि मकारेण संगृह्यन्ते ।

यथात्रैकैकया मात्रयार्थत्रयं व्याख्यातमेवमन्येऽपि नामार्था ओंकारतो ज्ञायन्ते । 'शन्नो मित्रः' इत्यादिमन्त्रे मित्रादिपदानि परमात्मन एवाभिधायकानि । स्तुतिप्रार्थनोपासनाः श्रेष्ठस्येव विधीयन्ते । न च परमात्मनोऽधिकः कोऽपि श्रेयान् वर्तते । गुणकर्मस्वभावेषु सत्यव्यवहारेषु च यः सर्वेभ्यः समधिकः स हि श्रेष्ठः । सर्वेषु श्रेयःस्वपि यः श्रेयस्तमः स 'परमेश्वर' उच्यते । यत्समः कोऽपि नाभूत् न वर्तते नापि भविष्यति, असति सादृश्ये दूरापास्तं ततोऽधिकत्वम् । सत्य-न्याय-दया-सर्वसामर्थ्य-सर्वज्ञत्वाद्यनन्तगुणविशिष्टः परमेश्वर इव न कोप्यचेतनो जीवात्मा वा विद्यते । सत्यपदार्थस्य गुणकर्मस्वभावा अपि तथैव भवन्त्यतः समस्तैरपि मानवैः परमात्मैव

स्तोतव्यः प्रार्थनीयः समुपासनीयश्च नेतरः। ब्रह्मा-विष्णु-महादेवादिपूर्वजैर्विपश्चिद्भिर्दैत्यदानवादिनिकृष्टैरन्यैश्च साधारणजनैस्तस्मिन् परमेश्वर एव विश्वस्य स एवास्तावि, अप्रार्थि, समुपासि च नेतरस्तथैवास्माभिरनुष्ठेयम्।

मुक्त्युपासनयोर्विषये विशेषतो विवेचयिष्यामो विषयममुम्।

**प्रश्नः**—ननु सुहृदामिन्द्रादिदेवानाञ्च प्रसिद्धव्यवहारदर्शनात् मित्रादिनामभिस्त एव ग्राह्याः ?

**उत्तरम्**—नोपयुक्तमत्र तेषां ग्रहणं, यतोऽस्मिञ्जगति यो जन एकस्य मित्रं स एवापरस्य शत्रुरितरस्माच्चोदासीनः समवलोक्यतेऽतो मुख्यार्थेन सुहृदादीनां ग्रहणं न भवितुमर्हति। किञ्च यथा परमेश्वरः सर्वस्य जगतो निश्चितं मित्रं न कस्यचिच्छत्रुर्नापि कुतश्चिदुदासीनः, तद्व्यतिरिक्तेन केनापि जीवेन तथा भवितुं न शक्यते तस्मादत्र परमात्मैव गृह्यते, गौणे चार्थे मित्रादिनामभिः सुहृदादयोऽपि संगृह्यन्ते।

**मित्रः**—'ञिमिदा स्नेहने' अस्माद्धातोरौणादिके "क्त"-प्रत्यये मित्रशब्दः सिद्ध्यति। मेद्यति स्निह्यति स्निह्यते वा स **'मित्रः'**।

**वरुणः**—'वृञ् वरणे', वर ईप्सायामिति धातुद्वयाभ्यामौणादिक उननि-प्रत्यये 'वरुण' इति पदं निष्पद्यते। यः सर्वान् शिष्टान् मुमुक्षून् धर्मात्मनो (आत्मयोगिनो विदुषः) वृणोति, अथवा यः शिष्टैर्मुमुक्षुभिर्धर्मात्मभिर्व्रियते वर्यते वा स **वरुणः** परमेश्वरः। किं वा वरुणो नाम वरः श्रेष्ठः, सर्वेभ्यः श्रेष्ठत्वात् **'वरुणः'** परमेश्वरः।

**अर्यमा**—'ऋ' गतिप्रापणयोरितिधातोर्यति 'अर्य' शब्दस्तत्पूर्वाद् 'माङ् माने' इति धातोः कनिन् प्रत्यये च 'अर्यमा' शब्दः सिद्धयति। योऽर्यान् स्वामिनो न्यायाधीशान् मिमीते मान्यान् करोति **सोऽर्यमा**। यः खलु सन्न्यायेन व्यवहर्तॄन् मानयति कर्मिणां पापपुण्यफलानि यथावन्नियमयति स परमेश्वरो**ऽर्यमा**।

**इन्द्रः**—'इदि परमैश्वर्ये' इति धातो रन् प्रत्यये 'इन्द्र' इति पदं निष्पन्नं भवति, य इन्दति परमैश्वर्यवान् भवति स **'इन्द्रः'** परमेश्वरः।

**बृहस्पतिः**—बृहत्पूर्वात् 'पा रक्षणेऽस्माद्धातोः 'डति' प्रत्यये उपपदस्यान्तलोपे सुडागमे च 'बृहस्पति' शब्दः सिद्धयति। यो वै महतो महान् बृहतामाकाशादीनां च पतिः स्वामी पालयिता स **'बृहस्पतिः'**।

**विष्णुः**—'विष्लृ व्याप्ताविति'-धातोः 'नु' प्रत्यये विष्णुरिति पदं जायते। यो वेवेष्टि व्याप्नोति चराचरं जगत् स **'विष्णुः'**।

**उरुक्रमः**—उरुर्महान् क्रमः पराक्रमो यस्य स **'उरुक्रमः'**।

(**उरुक्रमः**) महापराक्रमयुक्तः (**मित्रः**) सर्वेषां सुहृदविरोद्धा च (**शम्**) सुखप्रदः (**वरुणः**) सर्वोत्तमः (**शम्**) सुखस्वरूपः (**अर्यमा**) न्यायाधीशः (**शम्**)

सुखप्रचारकः (**इन्द्रः**) सकलैश्वर्यवान् (**शम्**) अशेषैश्वर्यप्रदः (**बृहस्पतिः**) सर्वेषामधिष्ठाता (**शम्**) विद्यादायकः (**विष्णुः**) सर्वत्र व्यापकः परमेश्वरः (**नः**) अस्माकं कल्याणकर्त्ता भवतु ।

(**वायो ते ब्रह्मणे नमोऽस्तु**) 'वृह वृहि वृद्धा'-विति धातुभ्यां 'ब्रह्म' शब्दः सिद्ध्यति । महतोऽपि महीयांसमनन्तबलयुक्तं ब्रह्म नामानं सर्वस्याधिपतिं परमात्मानं वयं नमस्कुर्मः । हे परमेश्वर ! (**त्वमेव प्रत्यक्षं ब्रह्मासि**) भवानेवान्तर्यामिरूपेण प्रत्यक्षं ब्रह्म (**त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि**) यतो भवानेव सर्वत्र स्वव्याप्त्या सर्वैः सर्वदा सम्प्राप्योऽतो भवन्तमेव प्रत्यक्षं ब्रह्म वदिष्यामि (**ऋतं वदिष्यामि**) भवतो वैदिकं यथार्थमादेशं सकलजनेभ्य उपदेक्ष्याम्याचरिष्यामि च (**सत्यं वदिष्यामि**) अहं सत्यमेव वक्ष्यामि मंस्येऽनुष्ठास्यामि च (**तन्मामवतु**) तस्माद् रक्षतु भवान् माम् (**तद्वक्तारमवतु**) आप्तस्य यथार्थवादिनो मम रक्षां विदधातु भवान्, येन भवन्निदेशे दृढीभूयाविरुद्धा भवतु मे मतिः भवदादेश एव धर्मः तदितरश्चाधर्मः । (**अवतु मामवतु वक्तारम्**) अत्र भूयः समधिकार्थः पाठः । कश्चित्कञ्चित् प्रति वदति त्वं ग्रामं गच्छ गच्छेति, यथात्र वाक्ये क्रियाया द्विरुच्चारणेन 'त्वमञ्जसैव ग्रामं प्रयाहीत्यवगम्यते' तथात्राप्यवश्यमेव रक्षतु भवत्कृपयाऽहं धर्ममास्थायाधर्मं घृणीयां सदेति प्रतीयते, एवं हि महदुपकृतो भवेयमहम् (**ओं शान्तिः शान्तिः शान्तिः**) त्रिविधतापापनोदार्थं मन्त्रे वारत्रयं शान्तिपदोच्चारणम् । जगत्यस्मिन् हि त्रिविधदुःखं (परिलक्ष्यते) मनसि शरीरे जायमाना अविद्यारागद्वेषमौर्ख्यज्वरकष्टादयः "आध्यात्मिकं" दुःखम् । भूतेभ्यः शत्रुव्याघ्रसर्पादिभ्यः "समुत्पद्यमानमाधिभौतिकम्" । वृष्टिशीतोष्णादीनामाधिक्येभ्यो मनस इन्द्रियाणां चाञ्चल्यं "आधिदैविकं" दुःखम् ।

एतत्त्रिविधक्लेशेभ्यो भवान्नः परासूय कल्याणकारिकर्मसु प्रवृत्तिं सदा विदधातु । भवानेव स्वयं कल्याणस्वरूपो निखिलस्य जगतः कल्याणकर्त्ता धार्मिकमुमुक्षुभ्यः कल्याणप्रदश्च । भवान् स्वकारुण्येन सकलजीवानामन्तरात्मनि प्रकाशतां यस्मात्समस्ता अपि प्राणभृतोऽधर्मं परित्यज्य धर्ममाचरन्तः परमानन्दमुपभुञ्जीरन् दुःखेभ्यश्च विमुच्येरन् । इति मन्त्रार्थः ।

**सूर्यः**—**'सूर्यं आत्मा जगतस्तस्थुषश्च'** इति यजुषो [७।४२] वचनात् जगतः प्राणिनां चेतनानां जंगमस्य-गतिमतां तस्थुषः=अप्राणिनामर्थात् पृथिव्यादिस्थावराणामात्मतया स्वप्रकाशेन सर्वेषां प्रकाशकतया च परमेश्वरः '**सूर्य**' शब्देनाभिधीयते ।

**परमात्मा**—'अत सातत्यगमने' इति धातोरात्मा शब्दः सिद्ध्यति । योऽतति (जीवादिजगति नैरन्तर्येण) व्याप्नोति स **आत्मा**, परञ्चासावात्मा च य आत्मभ्यो जीवेभ्यः (उत्कृष्टः) सूक्ष्मेभ्यो (जीवप्रकृत्यादिभ्यः)

परोऽतिसूक्ष्मः (अन्तर्यामित्वाज्जीवानामात्मा) स **'परमात्मा'**।

**परमेश्वरः**—सामर्थ्यवानीश्वरः, य ईश्वरेषु समर्थेषु परमः श्रेष्ठोऽतुल्यसामर्थ्यः स **'परमेश्वरः'**।

**सविता**—षुञ् अभिषवे, षूङ् प्राणिगर्भविमोचने, इति धातुद्वयाभ्यां सवितेति पदं सिद्ध्यति। अभिषवः प्राणिगर्भविमोचनं चोत्पादनम्। यश्चराचरं जगत्सुनोति सूते वोत्पादयति स **'सविता'** परमेश्वरः।

**देवः**—"दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु" इति धातोर्देवशब्दः सिद्ध्यति। शुद्धस्य जगतो रमयितृत्वेन धार्मिकाणां जिजापयिषया, सर्वेषां चेष्टनाय तत्साधनोपसाधनप्रदातृत्वेन, स्वयं प्रकाशत्वेन सर्वेषाञ्च प्रकाशकतया, प्रशस्यतया, स्वयमानन्दस्वरूपत्वेन परेभ्यश्चानन्ददायकत्वात् मदोन्मत्तानां व्यथयितृत्वेन, सर्वेषां स्वापार्थं रात्रेः, प्रलयस्य च कर्तृत्वेन, कमनीयतया ज्ञानस्वरूपतया च परमेश्वरो देवपदाभिधेयः। अथवा यो दीव्यति क्रीडति स्वात्मनि आनन्देन स्वयमेव रमते सहायान्तरानपेक्षयैव चानायासेन क्रीडावत् निर्मीति सर्वञ्जगत् निखिलसमीहाधिष्ठानञ्च स देवः। यो विजिगीषते स देवः परैरजेयो यं कोऽपि जेतुं न पारयेदिति यावत्। व्यवहारयति न्यायान्यायव्यवहारान् जानीते समुपदिशति च स देवः। यश्चराचरं जगत् द्योतयति स देवः। यः स्तूयते प्रशस्यतेऽनिन्दार्हश्च सः देवः। यो मोदयति स देवः। यो माद्यति स देवः। यो वै स्वयं मोदमानः परेषां मोदयिता, स्वयं शोकविमुक्तः परेषां शोकविमोचयिता च। यो महाप्रलये कालेऽव्यक्ते जीवात्मनः स्वापयति स देवः। यः कामयते (नित्यं सत्यकामः) शिष्टैर्वाधिगन्तुं काम्यमानः स देवः यो गच्छति गम्यते वा स देवः। यः सर्वत्र व्याप्तो ज्ञेयश्च स परमेश्वरो **'देवः'**।

**कुवेरः**—कुवि आच्छादनेऽस्माद्धातोः कुवेरशब्दः सिद्ध्यति। यः सर्वं कुवति स्वव्याप्त्याच्छादयति **'स कुवेरो'** जगदीश्वरः।

**पृथिवी**—पृथु विस्तारेऽस्माद्धातोः पृथिवी शब्दः सिद्ध्यति। यः प्रथते सर्वं जगद्विस्तृणाति स **'पृथिवी'**।

**जलम्**—"जल घातने" इति धातोर्जलमिति पदं सिद्ध्यति। जलति घातयति दुष्टान्, संघातयति वियोजयति च परमाण्वादीन् तद्ब्रह्म **'जलम्'** यद्वा यज्जनयति लाति सकलं जगत्तद् ब्रह्म **'जलम्'**।

**आकाशः**—काशृ दीप्तावितिधातोराकाशशब्दो निष्पद्यते। यः सर्वतः सर्वञ्जगत् प्रकाशयति स **'आकाशः'**।

**अन्नम्**—'अद् भक्षणे' अस्माद्धातोरन्नशब्दो जायते।

**अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते ॥१॥**

**अन्नादः**—**अहमन्नमहमन्नमहमन्नम् । अहमन्नादो३ऽहमन्नादो३ऽहमन्नादः ।।२।।** —तैत्ति० उप०, अनुवा० २।१०।२

**अत्ता**—**अत्ता चराचरग्रहणात् ।।**—वेदान्तदर्शने, अ० १, पा० २, सू० ९

यस्मिन् सर्वे प्रतिष्ठिताः सर्वैर्ग्राह्यः चराचरस्य जगत आदाता च वर्तते अतस्तस्य परमात्मनोऽन्नमन्नादोऽत्ता चेति नामानि । उदुम्बरे क्रिमय इव परमात्मनि सर्वञ्जगदुत्पद्यते निवसति विनश्यति च । अत्र अन्नादेस्त्रिरावर्तनमादरद्योतनाय ।

**वसुः**—'वस निवासे' इति धातोर्वसु शब्दः सिद्धयति । वसन्ति भूतानि यस्मिन्नथवा यः सर्वेषु वसति स **'वसुरीश्वरः'** ।

**रुद्रः**—णिजन्तात् 'रुदिर अश्रुविमोचने' इति धातो 'रुद्रः' शब्दः सिद्धयति । यो रोदयति अन्यायकारिणो जनान् स **'रुद्रः'** ।

**यन्मनसा ध्यायति तद्वाचा वदति यद्वाचा वदति तत्कर्मणा करोति यत्कर्मणा करोति तदभिसम्पद्यते ।।** —शतपथब्राह्मणे

जीवो यन्मनसा मनुते व्याहरति तद्वाचा, यद्वाचा व्याहरति तत्कर्मणा कुरुते कर्मणा सम्पादितञ्चोपभुंक्ते, अतः 'कृतकर्मानुरूपमेवोपभुंक्ते फलं जीवः' इति सुतरां सिद्धयति । पापकर्माणो जीवात्मानः परमेश्वरस्य न्यायव्यवस्थया दुःखात्मकं कर्मफलं भुञ्जाना रुदन्तितमाम्, अनयैव दिशेश्वरस्तान् रोदयति अतएव च स **'रुद्र'** इत्याख्यायते ।

**नारायणः**—**आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।**
**ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ।।**
—मनु० १।१०

नारा इति जीवानामम्भसाञ्च समाख्या, यस्य ता अयनमर्थान्निवासस्थानानि स सर्वजीवेषु व्यापकश्च परमात्मा **'नारायणः'** इति व्यपदिश्यते ।

**चन्द्रः**—'चदि आह्लादे' अस्माद्धातोश्चन्द्र इति पदं सिद्धयति । यश्चन्दति चन्दयति वा सर्वानानन्दयति आनन्दस्वरूपश्च स **'चन्द्रः'** ।

**मङ्गलः**—गत्यर्थान्मगि धातोः मङ्गेरलजिति [उ० ५।७०] सूत्रेण मङ्गलशब्दः सिद्धयति । यो मङ्गति मङ्गयति वा स्वयं मङ्गलस्वरूपः, मङ्गलसम्पादयिता चान्येषां स परमेश्वरो **'मङ्गलः'** ।

**बुधः**—'बुध अवगमने'अस्माद्धातोः 'बुध' शब्दः सिद्धयति । यो बुद्धयते स्वयं बोधस्वरूपः सर्वजीवानां बोधकारणं च स **'बुधः'** ।

उक्तो बृहस्पतिशब्दार्थः ।

**शुक्रः**—'ईशुचिर् पूतीभावे' इति धातोः शुक्रशब्दः सिद्धयति । यः शुच्यति नितरां पवित्रो विद्यते, शोचयति वा शोधयति निजसङ्गतो जीवान् स **'शुक्रः'** ।

**शनैश्चरः**—शनैरुपपदात् चरधातोः शनैश्चर इति पदं जायते। यः शनैश्चरति=यः खलु निसर्गेणैव सर्वत्र प्राप्तो धैर्यस्वरूपः स **'शनैश्चरः'**।

**राहुः**—'रह त्यागे' इति धातोः 'राहुशब्दः' सिद्ध्यति। यो रहति परित्यजति दुष्टान् राहयति त्याजयति वा स **'राहुरीश्वरः'**=एकान्तस्वरूपः—यत्स्वरूपे पदार्थान्तरं न संयुज्यत इति यावत्।

**केतुः**—'कित निवासे, रोगापनयने' चेति धातोः केतुशब्दः प्रसिद्ध्यति। यः केतयति सर्वजगन्निवासः असंस्पृष्टो व्याधिभिः कैवल्ये च मुक्तात्मनश्चिकित्सति रोगादिकं निशातयति स **'केतुरशीवरः'**।

**यज्ञः**—'यज देवपूजासङ्गीतकरणदानेषु', धातोरमुष्मात् 'यज्ञः' शब्दः सिद्ध्यति। **यज्ञो वै विष्णुरिति** ब्राह्मणे समाम्नायते। यो यजति संयुनक्ति जगतः सकलपदार्थान् विदुषां पूज्यः, ब्रह्मादिपूर्वजानामृषिमुनीनां पूज्य आसीदस्ति भविष्यति च स **'यज्ञः'** परमेश्वरः।

**होता**—'हु दानादनयोरादाने चेत्येके' इति धातोर्होतेति पदं निष्पन्नं भवति। यो जुहोति प्रयच्छति दातव्यवस्तूनि जीवेभ्यः, समादत्ते च ग्रहीतव्यानि स **'होता'**।

**बन्धुः**—'बन्ध बन्धने' धातोरमुष्मात् 'बन्धु' शब्दो जायते। यः स्वस्मिन् चराचरं जगद् बध्नाति, बन्धुवत् धर्मात्मनां सुखायं सहायो वा वर्तते स **'बन्धुः'**। येन स्वात्मनि सर्वलोकाः सम्यङ् नियन्त्रिता यश्च सोदर्य इव भ्रातॄणां पृथिव्यादिलोकानां धारणरक्षणकर्त्ता, सुखप्रदश्च स परमात्मा **'बन्धुः'** इत्यभिधीयते।

**पिता**—'पा रक्षण' इति धातोः 'पिता' शब्दः सिद्ध्यति। यः पाति सर्वान् स पिता। यथा लोके स्वात्मजेषु दयया तदुन्नतिं कामयन्ते सर्व एव पितरस्तथैव परमेश्वरोऽपि सर्वजीवानां समुन्नतिमीक्षते स **पितेत्याख्यायते**।

**पितामहः**—पितॄणामपि पितृत्वात्स **'पितामहः'**।

**प्रपितामहः**—यः पितामहानां पिता स **'प्रपितामहः'**।

**माता**—यो मिमीते मानयति सर्वान् स **माता**। यथा हि कृपावती जननी स्वसन्ततिसुखं समृद्धिं च कामयते तथैवेश्वरोऽपि सर्वेषां वृद्धिमीक्षते, अतः स **माता**।

**आचार्यः**—आङ् पूर्वाच्चरगतिभक्षणयोरिति धातोराचार्यशब्दः सिद्ध्यति। यः सत्यमाचारं ग्राहयति सर्वा विद्या वा बोधयति स **'आचार्यः'** ईश्वरः।

**गुरुः**—'गॄ शब्दे' इति धातोः गुरुपदं निष्पद्यते। यो धर्म्यान् शब्दान् गृणात्युपदिशति स **'गुरुः'**।

**स पूर्वेषामपि गुरुः कालेनानवच्छेदात्** ॥—योगसूत्रसमाधिपादे सू० २६

सत्यधर्मप्रतिपादकानामशेषविद्यासम्पन्नानां वेदानामुपदेष्टृत्वात् कदाचिदपि नाशरहितत्वात् कल्पादावग्निवायुरव्यङ्गिरसां ब्रह्मादीनां गुरूणामपि गुरुत्वाच्च स परमेश्वरो गुरुरिति व्यपदिश्यते ।

**अजः**—'अज गतिक्षेपणयोः', 'जनी प्रादुर्भावे' इति धातुद्वयाभ्यामज-शब्दः सिद्ध्यति । योऽजति सृष्टिं प्रति सर्वान् प्रकृत्यादीन् पदार्थान् प्रक्षिपति जानाति वा कदाचिन्न जायते **सोऽजः** । यः प्रकृतेरवयवानाकाशादिभूतानि परमाणूंश्च यथास्वं संयोजयति देहेन सह जीवानां सम्बन्धविधायकजन्मदः स्वयञ्च कदाचिदपि न जायतेऽतः स **'अजः'** ।

**ब्रह्मा**—बृह बृहि वृद्धाविति धातुभ्यां ब्रह्मा शब्दः सिद्ध्यति । योऽखिलं जगन्निर्माणेन बृंहति वर्द्धयति स **'ब्रह्मा'** ।

**सत्यम्**—**'सत्यं ज्ञानमनन्तं ब्रह्म'** इति तैत्तिरीयोपनिषदि । सन्तीति सन्तस्तेषु सत्सु साधु तत्सत्यम् ।

**ज्ञानम्**—यज्जानाति चराऽचरं जगत्तज्ज्ञानम् ।

**अनन्तम्**—न विद्यतेऽन्तोऽवधिर्मर्यादा इयत्तावधारणं (एतावान् लम्बो व्यायतो ह्रस्वो दीर्घश्चेति परिमाणशून्यम्) यस्य तदनन्तम् ।

**ब्रह्म**—सर्वेभ्यो बृहत्त्वाद् ब्रह्म ।

**अनादिः**—आङ्पूर्वात्—'डुदाञ् दाने' इति धातोरादिशब्दो नञ्-पूर्वाच्च अनादिशब्दः सिद्ध्यति । यस्मात् पूर्वं नास्ति परं चास्ति स आदि-रित्युच्यते [महाभाष्य १।१।५।२०] न विद्यते आदिः कारणं यस्य सोऽनादि-रीश्वरः ।

**आनन्दः**—आङ् पूर्वात् 'टुनदि समृद्धौ' इति धातोरानन्द इति पदं जायते। आनन्दन्ति सर्वे मुक्ता यस्मिन्नानन्दस्वरूपे यद्वा यः सर्वान् धर्मात्मनो जीवानानन्दयति स **'आनन्दः'** ।

**सत्**—'अस् भुवि' धातोः सच्छब्दः सिद्ध्यति । यदस्ति त्रिषु कालेषु न बाध्येत **तत्सद्ब्रह्म** ।

**चित्**—'चिती संज्ञाने' इति धातोश्चिच्छब्दः सिद्ध्यति । यश्चेतन-स्वरूपश्चेतति चेतयति संज्ञापयति सत्यासत्यं सर्वसज्जनान् योगिनस्तच्चित् परं ब्रह्म ।

अमीषां शब्दानां विशेष्यतया परमेश्वरः सच्चिदानन्दस्वरूपः समाख्यायते ।

**नित्यः**—यो नित्यध्रुवोऽचलोऽविनाशी स **'नित्यः'** ।

**शुद्धः**—'शुन्ध शुद्धौ' इति धातोः शुद्धशब्दो निष्पद्यते । स्वयं पवित्रः सर्वाशुद्धिभिः पृथग्भूतो यः शुन्धति सर्वान् शोधयति स **'शुद्ध'** ईश्वरः ।

**बुद्धः**—'बुध अवगमने' इति धातोः क्तप्रत्यये 'बुद्ध' शब्दः सिद्ध्यति ।

यो बुद्धवान् सदैव ज्ञातास्ति स **बुद्धो** जगदीश्वरः ।

**मुक्तः**—'मुच्लृ मोचने' इति धातोर्मुक्तशब्दो जायते । सर्वाशुद्धिविवर्जितो यो मुञ्चति मोचयति मुमुक्षून् क्लेशेभ्यः स **मुक्तो** जगदीश्वरः ।

अतएव नित्यशुद्धबुद्धमुक्तस्वभावो जगदीश्वरः ।

**निराकारः**—निराङ्पूर्वात् 'डुकृञ् करणे' इति धातोः 'निराकार' इति पदं जायते । निर्गत आकारात् स **'निराकारः'** । यो वा आकारविवर्जितो यश्च कर्हिचिदपि देहं नाधत्ते अतः स **'निराकारः'** ।

**निरञ्जनः**—निरुपसृष्टादञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, इति धातोर्निरञ्जनशब्दः सिद्ध्यति । अञ्जनं व्यक्तिराकारो म्रक्षणं कुकामो म्लेच्छाचार इन्द्रियैः प्राप्तिश्चेत्येतस्माद्यो निर्गतः पृथग्भूतः स **'निरञ्जनः'** ।

**गणेशः, गणपतिः**—'गण संख्याने' इति धातोर्गणशब्दो निष्पद्यते । तत ईश-पतिशब्दसमभिव्याहारेण 'गणेशो' गणपतिर्वा जायते । ये प्रकृत्यादयो जडा जीवाश्च गण्यन्ते संख्यायन्ते तेषामीशः स्वामी पतिः पालको वा **'गणेशः' गणपतिर्वा** ।

**विश्वेश्वरः**—यो विश्वमीष्टे स **विश्वेश्वरः** ।

**कूटस्थः**—यः कूटेऽनेकविधव्यवहारे स्वरूपेणैव तिष्ठति स **कूटस्थः** परमेश्वरः । सर्वव्यवहारेषु व्याप्तः सर्वव्यवहाराणामाधारभूतोऽपि यः कस्मिंश्चिदपि व्यवहारे स्वस्वरूपं न परिवर्तयतीति यावत् ।

**देवी**—**देवीति** पदेन सर्वे देवशब्दार्था अभिधीयन्ते । परमात्मनो नामानि लिङ्गत्रयेष्वपि विद्यन्ते । **ब्रह्मचितिरीश्वरश्चेति** । तथा च ईश्वरशब्दविशेषणे 'देव' इति, चितिशब्दविशेषणे तु 'देवी' इति प्रयुज्यते ।

**शक्तिः**—'शक्लृ शक्तौ' इति धातोः शक्तिपदमभिनिष्पद्यते । यः सर्वं जगत् कर्तुं शक्नोति स **'शक्तिः'** ।

**श्रीः**—'श्रिञ् सेवायां' धातोरमुष्मात् 'श्री' शब्दः सिद्ध्यति । यः श्रीयते सेव्यते सर्वेण जगता विद्वद्भिर्योगिभिश्च स **श्रीरीश्वरः** ।

**लक्ष्मीः**—'लक्ष दर्शनाङ्कनयोरिति धातोः' 'लक्ष्मी' शब्दः सिद्ध्यति । यो लक्षयति पश्यत्यङ्कते चिह्नयति चराचरं जगदथवा वेदैराप्तैर्योगिभिश्च यो लक्ष्यते स **'लक्ष्मीः'** सर्वप्रियेश्वरः । यो वै सकलं चराचरं जगत्पश्यति चिह्नयति-दृश्यतां नयति देहेऽक्षिनासिके, तरौ पत्रपुष्पफलमूलानि, पृथिव्यम्भसोः कृष्णरक्तश्वेतमृत्तिकापाषाणसूर्यचन्द्रादीनि चिह्नानि निर्माति, अशेषसुषमाणामपि सुषमा, यश्च वेदादिसच्छास्त्राणां धार्मिकविद्वद्योगिनाञ्च लक्ष्यो दर्शनीय अतः स लक्ष्मीरित्यभिधीयते ।

**सरस्वती**—'सृ' गताविति धातोः मतुपि ङीपि च सरस्वतीपदं

सिद्ध्यति। सरो विविधं ज्ञानं शब्दार्थसम्बन्धप्रयोगविज्ञानं यथावद्विद्यते यस्यां चितौ सा **सरस्वती**।

**सर्वशक्तिमान्**—सर्वाः शक्तयो विद्यन्ते यस्मिन् स **सर्वशक्तिमा-नीश्वरः**। निजकर्मसम्पादने सहायान्तरनिरपेक्षत्वात् स्वसामर्थ्येनैवाखिल-कर्मनिर्वाहकतया स सर्वशक्तिमान्।

**न्यायकारी**—'णीञ् प्रापणे' पूर्वादिणगताविति धातोर्न्यायशब्दः सिद्धयति। **प्रमाणैरर्थपरीक्षणं न्याय** इति न्यायसूत्रभाष्ये वात्स्यायनमुनिः। पक्षपातराहित्याचरणं-प्रत्यक्षादिभिः प्रमाणैः सुपरीक्षया यत्सत्यं सिद्ध्येत, पक्षपातराहित्येन धर्माचारश्च न्याय इति यावत्। न्यायं कर्तुं शीलं यस्य स **न्यायकारीश्वरः**।

**दयालुः**—'दय दानगतिरक्षणहिंसादानेषु' इति धातोर्दयापदं जायते। दयते ददात्यभयं जानाति गच्छति रक्षति (सज्जनान्) हिनस्ति यथायथं दण्डयति दुष्टान् यया सा दया बह्वी दया विद्यते यस्य स **दयालुः** परमेश्वरः।

**अद्वैतम्**—द्वयोर्भावो द्विता, द्वाभ्यामितं द्वीतं वा सैव तदेव वा द्वैतं, न विद्यते द्वैतं द्वितीयेश्वरभावो यस्मिस्तदद्वैतम् अर्थात्सजातीयविजातीयस्वगत-भेदशून्यं ब्रह्म। मानवस्यापरो जनः सजातीयः, मनुष्यत्वव्यतिरिक्तजातिमान् वृक्षपाषाणादिर्विजातीयः, शरीरेऽक्षिनासिकाकर्णाद्यवयवभेदः स्वगतभेदः। एवं सजातीयविजातीयेश्वरभेदविवर्जितः स्वात्मनि तत्त्वान्तरवस्तुशून्यश्च परमेश्वरोऽद्वैतः।

**निर्गुणः**—गण्यन्ते ये ते गुणाः, यैर्वा गणयन्ति ते गुणाः। यो गुणेभ्यो निर्गतः स **निर्गुण ईश्वरः**। सत्त्वरजस्तमोभी रूपरसगन्धस्पर्शादिभिश्च स्थावरगुणैः, अज्ञानाल्पज्ञत्वरागद्वेषैरविद्यादिक्लेशैश्च जीवात्मगुणैरसंयुक्ततया परमेश्वरो **'निर्गुणः'**। अत्र **चाशब्दमस्पर्शमरूपमव्ययमि**त्यौपनिषदं प्रमाणम्।

**सगुणः**—यो गुणैः सह वर्तते स सगुणः। सर्वज्ञत्व-सर्वसुखत्वपवित्रता-नन्तबलादिगुणैर्युक्तत्वात्सगुणः खलु परमात्मा। यथेयं जगती गन्धादिभि-र्विशिष्टत्वात्सगुणा, इच्छादिभी रहितत्वाच्च निर्गुणेति समाख्यायते। तथैव परमेश्वरोऽपि जगतो जीवस्य च गुणैरसंस्पृष्टतया निर्गुणः सर्वज्ञत्वादिगुणैश्च सम्भिन्नत्वात् सगुणः। सागुण्यनैर्गुण्याभ्यामसंस्पृष्टो नास्तिकोऽपि पदार्थः। तथा ह्यचेतनाश्चैतन्यादिचेतनगुणैः पृथक्तया निर्गुणाः, स्वगुणैश्च विशिष्ट-त्वात्सगुणाः। जीवात्मानोऽपि स्थावरगुणराहित्येन निर्गुणाः, इच्छादिस्वगुण-साहित्येन च सगुणाः। परमेश्वरेऽपि तथैव विज्ञेयम्।

**अन्तर्यामी**—अन्तर्यन्तुं नियन्तुं शीलं यस्य सोऽन्तर्यामी। यश्चेतना-चेतनात्मकं जगदभिव्याप्य सर्वान् नियमयति स **'अन्तर्यामी'**।

**धर्मराजः**—यो धर्मे राजते प्रकाशते यश्चाधर्मविवर्जितो धर्ममेव प्रकाशयति स **'धर्मराजः'** ।

**यमः**—'यमु उपरमे' इति धातोर्यमशब्दः सिद्ध्यति । यः सर्वान् प्राणिनो नियच्छति तेभ्यः कर्मफलप्रदानव्यवस्थां सम्पादयति व्युपरतश्च सर्वविधान्यायेन स **'यमः'** ।

**भगवान्**—'भज् सेवायाम्' इति धातोर्भगशब्दस्ततो मतुपि 'भगवानिति' पदं जायते । भगः सकलैश्वर्यं सेवनं वा विद्यते यस्य स **'भगवान्'** ।

**मनुः**—'मन ज्ञाने'अस्माद्धातोर्मनुशब्दः सिद्धयति। यो मन्यते विज्ञानशीलो वरणीयश्च स **'मनुः'** ।

**पुरुषः**—'पृ पालनपूरणयोः' इति धातोः पुरुषशब्दः सिद्ध्यति । यः स्वव्याप्त्या चराचरं जगत्पृणाति पूरयति वा स **'पुरुषः'** ।

**विश्वम्भरः**—विश्वोपपदात् 'डुभृञ् धारणपोषणयोः' इति धातोः विश्वम्भरशब्दः सिद्ध्यति । यो विश्वं बिभर्ति धरति पुष्णाति वा स **'विश्वम्भरः'** जगदीश्वरः ।

**कालः**—'कल संख्याने' इति धातोः कालपदं निष्पद्यते । कलयति संख्याति सर्वपदार्थान् जीवात्मनश्च स **'कालः'** ।

**शेषः**-'शिष्लृ विशेषणे' अस्माद्धातोः शेषशब्दो निष्पन्नः । यः शिष्यत उत्पत्तिप्रलयाभ्यां स **'शेषः'** ।

**आप्तः**—'आप्लृ व्याप्तौ' इति धातोराप्तपदं निष्पन्नं भवति । सत्योपदेशकोऽशेषविद्यासम्पन्नो यः सर्वान् धर्मात्मन आप्नोति वा सर्वैर्धर्मात्मभिराप्यते छलादिरहितश्च सः **'आप्तः'** ।

**शङ्करः**—शम् पूर्वात् 'डुकृञ् करणे' इति धातोः शङ्कर शब्दः सिद्धो भवति । यः शं कल्याणं सुखं करोति स **'शङ्करः'** ।

**महादेवः**—महत्पूर्वाद्देवशब्दात् महादेवपदं जायते । यो महतां देवानां विदुषामपि देवः, सूर्य्यादिलोकानां प्रकाशकश्च स **'महादेवः'** ।

**प्रियः**—'प्रीञ् तर्पणे कान्तौ च' इति धातोः प्रियशब्दः सिद्ध्यति । यः सर्वान् धर्मात्मनो मुमुक्षून् शिष्टाँश्च पृणाति प्रसादयति प्रीयते काम्यते वा सर्वैः स **'प्रियः'** ।

**स्वयम्भूः**—स्वयं पूर्वाद् भू सत्तायामिति धातोः स्वयम्भूपदं जायते । यः स्वयं भवति नान्यतः कर्हिचिदुत्पद्यते स **'स्वयम्भूः'** ईश्वरः ।

**कविः**—'कु शब्दे' अस्माद्धातोः कविपदं सिद्धं भवति । यः कौति शब्दयत्यनुशास्ति वेदमुखेन सर्वा विद्याः, स्वयञ्च ता वेत्ति स **'कविः'** ईश्वरः ।

**शिवः**—'शिवु कल्याणे' अस्माद्धातोः शिवशब्दः सिद्धयति । शिवुधातुसद्भावे च 'बहुलमेतन्निदर्शनमिति' वचनं प्रमाणम् । यो वै कल्याणस्वरूपो-

ऽन्येभ्यश्च मङ्गलप्रदः स **'शिवः'** परमेश्वरः।

इदं परमात्मनो नामशतं समुपन्यस्तमतो व्यतिरिक्तान्यप्यसंख्येयानि तन्नामानि। अनन्तगुणकर्मस्वभावस्य हि तस्य नामान्यप्यनन्तानि, गुणकर्म-स्वभावेषु प्रत्येकस्य पृथक्-पृथङ् नामसद्भावादिमानि मन्निर्दिष्टनामानि सागरस्य पुरतो बिन्दवरिव (अल्पीयांसि)। वेदादिशास्त्रेषु हि परमात्मनोऽनन्तगुणकर्मस्वभावा व्याख्यायन्ते, तदध्ययनाध्यापनैस्तानि समवगन्तुं शक्यन्ते। तदध्येतॄणामेव चाशेषवस्तुजातस्य बोधः साकल्येन सम्भवति।

**प्र०**—अन्यग्रन्थप्रणेतृभिरिव भवतापि निजग्रन्थस्यादिमध्यावसानेषु मङ्गलाचरणं कुतो न व्यधायि ? न वालेखि ?

**उ०**—नैवमस्माभिः कर्त्तुमर्हम्—आदिमध्यावसानेषु मङ्गलं कृतवतो विदुषस्तदन्तरोपदिष्टं सर्वमप्यमङ्गलं भवेदतो न्याय्यस्य पक्षपातशून्यस्य वेदप्रतिपादितस्य परमात्मनोऽनुशासनस्य नित्यमाचरणमेव मङ्गलाचारः। तथा च सांख्ये—

**मङ्गलाचरणं शिष्टाचारात्फलदर्शनात् श्रुतितश्चेति ॥**

—सां० अ० ५, सू० ५

किञ्च तैत्तिरीयोपनिषदि समाम्नायते—

**यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि।**

—तै० प्रपाठक ७, अ० ११

अयि मानवाः! यान्यनवद्यानि, न निन्दनीयानि धर्मादनपेतानि कर्माणि, तान्येव युष्माभिरनुष्ठेयानि नाधर्म्याणि, अत आधुनिकग्रन्थेषु **"श्रीगणेशाय नमः। सीतारामाभ्यां नमः। राधाकृष्णाभ्यां नमः। श्रीगुरु-चरणारविन्दाभ्यां नमः। हनुमते नमः। दुर्गायै नमः। वटुकाय नमः। भैरवाय नमः। शिवाय नमः। नारायणाय नमः"** इत्यादीनि मङ्गलाचरणानि समवलोक्यन्ते वेदशास्त्रविरुद्धत्वाद्बुद्धिमन्तस्तान्यलीकान्येव मन्यन्ते। वेदेषु ऋषिप्रणीतग्रन्थेषु वा न क्वापीदृशं मङ्गलं निरीक्ष्यते प्रत्युत वैदिकेषु ग्रन्थेषु 'ओ३म्', 'अथ' शब्दावेव गोचरी क्रियेते। तथाहि—

**"अथ शब्दानुशासनम्"**, अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते। इति व्याकरणमहाभाष्ये।

**"अथातो धर्मजिज्ञासा"**, अथेत्यानन्तर्ये वेदाध्ययनानन्तरम्। इति पूर्वमीमांसायाम्।

**"अथातो धर्मं व्याख्यास्यामः"**, अथेति धर्मकथनानन्तरं धर्मलक्षणं विशेषेण व्याख्यास्यामः। वैशेषिकदर्शने।

**"अथ योगानुशासनम्"**, अथेत्ययमधिकारार्थः। योगशास्त्रे।

**"अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः"** सांसारिकविषय-भोगानन्तरं त्रिविधदुःखात्यन्तनिवृत्त्यर्थं प्रयत्नः कर्त्तव्यः। सांख्यशास्त्रे।

**अथातो ब्रह्मजिज्ञासा।** इदं वेदान्तसूत्रम्।

**ओमित्येतदक्षरमुद्गीथमुपासीत।** इदं छान्दोग्योपनिषद्वचनम्।

**ओमित्येतदक्षरमिदꣳ सर्वं तस्योपव्याख्यानम्।** इदं च माण्डूक्योपनिषद्वचनम्। तत्तच्छास्त्राणामाद्यानि वचनानीमानि। एवमेवान्येष्वपि ऋषिमुनिप्रणीतग्रन्थेषु 'ओ३म्', 'अथ' शब्दौ विलिखितौ। संहिताचतुष्टयस्यापि प्रारम्भे "अग्निं, इट्, अग्ने, ये त्रिषप्ताः परियन्ति" इत्यादीनि पदानि समुपदिष्टानि न तु क्वापि 'श्रीगणेशाय नमः' इत्यादिपदानि (समुपदिश्यन्ते)। यच्च वैदिका वेदारम्भे हरिः ओमिति साम्प्रतं संलिखन्त्यधीयते च तत्पौराणिकानां तान्त्रिकाणां च मिथ्याकल्पनाभिरादत्तम्, नहि वेदादिशास्त्रेषु 'हरिः' इत्यादीनि पदानि आदौ विलिखितानि अतो ग्रन्थमुखे 'ओ३म्', 'अथ' शब्दो वा लेख्यः। संक्षेपत उक्तमिदमीश्वरविषयेऽतः परं शिक्षाविषयं व्याख्यास्यामः।

**इति श्रीमद्दयानन्दसरस्वतीस्वामिकृते सत्यार्थप्रकाशे शङ्करदेवपाठकेन संस्कृतभाषयाऽनूदिते ईश्वरनामविषये**

**प्रथमः समुल्लासः सम्पूर्णः॥**

# अथ द्वितीयसमुल्लासारम्भः

## अथ शिक्षां प्रवक्ष्यामः

**मातृमान् पितृमानाचार्यवान् पुरुषो वेद ।**

वस्तुतः स एव मानवः शक्नोति ज्ञानवान् भवितुं यस्य हि त्रय उत्तम-शिक्षका भवेयुः, जननी, जनक आचार्यश्चेति । तदेव कुलं धन्यं, स एव दारको महाभागो यस्य पितरौ धार्मिकौ कृतविद्यौ च भवेताम् । नहि कश्चिदन्यो जननीव समुपदिशत्युपकरोति वा बालान् । स्वात्मजानामुपरि स्नेहे तत्कुशल-कामनायां वा जनन्याः साम्यं नावहति कश्चित् । अतः (मातृमान्) प्रशस्ता धार्मिकी माता विद्यते यस्य स मातृमान् (मातृमानिति पदव्याख्यानम्) धन्या हि सा जननी या निषेकादारभ्याशिक्षावसानान्तं सुशीलतामुपदिशति बालान् ।

प्रसूजनयित्रोरुभयोरप्येतत्समुचितं "यत्ताभ्यां गर्भाधानस्यादौ मध्येऽवसाने च मद्यादीनि मादकद्रव्याणि, रूक्षाणि, दुर्गन्धमयानि, बुद्धिविलुम्पकानि च वस्तूनि परिहाय, शान्त्यारोग्यप्रदानि, बलबुद्धिविवर्द्धकानि, पराक्रमशीलसभ्यताजनकानि, घृतपयःप्रभृतिश्रेष्ठवस्तूनि संसेव्यानीति" । येन हि तयो रजोरेतसी विगतदोषे गुणवन्ती च भवेताम् । तौ च ऋतुगमन-विधिं परिपालयेताम् ।

### ऋतुगमनविधिः

रजोदर्शनादारभ्याषोडशीं तिथिमृतुदानकालः संख्यायते । तत्राप्यादिमं वासरचतुष्टयं संत्याज्यम् । अवशिष्टेषु द्वादशदिवसेषु एकादशीं त्रयोदशीं पर्वरात्रिं च संत्यज्यावशिष्टासु दशयामिनीषु गर्भाधानं प्रशस्यते । रजोदर्शन-दिवसादारभ्य षोडशीतिथितश्च परतः समागमस्त्याज्यः ततोऽसत्यां गर्भस्थितौ पुनर्यावत्पूर्वोक्त ऋतुदानकालो नैयात् तावत् गर्भस्थितिसमनन्त-रञ्चासंवत्सरं भोगविरतौ भवेतां दम्पती । यदाचोभयोरपि दम्पत्योः शरीरेऽरोगे सप्रसादे विशोके च चेतसी भवेतां तदैव तौ चरकसुश्रुतविहितां भोजनछादनादिपद्धतिं मानवधर्मशास्त्रप्रतिपादितां मिथः प्रसादसरणिञ्चाव-लम्ब्य व्यवहरेताम् । संजातायां सत्वस्थितावाहारविहारेषु योषिता नितरां

सावधानया भवितव्यम्। यावदब्दं च पुंसः समागमः परिहरणीयः। आप्रसवं चाङ्गना शिशोर्बुद्धिबलरूपारोग्यपराक्रमशान्त्यादिसम्पादकपदार्थान् सेवेत।

लब्धजन्मनः शिशोः सुवासितेन वारिणाऽभिषेकं नाडीछेदनं च संविधाय गन्धाढ्यैर्होम्यद्रव्यैरग्निहोत्रं निर्वर्तयेत्। प्रजाताया अपि स्नान-भोजनयोः सुव्यवस्थां कारयेत् येनोभयोरपि तयोः शरीरं नीरोगं पुष्टञ्च भवेदनुक्षणम्। पयसो गुणविवर्धकानि द्रव्याण्यभ्यवहरेत जननी धात्री वार्भकस्य। आजन्मनः षडहः पर्यन्तं क्षीरं धापयेत शिशुं जननीस्ततः परं च धात्री। परं तां पुष्टिकृतेऽन्नपाने समाशयेतां मातापितरौ। अकिञ्चनत्वाद्धात्रीं निर्वोढुमक्षमतया निःस्वो बुद्धिबलसम्पादकमारोग्यप्रदमौषधं शुद्धे वारिणि समुन्द्य संक्वाथ्य वाससा च परिशोध्य क्षीरसम्मितं तदौषधजलं गव्य आजिके वा पयसि सम्मेल्य कुमारं पाययेत्।

जनुषोऽनन्तरं शिशुं तन्मातरं च सूतिकागृहादन्यत्र शोभनैर्गन्धवद्भिः पदार्थैः सुभूषिते सुमारुतप्रदेशे संवासयेरन्। परिपूतपवनप्रदेशे च परिभ्रमणं समुचितम्। यत्र च धात्री, धेनोरजाया दुग्धं वा न लभ्येत तत्र यथावसरं यथामतिश्चानुतिष्ठेयुः। गर्भस्थस्य जन्तोः शरीरं मातुः शरीरभागेन सम्पद्यतेऽतएव प्रसवकाले कार्श्यमावहति प्रसूता, तस्मान्न सा स्तन्यं धापयेत। दुग्धस्रावविमोकार्थं स्तनयोः किञ्चिदौषधं प्रलिम्पेत्। एवं हि द्वितीयस्मिन्नेव मासि भूयोप्यङ्गना युवतिः सम्पद्यते। तावत्पुमान् रेतो निग्रहं कुर्वीत। एवमनुतिष्ठतोः स्त्रीपुरुषयोः सर्वदैवोत्तमा प्रसूतिः, दीर्घमायुः, बलपराक्रमयोर्वृद्धिश्च जायते, अपत्यान्तराण्यपि च बलपराक्रमसमन्वितानि दीर्घजीवीनि धर्म्याणि च जायन्तेतरां ततो योषिदपत्यपथस्य संकोचनशोधने पुमाँस्तु शुक्रनिग्रहं कुर्वीत। एवं हि सकलान्यपि तोकानि श्रेष्ठानि भविष्यन्ति।

माता सर्वदैवोत्तमशिक्षामनुशिष्यादपत्यानि येन तानि सभ्यानि संजायेरन् केनाप्यङ्गेन च कुचेष्टां कर्तुं न पारयेयुः। वक्तुमुपक्रममाणेषु बालेषु जननी रसनायां मार्दवाधायकमुपायमाचरेद्यतोऽर्भको वर्णान् सुव्यक्ततया समुच्चारयितुं शक्नुयात्। तथा च प्रयतेत यथा तत्तत्स्थानप्रयत्नान्, यथा 'प' अस्य ओष्ठस्थानं स्पृष्टश्च प्रयत्नः—ओष्ठद्वयं संयोज्य समुच्चारणं, ह्रस्वदीर्घप्लुतान् तत्तद्वर्णान् याथार्थ्येन वदितुं पारयेत्, स्वरे च तस्य माधुर्य-गाम्भीर्यसौन्दर्याणि सम्भवेयुः। अक्षर-मात्रा-वाक्य-संहितावसानानि पार्थक्येन श्रुतिपथमारोहेयुः। यदा च शिशवः किञ्चित् किञ्चित् भाषितुं बोद्धुं च पारयेयुस्तदा तान्, ज्येष्ठैर्लघुभिर्मान्यैर्जननी-जनक-भूपति-विचक्षणप्रभृतिभिः सह कथं संलापः कर्त्तव्यः, तैः सह कथं व्यवहर्त्तव्यं, तदन्तिके च कथमासितव्यमिति शिक्षयेत्। येन ते सर्वत्र शोभनाचारतयादरं लभेरन्। किञ्च—सर्वदा विद्याभिलाषिणीः सत्सङ्गरुचीः सन्ततीर्विधातुं यत्नवद्भ्यां भाव्यम्,

ताः हि मुधा खेलनं कूर्दनं परिहासं केलिं हर्षशोकौ कस्मिंश्चिद्वस्तुनि लोलुपतामीर्ष्याद्वेषादिकं च संत्यजेयुः।

उपस्थेन्द्रियस्य संस्पर्शमर्दनाभ्यां रेतसः क्षयः क्लैब्यं करे च पूतिगन्धिः संजायतेऽतो न कदापि तत्स्पृशेयुः। पितृभ्यां तथा प्रयतितव्यं यथा तद्बालेषु सत्यभाषणशौर्यधैर्योल्लासादिगुणाः प्रचीयेरन्। पञ्चमाब्दे पदमादधतो बालान् देवभाषावर्णान् यथाशक्यं च वैदेशिकीनामपि भाषाणां लिपिं बोधयेताम्। तदनन्तरं सुशिक्षाप्रदानि विद्याधर्मपरमेश्वरादीनामुपवर्णकानि मातृपित्राचार्यविपश्चित्प्राघुणिकभूपतिप्रजाकुटुम्बबान्धवस्वसृभृत्यादिभिर्व्यवहारबोधकानि सार्थकानि मन्त्रश्लोकसूत्रगद्यपद्यानि संधारयेयुः। येन बालाः कस्यापि धूर्तस्य प्रवञ्चनायां नैयुः। भूतप्रेताद्यलीकवस्तूनामविश्वासाय विद्याधर्मविरुद्धा भ्रान्तिपाशक्षेप्तारो व्यवहारा अप्युपदेष्टव्याः। येन भूतप्रेताद्यलीकविषयाणां विश्वासो न सञ्जायेत। (वस्तुतः संस्कृतभाषायां प्रेतशब्देन शवः भूतशब्देन चातीतकालः समाख्यायते) तथा च मनुरत्र प्रमाणम्—

**गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन्।**
**प्रेतहारैः समं तत्र दशरात्रेण शुद्धयति ॥**

—मनु० अ० ५।६५

उपरतस्य गुरोः प्रेताख्यस्य निष्प्राणदेहस्य दाहकः शिष्यः "प्रेतहारः" समाख्यायते सोऽन्यैः शवनेतृभिः सह दशमेऽहनि शुद्धिमर्हति। (उपरितनसमुद्धरणे 'प्रेत' शब्देन शवव्यतिरिक्तं नान्यत् किञ्चिद् गृह्यते)। देहस्य भस्मसमनन्तरं मृतः पुमान् 'भूत' इत्याख्यायते, अर्थादमुकाभिधः पुमानासीत् स हि साम्प्रतं मृतः। उत्पद्यमानाः सर्वेऽपि भावाः प्राप्य वर्तमानस्थितिं विनाशमाप्ता भूतस्थत्वादतीतकालवर्तित्वाद् भूताख्यां लभन्ते एष एव सर्वेषां प्राक्तनानां ब्रह्मादीनामिदानींतनानाञ्च विदुषां सिद्धान्तः। परं शंकाकुसङ्गकुसंस्कारवत एव जनाय भयशङ्कास्वरूपा भूतप्रेतशाकिनीडाकिन्यादयोऽनेके भ्रमा दुःखदायिनो भवन्ति। पश्यत—परलोकान्तरितस्य जन्मिन आत्मा पापपुण्येऽनुवर्तमानः परमात्मनो व्यवस्थया सुखदुःखोपभोगाय जन्मान्तरं सन्दधाति। इयं ह्यविनाशिपरमात्मनो व्यवस्था नान्यथा कर्तुं शक्यते केनापि। मूढधियः खल्वनधीत्यायुर्वेदविज्ञानशास्त्रे सन्निपातादीन् देहसमुद्भवान् उन्मादादीन् मानसाँश्चामयान् भूतप्रेतादिशब्दैः संचक्षते। ते ह्यनादृत्य रुक्प्रतीकारपथ्यादिव्यवहारान् विश्वस्य पाषण्डिनो महामूर्खाननाचारिणः स्वार्थसाधनतत्परान् श्वपच-चर्मकार-शूद्र-म्लेच्छ-प्रभृतीन्, नानाविधदम्भपाखण्डोच्छिष्टभोजनादीनि समाचरन्तस्तन्त्वाद्यलीकमन्त्रयन्त्राणि निबध्नन्तश्च परिभ्रमन्ति। एवञ्च प्रणाश्यात्मनो वित्तं दुर्गतीकृत्यात्मसन्तती रोगाणां प्रवर्धनेन दुःखयन्ति। वित्तवद्भिरज्ञानपिहितलोचनैः "भगवन्! न

ज्ञायते किमभवदनयोरर्भकयोः स्त्रीपुंसयोः" वेति संपृष्टास्ते प्रनष्टबुद्धयः स्वार्थैकपरायणाः पापिनः "देहेऽमुष्य संक्रान्ताः पिशाचाः—भूतप्रेतादयो देव्यो वा शीतलाप्रमुखाः। अप्रतिविहिता ह्येते न मोक्ष्यन्त्यमुं पञ्चत्वमापादयेयुरित्यपि सम्बोभवीति। मिष्टान्नमेतावन्तमुपहारं वोपदद्युश्चेद्भवन्तस्तर्हि वयं मन्त्रजपपुरश्चरणादिभिः संमार्ज्य निःसारयेमेति" संगिरन्ते। इत्युक्तेषु नष्टबुद्धिषु तद्बान्धवेषु "भगवन्नस्माकं सर्वस्वव्ययेनाप्यमुमुल्लाघं करोतु भवानिति" भाषमाणेषु तेषामभीष्टं सिद्ध्यति। धूर्तप्रवरास्तदा कथयन्ति 'आम्, समानयन्त्वेतावतीं सामग्रीमेतावतीं च दक्षिणां प्रयच्छन्तु देवतायै प्राभृतं कुर्वन्तु च ग्रहदानमिति, पटहमृदङ्गकांस्यपात्राणि च वादयन्तो गायन्ति। तेषामपरः पाषण्डिप्रवर आत्मानं सोन्मादमिव दर्शयन् नृत्यकूर्दनपूर्वकं "प्राणानेवास्य ग्रहीष्यामि", इति व्याहरति। ते चाज्ञानिनः श्वपचादीनामपि चरणेष्वात्मानं पातयित्वा "भगवन्! यथेष्टं संगृह्णातु परित्यजतु चैनमिति" ब्रुवते। तदा तु 'अहो! खल्वाञ्जनेयोऽस्मि, पक्वमिष्टान्नं तैलसिन्दूरं सपादद्रोणपरिमितां रोटिकां रक्तकौपीनञ्चानयन्तु'। 'देवी भैरवो वास्मि समैरेयाणि पञ्च काचपात्राणि, विंशतिः कुक्कुटीनाम्, पञ्चाजा मिष्टान्नवाससी च समानीयन्तामिति" ब्रुवति तस्मिन् "यथारुचि प्रतीच्छतु भवानिति" व्याहरत्सु बान्धवेषु स भूयोप्यतितरां नृत्यकूर्दनादिकं विधत्ते। परं यदा कश्चिद्धीमान् पञ्चोपानहो यष्टिं चपेटिकां वा पादरूपेण तेभ्यः प्रदद्यात् तदा तस्य हनूमान् देवी भैरवश्च सम्मुदीभूयाञ्जसैव पलायन्ते, यतः केवलं धनापहरणायैव तेषामयं प्रपञ्चः।

किञ्च यदा ते कमपि ग्रहग्रस्तं ग्रहस्वरूपं कार्त्तान्तिकं समभ्युपेत्य "अयि महाराज! किं जातमस्येत्यनुयुञ्जते तदायं सूर्य्यादिभिः क्रूरग्रहैः समाक्रान्तः, शान्त्या, पाठेन पूजया दानादिकेन च निरामयः सम्पत्स्यते। अथापि पीडातिरेकाद्भवेत्प्राणपरित्यागस्तथापि नास्ति किञ्चिदाश्चर्यम्" इति व्याहरति।

ते प्रष्टव्याः—अयि सांवत्सरिक! जगतीव सूर्यादयोऽपि ग्रहाः स्थावराः, नहि ते तापप्रकाशादिभ्यामन्यत् किमपि कर्तुं प्रभवन्ति। किमिमे चेतना येन समन्यवो दुःखयेयुः शान्ताश्च सुखयेयुः?

प्र०—विलक्षणेऽस्मिन् संसारे भूमिपालाः प्रजावर्गश्च सुखादिमुपभुञ्जानाः समवलोक्यन्ते किं नैतद्ग्रहफलम्।

उ०—नहि, सुकृतदुष्कृतानामिदं फलम्।

प्र०—किमतथ्यं ज्योतिःशास्त्रम्?

उ०—नहि, तत्राङ्कबीजरेखागणितादिकं ज्ञानं सत्यं फलितलीला त्वलीकैव।

प्र०—अपीदं जन्मपत्रं निष्फलम् !

उ०—आम्, नैतज्जन्मपत्रमपितु शोकपत्रसमाख्यम्, यतः सन्ततेर्जन्मनानुभवन्ति प्रमोदभरं सर्वे। परं स आनन्दो निर्मापिताज्जन्मपत्राद्ग्रहफलश्रवणावध्येव सन्तिष्ठते। जन्मपत्रनिर्माणाय पुरोधसा संपृष्टैः शिशुकुटुम्बिभिः "महाराज ! निर्मीयतां सुप्रशस्यं जन्मपत्रम्" इत्यभिधीयते। सोऽपि धनवतः रक्तपीताभिर्बह्वीभी रेखाराजिभिश्चित्रीकृतमकिञ्चनस्य तु वराकस्य साधारण्येन विरच्य जन्मपत्रं श्रावयितुमागच्छति। तत्पुरस्तादुपविश्य जनकाभ्यामपि-"सुन्दरमस्य जन्मपत्रम्"-इति सम्भाव्यमाणः "आवेदयामि यथावस्थितम्—"अस्य जनुषो ग्रहा मित्रग्रहाश्च नितरां श्रेयांसः येन कुमारोऽयं धनधान्यादिपूर्णः लब्धप्रतिष्ठो निरामयः शरीरेण प्राप्तराजसमादरश्च भविष्यति सर्वानभिभविष्यति च संसदि स्वेन तेजसेति" अभिदधाति। तदा पित्रादिभिः "अयि दैवज्ञ ! धन्यो भवान्" इति सत्क्रियमाणेन सांवत्सरिकेण "नैव सेत्स्यति कार्यं वार्ताभिरमूभि"-रिति संचिन्त्य व्याह्रियते। "यद्यपि इमे ग्रहा अनुकुलाः परमिमे न तथा, अमुकग्रहसंयोगेनाष्टमेऽब्देऽस्य मृत्युयोगोऽस्ति" इति। निशम्येदं सन्त्यज्यात्मजजन्मसम्भवामोदं शोकवारिधौ निमज्जन्ति जनकादयः। "महाराज ! किं कुर्मः" तैरित्युक्ते "उपाय अनुष्ठेय" इत्यादिशति मौहूर्त्तः। भूयोऽपि "भगवन् किमनुतिष्ठेम" इत्यनुयुक्तेन कार्त्तान्तिकेन "क्रियन्तां दानम् जाप्यन्तां ग्रहमन्त्राः, भोज्यन्तां च प्रत्यहं विप्राः। अनुमीयते कदाचिदुपायैरमीभिर्नवग्रहान्तराया विनाशमुपैष्यन्ती"-त्यादयः प्रस्तावाः प्रस्तूयन्ते। यदि हि नाम शिशुः पञ्चत्वमियात् तदा 'कः खल्वीष्टे भगवदुपरि सविशेषमनुष्ठितोऽस्माभिरनुष्ठापितश्च युष्माभिः प्रयत्नः, किमत्र शक्यं कर्तुं कर्माण्येवाभवंस्तस्य तादृंशि" अनुपरते तु तस्मिन् "अस्मन्मन्त्रदेवतानां विप्राणाञ्च सामर्थ्यं समवलोक्यतां रक्षितो युष्मदात्मजः" इत्युभयप्रयोजनसम्पादनायात्रानुमानपदं प्रयुज्यते। वस्तुतस्तु निष्फले तेषां जपपाठे द्वित्रिगुणानि रूप्यकाणि तेभ्यो धूर्तेभ्य आदेयानि। संजीवितेषु चापि बालकेषु पुनर्ग्रहीतव्यान्येव। यथैव हि "जगत्स्रष्टुर्नियमान् नान्यथा कर्तुं कश्चिच्छक्नोतीति" मौहूर्त्तैरुच्यते तथैव "बालोऽयं स्वैरेव पुण्यकर्मभिर्नियमेन च परमात्मनः प्राणितो न युष्मज्जपपाठेनेति" गृहस्थैरुच्यताम्। दानपुण्ये कारयित्वा प्रतिग्रहग्रहीतारोऽन्येऽपि गुरुप्रभृतयस्तथैव प्रत्याख्येयाः।

एवं शीतलादिदेव्यो मन्त्रतन्त्राणि च सर्वाणि धूर्त्तविचेष्टितान्येव। "मन्त्रपाठपूर्वकमस्मन्निर्मिततन्तुयन्त्रमहिम्ना अस्मद्देवता अवसादयन्ति विघ्नजालम्" इति कैश्चिद्घोष्यते। तेऽपि "अपि भवन्तो मृत्योः परमात्मनो नियमात्कर्मफलेभ्यश्चापि मोचयिष्यन्ति ? सत्स्वपि यौष्माकीणजपपाठेषु कियन्तो बाला म्रियन्ते, युष्माकमपि पुत्रकलत्रादय उपरमन्ते, किं यूयमप्या-

त्मानं मरणान्मोचयितुं प्रभविष्यथ" इति निराकर्त्तव्याः। एवं हि तैर्जोषमास्यते। "न वयमत्र सफलकामा भविष्यामः" इत्यपि तैरवगंस्यते।

अत इमान् सर्वान् मिथ्याव्यवहारान् संत्यज्य धार्मिकाणां सर्वदेशोपकारकर्तॄणां निश्छलं विद्याः पाठयितॄणामुत्तमविदुषां जगदुपकर्तृत्वात् प्रत्युपकारः कार्यः। कार्यमदो न कदापि त्यक्तव्यम्। ये च रसायन-मारण-मोहनोच्चाटन-वशीकरणादीनां लीलामाहुस्तेऽपि महापामरा विज्ञेयाः। उपरितन-मिथ्यावार्त्तानामुपदेशान् शैशव एव सन्ततीनां हृदयेषु प्रक्षिपेयुः, येन ताः कस्यापि भ्रमजाले निपत्य नाप्नुयुर्दुःखम्। वीर्यरक्षण आनन्दं नाशकरणे च दुःखप्राप्तिमवगमयेयुः। तथा च पश्यन्तु-"यदा यस्य शरीरे वीर्य्यं सुरक्षितं तिष्ठति तदा तस्यारोग्यबुद्धिबलपराक्रमा वृद्धिं प्राप्य भूयांसमानन्दं जनयन्ति। वीर्यरक्षणविधिश्चायं—विषयकथा-विषयिजनसङ्ग—विषयध्यान-स्त्रीदर्शनैकान्तसेवन-सम्भाषण-स्पर्शादिकर्मभ्यः पृथग्भूयान्तेवासिन उत्तम-शिक्षां विद्यां चाप्नुयुः। निर्वीर्यश्च पुमान् नपुंसको महाकुलक्षणैः संयुक्तः सम्पद्यते। एवं प्रमेहामयाक्रान्तश्च दुर्बलो निस्तेजा निर्बुद्धिश्चोत्साह-साहस-धैर्य-बल-पराक्रमादिगुणविवर्जितो भूत्वा विनश्यति। यदि यूयं सुशिक्षा-विद्ययोर्ग्रहणे वीर्यसंरक्षणे चास्मिन् काले प्रमादिनो भविष्यथ तर्हि पुनरस्मिन् जन्मनि युष्माभिरयममूल्यसमयो न लप्स्यते। यावद्वयं गृहकर्मकर्त्तारो जीवेम तावदेव युष्माभिर्विद्याग्रहणं शरीरबलवर्धनं च कर्त्तव्यम्"। एतादृशीरन्या अन्याश्च शिक्षा माता-पितरौ कुर्याताम्। एतदर्थं "मातृमान् पितृमान्" शब्दयोः ग्रहणमुक्तवचने कृतम्। जन्मनः पञ्चमवर्षपर्यन्तं जननी, षष्ठवर्षा-दष्टमवर्षान्तं च जनकः शिक्षयेत्। नवमाब्दारम्भे च द्विजाः स्वीयसन्ताना-नुपनीयाऽऽचार्यकुलमर्थात् यत्र पूर्णविद्वांसः पुरुषा पूर्णविदुष्यश्च स्त्रियो विद्या-दानपराः स्युस्तत्र बालकान् बालिकाश्च प्रेषयेयुः। शूद्रादयो वर्णाश्चोपनयन-मन्तरैव विद्याभ्यासार्थं गुरुकुले (सन्ततीः) प्रवेशयेयुः। तेषामेव वत्साः सभ्याः सुशिक्षिताश्च भवन्ति येऽध्यापने सन्तानानां लालनं न जातु कुर्वन्ति अपि तु ताडनं विदधति तथा च व्याकरणमहाभाष्येऽधीयते—

**सामृतैः पाणिभिर्घ्नन्ति गुरवो न विषोक्षितैः।**
**लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणाः॥**

—अ० ८।१।८

**अर्थः**—ये जननीजनकाचार्याः सन्तानान् शिष्यांश्च ताडयन्ति जानन्तु ते "स्वीयसन्तानान् शिष्यांश्च निजहस्ताभ्याममृतं पाययन्ति। ये च पुनस्तान् लालयन्ति ते विषं पाययित्वा नाशयन्तीति।" यतो हि लालनात्सन्तानशिष्या दोषयुक्तास्ताडनतो गुणिनश्च भवन्ति। तेऽपि ताडनतः प्रसन्ना लालनतश्चा-प्रसन्नाः सदा स्युः। परन्तु मातृपित्रध्यापका ईर्ष्याद्वेषाभ्यां न ताडयेयुः किन्तु,

बहिष्टो भयप्रदर्शनमन्तश्च कृपादृष्टिं रक्षेयुः। यादृश्योऽन्याः शिक्षाः कृतास्तादृश्यः स्तेय-परदारगमनालस्य-प्रमाद-मादकद्रव्यसेवन-मिथ्याभाषण-हिंसा-क्रूरतेर्ष्या-द्वेष-मोहाऽऽदिदोषत्यागसत्याचारग्रहणस्य च शिक्षाः कार्याः। यतो हि येन पुरुषेण यस्य सम्मुखे सकृदेव स्तेय-परस्त्रीगमन-मिथ्या-भाषणादिकं किमपि पापमाचरितं तत्प्रतिष्ठा तस्य सम्मुखे मृत्युपर्यन्तमपि न भवितुमर्हति। असत्यसन्धस्येव नान्यस्य कस्यचिज्ज्यानिः संपद्यते, अतः सर्वैः यथाप्रतिज्ञं व्यवहर्तव्यम्—यथा केनचित्कञ्चित्प्रत्युक्तं "यदहं युष्माभिः संगंस्ये भवन्तो वा मया संगच्छन्तामथवाऽमुकसमयेऽदो वस्तु युष्मभ्यं प्रदास्य" इत्यात्मनः सन्धां तथैवानुपालयेत्। नान्यथा कोऽपि तं प्रत्येष्यति। तस्मात्सर्वैः सत्य-भाषणपरैः सत्यसंधैश्च भवितव्यम्। नापि केनाप्यभिमन्तव्यं यतोहि—**'अभिमानः श्रियं हन्ति'** इति विदुरनीतावुक्तत्वात्। छलछद्मकृतघ्नताभ्यो यदा स्वीयमेव हृदयं दुःखितं संजायते तदाऽन्यस्यापि भवतीति किमु वक्तव्यम्। छलं कपटं च तदुच्यते "यदन्तरन्यद् बहिश्चान्यद् विरक्ष्य द्वितीय-मज्ञाने सम्पात्यापरस्य क्षतौ ध्यानमप्रदाय स्वप्रयोजनसाधनम्।" अन्यैः कृतोपकाराऽवेदनं च कृतघ्नता परिसंख्यायते। क्रोधादिदोषं कटुवचनं च परित्यज्य शान्तः सन् मधुरवचनमेव ब्रुवीत। मा कदापि व्यर्थालापेषु सज्जेत। यावद्वक्तुमर्हं ततोऽधिकं न्यूनं वा न ब्रूयात्, वृद्धाँश्च संमानयेत्। तान् प्रत्युत्थायोच्चासने प्रतिष्ठापयेत्। पूर्वं च तान् "नमस्ते" शब्देन सम्भावयेत्। तेषां पुरस्तादुत्तमासनं नाधितिष्ठेत्। संसत्स्वपि स्वोचितासनेषु निषीदेत् यतः कोऽपि नोत्थापयेत्। न केनापि समं विरोधमाचरेत्। सम्पन्नः सन् गुणग्रहणे दोषपरित्यागे च प्रयतेत। सद्भिः समागमं, दुर्जनानां परित्यागं निजमातृपित्रा-चार्याणां देहमनोभ्यां धनाद्युत्तमोत्तमपदार्थैश्च प्रीतिपूर्वकं सेवाञ्च विदधीत।

**यान्यस्माकँ सुचरितानि तानि त्वयोपास्यानि नो इतराणि ॥**

—तैत्ति० प्रपा० ७, अनु० ११

मातृपित्राचार्य्याः स्वीयसंतानशिष्यान् सदा सत्यमुपदिशन्त इदमपि प्रब्रूयुः। "यान्यस्माकं धर्म्यकर्माणि तान्येव युष्माभिरनुष्ठेयानि यानि पुनः सद्भिर्गर्हितानि परिहेयानि तानि। आत्मना सत्यत्वेनाभिमतमेव सर्वत्र प्रकाशयेयुः प्रचारयेयुश्च। मा कदापि कमपि पाषण्डिनं दुराचारिणं विश्वसियुः।

यद्यत्साधुकर्मानुष्ठानाय जनकादयः समादिशेयुस्तत्तत् सर्वथा परिपालयेयुः। धर्म-विद्या-सदाचार-शिक्षानुस्यूताः श्लोकाः, निघण्टुनिरुक्ताष्टाध्याय्यादिसूत्राणि वेदमन्त्रा वा ये केचन मातृपित्रादेशतः स्मृतिपथमानीतास्तेषामर्थान् विद्यार्थिनो बोधयेदाचार्य्यः। यथा प्रथमसमुल्लासे परमेश्वरस्य व्याख्यानं कृतं तथैव तमुपासीरन्। यथा चारोग्य-विद्या-बल-प्राप्तिर्भवेत्

तथैव भोजनच्छादनादिव्यवहारान् कुर्युः कारयेयुश्च । क्षुधातः किञ्चिन्न्यूनमभ्यवहरेयुः । मद्यमांसादिं परिहरेयुः । अज्ञातेऽगाधपयसि न कदाप्यवतरेत् यतो हि तत्र यादोभ्योऽन्यस्माद्वा वस्तुनः सदा भयं विद्यत एव । तरणोपायज्ञानशून्यो निमज्जेदित्यपि सम्भवति । तथा च **"नाविज्ञाते जलाशये"** इति मनुराह ।

**दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् ।**
**सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥**

—मनु० ६।४६

दृष्टिमधो विक्षिपन् निम्नोन्नतप्रदेशमवलोकयन् परिचलेत् । वस्त्रेण पवित्रीकृतं जलं पिबेत् । सत्येन संशोध्य वचांस्याददीत । मनसा विचार्याचरेत् ।

**माता शत्रुः पिता वैरी येन बालो न पाठितः ।**
**न शोभते सभामध्ये हंसमध्ये बको यथा ॥**

—चाणक्यनीति, अध्या० २, श्लोक ११

तौ हि जननीजनकौ स्वीयसन्तानानां पूर्णवैरिणौ स्तः यौ तान् विद्यां नाधिगमयतः । अनधिगतविद्यास्ते हि विपश्चितां परिषदि हंसमध्ये बका इव अनादृता अशोभनीयाश्च भवन्ति । आत्मसन्ततिभ्यो देहमनोवित्तैः विद्या-धर्म-सभ्यतोत्तमशिक्षासम्प्रापणमेव जनकयोः कर्त्तव्यं कर्म, परमो धर्मः, यशस्करं च विद्यते । इदं बालशिक्षाविषये समासतः किंचिल्लिखितमेतावतैव धीमन्तो बहु विज्ञास्यन्ति, अतः परं ब्रह्मचर्याश्रम-गुरुशिष्यशिक्षा-विषये च व्याख्यास्यामः तस्मिन्नन्तरैवाध्ययनाध्यापनविधिं वर्णयिष्यामः ।

**इति श्रीमद्दयानन्दसरस्वतीस्वामिकृते सत्यार्थप्रकाशे शङ्करदेवपाठकेन संस्कृतभाषयाऽनूदिते बालशिक्षाविषये द्वितीयः समुल्लासः सम्पूर्णः ॥२॥**

# अथ तृतीयसमुल्लासारम्भः

## अथाऽध्ययनाध्यापनविधिं व्याख्यास्यामः

मातृपित्राचार्य्यसम्बन्धिजनानां स्वसन्ततीनामुत्तमविद्याशिक्षागुण-कर्मस्वभावाख्यैरलङ्कारैरलङ्करणं प्रधानं कर्म। नहि खल्वयमात्मा कर्हिचित्काञ्चनैः प्रवालमणिमुक्तामयैर्वा भूषणैः सुभूषितो भवति, केवलमीदृग्भूषणानां धारणाद्देहाभिमानो विषयेष्वासक्तिस्तस्करादिभयं च संजायते, कदाचिच्च मृत्युरपि सम्भवति। भूषणानां सन्धारणान्नराधमैर्व्यापाद्यमाना बालाः समवलोक्यन्ते हि लोके।

**विद्याविलासमनसो धृतशीलशिक्षाः**
**सत्यव्रता रहितमानमलापहाराः।**
**संसारदुःखदलनेन सुभूषिता ये**
**धन्या नरा विहितकर्मपरोपकाराः॥**

धन्याः खलु ते मानवा येषां मनो विद्याधिगमे संलग्नं भवति, येषां प्रकृतिः शीलं च परमशोभनम्, ये सत्यभाषणादिनियमान् प्रतिपालयन्ति अहंकारेणापवित्रतया च पृथगवतिष्ठन्ते, अपरेषां मालिन्यं विमलयन्ति, विद्याप्रदानेन सत्योपदेशेन च सांसारिकजनानां दुःखान्यपहरन्ति, ये च वेदप्रतिपादितैः कर्मभिः परानुपकुर्वंते।

अष्टम एवाब्दे कुमाराः कुमाराणां कुमार्यश्च कुमारीणामध्ययनशालासु प्रेषणीयाः। दुर्वृत्तैरध्यापकैः पुरुषैरङ्गनाभिर्वा शिक्षां न ग्राहयेयुः, केवलं पूर्णविद्वांसो धार्मिका एवाध्यापयितुं शिक्षयितुञ्चार्हन्ति। द्विजाः स्वगृहेषु बालानुपनीय विहितोचितसंस्काराः कुमारीश्च तत्तत्पाठशालासु प्रेषयेयुः। विद्यामन्दिरञ्च निर्जनप्रदेशेषु करणीयम्। किञ्च कुमारकुमारीणां पाठशालेऽन्योन्यतो गव्यूत्यन्तराले भवेताम्। तत्रत्या अध्यापका अध्यापिका भृत्यवर्गाश्च सर्व एव कार्यकर्त्तारो बालानां शालासु पुरुषाः कुमारीणां च शालासु नार्यो भवेयुः। कन्यानां विद्यामन्दिरेषु पञ्चवर्षीयेणापि बालकेन, कुमाराणां च पाठशालासु पञ्चवर्षीययापि कन्यया न प्रवेष्टव्यम्। यावद्धि ते ब्रह्मचर्यमाचरेयुस्तावदन्योऽन्यस्य दर्शनं, स्पर्शनं, रहस्यावस्थानं, मिथः सम्भाषणं, विषयालापः, परस्परक्रीडा, विषयध्यानं सङ्गश्चेत्यष्टविधमैथुनं

परिहरेयुः गुरवश्च ततो बालान् पृथक् संनिदध्युः। येन ते विद्ययोत्तमशिक्षया सौशील्यसत्स्वभावादिभिर्गुणैः शरीरात्मनोर्बलेन समन्विता नित्यं शोभमानाः प्रमोदभरमाप्नुयुः। विद्यामन्दिरं ग्रामात् नगराद्वैकस्मिन् योजने भवेत्। सर्वेभ्यः खल्वन्तेवासिभ्यः समानमेव वस्त्रान्नपानासनं प्रदेयं कामं कोऽपि राजदारको निर्धनस्य वा बालो भवेत्। सर्वैस्तपस्विभिर्भवितव्यम्। अन्तेवासिनो जनकादिभिः, जनकादयो वान्तेवासिभिः सम्मेलितुं न शक्नुयुर्नापि मिथः पत्रादिव्यवहारं कर्त्तुं प्रभवेयुः यतो ब्रह्मचारिणो विहाय सांसारिकीं चिन्तां विद्योपार्जन एव संलग्ना भवेयुः। भ्रमणार्थमपि गुरुभिः सहैव गन्तव्यं येन ते नाचरेयुः किमपि दुर्वृत्तम्, अलसाः प्रमादिनो वा न भवेयुः।

**कन्यानां सम्प्रदानं च कुमाराणां च रक्षणम् ॥**

—मनु० ७।१५२

अस्यायमभिप्रायः—"पञ्चमादष्टमाद्वा संवत्सरादूर्ध्वं कोऽपि गृहमेधी आत्मनस्तनयं तनयां वा गृहेऽवस्थापयितुं न शक्नुयात्, प्रेषयेदेवाध्ययनशालामप्रहेता च दण्डभाक् सम्पद्येत" इति राजसमाजयोरुभयोरप्यवश्यं नियमो भवेत्।

बालाश्च प्रथमं गृहेष्वनन्तरमाचार्यकुलेषूपनेतव्याः। जननी जनक आचार्यो वा स्वात्मजान् सार्थकं गायत्रीमन्त्रमुपदिशेयुः। स चायं मन्त्रः—

**ओ३म्। भूर्भुवः स्वः। तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि।**
**धियो यो नः प्रचोदयात् ॥**—यजु० अ० ३६। मं० ३

मन्त्रेऽस्मिन् प्रथमं विद्यमान ओ३म् शब्दो व्याख्यातः प्रथमसमुल्लासे, तस्यार्थस्तत एवाधिगन्तव्यः। साम्प्रतं समासतस्तिस्रो महाव्याहृतयो व्याख्यायन्ते। **"भूरिति वै प्राणः"** यः प्राणयति चराचरं जगत् प्राणेभ्योऽपि प्रियः स 'भूः' स्वयम्भूरीश्वरः। **"भुवरित्यपानः"** यः सर्वं दुःखमपानयति सोऽपानः। यो वै स्वयमस्पृष्टो दुःखैः, जीवाश्च यत्सङ्गतो दुःखेभ्यः परिमुच्यन्ते स परमेश्वरो 'भुवरित्युच्यते।' **"स्वरिति व्यानः"** यो विविधं जगत् व्यानयति व्याप्नोति संधत्ते स 'व्यानः'। वचनत्रयमपीदं तैत्तिरीयारण्यके प्र० ७ मे। अ० ५ मे समाम्नायते।

**(सवितुः)** यः सुनोत्युत्पादयति सर्वं जगत् स सविता तस्य **(देवस्य)** "यो दीव्यति दीव्यते वा स देवः" सर्वसुखप्रदस्य सर्वैः काम्यमानस्य परमात्मनो यत् **(वरेण्यम्)** वर्तुमर्हम् **(भर्गः)** शुद्धस्वरूपं—पावनं चेतनं ब्रह्मस्वरूपं विद्यते **(तत्)** तदेव ब्रह्मणो रूपं **(धीमहि)** धरेमहि। येन सविता देवः **(नः)** अस्माकं **(धियः)** बुद्धीः **(प्रचोदयात्)** प्रेरयेत्–सन्निवर्त्यासन्मार्गात् सत्पथेषु प्रवर्तयेत्।

**प्रार्थना**

"हे परमेश्वर ! सच्चिदानन्दस्वरूप ! हे शुद्धबुद्धनित्यमुक्तस्वभाव ! हे निरञ्जन निर्विकार ! हे सर्वान्तर्यामिन् ! हे सर्वाधार जगत्पते ! सकलजगदुत्पादक ! हे अनादे ! विश्वम्भर ! सर्वव्यापिन् करुणामृतवारिधे ! सवितुर्देवस्य यदों भूर्भुवः स्वर्वरेण्यं भर्गोऽस्ति तद्वयं धीमहि दधीमहि धरेमहि ध्यायेम वा कस्मै प्रयोजनायेत्यत्राह । हे भगवन् ! यः सविता देवः परमेश्वरो भवानस्माकं धियः प्रचोदयात् स एवास्माकं पूज्य उपासनीय इष्टदेवो भवतु नातोऽन्यं भवत्तुल्यं भवतोऽधिकं च कंचिन्मन्यामहे" ।

हे मनुष्याः ! यो वै सामर्थ्यवतां समर्थः सच्चिदानन्दानन्तस्वरूपो नित्यशुद्धबुद्धमुक्तस्वभावः कृपासिन्धुः यथावन्न्यायकर्त्ता जन्ममरणादिक्लेशरहितो निराकारः सर्वेषां धर्त्ता पितोत्पादकः अन्नादिभिर्विश्वपरिपोषकः सकलैश्वर्ययुक्तो जगत्स्रष्टा शुद्धस्वरूपः प्राप्तुं कमनीयश्च परमेश्वरस्तस्य शुद्धचेतनस्वरूपमेव धरेमहि, येनास्मदात्मधियामन्तर्यामिस्वरूपः स परमेश्वरोऽस्मान् दुष्टाचाराधर्म्यवर्त्मनः सन्निवर्त्य श्रेष्ठाचारसत्यमार्गेषु प्रवर्तयेत् तं विहाय नान्यं कमपि ध्यायेम नहि कोऽपि तत्समस्ततोऽधिको वा, स एवास्माकं जनकः प्रभुर्न्यायाधीशश्च स एव चास्मभ्यं निखिलसुखानि प्रयच्छति ।

एवमुपदिश्य गायत्रीं संध्योपासनस्य स्नानाचमनप्राणायामादिकाः क्रियाः शिक्षयेत् ।

तत्र देहस्य बाह्याङ्गानां संशोधकत्वादारोग्यहेतुत्वाच्च स्नानस्य प्राथम्यम् । तथा चोदाह्रियते—

**अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति ।**
**विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यति ॥**—मनु० ५।१०९

१. (स्नानम्)—वारिणाऽस्य देहस्य बाह्याऽवयवाः सत्याचरणेन मनः, विद्यया सर्वविधक्लेशमनुभूयाऽपि धर्मस्यैवानुष्ठानरूपेण तपसा च जीवात्मा, पृथिवीत आरभ्य परमेश्वरपर्यन्तानां सकलभावानां विवेकज्ञानेनाध्यवसायात्मिका बुद्धिः परिशुद्धयति । अतः सन्ध्यायाः पूर्वमवश्यं स्नातव्यम् ।

२. (प्राणायामः)—

**योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ॥**

—योग० साधनपादे सू० २८

प्राणायाममाचरतो जनस्यानुक्षणमशुद्धेः क्षयः संजायते ज्ञानं च प्रकाशते । आनिःश्रेयसं च तस्यात्मनो ज्ञानमुपचीयते सततम् ।

**दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः ।**
**तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥** —मनु० ६।७१

हिरण्यरेतसि संताप्यमानानां सुवर्णादिधातूनां कालुष्यमिव प्राणायामेन मनः प्रभृतीन्द्रियाणां दोषाः क्षीयन्ते नैर्मल्यं च सम्पद्यते।

प्राणायामस्य विधिः—

**प्रच्छर्दनविधारणाभ्यां वा प्राणस्य** ॥—योग० समाधिपादे सू० ३४

यथा सवेगमुद्वमनेनान्नजलादिकं बहिर्निस्सरति तथैव बलेन प्राणं बहिर्निःसार्य तत्रैव यथाबलं निरुन्ध्यात्, बहिर्निस्सरणकाले च मूलेन्द्रियं किञ्चिदूर्ध्वमाकर्षेत्। एवं हि प्राणाः समधिकं बहिरपतिष्ठन्ते। अनुभूयमानायां चोद्विग्नतायां शनैः शनैः प्राणवायुमन्त आददीत। यथाबलं यथेच्छं च पौनःपुन्येनैवमाचरेत्। मनसि चोंकारं जपेत्, एवमनुष्ठानेनात्मचेतसोर्विशुद्धिस्थैर्य्ये सम्भवतः। प्राणायामश्चायं चतुर्विधः—

(अ) तत्र बहिरेव भूयसा प्राणनिरोधनं **बाह्यविषयः** प्रथमः।

(आ) यथाबलमन्तः प्राणावरोध **आभ्यन्तरो** द्वितीयः।

(इ) युगपदेवोभयोर्गत्यभावपूर्वकं यथाशक्ति प्राणनिरोधनं **स्तम्भवृत्ति**-स्तृतीयः।

(ई) बहिर्निस्रियमाणप्राणानां सन्निरोधाय बाह्यतोऽन्तर्वायुं गृह्णीयादभ्यन्तरे प्रविशतश्च ततो बलेन प्रसह्य बहिरेव निरुन्ध्यात्। **अयं बाह्याभ्यन्तराक्षेपी नाम** चतुर्थः।

एवमन्योन्यतो विरुद्धक्रियानुष्ठानेनोभयोः (निश्वासप्रश्वासयोः) गतिसन्निरोधात् प्राणानामात्मवशवर्त्तितयाऽऽन्तरं बाह्यञ्चोभयविधमपीन्द्रियपूगं भवति स्वायत्तम्। उपचीयमानतया च सत्त्वपौरुषयोः शेमुषी कुशाग्रा, दुरूहसूक्ष्मतमानामपि विषयाणां लीलयैव ग्रहीत्री च सम्पद्यते। किं चैतेनैतस्मिन् मानवीयशरीरे वीर्यस्य प्रवर्धमानत्वात् बलपराक्रमयोश्च स्थिरतयेन्द्रियाणां स्वाधीनतयाल्पीयसैव कालेनाधिगम्यन्ते सकलशास्त्राणि।

योषितोऽपि योगाभ्यासमनुतिष्ठेयुः। भोजनछादनोपवेशनसम्भाषणादीनां गुरुभिः कनीयोभिश्च समुचितव्यवहारस्योपदेशं कुर्वीरन्।

ब्रह्मयज्ञापरनामधेयं संध्योपासनमपि शिक्षयेयुः।

(१) **तत्र प्रथममाचमनम्**—आकण्ठहृदयप्रदेशसेचकं—नातोऽधिकं नापि न्यूनं—वारि समादाय पाणौ तस्य मूले मध्ये च सन्निधायौष्ठमाचामेत्। अनेन कण्ठस्थे कफपित्ते किंचिदिव निवर्तेते।

(२) **ततो मार्जनमाचरेत्**—प्रान्तेन मध्यमाऽनामिकाङ्गुल्योरीक्षणप्रमुखेषु देहावयवेषु जलसेको मार्जनम्। मार्जनेन ह्यालस्यं विलीयते। अविद्यमान आलस्येऽभावे च वारिणो नैतदनुतिष्ठेत्।

(३) ततः समन्त्रकं प्राणायामं, चेतसापि पापात् निवृत्त्यभिलाषरूप-

मघमर्षणं मनसापरिक्रमणमुपस्थानञ्चावबोधयेत्। परमेश्वरस्य स्तुतिप्रार्थनोपासनाविधिञ्चोपदिशेत्।

सन्ध्योपासनञ्चेदं निर्जनप्रदेशे समाहितेन चेतसा कर्त्तव्यम्।

**अपां समीपे नियतो नैत्यिकं विधिमास्थितः।**
**सावित्रीमप्यधीयीत गत्वारण्यं समाहितः॥**

अरण्येषु निर्जनप्रदेशेषु गत्वा समाहितः—समाधाय वाङ्मनसे उपविश्यान्तिके जलानां नैत्यिकं विधिमाचरन् जपेत् तदर्थभावनपूर्वकं सावित्रीं—गायत्रीमन्त्रम्। तदनुकूलयेच्च स्वाचारम्। वरीयः खल्वस्य जपस्योपांश्वनुष्ठानम्।

**द्वितीयो देवयज्ञः।**

देवयज्ञो ह्यग्निहोत्रेण संगतिसेवाभ्यां च विदुषां सम्भवति। ब्रह्मदेवप्रातःसायं यज्ञौ द्विरेव निर्वर्तनीयौ। द्वे एव निशावासरयोः सन्धिवेले। न्यूनाति न्यूनं ध्यायेद् होरामात्रम्। समाधिस्था योगिनः परमात्मानं यथा ध्यायन्ति तथैव सन्ध्योपासनमाचरेत्। उदितेऽनस्तमिते च सहस्रांशावग्निहोत्रसमयः।

अग्निहोत्रानुष्ठानाय च कस्यचिद्धातोर्मृदो वोपरि द्वादशषोडशाङ्गुलपरिमितां चतुर्भुजां तावदेव निम्नां निम्नप्रदेशे च त्रिचतुर्वाङ्गुलपरिमितां वेदिं निर्मिमीत। उपरितनायामपेक्षया चतुर्थांशोऽधस्तनायामो भवेत्। तस्यां पाटीरपलाशाम्रादिश्रेष्ठकाष्ठानां समिधां वेदिपरिमितानि शकलानि कृत्वा सन्निदध्यात् मध्ये च जातवेदसं स्थापयेत्। ततः पुनरपि तत्र काष्ठानि सञ्चिन्वीत। प्रोक्षणीपात्रं प्रणीतापात्रमाज्यस्थालीं स्रुवं च हेम्नो रजतस्य काष्ठस्य वा विरचय्य प्रोक्षणीप्रणीतापात्रयोर्निधाय पानीयं घृतपात्रे चाज्यं तत्तापयेत्। तत्र जलाधानाय प्रणीतापात्रं हस्तप्रक्षालनसौकर्याय च प्रोक्षणीपात्रं निर्मीयते। सन्तप्तं च तद्घृतं साधु सम्प्रेक्ष्य जुहुयान्मन्त्रैरमीभिः—



स्रुवा



प्रणीतापात्रम्



आज्यस्थाली



यज्ञकुण्डम्



प्रोक्षणीपात्रम्

**ओं भूरग्नये प्राणाय स्वाहा । भुवर्वायवेऽपानाय स्वाहा । स्वरादित्याय व्यानाय स्वाहा । भूर्भुवः स्वरग्निवाय्वादित्येभ्यः प्राणापानव्यानेभ्यः स्वाहा ॥**

इत्याद्यग्निहोत्रस्य प्रतिमन्त्रेणैकैकामाहुतिं प्रदद्यात् । अतोऽप्यधिकाहुतिप्रदानेच्छायाम्—

**विश्वा॑नि देव सवितर्दुरि॒तानि॒ परा॑ सुव । यद्भ॒द्रं तन्न॒ आ सु॑व ॥**—यजु० ३०।३

अनेन पूर्वोक्तेन गायत्रीमन्त्रेण च जुहुयात् । 'ओं' 'भूः' 'प्राणः' प्रभृतीन्यखिलानि परमेश्वरस्यैव नामधेयानि । प्रागुक्त एषामर्थः ।

आत्मज्ञानानुरूपमेव वाचापि भाषणीयं न तु विपरीतम्, यथा च खलु परमात्मना सर्वप्राणिहिताय रचिताः सकलजगतः पदार्थास्तथैव मनुष्यैरपि परोपकर्त्तव्यमिति 'स्वाहा' शब्दार्थः ।

**प्र०**—नन्वग्निहोत्रेण किमुपक्रियते ?

**उ०**—विदन्त्येव खल्विमे लोका "यत् पूतिगन्धिना वायुना वारिणा च व्याधयः व्याधिभिश्च प्राणिनां क्लेशः सञ्जायते । शोभनगन्धिना समीरेण नीरेण चारोग्यं नीरोगतया सुखञ्च समासाद्यत" इति ।

**प्र०**—चन्दनादीनां समवघृष्य लेपेन भक्षणाय च घृतादिप्रदानेन महदुपकृतं भवेन्ननु ? मुधैवाग्नौ प्रक्षेपेण द्रव्यप्रणाशो नास्ति प्रेक्षावतां कर्म ?

**उ०**—पदार्थविद्याञ्चेत् त्वं व्यज्ञास्यः नैवं तर्ह्यवक्ष्यः । नहि कस्यचिद् वस्तुनोऽभावः सम्पद्यते । अनुष्ठीयमानयज्ञप्रदेशात् स्थितो विप्रकृष्टान्तराले कश्चित् पुमान् सुगन्धं जिघ्रति । तथैव दुर्गन्धमपि । एतदेवावगन्तव्यम्-"अग्नौ प्रास्तं हविः सूक्ष्मीभूय विस्तीर्य च वायुना सार्धं दूरप्रदेशेषु गत्वा सर्वतो विनाशयति पूतिगन्धमिति बोधयितुम् ।"

**प्र०**—एवं सति गृहे सन्निहितानि काश्मीरकस्तूरीसामोदकुसुमानि, पटवासप्रभृतीनि च वस्तूनि संशोध्य मारुतं सुखं जनयिष्यन्ति ।

**उ०**—भेदकशक्त्यभावतया निष्कास्य सद्मनि विद्यमानपवनं सुमारुतं च प्रवेशयितुं नालं तत्सौरभम् । जातवेदस्यैव सामर्थ्यमिदं यत् "दुर्गन्धमयं पवमानं पदार्थांश्च तिलशः खण्डयित्वा लघूकृत्य च बहिर्निःसारयति । पवित्रं च नभस्वन्तं प्रवेशयतीति" ।

**प्र०**—नन्वेवमपि किं प्रयोजनं समन्त्राग्निहोत्रस्य ।

**उ०**—विद्यते हि खलु मन्त्रेषु यज्ञानुष्ठानलाभावेदकं व्याख्यानम् । पुनः पुनरावर्तनेन मन्त्राणां वेदानामध्ययनाध्यापनं रक्षा च सम्भवेत् ।

**प्र०**—किमन्तरेण यज्ञमेनः सञ्जायते ।

**उ०**—आम्, यतो हि यावान् दुर्गन्धः समुत्पद्य यस्य देहिनो देहात्

सन्दूष्य च प्रकम्पनाम्बुनी निदानतया रोगाणां क्लिश्नाति प्राणिनस्तावदेव सम्प्राप्यते वृजिनं तेन मानवेन। अतस्तद्दुरितक्षयाय तत्परिमाणेन समधिकेन वा ततः परिमलेन वायुजले सुगन्धयितव्ये। भक्षणमाज्यादीनां तु भक्षयितारमेवैकं जनं सुखयति। यावच्चैकेन जनेन घृतादिकं भक्ष्यते, प्रक्षिप्तेन वह्नौ तावतैवोपक्रियन्ते लक्षाणि मानवानाम्। घृतादिवस्तूनां सेवनमन्तरेणात्मदेहयोर्नोपचीयेत बलमतस्तान्यशनीयान्यपि किन्तु तदपेक्षयाप्यग्निहोत्रं प्रशस्यते।

प्र०—नन्वेकः पुमान् कियतीराहुतीः प्रदद्यात्, किं वा परिमाणमेकैकस्यास्तस्याः?

उ०—षोडशाहुतयः प्रदातव्या एकेन जनेन। षण्माषाश्च न्यूनातिन्यूनं परिमाणमेकस्याः। अतोऽप्यधिकाज्यप्रक्षेपस्तु वरीयान्।

पुराप्यार्यवरशिरोमणयो महर्षयः सम्राजश्च बाहुल्येन यजन्ति याजयन्ति स्म च। यज्ञियकाले भारतभूरियमस्पृष्टा व्याधिभिः सुखपूर्णा चाभवत्। साम्प्रतमपि सञ्जायेत चेद्यज्ञप्रचारस्तर्हि पुनरपि भवेत्तथैव।

समुपवर्णित अध्ययनाध्यापनसन्ध्योपासनेश्वरस्तुतिप्रार्थनोपासनारूपो **ब्रह्मयज्ञः**। अग्निहोत्रादारभ्याश्वमेधपर्यन्तक्रत्वनुष्ठानविद्वत्संगरूपो **देवयज्ञश्च**। ब्रह्मचारिभिः केवलमिमावेव यज्ञौ निर्वर्तनीयौ।

**ब्राह्मणस्त्रयाणां वर्णानामुपनयनं कर्त्तुमर्हति राजन्यो द्वयस्य वैश्यो वैश्यस्यैवेति। शूद्रमपि कुलगुणसम्पन्नं मन्त्रवर्जमनुपनीतमध्यापयेदित्येके॥**

ब्राह्मणो ब्राह्मणक्षत्रियवैश्यान्, क्षत्रियो राजन्यवैश्यौ, वैश्यः केवलं वैश्यमेवोपनीयाध्यापयितुमर्हति। कुलीनं शुभलक्षणान्वितं शूद्रमप्यनुपनीय मन्त्रसंहितातिरिक्तानि शास्त्राण्यध्यापयेदिति अनेकेषामाचार्याणां मतम्।

**ब्रह्मचर्य्यकालः**—पञ्चमादष्टमाद्वा संवत्सरात् कुमाराः कुमाराणां कुमार्यश्च कुमारीणामध्ययनशालां गच्छेयुरधो निर्दिष्टमध्ययनं च सनियमं पारमेरन्।

**षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतम्।**
**तदर्धिकं पादिकं वा ग्रहणान्तिकमेव वा॥**—मनु० ३।१

आष्टमवर्षात्षट्त्रिंशत्वर्षपर्यन्तम्—साङ्गोपाङ्गस्य प्रतिवेदस्याध्ययने द्वादशवर्षाणीति यावत्—अधीयीत एवं चाष्टानां षट्त्रिंशताञ्च संकलनया चतुश्चत्वारिंशद्वर्षाणि व्रतमाचरेत्। किं वाष्टादशवर्षाणि ब्रह्मचर्यं प्रथमाष्टसंकलने च वर्षाणां षड्विंशतिं व्रताचरणम्, नववर्षाणि यावता कालेन वाशेषविद्यां परिगृह्णीयात् तावद् वा ब्रह्मचर्यमाचरेत्।

**पुरुषो वाव यज्ञस्तस्य यानि चतुर्वि ँ शतिवर्षाणि तत्प्रातःसवनं चतुर्वि ँ शत्यक्षरा गायत्री गायत्रं प्रातःसवनं तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसव एते हीद ँ सर्वं वासयन्ति॥१॥**

तञ्चेदेतस्मिन् वयसि किञ्चिदुपतपेत्स ब्रूयात्प्राणा वसव इदं मे प्रातःसवनं माध्यंदिनँ सवनमनुसंतनुतेति माऽहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥२॥

अथ यानि चतुश्चत्वारिँ शद्वर्षाणि तन्माध्यंदिनँ सवनं चतुश्चत्वारिँ शदक्षरा त्रिष्टुप् त्रैष्टुभं माध्यंदिनँ सवनं तदस्य रुद्रा अन्वायत्ताः प्राणा वाव रुद्रा एते हीदँ सर्वँ रोदयन्ति ॥३॥

तञ्चेदेतस्मिन्वयसि किञ्चिदुपतपेत्स ब्रूयात्प्राणा रुद्रा इदं मे माध्यंदिनँ सवनं तृतीयसवनमनुसंतनुतेति माऽहं प्राणानाँ रुद्राणां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥४॥

अथ यान्यष्टाचत्वारिँ शद्वर्षाणि तत्तृतीयसवनमष्टाचत्वारिँ शदक्षरा जगती जागतं तृतीयसवनं तदस्यादित्या अन्वायत्ताः प्राणा वावाऽऽदित्या एते हीदँ सर्वमाददते ॥५॥

तञ्चेदेतस्मिन् वयसि किञ्चिदुपतपेत्स ब्रूयात् प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसन्तनुतेति माऽहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो हैव भवति ॥६॥

इदं हि छान्दोग्योपनिषदि पठ्यते। अयमभिप्रायोऽस्य—कनिष्ठमध्यमोत्तमभेदेन त्रिविधं खलु ब्रह्मचर्यम्। तत्राद्यम्—अयं पुरुषाख्योऽन्नरसमयो देहः पुरि शरीरे शयिता जीवात्मा च। शुभगुणैः सङ्गतीकरणतया सत्कर्तव्यतया च पुरुष एव यज्ञः। तस्यायुषश्चतुर्विंशतिवर्षपर्यन्तमिन्द्रियाणि संयम्य सब्रह्मचर्यं वेदादिविद्यासुशिक्षयोर्ग्रहणमावश्यकम्, कृत्वापि दारपरिग्रहं लम्पटतां त्यक्तवतः पुंसः शरीरे प्राणा बलवन्तो भूत्वा वासयन्ति शुभगुणान्।

प्रथमवयस्येतस्मिन्नाचार्य्यो विद्याभ्यासतपसा तं संतपेत्। तथैव चोपदिशेत्। ब्रह्मचार्यप्येवं निश्चिन्वीत यदहं प्रथमवयसि चेदाचरिष्यामि यथाविधि ब्रह्मचर्य्यं तदा मे शरीरात्मानौ बलवन्तावारोग्यवन्तौ च भविष्यतः।

अयि मानवाः! यथाहं न विलोपयेयं ब्रह्मचर्यं तथा सुखानि विस्तारयत यूयम्, चतुर्विंशतिसंवत्सरोर्ध्वं गृहाश्रमं प्रविष्टोऽहं निरामयो भविष्यामि। आयुरपि मम सप्ततिरशीतिवर्षपरिमितं भविष्यतीत्यत्र नास्ति कश्चित्संशयः।

**मध्यमं ब्रह्मचर्य्यम्**—आचतुश्चत्वारिंशद्वर्षाणि ब्रह्मचर्येण वेदानभ्यस्यतो जनस्य प्राणा इन्द्रियाण्यन्तःकरणमात्मा च बलवन्तो भूत्वा दुर्जनान् रोदयन्ति पालयन्ति च सज्जनान् (अयि मान्याः) भवन्निदेशमनुरुध्य वयस्येतस्मिन् किञ्चित्तपस्तपस्यतो मम रुद्ररूपैरेभिः प्राणैर्मध्यमं ब्रह्मचर्य्यं सेत्स्यति।

हे ब्रह्मचारिणः! विस्तारयत ब्रह्मचर्य्यमिदम्। यथाहमविलोप्य

ब्रह्मचर्य्यं यज्ञस्वरूपं लभे, आचार्य्यकुलात्समुपैमि निरामयश्च सम्पद्ये तथैव यूयमपि सत्कर्माण्यनुतिष्ठत ।

अष्टचत्वारिंशत्संवत्सरान् यावत् तृतीय**मुत्तमं ब्रह्मचर्य्यम्**। यथा ह्यष्टचत्वारिंशदक्षराणां जगतीछन्दस्तथैव तावद्वर्षपर्यन्तं यथावद् ब्रह्मचर्य्यमाचरतो जनस्य प्राणाः स्वानुकूलाः सन्तः परिगृह्णन्ति निखिला विद्याः ।

मातृपित्राचार्य्याः प्रथमवयस्यात्मसन्ततीर्विद्यागुणग्रहणाय तपश्चारयन्तस्तदेवोपदिशन्तु, तानि चापत्यानि स्वत एवाखण्डितब्रह्मचर्यपरिसेवनेन तृतीयमुत्तमं ब्रह्मचर्य्यमाचर्य्य पूर्णं चतुःशतवर्षपरिमितमायुः परिवर्धयेयुः । यूयमपि तथैव परिवर्द्धयथ ।

देहावस्थाः—

**चतस्रोऽवस्थाः शरीरस्य वृद्धिर्यौवनं सम्पूर्णता किञ्चित्परिहाणिश्चेति । आषोडशाद्वृद्धिः । आपञ्चविंशतेर्यौवनम् । आचत्वारिंशतः सम्पूर्णता । ततः किञ्चित्परिहाणिश्चेति ॥**

**पञ्चविंशे ततो वर्षे पुमान् नारी तु षोडशे ।**
**समत्वागतवीर्यौ तौ जानीयात्कुशलो भिषक् ॥**

देहस्यास्य चतस्रोऽवस्था भवन्ति—

तत्राद्या वृद्धिर्यस्यां जन्मिनो जन्मन आरभ्याषोडशवर्षं प्रवर्धन्ते सकलधातवः ।

सप्तदशवर्षात्पञ्चविंशतिवर्षपर्यन्तं **यौवनं** द्वितीया ।

षड्विंशाब्दत आचत्वारिंशत्समाः **धातूनां पुष्टिरूपा** तृतीया ।

ततः **किंचित्परिहाणि**नाम्नी चतुर्थोऽवस्था प्रवर्तते ।

साङ्गोपाङ्गदेहस्थाः सकलधातवः सम्पुष्टाः पूर्णतां लभन्ते ततः परं शरीरे समुपचीयमानो धातुः स्वप्नप्रस्वेदादिमुखेन बहिर्निर्याति ।

अयमेव चत्वारिंशत्तमः संवत्सरः पाणिपीडनाय प्रशस्यते । प्रशस्यतमोद्वाहसमयस्त्वष्टचत्वारिंशत्तमो वर्षः ।

**प्र०**—किमयं नरनारीभ्यां कृते समानो ब्रह्मचर्य्यनियमः ?

**उ०**—नहि, यदि हि नाम पुमान् २५, ३०, ३६, ४०, ४४, ४८, वर्षाणि यावत् ब्रह्मचर्य्यमाचरेत् तर्हि कन्यानुक्रमेण १६, १७, १८, २०, २२, २४ वर्षाणि ब्रह्मचर्यं परिपालयेत् । अष्टचत्वारिंशद्वर्षसमनन्तरं पुरुषेण चतुर्विंशतिवर्षेभ्यश्च परं कन्यया ब्रह्मचर्य्यपालनमनावश्यकम् । गृहस्थधर्मं परिपालयितुकामैरेव पुरुषैरयं नियमो अनुष्ठेयस्तदितरे च यावज्जीवं समाचरन्तु नाम ब्रह्मचर्य्यम् । परं निरुध्य मदनवेगमिन्द्रियाणां जयस्य सुदुष्करतया पूर्णविद्यावन्तः संयमिनो निर्दोषयोगिनः पुमांसो योषितो वा कर्तुमर्हन्ति नेतरे जनाः ।

**ऋतं च स्वाध्यायप्रवचने च। सत्यं च स्वाध्यायप्रवचने च। तपश्च स्वाध्यायप्रवचने च। दमश्च स्वाध्यायप्रवचने च। शमश्च स्वाध्यायप्रवचने च। अग्नयश्च स्वाध्यायप्रवचने च। अग्निहोत्रञ्च स्वाध्यायप्रवचने च। अतिथयश्च स्वाध्यायप्रवचने च। मानुषं च स्वाध्यायप्रवचने च। प्रजा च स्वाध्यायप्रवचने च। प्रजनश्च स्वाध्यायप्रवचने च। प्रजातिश्च स्वाध्यायप्रवचने च॥**

—तै० उ०। प्रपा० ७ अ० ९

अध्ययनाध्यापनं कुर्वतां नियमाः (**ऋतञ्च०**) यथार्थाचारेणाध्येतव्यमध्यापयितव्यं च। (**सत्यञ्च०**) सत्याचरणेन सत्यविद्यानां विधेयेऽध्ययनाध्यापने। (**तप०**) तपस्वितया धर्ममनुतिष्ठताभ्यसनीयं वेदादिशास्त्रम्। (**दम०**) निरुध्यासन्मार्गात् बहिरिन्द्रियाण्यध्येतव्यम् (**शम०**) सर्वविधदोषेभ्यो नियम्य मनोऽध्ययनाध्यापनं कर्तव्यम्। (**अग्न०**) विज्ञायाहवनीयादिकं वैद्युतञ्चाग्निमध्येतव्यमध्यापयितव्यम्। (**अग्निहोत्र०**) यजनपूर्वकं पठनपाठनेऽनुष्ठेये। (**अतिथ०**) अतिथीन् सेवमानैरध्येतव्यम्। (**मानुष०**) यथायोग्यं सम्पादयता लोकोचितान् संव्यवहारानध्येतव्यमध्यापयितव्यम्। (**प्रजा०**)अनुपालयता सन्तती राज्यञ्चाध्येतव्यमध्यापयितव्यम्। (**प्रजन०**) संरक्षयता वर्द्धयता च वीर्यमध्येतव्यम्। (**प्रजाति०**) प्रजां शिष्यगणं च संविभ्रता अध्येतव्यमध्यापयितव्यं च।

**यमान् सेवेत सततं न नियमान् केवलान् बुधः।**
**यमान्पतत्यकुर्वाणो नियमान् केवलान् भजन्॥**

—मनु० ४।२०४

**तत्राहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः॥**

—योग० साधनपादे सू० ३०

वैरत्यागो "**अहिंसा**"। सत्यसंकल्पः सत्यभाषणं सत्यानुष्ठानं च "**सत्यम्**"। मनोवचनकर्मभिश्चौर्य्यत्यागो "**अस्तेयम्**"। उपस्थेन्द्रियस्य संयमो "**ब्रह्मचर्य्यम्**"। लोलुपतातिशयपरित्यागः स्वत्वाभिमानराहित्यञ्च "**अपरिग्रहः**"।

**शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः॥**

—योग० साधनपादे सू० ३२

स्नानादिना पावित्र्यं "**शौचम्**"। सुप्रसादेन चेतसा निरुद्यमतयावस्थानं नास्ति सन्तोषोऽपितु यावच्छक्यं प्रयतमानेन हानिलाभयोर्हर्षशोकानुभवाभावः "**सन्तोषः**"। कृच्छ्रगतेनापि धर्म्यकर्मानुष्ठानं "**तपः**"। अध्ययनाध्यापनं च "**स्वाध्यायः**"। परमात्मनो भक्तिविशेषेणात्मनोऽर्पणम् "**ईश्वरप्रणिधानम्**"। इमे पञ्च यमा नियमाश्च सदा सेवनीयाः।

यमान् परिहरन् केवलं नियमान् न सेवेत। द्वावपीमा–(यमनियमौ)–

वनुतिष्ठेत्। यो वै यमानुष्ठानमन्तरेण नियमानेव सेवते स नाप्नोति समुन्नतिं किन्त्वधोगतौ—संसार एव निमज्जति।

**कामात्मता न प्रशस्ता न चैवेहास्त्यकामता।**
**काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः॥**

—मनु० अ० २।२

अतिशयेन कामनातुरत्वं निष्कामता च कस्मैचिदपि न प्रशस्ता। यतः कामनां विना वेदज्ञानं वेदप्रतिपादितकर्मानुष्ठानञ्च न सम्भवति।

**स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः।**
**महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥**—मनु० २।२८

(**स्वाध्यायेन**) सकलविद्याध्ययनाध्यापनेन (**व्रतैः**) ब्रह्मचर्य्यसत्यभाषणादिनियमपरिपालनेन (**होमैः**) अग्निहोत्रादिहोमैः। सत्यासत्ययोर्ग्रहणपरिहाणाभ्यां, सत्यविद्यानां दानेन च (**त्रैविद्येन**) वेदविहितकर्म्मोपासनाज्ञानविद्याग्रहणेन (**इज्यया**) पक्षेष्ट्यादियागैः (**सुतैः**) सुसन्तानोत्पत्त्या (**महायज्ञैः**) ब्रह्मदेवपितृवैश्वदेवातिथिसेवाख्यैः पञ्च महायज्ञैः (**यज्ञैः**) अग्निहोत्रादिभिः क्रतुभिः शिल्पविद्याविज्ञानादियज्ञानुष्ठानेन चेयं मानवी तनुर्ब्राह्मी क्रियते। वेदपरमात्मनो भक्तेराधाररूपा वैप्री तनुः सम्पाद्यत इत्यर्थः। एभिः साधनैर्विना ब्राह्मणशरीरमवाप्तुं न शक्यते।

**इन्द्रियाणां विचरतां विषयेष्वपहारिषु।**
**संयमे यत्नमातिष्ठेद्विद्वान् यन्तेव वाजिनाम्॥**—मनु० २।८८

विज्ञः सारथिरिवाश्वानामात्ममनसोर्दुष्कर्मप्रवर्तकेषु विषयेषु विचरतामिन्द्रियाणां निग्रहे सर्वथा यत्नमाचरेत्। यतः—

**इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम्।**
**सन्नियम्य तु तान्येव ततः सिद्धिं नियच्छति॥**

—मनु० २।९३

इन्द्रियाणां वशंगतः खल्वयं जीवात्मा महतो दोषानवाप्नोति निस्सन्देहम्, तान्येव पुनरिन्द्रियाणि सम्यगात्मसात् कृत्वा महतीं सिद्धिं लभते।

**वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च।**
**न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित्॥**

—मनु० २।९७

वेदाध्ययन-दान-यज्ञ-नियम-तपांसि अन्यान्यपि सत्कर्माणि च दुर्वृत्तावशेन्द्रियस्य पुंसो न कदाचित् सफली भवन्ति।

**वेदोपकरणे चैव स्वाध्याये चैव नैत्यिके।**
**नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि॥१॥**

**नैत्यिके नास्त्यनध्यायो ब्रह्मसत्रं हि तत्स्मृतम् ।**
**ब्रह्माहुतिहुतं पुण्यमनध्यायवषट्कृतम् ॥२॥**

—मनु० २।१०५-६

वेदाध्ययनाध्यापनयोः सन्ध्योपासनादिपञ्चमहायज्ञानुष्ठाने, होममन्त्रेषु चानध्यायाग्रहो नास्ति नित्यकर्मसु न भवत्यनध्यायः, श्वासप्रश्वासौ हि सदैव गृह्येते, न कर्हिचिन्निरोद्धुं शक्येते तथैव प्रत्यहमनुष्ठेयं नित्यकर्म। यस्मात् अनध्यायेष्वपि कृतमग्निहोत्राद्युत्तमं कर्म पुण्यमेव भवति। यथा च असत्यभाषणे पापं, सत्यभाषणे च पुण्यं सदैव भवति, तथैव दुष्कृतकर्मानुष्ठाने नित्यमनध्यायः सत्कर्मणि च सर्वदा स्वाध्यायः।

**अभिवादनशीलस्य नित्यं वृद्धोपसेविनः।**
**चत्वारि तस्य वर्द्धन्त आयुर्विद्यायशोबलम् ॥**

—मनु० २।१२१

वृद्धसेविनो नम्रस्वभावस्य शीलवतो विदुषः पुरुषस्य आयुः, प्रज्ञा यशोबलमिमानि चत्वारि सम्यग् नित्यं प्रवर्द्धन्ते। एतद्विरुद्धमाचरतश्च न कदाप्यायुः प्रभृतीनि चत्वारि वर्द्धन्ते ॥

**अहिंसयैव भूतानां कार्यं श्रेयोऽनुशासनम्।**
**वाक् चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छता ॥१॥**
**यस्य वाङ्मनसे शुद्धे सम्यग्गुप्ते च सर्वदा।**
**स वै सर्वमवाप्नोति वेदान्तोपगतं फलम् ॥२॥**

—मनु० २।१५९-६०

विपश्चिद्भिरन्तेवासिभिश्च विहाय वैरबुद्धिमुपदेश्यः खलु कल्याणवर्त्माखिलजनेभ्यः। उपदेष्टृभिश्च सर्वदा मधुरा सूनृता वाणी व्यवहर्तव्या। धर्म्मोन्नतिकामाश्च स्वयं सत्यमाचरन्तः परानपि सत्यमुपदिशेयुः ॥१॥ यस्य मानवस्य वाङ्मनसे शुद्धे सुरक्षिते च सदा भवतः स एव वेदान्तं—सर्ववेदसिद्धान्तरूपं फलमश्नुते।

**सम्मानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव।**
**अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा ॥**—मनु० २।१६२

आदराद्विषादिव बिभ्यदनादरञ्च सुधामिवाभिलषन्नेव ब्राह्मणो निखिलवेदं परमेश्वरञ्चावगच्छति।

**अनेन क्रमयोगेन संस्कृतात्मा द्विजः शनैः।**
**गुरौ वसन् सञ्चिनुयाद् ब्रह्माधिगमिकं तपः ॥**

—मनु० २।१६४

इत्थमेव कृतोपनयनो द्विजब्रह्मचारी कुमारः, कुमारी च ब्रह्मचारिणी वेदार्थज्ञानरूपोत्तमं तपः शनैः शनैः प्रवर्धयेताम्।

**योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।**
**स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥**

—मनु० २।१६८

यः पुमान् वेदमनधीत्यान्यत्र श्रमं कुरुते, पुत्रपौत्रादिसहितस्सोऽञ्जसैव प्रतिपद्यते शौद्रं भावम् ।

**वर्जयेन्मधुमांसञ्च गन्धं माल्यं रसान् स्त्रियः ।**
**शुक्तानि यानि सर्वाणि प्राणिनां चैव हिंसनम् ॥१॥**
**अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम् ।**
**कामं क्रोधं च लोभं च नर्त्तनं गीतवादनम् ॥२॥**
**द्यूतं च जनवादं च परिवादं तथाऽनृतम् ।**
**स्त्रीणां च प्रेक्षणालम्भमुपघातं परस्य च ॥३॥**
**एकः शयीत सर्वत्र न रेतः स्कन्दयेत्क्वचित् ।**
**कामाद्धि स्कन्दयन् रेतो हिनस्ति व्रतमात्मनः ॥४॥**

—मनु० २।१७७—१८०

वर्जयेदिति—सर्वेऽप्यन्तेवासिनोऽन्तेवासिन्यश्च मद्यं मांसं गन्धं मालां रसं स्त्रीपुरुषयोः सङ्गं सकलमम्लजातं प्राणिनां वधम् ॥१॥

अभ्यङ्गमिति—शिरः पादाद्यङ्गानां मर्दनम्, अहैतुकमुपस्थेन्द्रियस्पर्शम्, चक्षुषोरञ्जनम्, उपानच्छत्रयोर्धारणम्, कामक्रोधलोभमोहभयशोकेर्ष्याद्वेषतौर्यत्रिकम् ॥२॥ द्यूतमिति—अक्षक्रीडाम्, यस्य कस्यचित्संकथाम् परनिन्दनम्, मृषाभाषणम्, स्त्रीणां दर्शनालिंगने, परहानिप्रभृतीनि कुकर्माणि च सन्त्यजेयुः ॥३॥

सर्वत्रैकाकिनः शयीरन् न कर्हिचित् वीर्यं स्खलयेयुः । कामनया हि स्वशुक्रपातनमात्मनो ब्रह्मचर्य्यव्रतविनाश एव विज्ञेयः ।

**वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्य्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । देवपितृकार्य्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्य्य देवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि । यान्यस्माकँ सुचरितानि तानि त्वयोपास्यानि नो इतराणि । ये के चास्मच्छ्रेयांसो ब्राह्मणास्तेषां त्वयासनेन प्रश्वसितव्यम् । श्रद्धया देयम् । अश्रद्धया देयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् । अथ यदि ते कर्मविचिकित्सा वा वृत्तिविचिकित्सा वा स्यात्, ये तत्र ब्राह्मणाः सम्मर्शिनो युक्ता अयुक्ता अलूक्षा धर्मकामाः स्युर्यथा ते तत्र**

**वर्त्तेरन् तथा तत्र वर्त्तेथाः । एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमु चैतदुपास्यम् ।**

—तैत्तिरीय० प्रपा० ७ । अनु० ११ । कं० १,२,३,४

आचार्य्यं आचार्य्या च स्वान्तेवासिनः=शिष्यशिष्याः—एवमुपदिशेत्—सततं सत्यं ब्रूहि । परिपालय धर्मम् । अप्रमत्तोऽधीष्वाध्यापय च । पूर्णब्रह्मचर्येण निखिलविद्या अधिगत्य, आचार्य्याय प्रदाय प्रियधनं परिणीय चात्मानं सन्ततीः समुत्पादय । प्रमादेन मा कदापि सत्यं त्याक्षीः । अनवधानतया मा कर्हिचिद्धर्मं हासीः । प्रमादेनारोग्यवैदग्ध्ये जातु मा रहीः । अनवहितः सदैश्वर्यवृद्धि मा विमुञ्चीः । प्रमत्तोऽध्ययनाध्यापने जातु मा स्राक्षीः । देवानां विदुषां जननीजनकादीनां परिचरणे मा प्रमदः । विद्वांसमिव मातृपित्राचार्य्यातिथीन् सेवस्व । अगर्हितानि सत्यभाषणादिधर्म्यकर्माण्यनुतिष्ठ, तदतिरिक्तालीकभाषणादीनि मा चर । यान्यस्माकं सुचरितानि धर्म्यकर्माणि तान्यादेयानि; यानि चास्माकं जुगुप्सितानि न कर्हिचित्तान्याचर । ये केचिदस्माकं मध्ये विद्वांसो धर्मात्मानः श्रेष्ठब्राह्मणाः तानुपास्व विश्वसिहि । श्रद्धया देयम् । अश्रद्धया देयम् । शोभया देयम् । लज्जया देयम् । भीत्या देयम् । प्रतिज्ञया देयम् । यदा कदाचित्त्वं कर्मशीलोपासनाज्ञानेषु संजातसंशयो भवेः तदा तत्र ये विचारवन्तः पक्षपातविवर्जिता योगिनोऽयोगिन आर्द्रचेतसो धर्मकामा धर्मात्मानो भवेयुः यथा ते तत्र वर्तेरन् तथा त्वमपि वर्तेथाः । एतच्छासनम् । एष उपदेशः । एषा वेदोपनिषत् । एषैव च शिक्षा । इत्थमेव व्यवहर्तव्यम् । स्वाचारश्च संशोधनीयः ।

**अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित् ।**
**यद्यद्धि कुरुते किञ्चित् तत्तत्कामस्य चेष्टितम् ॥**

—मनु० २।४

निष्काममानवे चक्षुषः संकोचविकाशावपि न सम्भवत इति मानुषैर्निश्चेतव्यमतो यत्किञ्चदपि कुरुते तत्तत्कामनां विना न भवतीति सिद्धयति । ततश्च सर्वं कर्म लौकिकं वैदिकञ्च यद्यत् पुरुषः कुरुते तत्तदिच्छयैव क्रियते ।

**आचारः परमो धर्मः श्रुत्युक्तः स्मार्त्त एव च ।**
**तस्मादस्मिन्सदा युक्तो नित्यं स्यादात्मवान्द्विजः ॥१॥**
**आचाराद्विच्युतो विप्रो न वेदफलमश्नुते ।**
**आचारेण तु संयुक्तः सम्पूर्णफलभाग्भवेत् ॥२॥**

—मनु० १।१०८-१०९

श्रुतौ वेदानुकूलस्मृत्यादिषु च प्रतिपादितस्य धर्मस्य परिपालनमेव कथन-श्रवण-श्रावणाध्ययनाध्यापनानां फलं तस्मात्सततं धर्माचारतत्परो भवेत् ॥१॥

आचारविवर्जितो वेदप्रतिपादितधर्मजन्यसुखं न जातु लभते। यस्तु खल्वधीत्य विद्यां धर्ममाचरति स एवाशेषसुखं संलभते ॥२॥

**योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः।**
**स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥**

—मनु० २।११

यो वै वेदान् तदनुकूलान्याप्तपुरुषप्रणीतशास्त्राणि चावमन्यते, स वेदनिन्दको नास्तिको जातिपंक्तिदेशेभ्यो बहिर्निःसार्यः।

**वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।**
**एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥**

—मनु० २।१२

वेदः, स्मृतिर्वेदाविरुद्धमाप्तोक्तं मनुस्मृत्यादिशास्त्रं, साधुजनानामाचारो, वेदमुखेन परमेश्वरप्रतिपादितानि कर्म्माणि, आत्मनः प्रियमर्थाद्यदभिलषत्ययमात्मा यथा हि सत्यभाषणम्, चत्वारीमानि धर्मस्य लक्षणानि विद्यन्ते। एभिरेव धर्माधर्मयोर्निश्चयः संजायते। निष्पक्षपातं न्यायसत्ययोर्ग्रहणमसत्यस्य च सर्वथा परित्यागरूपाचार एव धर्मः। विपरीतमतश्च—सपक्षपातमन्यायाचरणं सत्यपरित्यागोऽसत्यसंग्रहणञ्चाधर्मः।

**अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते।**
**धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ॥**—मनु० २।१३

ये पुमांसोऽर्थेषु सुवर्णादिरत्नेषु कामेष्वङ्गनासेवनादिषु च न प्रसज्जन्ति त एव धर्मज्ञानं विन्दन्ते। धर्मं परिज्ञातुकामैर्वेदद्वारेण धर्मो विनिश्चेयः, नहि वेदमन्तरा धर्माधर्मनिर्णयो याथार्थ्येन सम्भवति।

इत्थमाचार्य्यः स्वशिष्यानुपदिशेत्। पार्थिवानां तद्व्यतिरिक्तक्षत्रियाणां वैश्यानामुत्तमशूद्रजनानाञ्च विद्याभ्यासे विशेषतोऽवदध्यात्। यदि हि केवलं ब्राह्मणा एवाधीयीरन् नतु क्षत्रियादयस्तदा विद्याधर्मराज्यधनादीनां समुन्नतिर्न जातु सम्भवति। ब्राह्मणा हि क्षत्रियादिभ्यो जीविकामधिगम्य प्राणितुं प्रभवन्ति। ब्राह्मणा यदि जीविकावशवर्त्तिनो भवेयुः, क्षत्रियादीनामनुशासितारो यथावत्परीक्षका दण्डप्रदातारश्च न वर्तेरन् तर्हि विप्रप्रमुखाः सर्व एव वर्णा विषयेषु प्रसज्जेयुः। कृतविद्येषु पुनः क्षत्रियादिषु ब्राह्मणा अपि सविशेषं विद्यामभ्यसन्ति सेवन्ते च धर्मपथम्। विदुषाञ्च क्षत्रियादीनां पुरस्तात् न शक्नुवन्ति पाखण्डमिथ्याव्यवहारमाचरितुम्। अविद्वत्सु पुनः क्षत्रियादिषु यथेच्छं व्यवहरन्ति व्यवहारयन्ति च। अत आत्मनः कल्याणकामैर्ब्राह्मणैर्वेदादिसच्छास्त्रं सप्रयत्नमध्यापयितव्यं क्षत्रियादीन्। यतो राजन्यप्रमुखा एव विद्याधर्मराज्यश्रियं प्रवर्धयन्ति। नहि ते कदापि भिक्षावृत्तिमवलम्बन्ते नापि विद्याव्यवहारेषु पक्षपातिनो भवन्ति।

सत्सु चाशेषवर्णेषु विद्याशिक्षासम्पन्नेषु नहि कश्चित्प्रभवति प्रथयितुं पाखण्डमयाधर्म्यमिथ्याव्यवहारान्। एतेन 'विप्राः परिव्राजकाश्च क्षत्रियादीन् ते च तान् नियमेषु व्यवस्थापयन्तीति' सिद्धम्। अतोऽखिलवर्णप्रभवेषु नरेषु योषासु च विद्याधर्मप्रचारोऽवश्यं सम्पादनीयः।

सर्वमध्ययनाध्यापनादिकं सम्यक् परीक्षानन्तरं विधेयम्। परीक्षा च पञ्चविधा भवति।

(१) यद्यत् परमात्मनो गुणकर्मस्वभावानुरूपं त्रयीसम्मतञ्च तत्तत्सत्यमतो विरुद्धमसत्यञ्चेति **प्रथमा**।

(२) "जनकयोः संयोगमन्तरैव समुदपादि सुतः" इति वचनं सृष्टिक्रमविरुद्धत्वात्सर्वथैवासत्यम्। एवं सृष्टिक्रमविरुद्धं सर्वमसत्यं तदनुकूलञ्च सत्यमिति **द्वितीया**।

(३) यच्चाप्तानामर्थाद् धार्मिकविदुषां सत्यवादिनां निश्छलानामाचारोपदेशानुकूलं तत्सर्वमुपादेयं परिहेयञ्चान्यदिति **तृतीया**।

(४) यत्स्वस्यान्तरात्मनः पवित्रताविद्ययोरविरुद्धं तदाचरणीयम्। यथा ह्यात्मने सुखं प्रियं तथैव सर्वत्रावगन्तव्यम्। कञ्चिच्चेदहं सुखयिष्यामि अर्दयिष्यामि वा सोऽपि प्रसादमप्रसादं वा प्राप्स्यतीति **चतुर्थी**।

(५) अष्टप्रमाणैः प्रत्यक्षानुमानोपमानशब्दैतिह्यार्थापत्तिसम्भवाभावाख्यैः सुपरीक्षित आचारः **पञ्चमी**।

प्रत्यक्षादीनां लक्षणादिकं न्यायशास्त्रानुसारेणानुपदमेव व्याख्यायते।

**इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकम्प्रत्यक्षम्** ॥—न्याय०। अ० १। आह्निक १। सूत्र ४

श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणादीनां शब्दस्पर्शरूपरसगन्धैरव्यवहितेन—आवरणशून्यसम्बन्धेन, इन्द्रियैर्मनसो मनसा चात्मनः संयोगेन यज्ज्ञानमुत्पद्यते तत्प्रत्यक्षम्; यदि हि तज्ज्ञानं **व्यपदेश्यम**र्थात्संज्ञासंज्ञिनोः सम्बन्धेन समुत्पन्नं न भवेत्। यथा—कश्चित्कञ्चित् "जलमानय" इत्यादिदेश। सोऽपि पानीयमानीय तत्समीपे संस्थाप्य च समुवाच "इदं जलमिति" परमत्र 'जलमित्यक्षरद्वयस्य संज्ञामानेताऽऽनाययिता च नेष्टे वीक्षितुम्। केवलं जलाभिधेयस्यैव वस्तुनः प्रत्यक्षं भवति, शाब्दं च ज्ञानं शब्दप्रमाणविषयम्। **अव्यभिचारि** यथा—कश्चिन्नक्तं स्थाणुं निरीक्ष्य 'पुरुषः' इति निश्चिकाय। दिवा च पुनर्दर्शनेन रात्रिवृत्तं 'पुरुषोऽयमिति' ज्ञानमपेत्य स्तम्भज्ञानमवशिष्यते तच्च नावतरति प्रत्यक्षकोटौ। **व्यवसायात्मकम्**—विप्रकृष्टान्तरालात्कश्चिदवलोक्य तरङ्गिणीसिकतां "तत्र वासांसि शुष्यन्त्युत जलं वेविद्यत आहोस्वित्किञ्चिदन्यत्" इति प्राह। अयं पुरः स्थितो देवदत्तो यज्ञदत्तो वा। एवं विधमनिश्चयात्मकं ज्ञानं यावन्निश्चयात्मकं न जायेत

तावत्प्रत्यक्षपदवीं नावगाहते। अनिश्चयात्मकं हि ज्ञानं नास्ति प्रत्यक्षम्। अपि तु अव्यपदेश्यमव्यभिचारिव्यवसायात्मकमेव ज्ञानं प्रत्यक्षमिति कथ्यते।

द्वितीयमनुमानं लक्षयति—

**अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतो दृष्टञ्च ॥**

—न्याय० अ० १। आ० १। सू० ५

प्रत्यक्षपूर्वकं क्वचिद्देशे काले वा कस्यचिदेकदेशस्यैकदेशिनो वा गृहीत-प्रत्यक्षस्य दूरतः सहचारितदेकदेशप्रत्यक्षेणादृष्टावयविनो ज्ञानमनुमानम्। यथाहि—पुत्रदर्शनेन पितुः, पर्वतादौ धूमादिलिङ्गसन्दर्शनेन वह्न्यादेः, जगति सुखदुःखाद्यवलोकनेन पूर्वजन्मनो ज्ञानमुत्पद्यते। तच्चैतत्पूर्ववत् शेषवत्सामान्यतो दृष्टञ्चेति भेदात्त्रिविधम्।

**तत्र पूर्ववत्**—यत्रानुमाने (पूर्वेण तुल्यं साध्यं वर्तते तत्पूर्ववत्) यथाहि मेघसन्दर्शनेन वृष्टेः, उद्वाहनिरीक्षणेन सन्तानसमुत्पादस्य, पठतश्छात्रान् निरीक्ष्य विद्याधिगमस्य निश्चयः सम्पद्यते। इदमुक्तं भवति यत्र यत्र कारणसन्दर्शनेन कार्यज्ञानं भवति तत्पूर्ववदिति।

**शेषवत्**—यत्रानुमाने कार्यनिरीक्षणेन कारणमनुमीयते तच्छेषवत्। यथा वेगेन परिवर्धमानं सरितः प्रवाहं सम्प्रेक्ष्योपरिष्टात्संजातवृष्टेः, पुत्र-दर्शनेन पितुः, सृष्टिरचनावलोकनेनादिकारणस्य (प्रकृतेः) कर्त्तुरीश्वरस्य च, पापपुण्याचारावलोकनेन सुखदुःखादेर्ज्ञानमुत्पद्यते।

**सामान्यतो दृष्टम्**—यत्रानुमाने कार्यकारणभावराहित्येन केवलमन्योन्यसाधर्म्येण ज्ञानमुत्पद्यते तत्सामान्यतो दृष्टम्। यथा "न कोऽपि व्रजिक्रियामन्तरेण स्थानान्तरं शक्नोति लब्धुमिति दर्शनात् अन्येषामपि देशान्तरप्राप्तिर्गमनमन्तरेण न सम्भवतीति" ज्ञानम्।

अयमेवानुमानशब्दस्यार्थः—अनु अर्थात् प्रत्यक्षस्य पश्चान्मीयते ज्ञायते येन तदनुमानम्। नहि धूमस्य प्रत्यक्षमन्तरेण परोक्षवह्नेर्ज्ञानं भवितुं शक्यम्।

तृतीयमुपमानं निरूपयति—

**प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम् ॥**

—न्याय० अ० १। आ० १। सू० ६

प्रसिद्धस्य पूर्वं प्रमितस्य गवादेः साधर्म्यात् सादृश्यज्ञानात् साध्यस्य साधनीयस्य ज्ञानस्य सिद्धिसाधनमुपमानम्। उपमीयते येन तदुपमानम्। यथायं देवदत्तस्तथा विष्णुमित्र इति स्वामिनो वाक्यमाकर्ण्य अज्ञातविष्णु-मित्रस्यापि तत्स्थानं प्राप्तस्य भृत्यस्य पुरोऽवस्थिते मानवे देवदत्तसादृश्य-दर्शनात् "अयमेव विष्णुमित्रः" इति संज्ञासम्बन्धपूर्वकं सादृश्यज्ञानम्। अथवा "यथा गौस्तथा गवयः" इति वचनानुसारेण वनङ्गतस्य गोसदृशं प्राणिपिण्डमवलोक्य तस्मिन् गवयोऽयमिति ज्ञानमुपमानम्।

अथ चतुर्थं शब्दं लक्षयति—

**आप्तोपदेशः शब्दः** ॥—न्या० अ० १ । आ० १ । सू० ७

कृतविद्यो धर्मात्मा परोपकारप्रियः सत्यवचनः पुरुषार्थी जितेन्द्रियः पुमान् यथाऽऽत्मनि जानाति येन वा सुखमधिगतं तस्यैव कथनस्येच्छया प्रेरितः सकलजनहितायोपदेशकः पृथिव्यादिपरमेश्वरपर्यन्तपदार्थानां ज्ञानं प्राप्योपदिशतीतियावत् स "आप्तः" एतादृशस्य पुंसो (वाक्यानि) पूर्णाप्तस्य परमेश्वरस्य चोपदेशभूता वेदाश्च शब्दप्रमाणमिति विज्ञेयम् ।

पञ्चममैतिह्यम्—

**न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात्** ॥

--न्याय० अ० २ । आ० २ । सू० १

इतिह-इत्थमिदमास, एवं स व्यदधादिति ऐतिहासिकं कस्यचिज्जीवन-वृत्तज्ञानमिति यावत् **"ऐतिह्यम्"** ।

षष्ठी अर्थापत्तिः—

अर्थादापद्यते या सा **"अर्थापत्तिः"** केनचिदुच्यते सत्सु घनेषु वृष्टिः, सति कारणे कार्यं भवतीति । किमत्र प्रसज्यते असत्सु घनेषु वृष्टिरसति-कारणे च कार्यं न भवतीति ।

सप्तमः सम्भवः ।

सम्भवति यस्मिन्स **"सम्भवः"** । कश्चिदाह जनकयोरभावे सन्तानः समुत्पन्नः । कश्चिच्छवान् प्राणिणत्, पर्वतानुदतूतुलत्, वारिधौ प्रस्तरानती-तरत्, चन्द्रमसमच्छैत्सीत्, परमेश्वरोऽवातरत्, मनुष्यशृङ्गमपश्यत्, बन्ध्या-पुत्रयोरुद्वाहमकार्षीत् एवमादीनि सर्वाण्यसम्भवानि । इमानि हि सृष्टिक्रम-विरुद्धानि । सृष्टिक्रमाविरुद्धं च सम्भवः ।

अष्टमोऽभावः—

न भवन्ति यस्मिन् सः **"अभावः"** । यथा कश्चित् कञ्चिदाह "हस्तिन-मानयेति स तत्र हस्तिनमपश्यन् यत्र स आसीत्तत आनीतवान्" । इमान्यष्ट-प्रमाणानि । तत्र यद्यैतिह्यं शब्देऽर्थापत्तिसम्भवाभावाश्चानुमानेऽन्तर्भाव्येरं-स्तर्हि प्रमाणचतुष्टयमेवावशिष्यते । एताभिः पञ्चप्रकाराभिः परीक्षाभिरेव मानवः सत्यासत्ययोर्निर्णयं शक्नोति कर्त्तुं नान्यथा ।

**धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्** ॥

—वै० अ० १ । आ० १ । सू० ४

यदा खलु मानवो धर्मस्य यथायथमनुष्ठानेन पूतो भवति तदा साधर्म्यवैधर्म्यविज्ञानेन पृथिव्यम्भसोर्जडत्वेनेव साधर्म्येण समानधर्मेण तयोरेव मृदुत्वामृदुत्वाभ्यामिव वैधर्म्येण—द्रव्यगुणकर्मसामान्यविशेषसम-

वायानां तत्त्वज्ञानं स्वरूपज्ञानमवाप्य निःश्रेयसं—मोक्षमश्नुते ।

**पृथिव्यापस्तेजोवायुराकाशं कालो दिगात्मा मन इति द्रव्याणि ॥**

—वै० अ० १ । आ० १ । सू० ५

पृथिवी-भूरापो-वारि-तेजो-ज्योतिर्वायुर्मरुदाकाशं-व्योम कालः समयो दिक्-आशाऽऽत्मा-क्षेत्रज्ञो मनः अन्तःकरणं चित्तमित्येतानि नवद्रव्याणि द्रव्य-पदवाच्यानि द्रव्यपदार्थं इत्यर्थः ।

**क्रियागुणवत्समवायिकारणमिति द्रव्यलक्षणम् ॥**

—वै० अ० १ । आ० १ । सू० १५

[1]क्रियाश्च गुणाश्च विद्यन्ते यस्मिस्तत् क्रियागुणवत् यत्र क्रियागुणाः केवलगुणाश्च निवसन्ति तद्द्रव्यम् । यत् क्रियावद् गुणवत्समवायिकारणं, तद् द्रव्यमितिभावः । तत्र पृथिव्यप्तेजोवायुमन आत्मान एतत्षट्कं क्रियावद् गुणवच्च । आकाशकालदिश एतत्त्रयं क्रियाशून्यं गुणवच्च । समवेतुं शीलं यस्य तत्समवायि प्राग्वृत्तित्वं कारणम्, समवायि च तत्कारणं समवायि-कारणम् । लक्ष्यते येन तल्लक्षणम् ।

**रूपरसगन्धस्पर्शवती पृथिवी ॥**—वै० अ० २ । आ० १ । सू० १

रूपरसगन्धस्पर्शा यस्यां विद्यन्ते सा पृथिवी । अस्यां रूपरसस्पर्शा वह्निजलवायुसंयोगजाः ।

**व्यवस्थितः पृथिव्यां गन्धः ॥**—वै० अ० २ । आ० २ । सू० २

पृथिव्यां गन्धगुणः स्वाभाविकः । तथैवाप्सु रसः, वह्नौ रूपं, वायौ स्पर्शः आकाशे च शब्दः स्वाभाविकः ।

**रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाः ॥**—वै० अ० २ । आ० १ । सू० २

[2]रूपरसस्पर्शाः सन्ति यत्र तत्, द्रवीभूतं स्नेहवच्च जलम् । तत्रापि रसः स्वाभाविको गुणः । रूपस्पर्शौ च क्रमेण वह्निवायुसंयोगेन ।

**अप्सु शीतता ॥**—वै० अ० २ । आ० २ । सू० ५

अप्सु—पयसि शीतता—शीतलत्वगुणः स्वाभाविकः ।

**तेजो रूपस्पर्शवत् ॥**—वै० अ० २ । आ० १ । सू० ३

रूपस्पर्शौ स्तो यस्य तत्तेजः । तत्र रूपं तेजसः स्वाभाविको गुणः । स्पर्शस्तु वायुसम्पर्कजन्यः ।

**स्पर्शवान् वायुः ॥**—वै० अ० २ । आ० १ । सू० ४

---

१. क्रियागुणवत्—भावप्रधानो निर्देशः । क्रियावत्त्वं, गुणवत्त्वं समवायिकारणमिति त्रयं द्रव्यलक्षणम् ।

२. द्रवाः—सांसिद्धिकद्रवत्ववत्यः—स्निग्धाः—स्नेहवत्यः तथा रूपरसस्पर्शवत्यः—शुक्लं रूपं, मधुरो रसः, शीतः स्पर्श इत्येते सन्ति यासां ता आप इत्यर्थः ।

स्पर्शोऽस्ति यस्य स वायुरित्यर्थः। अत्रापि तेजः पयसोः संयोगेनौष्ण्य-शीते व्यवतिष्ठेते।

**त आकाशे न विद्यन्ते ॥**—वै० अ० २। आ० १। सू० ५

ते रूपरसगन्धस्पर्शाश्चत्वारो गुणा आकाशे व्योम्नि न विद्यन्ते—न वर्तन्त इत्यर्थः। केवलं शब्द एव तस्य नैजो गुणः।

**निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम् ॥**

—वै० अ० २। आ० १। सू० २०

यत्र प्रवेशनं निष्क्रमणं च सम्भवतः स आकाशः। एतदेव तस्य लिङ्गम्।

(स्पर्शवतो द्रव्यस्य बहिर्गमनं—निष्क्रमणम्, अन्तर्गमनं-प्रवेशनमिति एतत्कर्मद्वयमाकाशस्य लिङ्गम्—आकाशसिद्धौ लिङ्गमित्यर्थः)

**कार्य्यान्तराप्रादुर्भावाच्च शब्दः स्पर्शवतामगुणः ॥**

—वै० अ० २। आ० १। सू० २५

[1]पृथिव्याद्यन्यकार्येभ्यः प्रादुर्भावात् शब्दः स्पर्शवतां भूम्यादीनामगुणः। शब्दो ह्याकाशस्यैव गुणः।

**[2]अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि ॥**

—वै० अ० २। आ० २। सू० ६

यत्र अपरं परं (युगपत्) सकृत् (चिरम्) विलम्बः (क्षिप्रम्) शीघ्र-मित्यादयः प्रयोगाः सम्भवन्ति स कालः।

**[3]नित्येष्वभावादनित्येषु भावात्कारणे कालाख्येति ॥**

—वै० अ० २। आ० २। सू० ९

यो वै नित्येषु पदार्थेषु नावतिष्ठते अनित्येषु पुनः सन्तिष्ठते अतः कारण एव कालसंज्ञा इति।

**इत इदमिति यतस्तद्दिश्यं लिङ्गम् ॥**—वै० अ० २। आ० २। सू० १०

---

१. कार्यान्तराऽप्रादुर्भावात्—घटपटादौ पृथिव्यादौ वा कार्यान्तरे प्रादुर्भावाभावात्। शब्दः—शब्दपदार्थः स्पर्शवतां—पृथिव्यप्तेजोवायूनामगुणः—विशेषगुणो नेत्यर्थः

२. यत्रापरस्मिन्नपरमिति ज्ञानम्, युगपत्—युगपज्जायन्ते युगपत्कुर्वन्तीति युगपज्ज्ञानम्। चिरम्-चिरं जीवति चिरं जातमिति चिरज्ञानम्, क्षिप्रं—क्षिप्रं गच्छति क्षिप्रं करोतीति क्षिप्रज्ञानमिति—एतानि ज्ञानानि काललिङ्गानि।

३. नित्येषु=परमार्थनित्येषु व्यवहारभूमौ नित्येषु चाभावात्। युगपज्जातः चिरञ्जातः, क्षिप्रञ्जातः, इदानीं जातः दिवा जात इत्यादि प्रत्ययानामभावात्। अनित्येषु= कार्येषु=घटपटभूम्यादिषु भावात्—उक्तप्रत्ययसद्भावात्॥ कार्यमात्रकारणं कालः। तस्मिंश्च कारणे कालाख्या-कालसंज्ञेत्यर्थः।

अस्मादयं पूर्वो दक्षिणः पश्चिम उत्तर उपरि नीचैरिति व्यवहारा यत्र जायन्ते सा दिशा ।

[1]**आदित्यसंयोगाद् भूतपूर्वाद् भविष्यतो भूताच्च प्राची ॥**

—वै० अ० २ । आ० २ । सू० १४

यस्यां दिशि प्रथममादित्यः समयुज्यत संवर्तते संयोक्ष्यते च सा प्राची । यत्र सूर्य्योऽस्तं गच्छति सा प्रतीची दिक् । प्राच्यभिमुखस्य पुरुषस्य वामदेश-व्यवस्थिता दिगुदीची । दक्षिणदेशावच्छिन्ना च दिगवाची ।

**एतेन दिगन्तरालानि व्याख्यातानि ॥**—वै० अ० २ । आ० २ । सू० १६

(एतेन प्राच्यादिषु दर्शितप्रकारेण दिगन्तरालानि व्याख्यातानि) पूर्व-दक्षिणयोरन्तर्वर्तिनीदिक् "आग्नेयी"दक्षिणपश्चिमयोर्मध्यवर्तिनी"नैर्ऋतिः" पश्चिमोत्तरयोर्मध्यस्था "वायवी" उत्तरपूर्वयोश्चान्तःस्थिता "ऐशानी" दिक् ।

**इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति ॥**

—न्याय० अ० १ । आ० १ । सू० १०

यत्र (इच्छा) रागः (द्वेषः) अप्रीतिः (प्रयत्नः) पुरुषार्थः, सुखदुःखे (ज्ञानम्) अवगतिरित्यादयो गुणा उपलभेरन् स जीवात्मा ।

वैशेषिक इयानतो विशेषः—

**प्राणाऽपाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तर्विकाराः सुखदुःखेच्छा-द्वेषप्रयत्नाश्चात्मनो लिङ्गानि ॥**—वै० अ० ३ । आ० २ । सू० ४

अन्तःप्रदेशाद्वायोर्बहिर्निष्कासनं "प्राणः" । बहिःप्रदेशाद्वायोरन्तरान-यनम् "अपानः" । चक्षुषोर्निमीलनं "निमेषः" । तयोरुन्मीलनम् "उन्मेषः" । प्राणधारणं "जीवनम्" । मननं विचारो ज्ञानं "मनः" । अव्याहततया यत्र तत्र गमनं "गतिः" । इन्द्रियाणां विषयेषु प्रवर्तनं तैर्विषयग्रहणमिति यावत् "इन्द्रियम्" । क्षुत्तृषाज्वरपीडाप्रभृतिविकाराः "अन्तर्विकाराः" सुखम्, दुःखम्, इच्छा, द्वेषः प्रयत्नश्च एत आत्मनो लिङ्गान्यर्थतो गुणकर्माणि ।

**युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ॥**

—न्याय० अ० १ । आ० १ । सू० १६

येनैकदा पदार्थद्वयस्य ग्रहणं-ज्ञानं न सम्भवति तन्मनः ।

अथ गुणान् ब्रूमहे—

---

१. आदित्यसंयोगादिति विशेष्यम्, इतरत् पञ्चम्यन्तं पदत्रयञ्च विशेषणम् । भूत-पूर्वात्=पूर्वं सर्गारम्भे भूतो भूतपूर्वः—अतीतस्तस्मात् भविष्यतः=भविष्यन् आगामी तस्मात्=भाविनो भूतात् (आदिकर्मणि क्तः) भूतम्=उदितम्=वर्तमानं तस्माच्चादित्यसंयोगात्प्राथमिकाद्रविसम्बन्धात् प्राची=प्राची दिगितिव्यपदेशः ।

**रूपरसगन्धस्पर्शाः संख्यापरिमाणानि पृथक्त्वं संयोगविभागौ परत्वाऽपरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः ॥**

—वै० अ० १। आ० १। सू० ६

रूप-रस-गन्ध-स्पर्श-संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्व-अपरत्व-बुद्धि-सुख-दुःख-इच्छा-द्वेष-प्रयत्न-गुरुत्व-द्रवत्व-स्नेह-संस्कार-धर्म-अधर्म-शब्दाश्चतुर्विंशतिगुणाः।

**द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम् ॥**

—वै० अ० १। आ० २। सू० १६

द्रव्याश्रयी=द्रव्याधारः। अगुणवान्—गुणान्तरानाधायकः। संयोग-विभागेषु—(जनयितव्येषु)—अकारणम्। अनपेक्षः=परस्परापेक्षाशून्यो यः स गुण इति गुणलक्षणम्।

**श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः ॥**

—महाभाष्ये १।१।१।२

यः श्रोत्राभ्यामुपलभ्यते बुद्धया निर्गृह्यते प्रयोगेण—व्यवहारेण च प्रकाश्यत आकाशं यदीयदेशः स शब्दः। चक्षुषा गृह्यमाणं "रूपम्"। रसनया रसयितव्यो मिष्टाद्यनेकभेदः "रसः"। नासिकया गृह्यमाणो "गन्धः" त्वचा ज्ञेयः "स्पर्शः"। एको द्वाविति परिगणितिसाधनं "संख्या"। मानसाधनम्—अयं गुरुरयं लघुरिति ज्ञानसाधनं-"परिमाणम्"। अन्योन्यतः पृथग्भवनं "पृथक्त्वम्"। इतरेतरेण साधनं "संयोगः"। संयुक्तपदार्थानां विच्छेदो "विभागः"। 'अयमस्मात्परः, अयमस्मादपरः' इत्यभिधानसाधनं "परत्वापरत्वे"। सदसतोर्ज्ञानहेतुः "धीः"। आनन्दः "सुखम्"। क्लेशो "दुःखम्"। इच्छा "रागः"। द्वेषो "विरोधः"। नैकविधबलपुरुषार्थः "प्रयत्नः"। गुरुता "गुरुत्वम्"। तरलीभवनं "द्रवत्वम्"। प्रीतिः स्नैग्ध्यञ्च "स्नेहः"। परयोगेन वासनाभावः "संस्कारः"। न्यायाचारः काठिन्यञ्च "धर्मः"। अन्यायाचारः काठिन्यविपरीतं कोमलत्वञ्च "अधर्मः"। इमे चतुर्विंशतिगुणाः।

**उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि ॥**

—वै० अ० १। आ० १। सू० ७

उद्गमनं "उत्क्षेपणम्"। अवगमनम् "अवक्षेपणम्"। सङ्कोचः "आकुञ्चनम्"। विस्तारः "प्रसारणम्"। गमनागमनभ्रमणादिकं "गमनम्" —एतानि पञ्च कर्माणि।

**एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम् ॥**

—वै० अ० १। आ० १। सू० १७

एकद्रव्यम्=एकद्रव्यमाश्रय आधारो यस्य तदेकद्रव्यम्। अगुणम्=

न विद्यते गुणो यस्य यस्मिन्वा तदगुणम् । अनपेक्षकारणम्=संयोगेषु विभागेषु चापेक्षारहितं कारणं तत्कर्मलक्षणम् । अथवा यत्क्रियते तत्कर्म, लक्ष्यते येन तल्लक्षणम् । कर्मणो लक्षणं कर्मलक्षणम् ।

**द्रव्यगुणकर्मणां द्रव्यं कारणं सामान्यम् ॥**

—वै० अ० १ । आ० १ । सू० १८

कार्यस्य द्रव्यगुणकर्मणः कारणं द्रव्यं सामान्यद्रव्यम् ।

**द्रव्याणां द्रव्यं कार्यं सामान्यम् ॥**—वै० अ० १ । आ० १ । सू० २३

द्रव्याणां कार्यद्रव्यं कार्यत्वेन सर्वकार्येषु सामान्यम् ।

**द्रव्यत्वं गुणत्वं कर्मत्वञ्च सामान्यानि विशेषाश्च ॥**

—वै० अ० १ । आ० २ । सू० ५

द्रव्येषु द्रव्यत्वं गुणेषु गुणत्वं कर्मसु च कर्मत्वं सामान्यानि विशेषाश्च भवन्ति । द्रव्येषु द्रव्यत्वं सामान्यं तदेव गुणत्वकर्मत्वाभ्यां विशेषः । इत्थमेव सर्वत्र विज्ञेयम् ।

**सामान्यं विशेष इति बुद्ध्यपेक्षम् ॥**—वै० अ० १ । आ० २ । सू० ३

वस्तूनां सामान्यविशेषभावो बुद्धिमपेक्षते । यथा मानवाकृतिव्यक्तिषु मनुष्यत्वं सामान्यं तदेव पशुत्वाद्यपेक्षया विशेषः । मनुष्येष्वपि स्त्रीत्वपुंस्त्वादिकं, तत्रापि ब्राह्मणत्वक्षत्रियत्ववैश्यत्वशूद्रत्वं विशेषः । एवं सर्वत्र बोध्यम् ।

[1]**इहेदमिति यतः कार्यकारणयोः स समवायः ॥**

—वै० अ० ७ । आ० २ । सू० २६

कार्यकारणयोः=अवयवावयविनोर्जातिव्यक्तयोर्गुणगुणिनोः क्रियाक्रियावतोः नित्यद्रव्यविशेषयोश्च समवायसम्बन्धः-नित्यसम्बन्धः । द्रव्याणामन्यः पारस्परिकसम्बन्धः संयोगः=अनित्यसम्बन्ध इति यावत् ।

**द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यम् ॥**—वै अ० ७ । आ० १ । सू० ९

द्रव्यगुणयोः=द्रव्याणां गुणानां च सजातीयारम्भकत्वं=समानजातीयारम्भकत्वं साधर्म्यं=समानो धर्मः । यथा पृथिव्यामचेतनत्वं घटादिकार्योत्पादकत्वं च स्वसदृशो धर्मः । एवमप्स्वपि । इत्थञ्च पृथिव्या जलेनाम्भसश्च पृथिव्या समानधर्मवत्वम् । साधर्म्येण वैधर्म्यमपि व्याख्यातम् । तथा च द्रव्यगुणयोर्विजातीयारम्भकत्वं वैधर्म्यम् । यथा पृथिव्याः कठिनत्व-शुष्कत्व-गन्धवत्वादयो धर्माः अद्भ्यः, अपाञ्च द्रवत्व-कोमलत्व-रसवत्वादयो धर्माः पृथिवीतो विरुध्यन्ते ।

**कारणभावात्कार्यभावः ॥**—वै० अ० ४ । आ० १ । सू० ३

१. इहेदमिति=तन्तुषु पटः, पटे पटत्वम्, घटे रूपम्, इत्येवं प्रकारकः प्रत्ययो यतः=यन्निमित्तको भवति स समवायः ।

कारणभावात्—कारणस्य सत्त्वात् कार्यभावः—कार्यस्य सत्त्वं भवतीत्यर्थः।

**न तु कार्याभावात्कारणाभावः ॥**—वै० अ० १। आ० २। सू० २

कार्याभावात्कारणाभावो नैव भवतीत्यर्थः।

**कारणाऽभावात्कार्य्याऽभावः ॥**—वै० अ० १। आ० २। सू० १

कारणस्याविद्यमानतायां न जातु कार्यं निष्पद्यते।

**कारणगुणपूर्वकः कार्यगुणो दृष्टः ॥**—वै० अ० २। आ० १। सू० २४

यादृशाः कारणेषु गुणाः संलक्ष्यन्ते तादृशा एव कार्येष्वपि भवन्ति।

द्विविधं खलु परिमाणम्—

**[1]अणुमहदिति तस्मिन्विशेषभावाद्विशेषाभावाच्च ॥**

—वै० अ० ७ आ० १। सू० ११

अणुः—सूक्ष्मः, महत्—बृहत्। त्रसरेणुर्लिक्षापेक्षयाऽणुः द्वयणुकापेक्षया च महान्। पर्वतस्तरूनपेक्ष्य बृहत् पृथिव्यपेक्षया चाणुः।

**सदिति यतो द्रव्यगुणकर्मसु सा सत्ता ॥**—वै० अ० १। आ० २। सू० ७

यतः—यन्निमित्तको द्रव्यगुणकर्मसु—द्रव्येषु गुणेषु कर्मसु च सदिति—सद् द्रव्यम्, सन् गुणः, सत्कर्मेत्याकारको वर्तमानकालिकः शब्दः सर्वैरन्वेति सा सत्तेत्यर्थः।

**भावोनुवृत्तेरेव हेतुत्वात्सामान्यमेव ॥**—वै० अ० १। आ० २। सू० ४

सर्वैरनुवर्तमानत्वेन सत्ताख्यो भावो महासामान्यम्। अयं सर्वोपि क्रमो भावद्रव्येषु।

अभावः पुनः पञ्चविधः

**क्रियागुणव्यपदेशाभावात्प्रागसत् ॥**—वै० अ० ९। आ० १। सू० १

क्रियागुणयोर्विशेषनिमित्ताभावात् प्राक्—पूर्वमसत्—नासीत्—यथा घटपटादिकमुत्पत्तेः पूर्वं नाभवत्। अयमेव प्रागभावः।

**सदसत् ॥**—वै० अ० ९। आ० १। सू० २

यद्भूत्वा न भवति यथा घट उत्पद्य विनश्यति सोऽयं प्रध्वंसाभावः।

**सच्चासत् ॥**—वै० अ० ९। आ० १। सू० ४

यद्भवदपि न भवति। यथा "अगौरश्वोऽनश्वो गौः" अश्वे गोर्गवि चाश्वस्याभाव इति यावत्। गोर्गवि अश्वे चाश्वस्य भाव एव। अयमन्योन्याभावः।

---

१. विशेषभावात्—महत्परिणामप्रकर्षो विशेषस्तस्य द्वयणुकमपेक्ष्य भावात्सत्त्वात् विशेषाभावाच्च—लिक्षामपेक्ष्य तादृग्विशेषाभावाच्च अथवा तरूनपेक्ष्य भावात् पृथिवीमपेक्ष्य चाभावात् त्रसरेणौ (आद्योदाहरणे) पर्वते (द्वितीयोदाहरणे) अणुमहदिति द्विविधो व्यवहार इत्यर्थः।

**यच्चान्यदसदतस्तदसत् ॥**—वै० अ० ६ । आ० १ । सू० ५

(अभावत्वे सति) पूर्वोक्तत्रितयाभावभिन्नत्वमत्यन्ताभावत्वम् । यथा नरशृङ्गं, खपुष्पं, बन्ध्यापुत्र इति ।

**नास्ति घटो गेह इति सतो घटस्य गेहसंसर्गप्रतिषेधः ॥**

—वै० अ० ६ । आ० १ । सू० १०

नास्ति सदने कलशः=अन्यत्रास्तीति गेहेन घटसंसर्गप्रतिषेधः । एते पञ्च अभावा उच्यन्ते ।

**इन्द्रियदोषात्संस्कारदोषाच्चाविद्या ॥**—वै० अ० ६ । आ० २ । सू० १०

इन्द्रियसंस्कारदोषाभ्यामविद्योत्पद्यते ।

**तद्दुष्टज्ञानम् ॥**—वै० अ० ६ । आ० २ । सू० ११

दुष्टज्ञानं=यद्विपरीतज्ञानं तत्=अविद्येत्यर्थः ।

**अदुष्टं विद्या ॥**—वै० अ० ६ । आ० २ । सू० १२

अदुष्टं=यथार्थज्ञानं विद्या ।

**पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च ॥**

—वै० अ० ७ । आ० १ सू० २

**एतेन नित्येषु नित्यत्वमुक्तम् ॥**—वै० अ० ७ । आ० १ । सू० ३

कार्यरूपपृथिव्यादिपदार्थेषु वर्तमाना रूपरसगन्धस्पर्शगुणाः निखिला द्रव्याणामनित्यत्वादनित्याः । तथैव कारणरूपपृथिव्यादिनित्यद्रव्येषु वर्तमाना गन्धादिगुणा नित्याः ।

**सदकारणवन्नित्यम् ॥**—वै० अ० ४ । आ० १ । सू० १

विद्यमानं कारणविरहितं च नित्यम् । तथा सत्कारणवदनित्यम् । कारणवन्तः कार्यरूपगुणा अनित्या इति भावः ।

**अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम् ॥**

—वै० अ० ६ । आ० २ । सू० १

समवायि संयोगि एकार्थसमवायि विरोधि चेति चतुर्विधं लैङ्गिकं ज्ञानं—लिङ्गलिङ्गिनोः सम्बन्धेन समुत्पन्नमिति यावत् । समवायि यथा आकाशं परिमाणवदिति । संयोगि यथा—देहस्त्वग्वानिति । एकार्थसमवायि—एकस्मिन्वस्तुनि द्वयोरवस्थानम् यथा कार्यरूपस्पर्शः कार्यस्य लिङ्गम् । विरोधि =संजातवृष्टिः संपत्स्यमानवृष्टेर्विरोधिलिङ्गम् ।

**नियतधर्मसाहित्यमुभयोरेकतरस्य वा व्याप्तिः ॥**
**निजशक्त्युद्भवमित्याचार्याः ॥**
**आधेयशक्तियोग इति पञ्चशिखः ॥**

—सांख्य० अ० ५ । सू० २९, ३१, ३२

उभयोः साध्यसाधनयोः=साधयितुमर्हस्य सिद्धिसाधनस्य चेति

यावत्, तयोरेकतरस्य साधनमात्रस्य वा नियतधर्मसहचारो व्याप्तिः। वह्नि-धूमयोः सहचार इहोदाहरणम् ॥२६॥

व्याप्यधूमस्य निजशक्तिसमुत्पन्नो व्याप्तिः। देशान्तरं गतो हि धूमो वह्निसंयोगमन्तरेणापि स्वयमवतिष्ठते वह्नेश्छेदनभेदनाख्यसामर्थ्येन जलादिपदार्थो धूमरूपेणाविर्भवतीति ॥३१॥

प्रकृत्यादेर्महत्तत्त्वादिषु व्यापकत्वधर्मस्य बुद्धयादिषु च व्याप्यत्व-धर्मस्य सम्बन्धः, आधेयरूपस्य शक्तेराधाररूपस्य शक्तिमतश्च सम्बन्धो व्याप्तिः ॥३२॥

इत्यादिशास्त्राणां प्रमाणादिभिः सम्परीक्ष्याध्ययनाध्यापने विधेये। अन्यथा हि कर्हिचिदपि छात्रा यथार्थबोधवन्तो न भवितुमर्हन्ति। अध्यापयितु-मभीष्टग्रन्थेषु यो नाम ग्रन्थः सत्यो व्यवतिष्ठेत तमेवाध्यापयेयुः। यश्चाभिः परीक्षाभिर्विरुद्धयेत तं जात्वपि नाधीयीरन् नाप्यध्यापयेयुः।

**लक्षणप्रमाणाभ्यां वस्तुसिद्धिः ॥**

"गन्धवती पृथिवी" एवंविधलक्षणेन प्रत्यक्षादिप्रमाणैश्च सर्वं सत्यासत्यं पदार्थाश्च विनिर्णीयन्ते नह्येताभ्यां विना किञ्चिदपि निर्णेतुं शक्यते।

## अथ पठनपाठनविधिः

प्रथमं पाणिनिमुनिविरचिता सूत्ररूपा शिक्षापद्धतिरध्येतव्या। अर्थात् अस्य वर्णस्येदं स्थानमिदं प्रयत्नं करणञ्चेदमिति। यथा "प" अस्योष्ठस्थानं स्पृष्टं प्रयत्नं, प्राणजिह्वयोर्व्यापारश्च करणम्। एवं सर्ववर्णानां यथा-योग्योच्चारणं मातृपित्राचार्य्याः शिक्षयेयुः। तदनन्तरं व्याकरणमर्थात् प्रथम-मष्टाध्याय्याः सूत्रपाठं 'वृद्धिरादैजिति'। ततः पदच्छेदान् "वृद्धिः, आत् ऐच् वा आदैजिति"। अनन्तरं समासान् "आच्च ऐच्च आदैच्"। ततः परमर्थान् आदैचां वृद्धिसंज्ञा क्रियत इति (अर्थसमनन्तरं व्याख्यानम्) "तपरो यस्मात् स तपरस्तादपि परस्तपर इति। एवञ्चात्राकारस्तकारपरत्वेनैच्च तकारतः परत्वेनोभावपि (आ ऐच्) तपरौ। ह्रस्वप्लुतयोर्वृद्धिसंज्ञानिषेधश्च तपर-करणप्रयोजनम्। अनन्तरमुदाहरणम्। भाग इति। अत्र भज् धातोर्घञ्ि प्रत्यये "घ्—ञ्" वर्णयोरित्संज्ञालोपयोः 'भज्—अ' इति स्थिते जकारात्पूर्वस्य भकारोत्तराकारस्य वृद्धिसंज्ञकाऽऽकारे भाज् इत्यवस्थायां जकारस्य गकारे 'भागः' इति प्रयोगः सम्पन्नः।

**अध्यायः**—इति—अधिपूर्वादिङ् धातोर्घञि ह्रस्वेकारस्य स्थाने 'ऐ' वृद्धौ तस्यायादेशे **'अध्यायः'**—इति सिद्धयति।

**नायकः**—'नी' धातोर्ण्वुल् प्रत्यये परे दीर्घेकारस्थाने 'ऐ' वृद्धावाया-देशे आकारसंयोगे **'नायकः'**—इति सिद्धयति।

**स्तावकः**—अत्र 'स्तु'धातोर्ण्वुल् प्रत्यये ह्रस्वोकारस्थाने 'औ' वृद्धावावादेशे चाकारसंयोगे **'स्तावकः'**।

**कारकः**—'कृञ्'धातोर्ण्वुल् प्रत्यये लकारस्येत्संज्ञालोपयोः 'वु' स्थाने अकादेशे ऋकारस्य 'आर्' वृद्धौ च **'कारकः'** इति सिद्ध्यति।

(एवं सूत्रपाठ—पदच्छेद—समासार्थोदाहरण—व्याख्यादिकं क्रमेणाध्यापयेत्)। पूर्वापरप्रयोगेषु येन येन सूत्रेण यद्यत्कार्यं भवति तत्तत्सर्वं बोधयेत्। पाषाणपट्टिकायां काष्ठपट्टे वा शब्दानां प्रक्रियारूपं विलिख्य सन्दर्शयन् (अध्यापयेत्)—यथा हि "भज्+घञ्+सुँ इत्थं विलिख्य प्रथमं घकारस्यानन्तरं ञकारस्य लोपे "भज्+अ+सुँ+" इति स्थितम्। ततोऽकारस्याकारवृद्धौ जकारस्य गकारे च "भाग्+अ+सुँ—(इति स्थितम्) पुनरकारसम्मेलनेन "भाग+सुँ इत्यवशिष्टम्। उकारस्येत्संज्ञायां सस्य रुत्वे पुनरुकारस्येत्संज्ञालोपयोः "भाग+र्" इति स्थितम्, इदानीं रेफस्य (:) विसर्जनीये "भागः" इति सिद्धम्।

येन येन सूत्रेण यद्यत्कार्यं भवति तत्तदध्यापयन् विलेखयंश्च शिक्षयेत्। इत्थमध्ययनाध्यापनेन झटित्येव सम्यग्बोधः सञ्जायते। एवं प्रथममष्टाध्यायीमध्याप्य तदनु सार्थकं सदशलकाररूपं प्रक्रियासहितमुत्सर्गापवादपुरस्सरं धातुपाठम् (अध्यापयेत्)।

प्रथममुत्सर्गं—सामान्यसूत्रं यथा "कर्मण्यण्" कर्मोपपदाद्धातुमात्रादण् प्रत्ययः। कुम्भकारः, (इत्युपदिशेत्)। तदनु अपवादसूत्रं "आतोऽनुपसर्गे कः" उपसर्गभिन्नकर्मोपपदादाकारान्ताद्धातोः"कः"प्रत्ययो भवति(इत्यध्यापयेत्)।

बहुव्यापको नियम **उत्सर्गः** यथा हि—कर्मण्युपपदे धातुमात्राद् विधीयमानोऽण् प्रत्ययः। अथ चाल्पविषयको**ऽपवादः**। उत्सर्गसूत्रविषयेऽपवादसूत्रं प्रवर्तते, नत्वपवादसूत्रविषये उत्सर्गः प्रवर्तते। चक्रवर्तिविशाम्पते राष्ट्रे माण्डलिकानां भूमिपालानां प्रवृत्तिर्भवत्येव न तु माण्डलिकनराधिपानां राज्ये चक्रवर्तिलोकपालस्य। इत्थमेव (उत्सर्गापवादक्रमेणैव) महर्षिः पाणिनिः सहस्रश्लोकेषु निखिलशब्दार्थसम्बन्धविज्ञानं प्रतिपादयामास। धातुपाठस्यानन्तरमुणादिकोशाध्यापने सकलसुबन्तविषयं सम्यगध्याप्य द्वितीयवारं शङ्का—समाधान–वार्तिक–कारिका–परिभाषाणां सोदाहरणं (ससमन्वयं) प्रवृत्तिपूर्वकमष्टाध्याय्या द्वितीयावृत्तिमध्यापयेत्। अनन्तरञ्च महाभाष्यं पाठयेत्।

बुद्धिमन्तः पुरुषार्थिनो निश्छला विद्योन्नतिमभीप्सवः सततमधीयीरन्नध्यापयेयुश्चेत्तर्हि सार्धसंवत्सरेणाष्टाध्यायीं सार्धसंवत्सरेण च महाभाष्यमधीत्य वर्षत्रयेण निखिलं व्याकरणमधिगम्य वैदिकलौकिकशब्दान् व्याकरणेन विज्ञायान्यशास्त्राणि शीघ्रमनायासेनैवाध्येतुं शक्नुवन्ति।

व्याकरण एव महान् परिश्रमोऽपेक्ष्यते नान्येषु पुनः शास्त्रेषु। यावान् बोध एतद्ग्रन्थाध्ययनेन वर्षत्रये सञ्जायते, न तावान् बोधो कुग्रन्थानां सारस्वत-चन्द्रिका-कौमुदी—मनोरमादीनामध्ययनेन पञ्चाशत्संवत्सरेष्वपि शक्नोति भवितुम्। यतो महाशयमहर्षिभिर्निजग्रन्थेषु प्रकाशितो महान् विषयः क्षुद्राशयानां मानवानां विरचितग्रन्थेषु कथङ्कारं भवितुमर्हति। महर्षीणां ह्याशयो यथाशक्यं सुगमो यदधिगमे चाल्पीयान् कालोऽपेक्ष्येत तथा भवति क्षुद्राशयाः पुनर्मानवा यथाशक्ति गहनरचनां विधातुं कामयन्ते यां महता परिश्रमेणाधीत्याल्पीयाँसं लाभं लभेरन्। (गिरिखननेन वराटकप्राप्तिमिव) आर्षग्रन्थानां चाध्ययनम् 'एकस्मिन्नेवावगाहे मुक्तालाभेनोपमातुं शक्यते।'

व्याकरणमधीत्य यास्कमुनिकृते निघण्टुनिरुक्तशास्त्रे षड्भिरष्टाभिर्वा मासैः सार्थकेऽध्येये। नान्येषु नास्तिकप्रणीतेष्वमरकोषादिषु व्यर्थमेव वर्षाणि यापयेयुः। तदनन्तरं पिङ्गलाचार्यकृतछन्दोग्रन्थेन वैदिकलौकिकछन्दसां परिज्ञानं, नव्यरचनां, श्लोकनिर्माणसरणिमपि यथावच्छिक्षेयुः। ग्रन्थममुं पद्यरचनाकौशलं प्रस्ताराँश्च मासचतुष्टयेन परिज्ञायाध्येतुमध्यापयितुं च शक्नुवन्ति। वृत्तरत्नाकरादिष्वल्पबुद्धिप्रकल्पितेषु ग्रन्थेषु संवत्सरान् मा गमयेयुः। ततो मनुस्मृतिं वाल्मीकीयरामायणं महाभारतोद्योगपर्वान्तर्गत-विदुरनीतिप्रमुखानि दुर्व्यसनापहारीणि सभ्यताजनकानि सत्प्रकरणानि काव्यमर्यादया पदच्छेद-पदार्थोक्ति-अन्वय-विशेष्य-विशेषणभावार्थपुरस्सरं गुरवः शिक्षयेयुरन्तेवासिनश्च शिक्षेयुः। सर्वमप्येतत् संवत्सरेणाधीयीरन्। तदनन्तरं पूर्वमीमांसा-वैशेषिक-न्याय-योग-सांख्य-वेदान्ताख्यानि—षट् शास्त्राणि यथासम्भवमृषिप्रणीतव्याख्यायुतानि, उत्तमविदुषां सरलव्याख्यायुक्तानि वाऽधीयीरन्, परं वेदान्तसूत्राध्ययनतः पूर्वमीश-केन-कठ-प्रश्न-मुण्डक-माण्डूक्य-ऐतरेय-तैत्तिरीय-छान्दोग्य-बृहदारण्यकाख्या दशोपनिषदोऽध्येतव्याः। इमा दशोपनिषदो भाष्यवृत्तिसहितानि षड्दर्शनानि च वर्षद्वयेनाध्याप्याध्येयानि च। पश्चात् ऐतरेय–शतपथ–साम–गोपथाख्यैश्चतुर्भिर्ब्राह्मणैः सहितान् सस्वरशब्दार्थसम्बन्धविज्ञानं सक्रियञ्च चतुरो वेदान् षड्भिरब्दैरधीयीरन्। अत्र प्रमाणम्—

**स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।**
**योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा॥**

—निरुक्त १।१८

यो वै वेदान् केवलं स्वरपाठमात्रेणाधीत्य तदर्थं न विजानाति स खलु प्रशाखा-पर्ण-पुष्प-फलभरं-शाखीव धान्यादिभरमन्यपशुरिव वा भारमेव वहति। यः पुनर्वेदानधीते, यथावत्तदर्थमधिगच्छति स एव निखिलमानन्द-

मुपलभ्य मरणानन्तरमपि ज्ञानेन विधूय पापानि धर्माचारप्रभावेण सर्वानन्दमश्नुते ।

**उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।**
**उतो त्वस्मै तन्वं१ विसस्रे जायेव पत्य उशती सुवासाः ॥**

—ऋ० मं० १० । सू० ७१ । मं० ४

अविद्वांसः शृण्वन्तोऽपि न शृण्वन्ति, पश्यन्तोऽपि न पश्यन्ति, वदन्तोऽपि न वदन्ति—नानयोर्विद्यागिरो रहस्यं विज्ञातुं प्रभवन्तीति यावत् । शब्दार्थसम्बन्धविदुषे पुनः शोभनवसनालङ्काराणि सन्दधती भर्तारं कामयन्ती पत्युः सम्मुखे आत्मानं प्रकाशयन्ती जायेव विद्यापि विदुषः समक्षं स्वरूपं प्रकाशयति न त्वविदुषां समक्षम् ।

**ऋचो अक्षरे परमे व्योमन् यस्मिन्देवा अधि विश्वे निषेदुः ।**
**यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥**

—ऋ० मं० १ । सू० १६४ । मं० ३९

यस्मिन्व्यापकेऽविनाशिनि सर्वोत्कृष्टपरमात्मनि सर्वे विपश्चितः भूमिसूर्य्यादयश्च सर्वे लोकाः संप्रतिष्ठिताः, यत्रैव च कृत्स्नवेदानां प्रधानं तात्पर्यं यस्तं परमेश्वरं न विजानाति स ऋग्वेदादिभिः किमपि सुखमधिगन्तुमर्हति किम् ? (नहि तेन मनागपि सुखं लब्धुं शक्यते) नहि, नहि । ये पुनर्वेदानधीत्य धर्मात्मानो योगिनश्च सम्भूय तद्ब्रह्म विजानन्ति सर्व एव ते परमात्मनि स्थिताः सन्तो मोक्षात्मकं परमानन्दमधिगच्छन्ति । तस्माद् यत्किञ्चिदपि अध्येयमध्याप्यं वा तत्सर्वमर्थज्ञानयुतं भवेत् । रीत्यानया सर्ववेदानधीत्यायुर्वेदम्—चरकसुश्रुतादिकमृषिमुनिप्रणीतवैद्यकशास्त्रं सार्थकं क्रिया शस्त्र-छेदनभेदन-लेप-चिकित्सा-निदान-औषध-पथ्य-शरीर-देशकालवस्तूनां गुणज्ञानपूर्वकं वर्षचतुष्टयेनाधीयीरन् अध्यापयेयुश्च ।

तदनन्तरं धनुर्वेदं—राष्ट्रसम्बन्धिकार्यंजातम्—(अनुशीलयेत्) निजराजपुरुषप्रजाजनसम्बन्धित्वेन चायं द्विप्रभेदः । तत्र राजकर्मणि निखिलसैन्याधिपत्य विज्ञानम्, शस्त्रास्त्रविद्यां, नानाविधव्यूहसमभ्यासम्, यमद्यत्वे लोके "कवायद" इत्याचक्षते । या हि शत्रुभिः सम्पराये क्रियाऽनुष्ठीयते, तत्सर्वं यथावत् शिक्षेयुः । प्रजानां पालनवर्धनक्रमं परिशिक्ष्य न्यायेनाशेषविशः प्रसादसरणिं दुष्टचेतसां यथावद्दण्डेन साधुजनपरिरक्षणप्रकारञ्च सर्वथा शिक्षेयुः ।

राजविद्यामिमां वर्षचतुष्टयेन विज्ञाय गान्धर्ववेदं—गानविद्यामधीयीरन् । तत्र स्वर—राग—रागिणी—समय—ताल—ग्राम—लय—वादित्र—नृत्य-गीतादिकं यथावच्छिक्षेयुः । तत्रापि प्राधान्येन सामवेदगानं वादित्र-

वादनपूर्वकं शिक्षणीयं नारदसंहितादय आर्षग्रन्थाश्च वर्षचतुष्टयेनाध्येतव्याः। परं भण्डवेश्याङ्गनाधुनिकगायकानां विषयासक्तिजनकान् गर्दभशब्दानिव व्यर्थालापान् जात्वपि नानुतिष्ठेयुः। अनन्तरमर्थवेदं—यं हि शिल्पविद्येति समाचक्षते—अधीयीरन्। तत्र पदार्थानां गुणविज्ञानं क्रियासु कौशलं नानाविधद्रव्याणां निर्माणपाटवं पृथिवीतो द्युपर्यन्तस्य विज्ञानम्, अर्थैश्वर्यवृद्धिकरीं विद्यां वर्षचतुष्टयेन यथावच्छिक्षेयुः।

पश्चात् वर्षद्वयेन सूर्यसिद्धान्तादिज्योतिष्शास्त्रं यत्र हि बीजाङ्कगणितं भूगोलखगोलविज्ञानं, भूगर्भविद्यां च वर्ण्यते यथावच्छिक्षेयुः।

अनन्तरं सर्वविधां हस्तक्रियां यन्त्रकलाविद्याञ्च विजानीयुः। ग्रह-नक्षत्र-जन्मपत्र-राशिमुहूर्तादीनां फलविधायकग्रन्थाँस्तु मिथ्येत्यवगम्य कर्हिचिन्नाधीयीरन् नाप्यध्यापयेयुः। अध्यापकैरध्येतृभिश्च तथा प्रयत्न आधेयो येन संवत्सराणां त्रिंशतावेकत्रिंशतौ वाशेषविद्यामुत्तमाञ्च शिक्षां सम्प्राप्य मानवाः कृतकृत्याः सन्तः सर्वदा सानन्दा भवेयुः।

अनया सरण्या यावती विद्या त्रिंशत्येकत्रिंशतिसंवत्सरेषु समधिगन्तुं शक्यते प्रकारान्तरेण तावती वर्षाणां शतैरपि भवितुं न शक्नोति। अतः खलु ऋषिप्रणीतग्रन्था अध्येया यतो वै ऋषय एते महाविद्वाँसः पुण्यात्मानश्चासन्। अनृषीणामल्पशास्त्राधीतिनां पक्षपातयुक्तात्मनां च ग्रन्था अपि मिथ्यैव भवन्ति।

पूर्वमीमांसायां व्यासमुनिप्रणीतव्याख्या, वैशेषिकशास्त्रे गोतममुनिकृतभाष्यम्, न्यायसूत्रेषु वात्स्यायनमुनिकृतभाष्यम्, पतञ्जलिमुनिकृतसूत्रेषु व्यासमुनिकृतभाष्यम्, कपिलमुनिकृतसांख्यसूत्रेषु भागुरिकृतभाष्यम्, व्यासमुनिकृतवेदान्तसूत्राणामुपरि वात्स्यायनमुनिकृतभाष्यं, वा बौद्धायनमुनिकृतभाष्यञ्च वृत्तिसहितमध्येतव्यमध्यापयितव्यम्।

एते सूत्रग्रन्थाः कल्पाङ्गेष्वपि परिगणयितव्याः। यथा—ऋग्यजुःसामाथर्ववेदचतुष्टयमीश्वरकृतं तथैव ऐतरेय, शतपथ, साम, गोपथब्राह्मणचतुष्टयम्, शिक्षा, कल्प, व्याकरण, निघण्टु-निरुक्त, छन्दः, ज्योतिष्, प्रभृतिवेदाङ्गषट्कम्, मीमांसादिषट् शास्त्राणि, वेदोपाङ्गाश्च, आयुर्वेद, धनुर्वेद, गान्धर्ववेद, अर्थवेदाश्च चत्वारो वेदोपवेदाः सर्वे ह्येवार्षग्रन्थाः। एतेष्वपि यद् यद् वेदविरुद्धं त्याज्यं तत्, यत ईश्वर कृतत्वात् वेदानां निर्भ्रान्तत्वं स्वतः-प्रामाण्यञ्च, अर्थाद् वेदैरेव वेदानां प्रामाण्यम्। ब्राह्मणादयो ग्रन्थाः सर्वे परतः-प्रमाणभूताः, अर्थाद् वेदाधीनमेषां प्रामाण्यम्।

वेदानां विशेषव्याख्यानमृग्वेदादिभाष्यभूमिकायां द्रष्टव्यमत्राप्यग्रतो विलेखिष्यामः।

**साम्प्रतं परिहेयग्रन्थाः संक्षेपतः परिगण्यन्ते—अधोनिर्दिष्टग्रन्था**

जालग्रन्था विज्ञेयाः। व्याकरणे कातन्त्र-सारस्वत-चन्द्रिका-मुग्धबोध-कौमुदी—शेखर-मनोरमादयो ग्रन्थाः। कोशेष्वमरकोशादयः। छन्दोग्रन्थेषु वृत्तरत्नाकरादयः। शिक्षायां "अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा"—इत्यादिशब्दारब्धो ग्रन्थः। ज्योतिष्शास्त्रे शीघ्रबोधमुहूर्त्तचिन्तामणिप्रभृतयः। काव्येषु नायिकाभेदाः, कुवलयानन्द-रघुवंश-माघ-किरातार्जुनीयादि-ग्रन्थाश्च। मीमांसायां धर्मसिन्धुव्रतार्कादयः। वैशेषिके तर्कसंग्रहादयः। न्यायशास्त्रे जागदीशीप्रमुखाः, योगशास्त्रे हठप्रदीपिकादयः। सांख्ये सांख्य-तत्त्वकौमुद्यादयः, वेदान्ते योगवासिष्ठपञ्चदश्यादयः। आयुर्वेदे शार्ङ्ग-धरादयः, स्मृतिषु मनुस्मृतेः प्रक्षिप्तश्लोकाः सर्वाश्चान्याः स्मृतयः, सकलतन्त्र-ग्रन्थाः, सर्वपुराणोपपुराणानि, तुलसीदासप्रणीतं भाषारामायणम्, रुक्मिणी-मङ्गलादिकम्, कृत्स्नभाषाग्रन्थाश्च कपोलकल्पिता मिथ्या एव।

प्र०—किमेषु ग्रन्थेषु किमपि सत्यं नास्ति ?

उ०—सत्यप्यल्पीयसि सत्येऽसत्यबहुलत्वादिमे विषसम्पृक्तान्न-वत्त्याज्याः।

प्र० अपि भवान् पुराणेतिहासान् न मनुते ?

उ०—आम्, मन्महे परं सत्यमेव मन्यामहे न त्वलीकम्।

प्र०—कतमत्सत्यं कतमद्वासत्यम् ?

उ०—**ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशंसीरिति।**

—गृह्यसूत्रम्।

प्रथमलिखितानामैतरेयशतपथादिब्राह्मणग्रन्थानामेव इतिहासः—पुराणं, कल्पः, गाथा, नाराशंसीति पञ्च नामानि। श्रीमद्भागवतादीनां तु नास्ति पुराणेति समाख्या।

प्र०—त्याज्यग्रन्थेष्वपि विद्यमानसत्यं कथन्न परिगृह्यते ?

उ०—तेषु यत्सत्यं तद् वेदादिसत्यशास्त्राणामसत्यं पुनस्तत्कल्पितम्। वेदादिसत्यशास्त्राणामङ्गीकारे च सर्वं सत्यं परिगृहीतं भवति। एतदलीक-ग्रन्थेभ्यः सत्यं जिघृक्षवोऽसत्येनापि संश्लिष्टा भविष्यन्ति तस्मादसत्यमिश्रं सत्यं विषसम्पृक्तमन्नमिव दूरतस्त्याज्यमिति।

प्र०—किं वै युष्माकं मतम् ?

उ०—वेदः, यद्यद्वेदेषु कर्तव्यं परिहेयञ्चोपदिष्टं तस्य वयं याथार्थ्येन समाचरणं त्यागञ्च मन्महे। वेदान् मन्यमानानामस्माकं वेद एव मतम्। इत्थमेवाङ्गीकृत्य सर्वमानवैर्विशेषतश्चार्यैरैकमत्येन वर्त्तितव्यम्।

प्र०—यथा वै ग्रन्थान्तरेषु सत्यासत्ये मिथो विरोधश्च विद्यते तथैव शास्त्रेष्वपि विरोधः संलक्ष्यते। षड्दर्शनानि हि सृष्टिविषये विरुध्यन्ते तथा च मीमांसा कर्मणः, वैशेषिकः, कालात्, न्यायः परमाणुभ्यः, योगः पुरुषार्थात्

सांख्ये प्रकृतेः, वेदान्तश्च ब्रह्मणः सृष्टेः समुत्पत्तिं मन्यते अपि नास्त्ययं विरोधः ?

उ०—प्रथमं तावत्सांख्यवेदान्तातिरिक्तेषु चतुर्दर्शनेषु सुस्पष्टं सृष्ट्युत्पत्तिर्नोपवर्णिता, अपरं चात्र नास्ति विरोधः, नहि भवान् विरोधाविरोधौ जानीते। युष्मानहं पृच्छामि आचष्टां कुत्र स्थले भवति विरोध इति एकस्मिन्नेव विषये आहोस्विद्विभिन्नविषयेषु ?

प्र०—एकस्मिन्नेव विषये भूयसां मिथो विरोधकथनं विरोधः समाख्यायते। अत्रापि च सृष्टिरेक एव विषयः।

उ०—एका वै विद्या उत द्वे विद्ये ?

प्र०—एका।

उ०–एका चेत् कथं व्याकरण-वैद्यक-ज्यौतिषादयो विभिन्ना विषयाः। सत्यपि विद्यैकत्वेऽनेकेषां तदङ्गानामन्योन्यतो विभिन्नप्रतिपादनमिव पृथग्भूतषडवयवानां सृष्टिविद्याया अपि पृथक् शास्त्रेषु प्रतिपादनान्नास्ति तेष्वल्पीयानपि विरोधः। यथा खलु घटनिर्माणे कर्म-समय-मृद्-विचार-संयोग-वियोगादिपुरुषार्थः प्रकृतेर्गुणाः कुम्भकारश्च कारणं तथैव सृष्टेः कर्मकारणस्य व्याख्यानं मीमांसायां, समयस्य वैशेषिके, उपादानकारणस्य न्याये, पुरुषार्थस्य योगशास्त्रे, तत्त्वानामनुक्रमेण परिगणनस्य सांख्ये, निमित्तकारणस्य परमात्मनश्च वेदान्तशास्त्रे व्याख्यानम्। तस्मान्नास्ति कश्चन विरोधः। वैद्यकशास्त्रे, निदानचिकित्सा-ओषधिप्रदानपथ्यानां प्रकरणानिपृथक्पृथगुच्यन्ते परं सर्वेषां रोगनिवृत्तावेव तात्पर्यं भवति। तथैव सृष्टेरपि षट्कारणेष्वेकैकमेकैकशास्त्रकारेण व्याख्यातं तस्मादेषु नास्ति विरोधलवोऽपि। सृष्टिप्रकरणे चेदं विशेषतो व्याख्यास्यामः।

विद्याया अध्ययनाध्यापनादिविघ्नान् परिहरेयुस्तथा च कुसङ्गो दुष्टविषयिजनसंसर्गः, मद्यादिसेवनं, वेश्यागमनादिदुर्व्यसनम्, शैशवे—वर्षाणां पञ्चविंशतितः पूर्वं पुरुषस्य, षोडशाब्देभ्यः प्राक् च योषितो विवाहः, पूर्णब्रह्मचर्याभावः, भूपति—मातृ—पितृ—विदुषां वेदादिशास्त्रप्रचारे प्रेमराहित्यम्, भोजनजागरणयोरतिशयः, अध्ययनाध्यापनयोः परीक्षादानप्रदानयोरालस्यं छद्मव्यवहारो वा, सर्वतोऽधिकं विद्याया लाभानवबोधः, ब्रह्मचर्येण बल-बुद्धि-पराक्रमारोग्यराज्यधनानां वृद्धेरनङ्गीकारः, परमात्मानमध्यात्वा—असत्यभाषणादिजडमूर्तिदर्शनपूजनेषु वृथैव समययापनम्, जननीजनकप्राघुणिकाचार्यविदुषां सत्यमूर्तय इति विभाव्य सत्सङ्गाननुष्ठानम्, विहाय वर्णाश्रमधर्मान् ऊर्ध्वपुण्ड्रत्रिपुण्ड्रतिलकादिविरचनम्, कण्ठिकाजपमालादिधारणम्, एकादशीत्रयोदश्यादिषूपवासः, काश्यादितीर्थदर्शनेन (पर्यटनेन) राम-कृष्ण-नारायण-शिव-भगवती-गणेशादिनामस्मरणेन च पापापहरण-

विश्वासः। पाषण्डिनामुपदेशेन विद्याध्ययनेऽश्रद्धानम्, विद्या-धर्म-योग-परमेश्वरोपासनां विहाय पुराणाख्यालीकभागवतादिग्रन्थानां कथाभिर्मोक्ष-विश्वासः, लोभाद्धनादिषु प्रसज्य विद्यायामप्रीतिः, इतस्ततो मुधैव पर्यटनम्। एवमादिमिथ्याव्यवहारपाशबद्धाः पुमांसो ब्रह्मचर्यविद्यालाभविरहिताः सन्तः रोगिणो मूर्खाश्चावतिष्ठन्ते।

इदानीन्तनाः सम्प्रदायिनः स्वार्थैकतत्परा ब्राह्मणाश्चान्यान् विनिवर्त्य विद्यासत्सङ्गाभ्यां स्वपाशेन बध्नन्ति। तेषां देह मनो धनानि च प्रणाशयन्ति। ते हि "क्षत्रियादयो वर्णा अधीत्य लब्धविद्याः सन्तोऽस्मत्पाखण्ड-जालात् परिमुच्य विज्ञाय चास्मच्छलमस्मानवमंस्यन्त" इति मन्यन्ते। भूमिपालाः प्रजावर्गश्चैवमाद्यन्तरायान् निरस्यात्मसन्ततीरध्यापयितुं देह-मनोवित्तैः प्रयतेरन्।

**प्र०**—अपि योषितः शूद्राश्चापि वेदमधीयीरन्, एतेष्वधीयमानेषु वयं किं करिष्यामः? नाप्येषामध्ययने प्रमाणमुपलभ्यते प्रत्युतायं निषेधः सन्दृश्यते—

**स्त्रीशूद्रौ नाधीयातामिति श्रुतेः॥**

**उ०**—सर्वे पुमांसो योषितश्च (मनुष्यमात्रमिति यावत्) अध्ययनेऽधिक्रियन्ते। पतत कूपेषु यूयम्। श्रुतिश्चेयं युष्मत्कल्पनाप्रसूता न तु कस्यचित् प्रमाणभूतस्य ग्रन्थस्य। निखिलमानवानां वेदादिशास्त्राध्ययनश्रवणाधिकार-प्रदर्शकं प्रमाणं यजुर्वेदस्य षड्विंशेऽध्याये द्वितीयो मन्त्रः—

**यथेमां वाचं कल्याणीमावदानि जनेभ्यः।**
**ब्रह्मराजन्याभ्याᳪ शूद्राय चार्याय च स्वाय चारणाय च॥**

परमेश्वरोऽभिधत्ते यथाहं (**जनेभ्यः**) सर्वमानवेभ्य इमां (**कल्याणीं**) कल्याणम्-अभ्युदयनिःश्रेयससुखम्-तत्प्रदायिनीं (**वाचम्**) ऋगादिवेदचतुष्टय-गिरं (**आवदानि**) उपदिशामि तथैव यूयमप्यनुतिष्ठत।

नन्वत्र जनशब्देन द्विजा एव ग्राह्याः स्मृत्यादिग्रन्थेषु हि वेदाध्ययने ब्राह्मणक्षत्रियवैश्यानामेवाधिकारो वर्णितः न तु योषितां शूद्रादिवर्णानां वेति शङ्कां परिहरन् स्वयं परमेश्वरः प्राह—(**ब्रह्मराजन्याभ्यामित्यादि**) परमेश्वरः प्राह—"अस्माभिर्ब्राह्मणक्षत्रियाभ्यां (**अर्याय**) वैश्याय शूद्राय (**स्वाय**) निज-भृत्येभ्यो योषादिभ्यश्च (**अरणाय**) अतिशूद्रादिभ्योऽपि प्रकाशिता वै वेदाः।

सर्वे मानवा वेदानामध्ययनाध्यापनेन श्रवणश्रावणेन च विज्ञानं परिवर्ध्य सत्कर्मणां ग्रहणेनासत्यस्य च परित्यागेन दुःखेभ्यः परिमुच्यानन्दं समवाप्नुयुः।

उच्यतां ननु साम्प्रतं युष्माकं परमात्मनो वा वाचमङ्गीकुर्वीमहि?

परमात्मनो निदेशोऽवश्यमभ्युपेतव्यः। सत्यप्येवमनङ्गीकुर्वन् नास्तिक इति व्यपदेक्ष्यते यतो वै **'नास्तिको वेदनिन्दकः'** [मनु० २।११] अपि परमेश्वरः शूद्राणां कल्याणं न कामयते ? अपि परमेश्वरः पक्षपाती ? येन स वेदानामध्ययनश्रवणे शूद्रेभ्यो निषेधेत् द्विजेभ्यश्च विदध्यात् ? शूद्रादीनामध्ययनश्रवणेऽनभिप्रयन् परमेश्वरस्तेषां शरीरे कथं वाक्श्रोत्रेन्द्रियं व्यरचत् ? परमात्मना हि पृथिवीजलवाय्वग्निचन्द्रसूर्य्यान्नादिपदार्था इव वेदा अपि सर्वेभ्यः प्रकाशिताः। यत्र क्वापि निषिध्यते तस्यायमभिप्रायः "योऽध्ययनाध्यापनेनापि किञ्चिन्नावगच्छति स हि निर्बुद्धित्वेन मौर्ख्येण च शूद्रः। व्यर्थमेव तस्याध्ययनाध्यापनमिति"। यच्चापि योषितामध्ययनं प्रतिषेधथ तदपि युष्माकं मौर्ख्याज्ञानस्वार्थावैदग्ध्यानां प्रभावः। वेदेषु कन्यानामध्ययनप्रमाणं पश्यत—

**ब्रह्मचर्येण कन्या३ युवानं विन्दते पतिम्॥**

—अथर्व० कां ११। प्र० २४। अ० ३। मं० १८

यथा वै बाला ब्रह्मचर्येण पूर्णविद्यां सुशिक्षां च सम्प्राप्य युवतिं विदुषीं स्वानुकूलां प्रियां स्वसदृशीं च भार्यां परिणयन्ते तथैव (**कन्याः**) कुमार्यो (**ब्रह्मचर्येण**) ब्रह्मचर्यसेवनेन वेदादिशास्त्राण्यधीत्य सकलविद्यां शिक्षाञ्चोत्तमां सम्प्राप्य (**युवानम्**) प्राप्तयौवनं स्वसमानं प्रियं पुमांसं (**विन्दते**) लभेत इति।

**प्र०**—नार्योऽपि किं वेदानधीयीरन् ?

**उ०**—अवश्यम्, पश्यत श्रौतसूत्रादिषु—

**इमं मन्त्रं पत्नी पठेत्।**

यज्ञे मन्त्रमिमं भार्या सम्पठेदिति। अनधीतवेदादिशास्त्रा हि योषा यज्ञेषु कथं सस्वरं मन्त्रानुच्चारयितुं संस्कृतवाचि भाषितुं च पारयेत्। पुराप्यस्मिन् भारते योषितामलङ्काररस्वरूपा गार्गीप्रभृतयो वेदादिशास्त्राण्यधीत्य पूर्णविदुष्योऽभवन्निति शतपथब्राह्मणे स्पष्टं विलिखितम्। यदि नाम पुरुषो विचक्षणो भार्या चाविचणा, अथवा भार्या विदुषी पुरुषाश्चाविद्वान् भवेत् तर्हि प्रत्यहं सद्मनि दैवासुरसंग्रामः प्रवर्तेत कुतः पुनः सुखम् ? अनधिगतविद्या हि नार्यः कन्यानां पाठशालायां कथमध्यापिकापदवीं लभेरन्। एवमेव विद्यां विना न्यायाधीशत्वादिराजकार्यं गृहाश्रमकार्यम्—भर्त्रा भार्यायाः, भार्यया च भर्तुः प्रसादनम्, निखिलगृहकार्याणां च भार्याधीनत्वम्, (भार्याधीनानि सकलगृहकर्माणि च) न कर्हिचित्सम्यक् भवितुमर्हन्ति।

पश्यत—आर्यावर्त्तीयराजपुरुषाणां योषितोऽपि धनुर्वेदं—युद्धविद्यां सम्यग्विदन्ति स्म कथमन्यथा कैकेयीप्रभृतयो दशरथप्रमुखैः सह समराङ्गणमवतीर्य योद्धुमशक्नुवन्। तस्माद् ब्राह्मणीक्षत्रियाभ्यां सकलविद्याः वैश्यया

व्यवहारविद्याः, शूद्रया च पाकशुश्रूषादिविद्या अवश्यमध्येतव्याः। पुरुषैर्न्यूनातिन्यूनं व्याकरण-धर्म-स्वव्यवहारविद्या अवश्यं शिक्षणीयाः। योषिद्भिरपि व्याकरण-धर्म-वैद्यक-गणित-शिल्पविद्या अवश्यमेवाधिगन्तव्याः। नह्येषां शिक्षणमन्तरेण सत्यासत्यविनिर्णयः, भर्त्रादिभिरनुकूलव्यवहारः, यथायोग्यं सन्तानोत्पत्तिः, तेषां पालनवर्द्धने सम्यक् शिक्षाप्रदानम्, सकलगृहकार्याणां यथायथमनुष्ठानञ्च सम्भवति। तथा च आयुर्वेदविज्ञानं विनान्नपानादिकमौषधवत्साधयितुं न प्रभवन्ति येन हि सद्मनि व्याधयो न कर्हिचिदपि संक्रामेयुः सर्वे च नित्यं सानन्दं निवसेयुः।

शिल्पविद्याविज्ञानमन्तरेण गृहविरचनम्, वसनभूषणादीनां निर्माणं निर्मापणञ्च, गणितविद्यां विना सर्वेषामायव्ययबोधः प्रबोधनं च न सम्भवति। वेदादिशास्त्रविज्ञानमन्तरेण परमेश्वरधर्मावविज्ञायाधर्मान्न कर्हिचिन्निवर्त्तेरन्। तस्मात्त एव धन्यवादार्हाः कृतकृत्याश्च ये वै ब्रह्मचर्येण उत्तमशिक्षया विद्यया च स्वसन्ततीनां शरीरात्मनोः पूर्णं बलं प्रवर्धयेयुः। येन हि तान्यपत्यानि मातृ-पितृ-भर्तृश्वश्रूश्वसुरराजप्रजाप्रतिवेशि-इष्ट-मित्र-सन्तानादिभिर्यथायथं धर्मेण वर्त्तेरन्। अयमेवाक्षयः कोशः। असौ हि (यावान् व्ययः क्रियेत तावानेव प्रवर्धते) सर्वाण्यपि कोशान्तराणि व्ययेन क्षीयन्ते, दायभागिनोऽपि स्वांशमाददते। नास्य पुनर्विद्याकोशस्य कश्चिदपहारको दायभागी च भवितुं शक्नोति। कोशस्यास्य रक्षणं परिवर्धनञ्च राज्ञः प्रजानाञ्च प्रधानं कर्म।

**कन्यानां सम्प्रदानं च कुमाराणां च रक्षणम्॥**—मनु० ७।१५२

सर्वबालिकानां बालकानाञ्चोक्तसमयाभ्यन्तरे शिक्षणं राज्ञः कर्तव्यम्। एतदादेशमनूरीकुर्वन्तौ पितरौ दण्डनीयौ। अर्थान्निराधिपस्य शासनादष्टवर्षानन्तरं बाला बालिकाश्च कस्यापि सद्मनि नावतिष्ठेरन् अपितु आचार्यकुले निवसेयुः। समावर्तनसमयतश्च प्राक् विवोढुं न शक्नुयुः।

**सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते।**
**वार्यन्नगोमहीवासस्तिलकाञ्चनसर्पिषाम्॥**—मनु० ४।२३३

जगत्यस्मिन् विद्यमानेभ्यः सर्वविधदानेभ्यः जलान्नगोपृथिवीवासस्तिलस्वर्णघृतादिभ्यो वेदविद्याप्रतिदानमतिश्रेयः। तस्माद् यथाशक्यं देहमनोवित्तैर्विद्याविवृद्धौ प्रयतनीयम्। यत्र देशे यथायोग्यं ब्रह्मचर्यविद्ययोर्वेदोक्तधर्मस्य च प्रचारो भवति स एव सौभाग्यवान् सञ्जायते।

समासतः खल्वियं ब्रह्मचर्याश्रमशिक्षा विलिखिता। अतः परं चतुर्थसमुल्लासे समावर्तनगृहाश्रमयोः शिक्षा विलेखिष्यते।

**इति श्रीमद्दयानन्दसरस्वतीस्वामिकृते सत्यार्थप्रकाशे शङ्करदेवेन पाठकेन संस्कृतभाषयाऽनूदिते शिक्षाविषये तृतीयः समुल्लासः सम्पूर्णः॥३॥**

# अथ चतुर्थसमुल्लासारम्भः

## अथ समावर्त्तनविवाहगृहाश्रमविधिं वक्ष्यामः

**वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।**
**अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत् ॥** —मनु० ३।२

ब्रह्मचर्याश्रमे यथावदाचार्यनिदेशमनुविधाय चतुरस्त्रीन् द्वावेकं वा वेदं साङ्गोपाङ्गमधीत्य अखण्डितब्रह्मचर्यः पुमान्नारी वा गृहस्थाश्रममाविशेत् ।

**तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः ।**
**स्रग्विणं तल्प आसीनमर्हयेत्प्रथमं गवा ॥** —मनु० ३।३

स्वधर्मेण शिष्यधर्मेण संयुतं पितुर्गुरोर्वा सकाशाद् ब्रह्मदायहरं वेदाध्ययनरूपदायग्रहीतारं मालयालङ्कृतं शुभासनोपविष्टं ब्रह्मचारिणमाचार्य्यः प्रथमं गवा=मधुपर्केण पूजयेत्, कन्याजनकोऽपि तादृशलक्षणलक्षितं गोदानेनार्चेत् ।

**गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि ।**
**उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् ॥**—मनु० ३।४

गुरुणा दत्तानुज्ञः कृताभिषेको यथाविधि गुरुकुलादागत्य ब्राह्मणः क्षत्रियो वैश्यो वा सवर्णां शुभलक्षणां कन्यामुद्वहेत् ।

**असपिण्डा च या मातुरसगोत्रा च या पितुः ।**
**सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥** —मनु० ३।५

मातृकुलस्य षड्वंशश्रेणीष्वनुत्पन्नां (मातामहादिवंशसमुद्भूतामिति यावत्) पितुरप्यगोत्रां कन्यां परिणयेत् । अस्यैतत्प्रयोजनम्—

**परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ।**—शतपथ० [१४।६।११।२]

"यादृशी ह्यप्रत्यक्षवस्तुनि प्रीतिः समुदेति न तादृशी प्रत्यक्षे" इति सुनिश्चितमेतत् । यथा सितामभोक्तुः केवलं तद्गुणान् श्रुतवतो जनस्य मनस्तत्रैव लग्नं तिष्ठति, यथा वाऽऽकर्ण्य परोक्षवस्तुनः प्रशंसां तेन संगन्तुं बलवानभिलाषः समुदेति चेतसि तथैव दूरस्थस्यार्थादात्मनो गोत्रस्य मातुर्वा कुलस्य सन्निकटसम्बन्धशून्ययैव कन्यया वरस्य परिणयेन भवितव्यम् ।

इमे खलु सन्निकटदूरविवाहयोः सन्ति गुणदोषाः—

१. ये हि बालाः शैशवमारभ्य सहैव निवसन्ति मिथः क्रीडन्ति

विद्विषन्ति, अनुरज्यन्ति च, अन्योन्यस्य गुणदोषौ प्रकृतिं बाल्यकालिकान-सदाचारान् विजानन्ति, विवस्त्रान् वान्योन्यं वीक्षन्ते न ते परिणयेन अन्योन्यानुरागभाजो भवितुमर्हन्तीति **प्रथमः** ।

२. यथा जले जलस्य सम्मिश्रणान्न कश्चिद्विलक्षणो गुणः समुत्पद्यते तथैव समानगोत्रोत्पन्नयोः पितुर्मातुर्वा कुले विवाहेन शुक्रादिधातूनामपरिवर्तनात् (प्रसूतेः) समुन्नतिर्न भवतीति **द्वितीयः** ।

३. सिताशुंठ्याद्यौषधीनां संयोगेन पयसीव विभिन्नकुलयोर्मातृपितृकुलासम्बद्धयोः स्त्रीपुरुषयोः परिणये सन्ततौ गुणाः प्रवर्धन्त इति **तृतीयः** ।

४. यथाह्येकत्र व्याधिनिपीडितोऽपरत्र वायुभक्ष्यपानादीनां परिवर्तनात् स्वास्थ्यं लभते तथैव विप्रकृष्टदेशवासिनोर्विवाहेऽपि विद्यते खलुप्राशस्त्यमिति **तुरीयः** ।

५. सन्निकटसम्बन्धेष्वितरेतरस्य सामीप्येनान्योन्यस्य सुखदुःखज्ञानं विरोधश्चापि सम्भवति दूरदेशस्थेषु पुनः निरन्तरं प्रेमतन्तुर्विस्तीर्य्यते, यद्धि न कदाचिदपि समीपसम्बन्धेषु सम्भवतीति **पञ्चमः** ।

६. विप्रकृष्टसम्बन्धे तत्तद्देशोदन्ताः पदार्थाश्च सौलभ्येन लभ्यन्ते । अतएव—

**दुहिता दुर्हिता दूरे हिता दोग्धेर्वा ॥** —निरु० ३।४

इति समाम्नायते । कन्यानां सम्बन्धो दूरदेशेष्वेव लाभप्रदो भवति । अतएव ता दुहितेति नाम्ना समाख्यायन्त इति **षष्ठः** ।

७. कुमारीणां सन्निकटसम्बन्धेन तत्पितृकुले दारिद्रय स्यादित्यपि सम्भवति यतो हि यदा यदा सा तत्र समेयात् तदा तदा तस्यै किञ्चिद्दातव्यमेवेति **सप्तमः** ।

८. उभावपि दम्पती आत्मनः पितृकुलस्य सामीप्येन तत्साहाय्यमभिमंस्येते परस्परं च मनागपि वैमनस्ये संजाते द्रागेव योषित्स्वीयजनकगृहं समुपैष्यति । एवं चोभयोरेव दुष्कीर्तिः परस्परं विरोधश्च भविष्यति । भवति हि प्रायशः प्रकृतिर्योषितां तीक्ष्णा मृदुश्च । पितुर्गोत्रे मातुर्वा षड्वंशश्रेणीषु, समीपदेशेषु च परिणयाप्राशस्त्ये सन्तीमानि कारणानि ।

**महान्त्यपि समृद्धानि गोऽजाविधनधान्यतः ।**
**स्त्रीसम्बन्धे दशैतानि कुलानि परिवर्जयेत् ॥** —मनु० ३।६

धनधान्यधेन्वजाहस्त्यश्वराज्यश्रीप्रभृतिभिः समृद्धानि—उत्कृष्टान्यपि वक्ष्यमाणदशकुलानि विवाहसम्बन्धे परिवर्जनीयानि ।

**हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम् ।**
**क्षय्यामयाव्यपस्मारिश्वित्रकुष्ठिकुलानि च ॥**—मनु० ३।७

सत्क्रियाविरहितं, साधुजनशून्यं, वेदाध्ययनपराङ्मुखं, बहुदीर्घ-रोमान्वितमर्शःक्षयकासश्वासाग्निमान्द्यापस्मारश्वेतगलितकुष्ठैः संक्रान्तं यत् कुलं तत्रोत्पन्नयोर्वरकन्ययोर्विवाहो न भवेत् यतो हि सर्व एव इमे दुर्गुणा व्याधयश्च संक्रामन्त्युद्वोढुरपि कुलम्। अतः सत्कुलोत्पन्नानामेव कुमाराणां कुमारीणाञ्च मिथः पाणिग्रहणं कर्त्तव्यम्।

**नोद्वहेत्कपिलां कन्यां नाऽधिकाङ्गीं न रोगिणीम्।**
**नालोमिकां नातिलोमां न वाचाटान्न पिङ्गलाम्॥** —मनु० ३।८

पीतवर्णाम्, अधिकाङ्गीं—पुरुषापेक्षया व्यायतदेहामधिकबलवतीम्, रोगिणीम्, रोमरहिताम्, लोमशाम्, वाचालां, बभ्रुनेत्राम्, कन्यां नोद्वहेत्।

**नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम्।**
**न पक्ष्यहिप्रेष्यनाम्नीं न च भीषणनामिकाम्॥** —मनु० ३।९

ऋक्षं नक्षत्रं तन्नामिकां—अश्विनी भरणी रोहिणीदेई रेवतीबाई इत्यादिनामवतीम्, तुलसिया गेंदा गुलाबी चम्पा चमेली प्रभृतिवृक्षाख्याम्, गङ्गा यमुनेत्यादिनदीनाम्नीं, चाण्डालीत्याद्यन्त्यनामधेयाम्, विन्ध्या हिमालया पार्वतीत्यादिपर्वतनामिकाम्, कोकिला मैनेत्यादिविहगाह्वाम्, नागी भुजङ्गीत्युरगनामधेयाम्, माधोदासी मीरादासीत्यादि प्रेष्यनामिकाम्, भीमकुंवरी चण्डिका कालीत्यादिभीषणनामधेयां कन्यां नोपयच्छेत्। इमानि वै नामानि कुत्सितानि पदार्थान्तराणाञ्च सन्ति।

**अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्।**
**तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत्स्त्रियम्॥** —मनु० ३।१०

ऋजुसरलावयवाम्, यशोदा सुखदेत्यादिश्रुतिमधुरनाम्नीम्, गत्या हंसान् करिणीश्चानुकुर्वतीम्, सूक्ष्मलोमां, सुकेशां सुदतीं कोमलाङ्गीञ्च ललनामुद्वहेत्।

**प्र०**—कः खलु श्रेयान् समयः प्रकारो वोद्वाहस्य ?

**उ०**—षोडशवर्षादारभ्याचतुर्विंशतिवर्षं कुमारिकायाः, पञ्चविंशति-वर्षादारभ्य अष्टचत्वारिंशद्वर्षपर्यन्तञ्च पुरुषस्योत्तमो वैवाहिकः समयः। अत्रापि षोडशे पञ्चविंशतितमे चाब्दे परिणयनमधमम् अष्टादश, विंशतितमे नार्य्याः, त्रिंशत्, पञ्चत्रिंशत्, चत्वारिंशत्तमे च वर्षे पुरुषस्य मध्यमम्। चतुर्विंशतिवर्षाया योषितः अष्टचत्वारिंशद्वर्षवयस्कस्य च पुरुषस्योत्तमं पाणिग्रहणम्।

यत्र देशे सुपरिष्कृतेयं विवाहपद्धतिः प्रचरति भवति च सब्रह्मचर्य्य-माधिक्येन विद्याभ्यासः स एवानुभवति प्रभूतमानन्दम्। यत्र च ब्रह्मचर्य्य-पूर्वकं विद्याध्ययनमन्तरा व्यत्येति शिशूनां शैशवम्, अयोग्यानाञ्च परिणयः

सम्पद्यते स एव निमज्जति दुःखाम्बुधौ। ब्रह्मचर्य्यपूर्वकं हि विवाहपद्धतेः प्रचारे सर्वे परिष्कारा विकृतौ च सर्वे विकारा आयताः।

**प्र०—अष्टवर्षा भवेद् गौरी नववर्षा च रोहिणी।**
**दशवर्षा भवेत्कन्या तत उर्ध्वं रजस्वला ॥१॥**
**माता चैव पिता तस्या ज्येष्ठो भ्राता तथैव च।**
**त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥२॥**

पाराशर्य्यां शीघ्रबोधे च विद्यते पद्यद्वयमिदम्। अस्यायमभिप्रायः—कुमारी अष्टमेऽब्दे गौरी, नवमे रोहिणी, दशमे कन्या, तत उत्तरं रजस्वलेति नाम्ना समाख्यायते। अनुपयम्य सम्प्रेक्ष्य च सरजस्कां दुहितरं जननीजनकौ ज्यायान् सहोदरश्च नरके सम्पतन्ति।

ब्रह्मोवाच

**उ०—एकक्षणा भवेद् गौरी द्विक्षणेयन्तु रोहिणी।**
**त्रिक्षणा सा भवेत्कन्या ह्यत ऊर्ध्वं रजस्वला ॥१॥**
**माता पिता तथा भ्राता मातुलो भगिनी स्वका।**
**सर्वे ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥२॥**

—सद्योनिर्मितब्रह्मपुराणस्येदं वचः

यावत्समयान्तरे परमाणोरेकं पर्यावर्तनं, तत्क्षणम्। लब्धजन्मा कन्याद्यक्षणे गौरी, द्वितीये रोहिणी, तृतीये कन्या, तुरीये च रजस्वला सञ्जायते ॥१॥ ऋतुमतीं तामभिप्रेक्ष्य तज्जननी–जनक–सगर्भ्य–मातुल–स्वसारः सर्व एव नरकगामिनो भवन्ति ॥२॥

प्र०—नार्हतः प्रमाणं श्लोकावमू।

उ० –कथमप्रामाण्यम्? ब्रह्मणोऽपि श्लोकयोरप्रामाण्ये कथङ्कारं स्यात् भवतोऽपि पद्ययोः प्रामाण्यम्?

प्र०—अहो पराशरकाशीनाथावपि न प्रमाणयन्ति भवन्तः?

उ०—अहह? किं ब्रह्मणोऽपि प्रमाणं न कुरुते भवान्? अपि नास्ति ब्रह्मा महीयान् पराशरकाशीनाथाभ्याम्? यदि भवान् ब्रह्मणः श्लोकौ न प्रमाणयति तर्हि वयमपि पराशरकाशीनाथयोः पद्ये नाद्रियामहे।

प्र०—असम्भवदोषग्रस्तत्वान्न प्रमाणमर्हतो भवतः श्लोकौ। जन्मक्रियायामेव हि व्यत्येति क्षणानां सहस्रं तत्कथं सम्भवति तदानीं पाणिपीडनम्, नापि तदानीं विवाहस्य किञ्चित्फलं दृश्यते।

उ०—अस्मच्छ्लोकाविव भवतोऽपि श्लोकावसम्भवदोषदूषितौ। अष्ट-नव-दशस्वपि संवत्सरेषूपयमनं निष्फलमेव। षोडशाब्दानन्तरं नार्य्याः चतुर्विंशतिवर्षसमनन्तरं च पुरुषस्योद्वाहे पुंसो वीर्य्यं परिपक्वतां याति, देहो बलवान् सम्पद्यते। योषितोऽपि गर्भाशयः पूर्णतामाप्नोति शरीरं

बलिष्ठं जायते तेन च सन्ततिरुत्तमा समुत्पद्यते[1]। यथा ह्यष्टवर्षायां कन्यायां नहि सम्भवति समुत्पादः सन्ततेस्तथैव तस्या गौरी—रोहिणीत्यादिनामधेय-कल्पनाप्यनुचिता। वर्णतः श्यामायाः कन्यायाः "गौरी" इतिव्यपदेशः सर्वथानुचित एव। किञ्चासीत् गौरी महादेवस्य रोहिणी च वासुदेवस्य सहधर्मिणी। ते च भवन्तः पौराणिका मातृवन्मन्यन्ते। कन्यामात्रे च गौरी-त्यादिभावनां भावयतां युष्माकं ताभिर्विवाहः कथङ्कारं प्रशस्यो धर्म्यश्च सम्भवेत्। वस्तुतो यौष्माकीणावास्माकीनौ चोभावपि श्लोकौ कल्पितावेव। यथास्माभिः "ब्रह्मोवाच" इति व्यपदिश्य श्लोकौ निर्मितौ तथैव तावपि परा-शरादिव्यपदेशेन निर्मितौ। सर्वमिदमनादृत्य वेदप्रामाण्येनानुष्ठेयः सकल-क्रियाकलापः। निरीक्ष्यतां मानवं धर्मशास्त्रं तत्र हि—

**त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती।**
**ऊर्ध्वन्तु कालादेतस्माद्विन्देत सदृशं पतिम्॥** —मनु० ९।९०

संजातार्तवा कन्या त्रीणि वर्षाणि यावत् पतिमन्विष्यात्मनस्तुल्यं भर्त्तारं वृणीत। प्रतिमासं दर्शनतया रजसो वर्षत्रये षट्त्रिंशत्कृत्वा रजोदर्शन-समनन्तरमेव विवाहः समुचितो नातः पूर्वमिति।

**काममामरणात्तिष्ठेद् गृहे कन्यर्त्तुमत्यपि।**
**न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित्॥** —मनु० ९।८९

---

१. उपर्युक्तायुषो न्यूनायुषोः स्त्रीपुरुषयोः कृते गर्भाधानकर्म मुनिवरो धन्वन्तरिः स्वीयसुश्रुतग्रन्थे निषेधयति—

**ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम्।**
**यद्याधत्ते पुमान् गर्भं कुक्षिस्थ स विपद्यते॥**
**जातो वा न चिरञ्जीवेज्जीवेद्वा दुर्बलेन्द्रियः।**
**तस्मादत्यन्तबालायां गर्भाधानं न कारयेत्॥**

—सुश्रुते शरीरस्थाने १०।४७, ४८

अर्थात्—षोडशवर्षतो न्यूनायां स्त्रियां पञ्चविंशतिवर्षतो न्यूनवयः पुरुषः गर्भं स्थापयति चेत् कुक्षिस्थ एव स गर्भो विपद्यते, अर्थात् नहि स गर्भः पूर्णं गर्भकालं सम्प्राप्य जीवन्नुत्पद्यते॥१॥

अथवा यद्येवंविधो गर्भः कदाचिदुत्पद्यते चेत् न हि स चिरकालं जीवति। कृच्छ्रेण जीवन्नपि दुर्बलेन्द्रिय एव सदा स्थास्यति, अतोऽत्यन्तबालायां स्त्रियां गर्भाधानं न कुर्यात्, इत्येव श्रेयस्करम्॥२॥

एवंविधशास्त्रोक्तनियमान् सृष्टिक्रमञ्च दृष्ट्वा बुद्धिविचारेणैतदेव फलति—यत्—षोडशवर्षतो न्यूनायुर्धारिणी स्त्री पञ्चविंशतिवर्षतो न्यूनायुः पुरुषश्च गर्भधारणाधानयोग्यतां सामर्थ्यं च न भजतः। विपरीतमाचरन्तश्च दुःख-भागिन एव भवन्ति।

वरं कुमारः कुमारी वा मरणपर्यन्तमकृतोद्वाहकर्मैव सन्तिष्ठेत परमसदृशयोर्मिथो विरुद्धगुणकर्मस्वभावयोः कर्हिचिदप्युद्वाहो न भवेत्। सिद्धमतो यत्—"शास्त्रविहितसमयात्पूर्वं मिथो भिन्नगुणकर्मस्वभावयोर्वा स्त्रीपुरुषयोः विवाहो नैव समुचितः" इति।

**प्र०**—अपि पाणिग्रहणं पित्रोरायत्तं भवेदुत कुमारकुमार्योरधीनम् ?

**उ०**—पाणिग्रहणस्य कुमारायत्तत्वमेव शोभनम्। यदि मातापितरौ कर्हिचित्परिणयमभिलषेतां तदपि कुमारकुमार्योरनुमोदनं विना न भवेत्। अन्योन्यसम्त्याह्यु पयमेऽल्पीयान् विरोधोऽपत्यानि च श्रेष्ठानि भवन्ति। अप्रसन्नतया पुनरुद्वाहो नित्यं क्लिश्नात्येव। पाणिग्रहणे वरकन्ययोरेव प्रधानं प्रयोजनं न तु पित्रोः। तयोर्मिथः प्रसन्नतायां तावेव सुखिनौ विरोधे च दुःखिनौ भवतः।

**सन्तुष्टो भार्यया भर्त्ता भर्त्रा भार्य्या तथैव च।**
**यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम्॥**

—मनु० ३।६०

यत्रकुले भार्यया भर्त्ता भर्त्रा च भार्या सम्प्रीतिमती भवति तत्रैवानन्दश्रीकीर्तयो निवसन्ति यत्र तु विरोधकलहौ भवतस्तत्र दुःखदारिद्रचनिन्दाः पदमादधति। तस्मादार्यावर्त्ते परम्परागता स्वयंवरविवाहसरणिरेव श्रेयसी।

उद्वोढुकामयोः पुरुषयोषितोर्विद्याविनयशीलायुर्बलकुलदेहपरिमाणादिकं मिथः समनुरूपं भवेत्। एषां चासादृश्ये हि विवाहे न किमपि सौख्यमनुभूयते। नापि शैशवे कृतोद्वाहेन किञ्चिदपि सुखं लभ्यते।

युवा सुवासाः परिवीत आगात्स उ श्रेयान्भवति जायमानः।
तं धीरासः कवय उन्नयन्ति स्वाध्यो३ मनसा देवयन्तः॥१॥

—ऋ० मं० ३। सू० ८। मं० ४

आ धेनवो धुनयन्तामशिश्वीः सबर्दुघाः शशया अप्रदुग्धाः।
नव्यानव्या युवतयो भवन्तीर्महद्देवानामसुरत्वमेकम्॥२॥

—ऋ० मं० ३। सू० ५५। मं० १६

पूर्वीरहं शरदः शश्रमाणा दोषावस्तोरुषसो जरयन्तीः।
मिनाति श्रियं जरिमा तनूनामप्यू नु पत्नीर्वृषणो जगम्युः॥३॥

—ऋ० मं० १। सू० १७९। मं० १

(१) यः पुमान् (**परिवीतः**) कृतोपनयनः सब्रह्मचर्य्यमुत्तमशिक्षया विद्यया च संयुक्तः (**सुवासाः**) परिहितशोभनवसनो ब्रह्मचारी (**युवा**) यौवनं

प्राप्य विद्यामधीत्य गृहाश्रमम् (**आगात्**) प्रविशति (**स उ**) स एव द्वितीय-विद्यायां (**जायमानः**) गृहीतजन्मा (**श्रेयान्**) नितरां कान्तिमान् कल्याणकर्त्ता च भवति। (**स्वाध्यः**) सम्यग्ध्यानयुक्तेन (**मनसा**) विज्ञानेन (**देवयन्तः**) विद्योन्नतिं कामयमानाः (**धीरासः**) धैर्य्यवन्तः (**कवयः**) विद्वांसः (**तम्**) तमेव पुरुषं (**उन्नयन्ति**) उन्नतिशीलं सम्पाद्य प्रतिष्ठापयन्ति। ये तु ब्रह्मचर्य्य-सेवनमन्तरैव विनोत्तमविद्याशिक्षासंग्रहणं शैशवे विवहन्ति ते पुमांसो योषितश्च सर्वतो हीनदशापन्ना विद्वत्सु प्रतिष्ठां न लभन्ते।

(२) (**अप्रदुग्धाः**) केनाप्यग्रहीतपयसः (**धेनवः**) गाव इव (**अशिश्वीः**) अतिक्रान्तशैशवाः (**सबर्दुधाः**) परिज्ञातसकलोत्तमव्यवहाराः (**शशयाः**) समुल्लङ्घितकौमाराः (**नव्यानव्याः**) नवनवाभिः शिक्षाभिरवस्थाभिश्च परिपूर्णाः (**भवन्तीः**) वर्तमाना (**युवतयः**) पूर्णयौवना योषितः (**देवानाम्**) ब्रह्मचर्य्यसुनियमवतां पूर्णविपश्चितां (**एकम्**) अद्वितीयस्यां (**महत्**) महत्यां (**असुरत्वम्**) शास्त्रशिक्षायुक्तप्रज्ञायां वास्तविकसुखं सम्प्राप्य समासाद्य च तरुणभर्तॄन् (**आधुनयन्ताम्**) गर्भमादधतु।

कुमारावस्थायां कस्याञ्चिदपि दशायां पुरुषाणां चिन्तनं न प्रकुर्वीरन्। इदमेव हि कर्मात्रामुत्र च सुखसाधनम्। पुरुषापेक्षयापि योषितः समधिका हानिः शैशवोद्वाहेन सञ्जायते।

(३) यथाहं (**पूर्वीः**) पूर्वभूताः (**शरदः**) संवत्सरान् तथा (**दोषाः**) रात्रीः (**वस्तोः**) दिनम् (**जरयन्तीः**) सर्वेषामायुर्हानिकर्त्रीः (**उषसः**) प्रभात-वेला अभिव्याप्य (**शश्रमाणाः**) श्रमं करोमि (**अपि उ**) यथा च (**जरिमा**) अतिशयेन जरिता कालः (**तनूनाम्**) शरीराणाम् (**श्रियम्**) लक्ष्मीम् (**मिनाति**) विनाशयति तथा (**वृषणः**) वीर्य्यसेक्तारः (**पत्नीः**) हृदयदयिता युवतीः संप्राप्य (**नु**) शीघ्रम् (**जगम्युः**) भृशं प्राप्नुयुर्गर्भमादधतु। विपरीत-मतः पाणिग्रहणं वेदविरुद्धत्वान्न कर्हिचित्सुखप्रदं भवति। यावच्चैवं सर्वे ऋषिमुनिनरपतिसम्राज आर्यपुरुषाः सब्रह्मचर्य्यमधीत्यैव स्वयंवरविवाह-मकुर्वन् तावदिदं भारतं परां समुन्नतिमध्यगच्छत्। यतश्च परिभ्रष्टं सब्रह्मचर्य्यमध्ययनम्, प्रवृत्तश्च जनकयोरधीनतया विवाहस्तत एव क्रमशो देशस्यार्यावर्त्तस्याधोगतिः प्रवृत्ता। तस्मान्निवृत्त्यास्माद्दुष्कर्मणः साधुभिः पूर्वोक्तदिशा स्वयंवरपद्धतिरेवानुसरणीया।

विवाहश्चायं वर्णानुक्रमेण संविधातव्यः। वर्णव्यवस्थापि गुणकर्म-स्वभावानुसारिण्येव भवेत्।

**प्र०**—किं ब्राह्मणयोरेव प्रसूतिर्ब्राह्मणत्वं प्रतिपद्यते आहोस्विदितर-वर्णस्थयोरपि जनकयोः सन्ततिर्विप्रत्वमधिगन्तुं शक्नोति ?

**उ०**—आम्, अभवन्ननेके, भवन्ति, भविष्यन्ति च। "छान्दोग्योप-

निषदि अज्ञातकुलो जाबाल-ऋषिः महाभारते च क्षत्रियवर्णसम्भवो विश्वामित्रश्चाण्डालकुलोत्पन्नो मतङ्गश्च ब्राह्मणत्वं प्रतिपन्ना:'' इत्युपन्यस्तम्। साम्प्रतमपि सत्स्वभावो विद्वानेव ब्राह्मणत्वमर्हति मूर्खश्च शूद्रताम्। तथैव चाग्रेऽपि भविष्यति।

**प्र०**—ननु, शुक्रशोणिताभ्यां समुद्भूतमिदं शरीरं परिवृत्यान्यवर्णयोग्यतां कथं लभेत ?

**उ०**—नहि वीर्यरजस्संयोगेन ब्राह्मणं शरीरमुत्पद्यते। यथाह मनुः—

**स्वाध्यायेन जपैर्होमैस्त्रैविद्येनेज्यया सुतैः।**
**महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥**—मनु० २।२८

व्याख्यातमिदं पुरस्तादत्रापि समासतो वर्णयामः—(**स्वाध्यायेन**) अध्ययनाध्यापनैः (**जपैः**) मननशीलतया, नानाविधयज्ञानुष्ठानेन, शब्दार्थसम्बन्धपूर्वकं स्वरोच्चारणसंयुक्तेन सकलवेदाध्ययनेन (**सुतैः**) पूर्वोक्तविधिपूर्वकं धर्मेण सन्तानोत्पत्त्या (**इज्यया**) पौर्णमासेष्टयादिविधानेन (**महायज्ञैः**) पूर्वोक्तैर्ब्रह्मदेवपितृवैश्वदेवातिथियज्ञैः (**यज्ञैश्च**) अग्निष्टोमादियागैः विदुषां सहवाससत्काराभ्यां सत्यभाषणपरोपकारादिसत्कर्मभिरधीत्य सकलशिल्पविद्याः प्रतिनिवृत्त्यासन्मार्गात् सदाचारपरिपालनेन चेयं (**तनुः**) शरीरं (**ब्राह्मी**) ब्राह्मणसम्बन्धिनी (**क्रियते**) संविधीयते।

**प्र०**—अपि नेदं वचः प्रत्येति भवान् ?

**उ०**—आम् प्रतीमः।

**प्र०**—कथं तर्हि रजोवीर्यसंयोगेन वर्णव्यवस्थामभ्युपेथ ?

**उ०**—इदं तु परम्परागतं बहूनां मतं न केवलं ममैव।

**प्र०**—अपि नाम परम्परामपि दूषयति भवान् ?

**उ०**—नैव। परं युष्माकं विपर्यस्तां मतिमनङ्गीकृत्य दूषयामोऽपि।

**प्र०**—अस्माकमेव मतिर्विपर्यस्ता युष्माकमविपर्यस्तेत्यत्र किं मानम् ?

**उ०**—इदमेवात्र प्रमाणं यद् भवन्तो पञ्चषट्वंशश्रेणीव्यवहारान् सनातनत्वेन परिगणयन्ति। अस्माभिस्तु वेदात्सर्गाच्चारभ्येदंयुगीनाऽपि परम्परा समाद्रियते। पश्यत श्रेष्ठस्य पितुस्तनयो दुरात्मा, क्वचित् श्रेष्ठस्य सूनोर्जनको दुर्जनः क्वचिदुभावपि सज्जनौ दुर्जनौ वा समीक्ष्येते। तस्मात् भ्रान्ता यूयम्, निरीक्ष्यताम्—किमाह मनुः—

**येनास्य पितरो याता येन याताः पितामहाः।**
**तेन यायात्सतां मार्गं तेन गच्छन्न रिष्यते॥**

—मनु० ४।१७८

पितृपितामहादिभिः परिक्षुण्णं वर्त्म तदपत्यैरपि परिचरणीयम्। परं

(सताम्) सन्मार्गवर्तिन एव जनकादयोऽनुगन्तव्याः कुपथवर्तिनस्तु न कथमप्यनुसरणीयाः। यतो ह्युत्तमधर्मशीलैः परिसेवितवर्त्मनि पदसन्निधानेन न कदापि दुःखमनुभूयते। अपि नामेदमङ्गीकुरुथ न वा ?

उ०—वाढम्, वाढम्, मन्यामहे।

प्र०—किञ्च परमेश्वराल्लब्धप्रकाशवेदप्रतिपादित एव धर्मः सनातनः सम्भवति। तदितरस्तु न कथमपि सनातनत्वेन व्यवहर्तुं शक्यते इत्थमेव सर्वैर्मन्तव्यं न वा ?

उ०—अवश्यं खलु एवमेव मन्तव्यम्।

एवमनभ्युपेयुषो ब्रूत इदम्। अकिञ्चनस्य कस्यचिद्दराकस्य सूनुर्लब्ध्वापि प्रभूतं धनं किमात्मनो जनयितुर्हीनदशागर्वेण प्रक्षिपेन्निजधनम् ? किमक्षिविकलस्य तनयोऽपि स्वचक्षुषी समुद्धरेत्। असन्मार्गावलम्बिनः पुत्रोऽपि कुकृत्यमेवानुतिष्ठेत् ? नहि, नहि मानवानां सत्कर्मानुसेवनं दुष्कर्मणाञ्च परित्याग आवश्यकः, अनादृत्य गुणकर्मणी केवलं रजोवीर्यसम्बन्धेन वर्णव्यवस्थामाद्रिमाणास्तावदिदं प्रष्टव्याः। निजवर्णपरित्यागेन संजातनिकृष्टान्त्यजं यवनधर्मावलम्बिनं वा जनं ब्राह्मणं कथं नोररीकुर्वन्ति भवन्त इति। अत्रेदमेव वक्तव्यं—यत्स ब्राह्मण-कर्माणि पर्यत्यजत्, अतो न स ब्राह्मण इति। एतेनाऽपि सिध्यतीदं यत् ये ब्राह्मणादय उत्तमकर्माणि कुर्वन्ति त एव ब्राह्मणादय भवितुमर्हन्ति। अथ चेत् नीचवर्णस्थोऽपि उत्तमवर्णस्य गुणकर्मस्वभावान् समाचरेत् स ह्युत्तमवर्णे, यश्चोत्तमवर्णस्थो हि नीचकर्माणि समाचरेत् स च नीचवर्णे परिगणयितव्यः।

**प्र०— ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः।**
**ऊरू तदस्य यद्वैश्यः पद्भ्याᳫं शूद्रोऽअजायत॥**

—यजु० अ० ३१। मं० ११

अस्य मन्त्रस्यायमर्थो—यद् मुखाद्ब्राह्मणो बाहुभ्यां क्षत्रिय ऊरूभ्यां वैश्यः पद्भ्यां च शूद्रः समुत्पन्न इति। यथा च वदनं भुजादिकं भुजादयश्च मुखं न भवन्ति तथैव नहि सम्भवति ब्राह्मणः क्षत्रियादिः क्षत्रियादिर्वा ब्राह्मणः।

उ०—अनुपपन्नः खल्वयं भवत्परिकल्पितो मन्त्रार्थः। अत्र हि पुरुषो निराकारो व्यापकः परमात्मानुवर्तते। निराकारस्य सतस्तस्य न सम्भवन्ति मुखाद्यङ्गानि। मुखाद्यङ्गसंयुक्तो हि पुरुषो व्यापको न भवेदव्यापकश्च सर्वशक्तिमान्, स्रष्टा, धर्ता, संहर्तेत्यादि विशेषणैर्विशेषयितुं न शक्येत तस्मादस्य मन्त्रस्यायमर्थः—

अस्य सर्वव्यापिनः परमात्मनोऽस्मिन् सर्गे मुखमिव सर्वेभ्यो मुख्यः श्रेष्ठः (ब्राह्मणः) विप्रः (बाहुः) "**बाहुर्वै बलं** [५।४।१।१] **बाहुर्वै वीर्यम्**"

[६।३।२।३५] इत्यादिशतपथवचनेन बलवीर्ये बाहुशब्देन समाख्यायेते। समधिकबलवीर्यः (राजन्यः) क्षत्रियः (ऊरूः) श्रोणेरधोभागो जानुनश्चोपरितनभाग ऊरूशब्देन व्यपदिश्यते, यो वै सर्वपदार्थानां व्यवहाराय सकलदेशे ऊर्वोर्बलेन यातायातं प्रकुर्वीत स **वैश्यः** (पद्भ्यां) चरणमधमाङ्गमिव मौर्ख्यादिगुणवाँश्च **शूद्रः**। शतपथब्राह्मणादिष्वप्ययं मन्त्र इत्थमेव व्याख्यायते तथा च **"यस्मादेते मुख्यास्तस्मान्मुखतो ह्यसृज्यन्त"** इत्यादि। सर्वेषां मुख्यतया मुखत इमे समुत्पन्ना इति वचनं सर्वथैव सङ्गच्छते। अशेषाङ्गेषु मुखमिव मानवजातौ वैदुष्येनोत्तमगुणकर्मस्वभावसंयुक्ततया च ब्राह्मणः श्रेष्ठः। परमात्मनो निराकारतया मुखाद्यङ्गाभावान्मुखतः समुत्पत्तिर्वन्ध्यापुत्रस्योद्वाह इव सर्वथैवासम्भवा। यदि हि नाम मुखाद्यवयवेभ्यो ब्राह्मणादयः समुत्पद्येरँस्तर्हि तत्तदुपादानकारणसम्भिन्नैव तेषामाकृतिरपि स्यात्। वर्तुलाकारमुखतो जायमाना ब्राह्मी तनुरपि वृत्ताकारैव भवेत्। एवं भुजाकारेण क्षत्रियाणां ऊरूसमानेन वैश्यानां चरणाकृतिना च शूद्राणां शरीरेण भवितव्यं, न चेत्थं तत्स्वरूपं दृश्यते। कल्पादौ मुखाद्यवयवेभ्यो लब्धजन्मनामेव ब्राह्मणादयः समाख्याः सम्भवेयुर्न तु युष्माकमित्यनुयोगे किमुत्तरं भवताम्? भवन्तो हि सकलजनसाधारण्येन गर्भाशयादेव जनिं लभन्ते। अनुत्पद्यापि परमात्मनो मुखाद्यङ्गेभ्यो ब्राह्मणादिसंज्ञानां मुधैव गर्वमावहन्ति। तस्मात्भवदुक्तो मन्त्रार्थः सर्वथैव नोपपद्यते। अस्मत्प्रतिपादितस्तु सत्यार्थः। अन्यत्राप्येवमुक्तं तथाच—

**शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्।**
**क्षत्रियाज्जातमेवन्तु विद्याद्वैश्यात्तथैव च॥**

—मनु० १०।६५

समुत्पद्यापि शूद्रकुले ब्राह्मणक्षत्रियवैश्यैः समानगुणकर्मस्वभावः शूद्रो ब्राह्मणः क्षत्रियो वैश्यो वा भवेत् एवं ब्राह्मणक्षत्रियवैश्यकुलसम्भूतोऽपि गुणकर्मस्वभावैः शूद्रमनुकुर्वन् शूद्रो भवेत् तथैव क्षत्रियवैश्ययोः कुले प्रजातो ब्राह्मणशूद्राभ्यां समानो विप्रः शूद्रो वा सम्पद्यते। चतुर्ष्वपि वर्णेषु यो यः पुमान्नारी वा यद्वर्णयोग्यो भवेत् तस्य तस्मिन् वर्णे परिगणना विधेया।

**धर्मचर्य्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ ॥१॥**
**अधर्मचर्य्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ ॥२॥**

—सूत्रद्वयमिदमापस्तम्बे [२।५।११।१०, ११] पठ्यते।

हीनोऽपि वर्णतो जनो धर्म्यकर्मानुष्ठानेन स्वतः पूर्वं वर्णमभिपद्यते तथैवासदाचारेण समुत्कृष्टोऽपि वर्णेन जघन्यं वर्णमभिपद्यते। पुरुषाणामिव स्त्रीणामपि गुणकर्मानुसारेण वर्णव्यवस्थया भवितव्यम्। एवं संविधानेन सर्वेऽपि वर्णा निजनिजवर्णगुणकर्मस्वभावपालनतत्पराः सन्तो शुद्धतयाधि-

वसन्ति—मिथो न संकीर्यन्तेऽर्थाद् ब्राह्मणकुलोत्पन्नः कोऽपि क्षत्रियवैश्यशूद्र-साम्यं नावहेत्। किञ्च क्षत्रियवैश्यशूद्रा अपि विशुद्धा भवन्ति वर्णसाङ्कर्यं न भवतीति यावत्–एवञ्च कोऽपि वर्णो निन्दनीयोऽयोग्यश्च न भविष्यति।

**प्र०**—नन्वेकापत्यस्य कस्यचित् पुंसो वर्णान्तरमधिष्ठिते तदपत्ये को नु तत्पितरावाराधयिष्यति ? कथं वा तद्वंशसमुच्छेदो न जायेत किमत्र कर्तुं युक्तम् ?

**उ०**—नैवं कस्यापि सेवाभङ्गप्रसङ्गो नापि वंशसमुच्छेदः सम्भवति। यस्माद्धि तैरात्मतनयनिमाने निजवर्णसमुचितमपत्यान्तरं राजविद्या-सभयोरादेशेन समधिगंस्यते नातः मर्यादाव्यतिक्रमो भविष्यति। गुणकर्म-प्रवृत्ता चेयं वर्णव्यवस्था कुमारीणां षोडशाब्दपरीक्षायां पुरुषाणां पञ्चविंशे संवत्सरे नियन्तव्या। अर्थाद्विप्रवंशप्रसूतेन ब्राह्मण्याः क्षत्रियकुलोद्भूतेन क्षत्रियाया वैश्यान्वयसमुद्भवेन वैश्यायाः शूद्रकुलसमुत्थितेन च शूद्रायाः पाणिर्ग्रहीतव्यः। एवंसत्येव चत्वारो वर्णा निजवर्णकर्माणि विधास्यन्ति तेषु परस्परमनुरागोऽपि यथावद्भविष्यति।

एषां चतुर्णामपि वर्णानां गुणकर्माणि आदौ ब्राह्मणानां गुणकर्माणि—

**अध्यापनमध्ययनं यजनं याजनं तथा।**
**दानं प्रतिग्रहश्चैव ब्राह्मणानामकल्पयत्॥१॥**

—मनु० १।८८

**शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।**
**ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्॥२॥**

—भ० गी० अध्याय १८। श्लोक ४२

१. अध्ययनम्। २. अध्यापनम्। ३. यज्ञानुष्ठानम्। ४. यज्ञानुष्ठापनम्। ५. दानं परेभ्यः प्रदानम्। ६. प्रतिग्रहो दानग्रहणञ्चेमानि कर्माणि ब्राह्मणस्य कर्तव्यानि। परं **प्रतिग्रहः प्रत्यवरः**—इति मनुप्रामाण्येन प्रतिग्रहो दानग्रहणं विगीतं कर्म। ७. चेतसाप्यनभिलाषोऽसत्कर्मणोऽधर्मे मनसोऽप्रवर्तनञ्च **शमः**। ८. सन्निवर्त्यान्यायाचरणात् श्रोत्रचक्षुरादीन्द्रियाणां धर्म्ये पथि प्रवर्तनं **दमः**। ९. सततं ब्रह्मचर्य्यपूर्वकं जितेन्द्रियतया धर्मानुष्ठानम्—**तपः**। १०. **शौचम्**—

**अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति।**
**विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यति॥** —मनु० ५।१०

वारिणा बाह्याङ्गानि, सत्याचारेण मनः, विद्यया धर्मानुष्ठानेन चान्तरात्मा, ज्ञानेन च बुद्धिः पूता भवति। रागद्वेषाद्यन्तर्दोषान् बाह्यमलाँश्च परिधूय शुद्धतयावस्थानेन सत्यासत्ययोः विवेकपूर्वकं सत्यस्योपादानेन परित्यागेन चासत्यस्य मानवः पवित्रो भवतीत्यत्र नास्ति संशयः।

११. निन्दा-स्तुति-सुख-दुःख - हानि-लाभ-मानापमान - हर्षशोकादिमविगणय्य धर्म्ये पथि दृढतयावस्थानं **क्षान्तिः**। १२. कोमलतानिरहङ्कारपूर्वकं सारल्येन वर्तनं परित्यागश्च कौटिल्यादेर्दोषस्य **आर्जवम्**। १३. सम्यगधीत्य साङ्गोपाङ्गं वेदादिशास्त्रं तदध्यापनक्षमत्वम्, विवेकपूर्वकं सत्यविनिर्णयः याथार्थ्येन वस्तुस्वरूपावबोधः चेतनस्य चेतनत्वेनाचेतनस्याचेतनत्वेन विज्ञानमङ्गीकारश्च **ज्ञानम्**। १४. पृथिव्यादिपरमेश्वरपर्यन्तान् सकलपदार्थान् यथावद्विज्ञाय यथायथं तैरुपयोगग्रहणं **विज्ञानम्**। १५. वेदेश्वरमोक्षपूर्वपरजन्मसु विश्वासः, धर्मविद्यासत्सङ्गेष्वभिरुचिः, जननीजनकाचार्य्याभ्यागतानां च परिचरणं, कर्हिचिदपि तेषामनवमाननं, **आस्तिक्यम्**। इमानि पञ्चदश कर्माणि गुणाश्च ब्राह्मणवर्णस्थेष्वपरिहार्याः।

क्षत्रियाणां गुणकर्माणि—

**प्रजानां रक्षणं दानमिज्याध्ययनमेव च।**
**विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः॥१॥**

—मनु० १।८९

**शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।**
**दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्॥२॥**

—गीता १८।४३

१. न्यायेन प्रजापरिपालनम्, अर्थान्निष्पक्षपातं साधूनां सत्कारो न्यक्कारश्च दुष्टानां, सर्वेषां सर्वतोभावेन परिपालनं, **रक्षणम्**। २. धर्मप्रचारेषु गुणवतां परिचर्यासु च धनादिपदार्थानां संव्ययनं **दानम्**। ३. अग्निहोत्रादियज्ञानुष्ठानमनुष्ठापनञ्च **इज्या**। ४. वेदादिशास्त्राणामध्ययनमध्यापनम्-**अध्ययनम्**। ५. जितेन्द्रियतया नित्यं देहात्मनोर्बलोपचयनं **विषयेष्वप्रसक्तिः**। ६. शतसाहस्रैरेकाकिनोऽपि युद्धयमानस्य भयाभावः **शौर्य्यम्**। ७. तेजस्वितयार्थात् निर्दैन्यं प्रगल्भतयावस्थानं **तेजः**। ८. धैर्यावलम्बनं **धृतिः**। ९. राष्ट्रप्रजासम्बन्धिसकलव्यवहारेष्वशेषेषु च शास्त्रेषु वैदग्ध्यं **दाक्ष्यम्**। १०. सङ्ग्रामेऽपि निःशङ्कतयाऽवस्थाय ततोऽवैमुख्यम् **अपलायनम्**। तथा च युद्धयेत येनावश्यं विजयः संलभ्येत। यदि हि नाम ततोऽपसरणात् शत्रूणां प्रतारणेन वा विजयः संलक्ष्येत्तर्हि तथैवानुतिष्ठेत्। ११. दानशीलता **दानम्**। १२. निष्पक्षपातं सर्वैः यथायोग्यव्यवहारः, सविमर्शं दानं, प्रतिज्ञापूरणं, कर्हिचिदपि तदभङ्गः **ईश्वरभावः**। इमानि द्वादश क्षत्रियगुणकर्माणि।

वैश्यस्य गुणकर्माणि—

**पशूनां रक्षणं दानमिज्याध्ययनमेव च।**
**वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च॥**—मनु० १।९०

१. गवादिपशूनां पालनं परिवर्धनञ्च **पशुरक्षा**। २. विद्याधर्मयोः

वृद्धि कर्तुं कारयितुञ्च धनादीनां व्ययः **दानम्**। ३. अग्निहोत्रादियज्ञविधानम् **इज्या**। ४. वेदादिशास्त्राध्ययनम् **अध्ययनम्**। ५. सर्वप्रकारेण वाणिज्यानुष्ठानं **वणिक्पथः**। ६. मूलधनात् द्विगुणं—रूप्यकमेकं प्रदाय शतवर्षेष्वपि रूप्यकद्वयाधिकस्याग्रहणं नापि प्रदानं, चतुःषडष्ट-द्वादश-षोडश-विंशतिवाणकेभ्योऽधिकवृद्धेरग्रहणं **कुसीदम्**। ७. कृषीवलव्यवसायः **कृषिः**। इमानि वैश्यस्य गुणकर्माणि।

शूद्रस्य कर्म—

**एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत्।**
**एतेषामेव वर्णानां शुश्रूषामनसूयया॥** —मनु० १।९१

निरस्य परिवादेर्ष्याहङ्कारादिदोषान् ब्राह्मणक्षत्रियवैश्यानां यथावत्परिचर्याविधानं तेनैव चात्मनो भरणमित्येकमेव शूद्रस्य गुणवत्कर्मनिर्दिष्टम्। इमानि समासतश्चतुर्णामपि वर्णानां गुणकर्माण्युक्तानि।

यस्मिन् पुरुषे यद्वर्णसमुचितानि गुणकर्माणि भवेयुस्तस्मै तस्यैवाधिकारः सम्प्रदेयः व्यवस्थयानयोन्नतिमन्तो भवन्ति सर्वेऽपि मानवाः। तथा च उत्तमवर्णाः सुतरां भेष्यन्ति अस्माकमपत्यानि मूर्खत्वादिदोषयुञ्जि भविष्यन्ति चेदाप्स्यन्ति शूद्रभावमिति। प्रसूतिश्चापि तेषां भेष्यति निन्दनीयचरिता निर्विद्या वयं शूद्रा भविष्याम इति।

किञ्चोत्सहिष्यन्ते लब्धुं श्रेष्ठवर्णतामन्त्यजा अपि। विद्याधर्मप्रचारो ब्राह्मणेषु विनिवेशनीयस्ते हि विद्वत्तया धार्मिकतया च सम्यक् प्रभवन्ति तदाचरितुं क्षत्रियेभ्यः राज्याधिपत्यप्रदानेन न कदापि विनङ्क्ष्यति राष्ट्रम्। यथावदाचरितुं सक्षमतया पशुपालनाधिकारो विड्भ्यः प्रतिपादयितव्यः। विद्याराहित्येन मूर्खतया विज्ञानसम्बन्धिकार्याणि नानुष्ठातुं शक्नोति यतस्तस्मात् परिचरणमेव वरीयः कर्म शूद्रस्य। स हि प्रभवति शारीरं कर्मजातमनुष्ठातुम्। एवं समस्तवर्णानां नियोगेषु प्रवर्तनं पार्थिवादीनां सभ्यजनानां कर्तव्यम्।

## अथ विवाहभेदास्तल्लक्षणानि च

**ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः।**
**गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः॥**

—मनु० ३।२१

विवाहः खल्वष्टविधो भवति। ब्राह्मः प्रथमः। दैवो द्वितीयः। आर्षस्तृतीयः। प्राजापत्यस्तुरीयः। आसुरः पञ्चमः। गान्धर्वः षष्ठः। राक्षसस्सप्तमः। पैशाचोऽष्टमश्चेति। एषाञ्चेमे नियमाः—

(१) यथावदाचरितब्रह्मचर्ययोः पूर्णविदुषोर्धार्मिकसुशीलयोर्वरकन्य-

योरन्योन्यसम्प्रसादेन समुद्वाहो **ब्राह्मः**। (२) महायज्ञेषु ऋत्विक्कर्म कुर्वते जामात्रेऽलङ्कृत्य कन्यादानं **दैवः**। (३) वरात् किञ्चिदादाय सुतादानम् **आर्षः**। (४) धर्मवृद्धया उभयोर्विवाहः **प्राजापत्यः**। (५) वराय कन्यायै वा किञ्चित्प्रदाय वरकन्ययोरुपयम **आसुरः**। (६) अकाल एव नियम-मुल्लङ्घ्य कुतश्चित्कारणात् वरकन्ययोरुभयोरिच्छयान्योन्यसंयोगः **गान्धर्वः**। (७) विगृह्य बलात्कारेण च प्रसभं सकपटं कन्यापहरणं **राक्षसो विधिः**। (८) प्रतिशयितया मद्यादिनोन्मत्तया वा कन्यया प्रसह्य संयोगः **पैशाचः**।

तत्र सर्वेष्वपि विवाहेषु ब्राह्मः सर्वोत्कृष्टः। दैवप्राजापत्यौ मध्यमौ, आर्षासुरगान्धर्वा निकृष्टाः, राक्षसोऽधमः, पैशाचश्च महाभ्रष्टः।

अतो विवाहात्पूर्वमेकान्ते न संगच्छेतामित्यवश्यं निश्चेयं, यतो वै स्त्रीपुरुषयोरेकान्तवासो दूषणं जनयति।

यदा वरकन्ययोरुद्वाहसमयः सन्निकृष्टो भवेत् अर्थात् समाप्तौ ब्रह्म-चर्य्याश्रमविद्ययोर्वर्षमेकं मासषट्कं वावशिष्येत तदा बालानामालोकलेख्यं प्रतिकृतिं वादाय कन्या-शिक्षकाणां, बालिकानाञ्च प्रतिच्छायादिकं कुमारा-ध्यापकानां सविधे प्रेषयेयुः। यस्य येन रूपं भवेदनुरूपं तस्य तस्येतिहासं जन्मनः प्रभृत्यातदात्वचरित्रावबोधिकामानाय्य जन्मचरितपुस्तिकां गुरवः समीक्षेरन्। गुणकर्मस्वभावानामानुरूप्येण यस्य यूनो यया कन्यया विवाहः समुचितो भवेत्तयोर्वरकन्ययोः प्रतिकृतिं जन्मचरितञ्च कन्यावरौ समर्पयेयुः, योऽत्र युवयोरभिप्रायस्तं वेदयतमिति च कथयेयुः। यदा च तयोर्मिथो विवाहस्य निश्चयः सञ्जायेत तदैकस्मिन्नेव समये तयोरुभयोः समावर्तन-संस्कारो निर्वर्तनीयः। वरकन्ये गुरूणां समक्षं विवोढुमभिलषेतां चेत्तदा गुरु-वेश्मनि अन्यथा तु कन्याजनकयोर्निकेतने विवाहः समुचितः। अध्यापकानां कन्याजनकादिभद्रपुरुषाणां वा सम्मुखे तयोः परस्परं संलापः शास्त्रार्थो वा कारयितव्यः। अन्योन्यस्य रहस्यं विज्ञातुकामौ परिषदि विलिख्यान्योन्यं प्रश्नोत्तरं पृच्छेताम्।

## अथ गर्भाधानविधिः

तदनु यस्मिन् वासरे कुमारी रजस्वला सती संशुध्येत्तस्मिन्नहनि वेदिं मण्डपञ्च विरच्य सुगन्धिना घृताद्यनेकवस्तुभिरग्निहोत्रं जुहुयुः। अनेकांश्च विदुषो जनान् योषितश्च सत्कुर्युः। यत्र वासरे समुचितं भवेदृतु-दानं तत्रैव दिने "संस्कारविधि"-प्रतिपादितविध्यनुसारं निर्वर्त्य सकल-कर्मजातं यातैकयामायां यामिन्यां दशवादनसमये निशीथे वा परममुदा सकलजनसमक्षं पाणिग्रहणपूर्वकं समाप्य वैवाहिकं विधिं विविक्तमध्यासा-ताम्। वीर्यस्थापनपद्धतिं पुरुषः नारी च वीर्याकर्षणसरणिमनुसरेत्। यथा-

सम्भवं निष्फलं व्यर्थं न स्खलयेयुः ब्रह्मचर्य्यरेतो यस्माद्धि तद्वीर्यंरजः संयोगेन समुत्पन्नं शरीरमपूर्वमुत्तमञ्चापत्यं भवति। गर्भाशये शुक्रसम्पातकाले चोभावपि दम्पती स्थिरौ स्याताम्, तयोश्च नासाग्रे नासिका चक्षुषोः सम्मुखं चक्षुषी भवेताम्—अर्थात् ऋज्वायतं शरीरं सप्रसादञ्च चेतो भवेत्। अस्थिरौ न भवेताम्। पुमानात्मनः शरीरं शिथिलयेत् योषा च शुक्रप्राप्तिवेलायामपानवायुमूर्ध्वमाकर्षेत्। योनिञ्चोपरि सङ्कोच्य वीर्यमाकृष्य गर्भाशये स्थापयेत्। तदनुशुद्धजलेनोभावपि स्नायाताम्। विदुष्यङ्गना तदानीमेव गर्भस्थितिं विजानीते। मासानन्तरं रजसि सन्निवृत्ते सर्वेषामेव गर्भनिश्चयः संजायते। केसरशुण्ठचश्वगन्धात्रिपुटासालिमसंमिश्रं पूर्वतः संतप्तशीतं क्षीरं यथाभिलाषं प्रपीय पृथक् पृथक् स्वशयनेषु शयीयाताम्। एष एव विधिरनुष्ठेयः प्रत्येकस्मिन्नपि गर्भाधानसमये। मासानन्तरं रजोदर्शनाभावे गर्भस्थितौ विनिश्चितायामासंवत्सरं कदाचिदपि स्त्रीपुरुषयोः समागमो न भवेत् एवं हि सञ्जायतेऽपत्यमुत्तमम्। द्वितीयमप्यपत्यं तादृशमेव भवति। अन्यथा च वीर्यं व्यर्थमेव विनश्यति परिक्षीयत आयुरुभयोरपि व्याधयश्चानेके संक्रामन्ति। मिथः संलापं सस्नेहव्यवहारं कथमपि न त्यजेताम्। पुरुषो वीर्यनिग्रहं कुर्यात् येन तस्य वीर्यं स्वप्नेऽपि न स्खलेत् योषिच्च गर्भपरिरक्षणं कुर्यात् येन गर्भस्थवालस्य शरीरमुत्तमरूपलावण्यपुष्टिबलपराक्रमसंयुतं दशमे मासि प्रजायेत।

तादृशभोजनवाससां सेवनमाचरेत् येन स्वप्नेऽपि पुंसो वीर्यं न स्खलेत्। तुरीयमासात् विशेषतश्चाष्टममासात् गर्भपरिरक्षणे प्रयतितव्यम्। अन्तर्वत्नी रेचकरूक्षमादकद्रव्यबुद्धिबलनाशकपदर्थान्न भुञ्जीत किन्तु घृत-दुग्ध-व्रीहि-गोधूम-मुद्ग-माषाद्यन्नपानं देशकालाँश्च यथाविधि सेवेत। गर्भस्थस्य जन्तोश्चतुर्थे मासि **पुंसवनम्** अष्टमे च मासि **सीमन्तोन्नयनं** विध्यनुसारं कुर्वीत।

बालस्य जन्मसमये जनन्यर्भकयोः परिरक्षेद्देहं सविशेषमवधानेन। पूर्वत एव निष्पादितशुण्ठीपाकं सौभाग्यशुण्ठीपाकं वा परिसेवेत। प्रसवानन्तरं गन्धवतेषदुष्णेन पयसा स्नायात्प्रसूता स्नापयेच्च बालम्। तदनन्तरं नाडीछेदनम्—सुमृदुसूत्रेण बद्ध्वा बालस्य नाभिमूलं परिहाय चतुरङ्गुलं कृन्तेत्। तच्च तथा सन्दानयेत् येन रक्तस्य बिन्दुरपि न स्रवेत्। तदनु सम्मार्जिते सूतिकागृहद्वारि सुगन्धिघृतादिनाग्निं जुहुयात्। अनन्तरं जनकोऽपत्यस्य श्रवसि **"वेदोऽसि"** वेदनामासीति संश्राव्य समादाय मधुसर्पिषी स्वर्णशलाकया शिशुरसनायां विलिख्य **"ओ३म्"** इत्यक्षरं मधुघृते तथैव शलाकया समास्वादयेत्। ततश्च तं जननीं समर्पयेत् सा च स्तन्यं धापयेत, अभावे च तन्मातुः क्षीरे अन्यस्या योषितः सम्परीक्ष्य दुग्धं पाययेत्। तदनन्तरं प्रसूता-

र्भकौ शुद्धपवने गृहान्तरे वासयेत् तत्र प्रातः-सायं गन्धवता घृतेनाग्निहोत्रं कुर्यात्। प्रसूताप्यात्मनः शरीरपुष्ट्यै नानाविधोत्तमभोजनानि सेवेत। आचरेच्च योनिसङ्कोचादिविधिम्। षष्ठे चाहनि बहिर्निर्गच्छेत्। संततेश्च दुग्धपानाय नियोजयेत् धात्रीं सैवापत्यं सस्तन्यपानं परिपालयेत्। तथापि जनयित्र्या नितरां सावधानया भाव्यं येन प्रमादं न जायेत तत्परिपालने। सम्पुष्येच्च तामुत्तमान्नपानादिना। योषा क्षीरस्रावविमोकाय कुचाग्रयोस्तादृशानि द्रव्याणि लिम्पेत् येन न स्रवेन्मनागपि दुग्धम्। अन्नपानव्यवस्थामपि तदनुकूलामेव विदध्यात्।

संस्कारविधि-दर्शितदिशा यथाकालं नामकरणादिसंस्कारजातमनुतिष्ठेत्। रजोदर्शनात्परिशुद्धायां जायायां पुमान् पूर्ववदेव ऋतुदानं सम्भावयेत्।

अथ गृहमेधिनां धर्माः—

**ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा।**
**ब्रह्मचार्य्येव भवति यत्र तत्राश्रमे वसन्॥** —मनु० ३।५०

यः खल्वात्मजाययैव संतुष्यति ऋतुगामी च भवति गृहस्थोऽपि स ब्रह्मचारिणमनुकरोति।

**सन्तुष्टो भार्यया भर्त्ता भर्त्रा भार्या तथैव च।**
**यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम्॥१॥**
**यदि हि स्त्री न रोचेत पुमांसन्न प्रमोदयेत्।**
**अप्रमोदात्पुनः पुंसः प्रजनं न प्रवर्त्तते॥२॥**
**स्त्रियां तु रोचमानायां सर्वं तद्रोचते कुलम्।**
**तस्यां त्वरोचमानायां सर्वमेव न रोचते॥३॥**

—मनु० ३। श्लोक० ६०–६२

(१) यत्र कुले भार्यया भर्ता भार्या च भर्त्रा प्रीता भवति तत्रैव कुले सौभाग्यमैश्वर्यञ्च चिरं निवसतः। यत्र पुनः कलिरजस्रं प्रवर्तते तत्र दौर्भाग्य-दारिद्र्ये। (२) या वै योषा भर्तारं नानुरज्येत् प्रीणीयाच्च तर्हि कामो नोत्पत्स्यते भर्तुरप्रसादात्। (३) यस्या योषितः प्रसादे सर्वं कुलं प्रीयते तस्या एवाप्रसादे सर्वमप्रसन्नं क्लेशकरं सम्पद्यते।

**पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा।**
**पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः॥१॥**
**यत्र नार्य्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।**
**यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राऽफलाः क्रियाः॥२॥**
**शोचन्ति जामयो यत्र विनश्यत्याशु तत्कुलम्।**
**न शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्वदा॥३॥**

**तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः ।**
**भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च ॥४॥**

—मनु० ३।५५-५७,५९

बहुकल्याणमीप्सुभिः पितृभ्रातृभर्तृदेवरैरेता योषितः सत्कारपूर्वकं भूषणादिभिः संप्रसाद्याः ॥१॥ यत्र कुले स्त्रियः पूज्यन्ते तत्र पुमाँसः प्राप्य सकलविद्यां लब्ध्वा देवसंज्ञां परमानन्देन रमन्ते । यत्र पुनरेता न पूज्यन्ते तत्र सर्वाः क्रिया निष्फला भवन्ति ॥२॥ यस्मिन् कुले गृहे वा योषितः शोकपीडिता दुःखिन्यो भवन्ति तत्कुलं शीघ्रं विनश्यति । यत्र चानन्देन सोत्साहाः सुप्रसन्नाश्च भवन्ति तत्कुलं नित्यं संवर्धते । तस्मात् भूतिकामैर्जनैः भूषणाच्छादनाशनैर्नित्यं सत्कारेषूत्सवेषु चैताः पूजनीयाः ॥४॥

सत्कारवाचकः "पूजाशब्दः" इति सर्वदावगन्तव्यम् । नक्तन्दिवं प्रथमसम्मेलने वियोगे चान्योन्यं प्रीतिपूर्वकं **"नमस्ते"** इति पदेनाभिवादयेयुः ।

**सदा प्रहृष्टया भाव्यं गृहकार्येषु दक्षया ।**
**सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥**

—मनु० ५।१५०

योषा सुप्रसन्नतया चातुर्येण गृहकर्माणि कुर्वीत, सर्वपदार्थान् सम्यक् संस्कुर्यात्, निकेतनं सम्मार्जयेत्, व्यये चात्युदारा न भवेत् यथायोग्यं व्ययं कुर्यात् । तदीयसर्ववस्तूनि पूतानि भवेयुः भोजनं च तथा साधयेत् येन तदौषधिरूपं सम्पद्य न जनयेत् शरीरात्मनोः कमपि रोगम् । आयव्ययपरिसंख्यानञ्च याथार्थ्येन संस्थाप्य भर्तृप्रमुखात् संश्रावयेत् । भृत्यान् यथार्हं कार्येषु विनियोजयेत् येन कथमपि गृहकार्यविपर्ययो न भवेत् ।

**स्त्रियो रत्नान्यथो विद्या सत्यं शौचं सुभाषितम् ।**
**विविधानि च शिल्पानि समादेयानि सर्वतः ॥**

—मनु० २।२४०

उत्तमाङ्गना, नानाविधरत्नानि, विद्या, सत्यं, पवित्रता, श्रेष्ठं वचः विविधाः शिल्पविद्याः—वस्तुनिर्माणचातुर्यञ्च सर्वदेशेभ्यो निखिलमानवेभ्यश्च ग्रहीतव्याः ।

**सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात् सत्यमप्रियम् ।**
**प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥१॥**
**भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा वदेत् ।**
**शुष्कवैरं विवादं च न कुर्यात्केनचित्सह ॥२॥**

—मनु० ४।१३८, १३९

सर्वदा प्रियं सत्यमन्यस्य हितकरं ब्रूयात्, एकाक्षस्यैकाक्षशब्देन सम्बोधनमिवाप्रियसत्यं न वदेत् परप्रसादनाय च कदाप्यनृतं न भाषेत ॥१॥

सर्वदा भद्रं सर्वहितं वचः प्रब्रूयात्, शुष्कवैरम्, अर्थात् विनापराधं केनचिन्न विरुध्येन्न वा विवदेत्। अप्रियस्यापि सत्यस्य भाषणे तु न ग्लायेत् यदि नाम तद्धितमावहेत ॥२॥

**पुरुषा बहवो राजन् सततं प्रियवादिनः।**
**अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥**

—विदुरनीतिः ३७।१५

हे धृतराष्ट्र! जगत्यस्मिन् परप्रसादनाय सततं प्रियवादिनश्चाटुकारा भूयांसो वर्तन्ते परमप्रियस्यापि हितकरस्य वचसो वक्ता श्रोता च पुरुषः क्वचिदेव लभ्यते।

सम्मुखं परदोषप्रकाशनमात्मनो दोषसंश्रवणम्, परोक्षञ्च परगुण-प्रकाशनं साधुजनोचितम्। समक्षे गुणप्रकाशनं परोक्षे च दोषाविष्करणं दुर्जनसरणिः। यावन् मानवः स्वदोषान् परसमक्षं न प्रकाशयति तावद्दोषेभ्यो विमुच्य गुणान् न धारयति। न कदापि कमपि निन्देत्। गुणेषु दोषारोपणं **असूया** दोषेषु गुणारोपणमपि **असूया**। गुणेषु गुणारोपणं, दोषेषु दोषारोपणञ्च **स्तुतिः**। अलीकभाषणमेव **निन्दा** सत्यभाषणञ्च **स्तुतिरिति** यावत्।

**बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च।**
**नित्यं शास्त्राण्यवेक्षेत निगमाँश्चैव वैदिकान् ॥१॥**
**यथा यथा हि पुरुषः शास्त्रं समधिगच्छति।**
**तथा तथा विजानाति विज्ञानं चास्य रोचते ॥२॥**

—मनु० ४।१९, २०

पुमाँसो योषितश्चाल्पीयसा कालेन बुद्धिप्रवर्धकानि धनार्जनसम्पाद-कानि हितजनकानि वेदादिशास्त्राणि शृणुयुः श्रावयेयुश्च ब्रह्मचर्याश्रमे समधीतान्यपि नित्यं विचिन्तयेयुरध्यापयेयुश्च ॥१॥ यथा यथा हि पुरुषः शास्त्राणि यथावद्विजानाति तथा तथा तद्विद्याविज्ञाने तत्र रुचिश्च प्रवर्धते ॥२॥

## अथ पञ्चमहायज्ञाः

**ऋषियज्ञं देवयज्ञं भूतयज्ञं च सर्वदा।**
**नृयज्ञं पितृयज्ञं च यथाशक्ति न हापयेत् ॥१॥**

—मनु० ४।२१

**अध्यापनं ब्रह्मयज्ञः पितृयज्ञश्च तर्प्पणम्।**
**होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥२॥**

—मनु० ३।७०

**स्वाध्यायेनार्चयेतर्षीन् होमैर्देवान् यथाविधि ।**
**पितॄन् श्राद्धैश्च नॄनन्नैर्भूतानि बलिकर्मणा ॥३॥** —मनु० ३।८१

यज्ञद्वयं ब्रह्मचर्य्यप्रकरणे व्याख्यातम्, अर्थात् वेदादिशास्त्राणामध्ययनाध्यापने सन्ध्योपासनं योगाभ्यासश्च प्रथमो **ब्रह्मयज्ञः**। विदुषां सङ्गपरिचरणं पावित्र्यं दिव्यगुणधारणं दातृत्वं विद्योन्नतिसम्पादनञ्च **द्वितीयो देवयज्ञः**। यज्ञाविमौ सायं प्रातर्निर्वर्तनीयौ।

**सायंसायं गृहपतिर्नो अग्निः प्रातः प्रातः सौमनसस्य दाता ॥१॥**
**प्रातः प्रातर्गृहपतिर्नो अग्निः सायंसायं सौमनसस्य दाता ॥**

—अ० कां० १९। अनु० ७। सूक्त ५५। मं० ३, ४

**तस्मादहोरात्रस्य संयोगे ब्राह्मणः सन्ध्यामुपासीत ।**
**उद्यन्तमस्तं यान्तमादित्यमभिध्यायन् ॥३॥**

—षड्विंशब्राह्मणे प्र० ४। खं० ५

**न तिष्ठति तु यः पूर्वां नोपास्ते यस्तु पश्चिमाम् ।**
**स साधुभिर्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥४॥**

—मनु० २।१०३

सायन्तनसन्ध्याग्निहोत्रे हुतद्रव्यं प्रातःकालपर्यन्तं पवनं संशोध्य सुखयति ॥१॥ प्रातरग्निहोत्रे च हुतं द्रव्यं सायंकालपर्यन्तं वायुशोधनद्वारा बलबुद्ध्यारोग्यप्रदं भवति ॥२॥ अतएव वासरक्षपयोः सन्धिवेलायामर्थादुदितेऽस्तमिते च सूर्ये परमात्मनो ध्यानमग्निहोत्रञ्चापरिहार्यम् ॥३॥ यश्चैतत्कर्मद्वयं प्रातः-सायं न निर्वर्तयेत् तं साधवः सर्वस्माद् द्विजातिकर्मणः बहिष्कुर्युः। तं शूद्रवद्विजानीयुरिति यावत् ॥४॥

**प्र०**—कथन्नानुष्ठेयं कालत्रये सन्ध्योपासनम् ?

**उ०**—मैवम्। न भवन्ति तिस्रः सन्ध्याः। प्रकाशतमसोः सन्धिरपि प्रातः-सायं द्विरेव भवति। इदमनङ्गीकृत्य मध्याह्नेऽपि तृतीयसन्ध्यामभ्युपयता निशीथेऽपि कथं न निर्वर्तनीयं सन्ध्योपासनम् ? मध्यरात्रेऽप्युपासितुकामः प्रहरघटीपलक्षणानामपि सन्धिषु सन्ध्यामुपासीत यदि हि नाम कश्चिदेवं कर्तुकामोऽपि भवेत् तथापि न पारयेत्तत्संपादयितुम्, नापि कस्यापि शास्त्रस्य मध्याह्नसंध्यायां प्रमाणं वर्तते तस्मात् कालद्वय एव सन्ध्याग्निहोत्रनिर्वर्तनं समुचितं नतु कालत्रये। एष कालत्रयविभागश्च भूतभविष्यद्वर्तमानभेदेन नतु सन्ध्योपासनभेदेन।

**तृतीयः पितृयज्ञः**—

विदुषां देवानाम् अध्ययनाध्यापनादिकुर्वतामृषीणां, मातृपित्रादिवृद्धज्ञानिनां, पितॄणां, परमयोगिनाञ्च परिचर्या तृतीयः **पितृयज्ञः**।

अस्य च द्वौ प्रभेदौ **'श्राद्धम्'** एकोऽपरश्च **'तर्पणम्'**।

श्राद्धमर्थात् श्रदिति सत्यनाम श्रत् सत्यं दधाति यया क्रियया सा श्रद्धा श्रद्धया यत्क्रियते **तच्छ्राद्धम्**।

किञ्च तृप्यन्ति तर्पयन्ति येन पितॄन् **तत्तर्पणम्**। परमिदं जीवितेभ्य एव नतु पञ्चत्वमितेभ्यः। तर्पणमपि पुनस्त्रिधा विभज्यते **देवतर्पणम्, ऋषितर्पणम्, पितृतर्पणञ्चेति**।

## अथदेवतर्पणम्

**ओं ब्रह्मादयो देवास्तृप्यन्ताम्। ब्रह्मादिदेवपत्न्यस्तृप्यन्ताम्। ब्रह्मादिदेवसुतास्तृप्यन्ताम्। ब्रह्मादिदेवगणास्तृप्यन्ताम्।**—इति देवतर्पणम्॥

**"विद्वाँसो हि देवाः"** [शतपथ ३।५।६।१०] साङ्गोपाङ्गवेदचतुष्टयस्य ज्ञातारो ब्रह्मपदवाच्यास्तदपेक्षयाल्पश्रुता अपि देवपदभाजो भवन्ति। तत्समाना तेषां विदुषी भार्या ब्राह्मणी देवी। एषां तत्तुल्यपुत्रशिष्याणां तादृशतदीयगणानां सेवकानाञ्च शुश्रूषणं **श्राद्धं तर्पणञ्च**।

## अथर्षितर्पणम्

**ओं मरीच्यादय ऋषयस्तृप्यन्ताम्। मरीच्याद्यृषिपत्न्यस्तृप्यन्ताम्। मरीच्याद्यृषिसुतास्तृप्यन्ताम्। मरीच्याद्यृषिगणास्तृप्यन्ताम्।**

—इति ऋषितर्पणम्

ये हि खलु ब्रह्मणः प्रपौत्रमरीचिवत् वैदुष्यमाप्याध्यापयेयुः तत्तुल्यविद्यास्तेषां भार्याः कुमारीरध्यापयेयुः ये च तादृशस्तेषां सुतशिष्यसेवकास्तेषां परिचरणं सत्कारश्च **ऋषितर्पणम्**।

## अथ पितृतर्पणम्

(पितृभ्यो भोजनवस्त्रादिप्रदानेन शुश्रूषया च तेषां संतोषापादनम्—येन कर्मणा पितॄणां शरीरस्वास्थ्यमात्मनः सौख्यञ्च जायेत प्रयत्नेन तत्कर्मानुष्ठानमिति यावत् **पितृतर्पणम्**। अधस्तान्निर्दिश्यमानाः पितॄणामन्येऽपि कियन्तो भेदा विद्यन्ते)।

**ओं सोमसदः पितरस्तृप्यन्ताम्। अग्निष्वात्ताः पितरस्तृप्यन्ताम्। बर्हिषदः पितरस्तृप्यन्ताम्। सोमपाः पितरस्तृप्यन्ताम्। हविर्भुजः पितरस्तृप्यन्ताम्। आज्यपाः पितरस्तृप्यन्ताम्। सुकालिनः पितरस्तृप्यन्ताम्। यमादिभ्यो नमः यमादींस्तर्पयामि। पित्रे स्वधा नमः पितरं तर्पयामि। पितामहाय स्वधा नमः पितामहं तर्पयामि। प्रपितामहाय स्वधा नमः प्रपितामहं तर्पयामि। मात्रे स्वधा नमो मातरं तर्पयामि। पितामह्यै स्वधा नमः**

**पितामहीं तर्पयामि । प्रपितामह्यै स्वधा नमः प्रपितामहीं तर्पयामि । स्वपत्न्यै स्वधा नमः स्वपत्नीं तर्पयामि । सम्बन्धिभ्यः स्वधा नमः सम्बन्धिनस्तर्पयामि । सगोत्रेभ्यः स्वधा नमः सगोत्राँस्तर्पयामि ।** —इति पितृतर्पणम्

१. ये सोमे जगदीश्वरे पदार्थविद्यायाञ्च सीदन्ति नैपुण्यमधिगच्छन्ति ते **सोमसदः** ।

२. यैरग्नेर्विद्युतो विद्या गृहीता ते **अग्निष्वात्ताः** ।

३. ये बर्हिषि विद्यावृद्धियुक्त उत्तमे व्यवहारे सीदन्ति ते **बर्हिषदः** ।

४. ये सोममैश्वर्यमोषधिरसं वा पान्ति पिबन्ति वा ते **सोमपाः** ।

५. ये हविर्होतुमत्तुमर्हं [मादकं हिंसासंश्लिष्टद्रव्यञ्च विहाय] भुञ्जते भोजयन्ति वा ते **हविर्भुजः** ।

६. य आज्यं ज्ञातुं प्राप्तुं वा योग्यं रक्षन्ति वा घृतदुग्धादिकं वा पिबन्ति त **आज्यपाः** ।

७. शोभनः धर्मानुष्ठानेन सुखमयः कालो विद्यते येषां ते **सुकालिनः** ।

८. ये दुष्टान् यच्छन्ति निगृह्णन्ति सुजनाँश्च पालयन्ति ते **यमाः** ।

९. यः पाति अन्नेन सत्कारेण च सन्ततीर्विरक्षति जनयति वा स **पिता** ।

१०. पितुः पिता **पितामहः** ।

११. पितामहस्य पिता **प्रपितामहः** ।

१२. यान्नेन सत्कारेण च मानयति अपत्यानि सा **माता** ।

१३. या पितुर्माता सा **पितामही** ।

१४. पितामहस्य माता **प्रपितामही** ।

एषां स्वभार्याया भगिन्याः सम्बन्धिनामेकगोत्रोद्भवानामन्येषां वा साधुजनानां वृद्धानां वात्यन्तश्रद्धयोत्तमान्नवस्त्रशोभनपानादिना सम्यक् तर्पणमर्थात् येन कर्मणा तेषामन्तरात्मा तृप्येत् शरीरञ्च स्वास्थ्यं लभेत तेनैव कर्मणा प्रीतिपूर्वकं तेषां परिचरणं **श्राद्धं तर्पणञ्चोच्यते** ।

**चतुर्थो वैश्वदेवः**—

संसिद्धे भोजने भोजनार्थं सिद्धवस्तुनोऽम्ललवणक्षारं परित्यज्य घृतमिष्टसम्मिश्रमन्नमादाय चुल्लिकातो वह्निं पृथक् निधाय, अधोनिर्दिष्टमन्त्रैराहुतिं प्रदद्यात् विभजेत च तदन्नम् । तथाचात्र प्रमाणम्—

**वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्वकम् ।**
**आभ्यः कुर्य्याद्देवताभ्यो ब्राह्मणो होममन्वहम् ॥**

—मनु० ३।८४

पाकशालायां भोजनार्थं निष्पन्नान्नेन दिव्यगुणसिद्धये पाकाग्नावेव विधिपूर्वकं मन्त्रैरमीभिर्नित्यं जुहुयात् ।

**ओं अग्नये स्वाहा। सोमाय स्वाहा। अग्नीषोमाभ्यां स्वाहा। विश्वेभ्यो देवेभ्यः स्वाहा। धन्वन्तरये स्वाहा। कुह्वै स्वाहा। अनुमत्यै स्वाहा। प्रजापतये स्वाहा। सह द्यावापृथिवीभ्यां स्वाहा। स्विष्टकृते स्वाहा।**

सुदीप्ताग्नौ प्रत्येकेन मन्त्रेणैकैकामाहुतिं प्रदद्यात् तदनु स्थाल्यां भूमिस्थितपत्रे वा पूर्वादिक्रमेण यथाक्रममेभिर्मन्त्रैर्भागान् निर्वपेत्।

**ओ३म् सानुगायेन्द्राय नमः। सानुगाय यमाय नमः। सानुगाय वरुणाय नमः। सानुगाय सोमाय नमः। मरुद्भ्यो नमः। अद्भ्यो नमः। वनस्पतिभ्यो नमः। श्रियै नमः। भद्रकाल्यै नमः। बृहस्पतये नमः। वास्तुपतये नमः। विश्वेभ्यो देवेभ्यो नमः। दिवाचरेभ्यो भूतेभ्यो नमः। नक्तंचारिभ्यो भूतेभ्यो नमः। सर्वात्मभूतये नमः।**

भागानिमान् समुपस्थितमतिथिं भोजयेदग्नौ वा प्रक्षिपेत्। तदनन्तरं लवणान्नमर्थात् द्विदलभक्तशाककर्पट्टिकादिकं (रोटीति लोके) समादाय तस्य भागषट्कं भूमौ निदध्यात्। अत्र प्रमाणम्—

**शुनां च पतितानां च श्वपचां पापरोगिणाम्।**
**वायसानां कृमीणां च शनकैर्निर्वपेद्भुवि॥**

—मनु० ३।९२

**एवं श्वभ्यो नमः। पतितेभ्यो नमः। श्वपचेभ्यो नमः। पापरोगिभ्यो नमः। वायसेभ्यो नमः। कृमिभ्यो नमः।**

एवमुच्चार्य भागान् निरूप्यानन्तरं दुःखिनं दीनचेतसं बुभुक्षितं कञ्चित्प्राणिनं श्ववायसादिकं वा भोजयेत्। अत्र नमः शब्दार्थोऽन्नम्। शुने, पापाय, चण्डालाय, पापरोगिणे, वायसेभ्यः, पिपीलिकादिकृमिभ्यो वान्नदानमिति यावत्। मन्वादिधर्मशास्त्रस्यैष विधिः। पाकशालापवनसंशोधनम्, अज्ञानेनादृष्टजन्तूनां हत्या-प्रत्युपकारश्चाग्निहोत्रप्रयोजनम्।

**पञ्चमोऽतिथियज्ञः—**

अनिश्चिततिथिरतिथिरुच्यते। गृहस्थः खल्वकस्मात् गृहमागताय धार्मिकसत्योपदेशकाय सर्वोपकाराय सर्वत्र भ्रमणशीलाय पूर्णविदुषे परमयोगिने च संन्यासिने प्रथमं पाद्यार्घ्याचमनीयं त्रिविधं जलं प्रदाय तदनु तं सादरं शुभासने समुपवेश्यान्नपानाद्युत्तमपदार्थैः संसेव्य प्रसादयेत्। अनन्तरं तदीयशुभसङ्गेन धर्मार्थकाममोक्षहेतून् ज्ञानविज्ञानाद्युपदेशान् शृणुयात् स्वीयचरित्रमपि तेषां सदुपदेशमनुवर्तयेत्।

अवसरेषु गृहस्था नृपादयश्चापि अतिथिवत्समादरणीया भवन्ति।

**पाषण्डिनो विकर्मस्थान् वैडालवृत्तिकान् शठान्।**
**हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्॥**

—मनु० ४।३०

(पाषण्डिनः) वेदनिन्दका वेदविरुद्धाचारवन्तः, (विकर्मस्थाः) वेदविरुद्धकर्मकारिणः, असत्यभाषणतत्पराश्च (वैडालव्रतिकाः) यथा वै विडालः स्थिरोऽन्तर्हितश्च सन् निर्निमेषचक्षुषा पश्यन् सहसावपत्य मूषकादि-प्राणिवधेन बिभर्ति निजोदरं तथैवाचरन्ता जना "वैडालव्रतिकाः" (शठाः) दुराग्रहिणोऽहङ्कारिणो ये च स्वयमनवगच्छन्तोऽपि परेभ्य उपदेशं न गृह्णन्ति (हैतुकाः) कुतर्किणो जल्पका अनर्गलवादिनः यथेदानीन्तना वेदान्तिनो जल्पन्ति **"अहं ब्रह्म जगन्मिथ्या वेदादिशास्त्रमीश्वरश्चापि कल्पितः"** इति (बकवृत्ति०) यथा बकः पादमेकमुत्थाप्य ध्यानावस्थित इव भूत्वा झटिति व्यापाद्य मत्स्यं स्वार्थं साधयति तथैवेदानीन्तना वैरागीखाकीत्यादिनामभृतः वेदविरोधिनो दुराग्रहिणश्च भवन्ति, तान् वाचापि नार्चयेत्, यतो ह्येते समादृताः सन्तः जगदधर्मे पातयन्ति । स्वयमवनतिजनकानि कर्माणि कुर्वन्त्येव परं सेवकवर्गमप्यात्मना सहाविद्यासागरे मज्जयन्ति ।

पञ्चमहायज्ञानामनुष्ठानफलानि—

**ब्रह्मयज्ञा**नुष्ठानेन विद्याशिक्षाधर्मसभ्यतादिशुभगुणानां वृद्धिः । **अग्नि-होत्रेण**—वायुवृष्टिजलानां शुद्धिपूर्वकं वृष्टिद्वारा जगतः सुखप्राप्तिः, अर्थात् शुद्धवायोः श्वासस्पर्शसंग्रहणेनारोग्यबलबुद्धिपराक्रमाणां प्रवृद्ध्या धर्मार्थ-काममोक्षानुष्ठानसंसिद्धिः वाय्वादिपदार्थानां शोधकत्वादेव **देवयज्ञ** इत्यभिधीयते ।

**पितृयज्ञेन**-मातृ-पितृ-ज्ञानि-महात्मनां सेवयाधिगतज्ञानेन सत्यासत्यौ विनिर्णीय सत्योपादानेनासत्यपरित्यागेन च सुखप्राप्तिः । अनेन कृतज्ञतापि प्रकाशिता भवति मातृपित्राचार्यैरुपकृतापत्यशिष्यैस्तत्प्रत्युपकारो न्याय्य एव ।

**बलिवैश्वदेवस्य** प्रागुक्तमेव फलम् ।

**अतिथियज्ञस्य** फलानि—

(अ) जगति साध्वतिथीन् विना समुन्नतिर्न भवति ।

(आ) तेषां सर्वदेशपरिभ्रमणेन सत्योपदेशेन च न प्रवर्धते पाखण्डः ।

(इ) सर्वत्र गृहस्थैरनायासेन लभ्यते सत्यविज्ञानम् ।

(ई) मनुष्यमात्र एको धर्मः प्रतिष्ठितो भवति ।

(उ) अतिथिभिर्विना न भवति सन्देहविनिवृत्तिः सन्देहनिवृत्तिं विना स्थिरनिश्चयो न भवति, निश्चयमन्तरेण च कुतः सुखम् ? अमीषां पञ्च-महायज्ञानामेतान्येव फलानि ।

**ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत् ।**
**कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च ॥**

—मनु० ४।९२

रात्रेः पश्चिमे यामे अवशिष्टायां वा चतुर्घटिकारजन्यामुत्थाय कृत्वा

आवश्यकं कार्यं धर्मार्थौ शारीररोगाणां निदानं परमात्मानञ्च ध्यायेत्। न कदाप्यधर्ममाचरेत् यतः—

**नाधर्मश्चरितो लोके सद्यः फलति गौरिव।**
**शनैरावर्त्तमानस्तु कर्त्तुर्मूलानि कृन्तति॥**

—मनु० ४।१७२

अनुष्ठिताधर्मो न जातु निष्फलो भवति परमनुष्ठानवेलायामेव न लभ्यते फलम्। अत एवाज्ञानिनोऽधर्मान्न बिभ्यति तथाप्ययमधर्माचारः शनैः-शनैः युष्मत्सुखमूलानि कृन्ततीति निश्चयं वित्थ।

अनेन क्रमेण—

**अधर्मेणैधते तावत्ततो भद्राणि पश्यति।**
**ततः सपत्नाञ्जयति समूलस्तु विनश्यति॥**—मनु० ४।१७४

यथा तडागकूलं भित्त्वा जलं सर्वतः संप्लवते तथा अधर्मात्मा मानवः समुल्लंघ्य धर्ममर्यादां मिथ्याभाषणकपटपाखण्डैरर्थाद्रक्षोपायभूतवेदानां खण्डनेन विश्वासघातादिकर्मभिरादौ परपदार्थानादाय प्रवर्धते। पश्चात् धनाद्यैश्वर्येण भोजनपानवस्त्राभूषणयानस्थानमानमर्यादादिकं लभते, शत्रूनपि अन्यायेन विजयते ततोऽचिरादेव विनश्यति छिन्नमूलो द्रुम इवाधर्मपरायणो जनः।

**सत्यधर्मार्यवृत्तेषु शौचे चैवारमेत्सदा।**
**शिष्यांश्च शिष्याद्धर्मेण वाग्बाहूदरसंयतः॥**—मनु० ४।१७५

बुधः खलु वेदोक्तसत्यधर्मम्-पक्षपातराहित्येन सत्यसङ्ग्रहणमसत्यस्य च परित्याग इति न्यायात्मकं वेदोक्तधर्म—धर्मानुष्ठानमाचरन् वाक् बाहूदर-विषये संयमी भूत्वा शिष्यान् धर्मेण शिक्षयेत्।

**ऋत्विक्पुरोहिताचार्य्यैर्मातुलातिथिसंश्रितैः।**
**बालवृद्धातुरैर्वैद्यैर्ज्ञातिसम्बन्धिबान्धवैः॥१॥**
**मातापितृभ्यां यामीभिर्भ्रात्रा पुत्रेण भार्यया।**
**दुहित्रा दासवर्गेण विवादं न समाचरेत्॥२॥**

—मनु० ४।१७९, १८०

(ऋत्विक्) यज्ञकर्ता (पुरोहितः) नित्यं सदाचारशिक्षकः (आचार्यः) विद्याध्यापकः (मातुलः) मातृभ्राता (अतिथिः) गमनागमनयोरनिश्चित-तिथिः (संश्रिताः) अनुजीविनः (बालः) शिशुः (वृद्धः) स्थविरः (आतुरः) पीडितः (वैद्यः) आयुर्वेदवित् (ज्ञातयः) स्वगोत्रस्थाः स्ववर्णस्थाः वा (सम्बन्धिनः) श्वशुरादयः (बान्धवाः) मित्राणि॥१॥ (पिता) जनकः (यामी) भगिनी (भ्राता) सहोदरः (भार्या) पत्नी (दुहिता) पुत्री—एतैः सह सेवकवर्गेण च न कदापि कलहमाचरेत्।

**अतपास्त्वनधीयानः प्रतिग्रहरुचिर्द्विजः ।**
**अम्भस्यश्मप्लवेनेव सह तेनैव मज्जति ॥**—मनु० ४।१९०

(अतपाः) ब्रह्मचर्य्यसत्यभाषणादितपशून्यः **प्रथमः** (अनधी०) अध्ययनविवर्जितो **द्वितीयः** (प्रतिग्रहः) धर्मव्यपदेशेन परेभ्यो दानलिप्सुः **तृतीयः** एतत्त्रयं प्रास्तरिकनौकया सागरे सन्तरन्निव निजदुष्कर्मभिः सहैव दुःखाम्बुधौ निमज्जति । इमे स्वयं मज्जन्त्येव दातॄनपि च मज्जयन्ति ।

**त्रिष्वप्येतेषु दत्तं हि विधिनाप्यर्जितं धनम् ।**
**दातुर्भवत्यनर्थाय परत्रादातुरेव च ॥**

—मनु० ४।१९३

त्रिभ्योप्येतेभ्यो दत्तं धर्मन्यायार्जितं धनं दातारममुष्मिन्नेव जन्मनि प्रतिग्रहीतारञ्च परजन्मनि विनाशयति । तेष्वेवं सत्सु किं भवेत् ? अत्राह—

**यथा प्लवेनौपलेन निमज्जत्युदके तरन् ।**
**तथा निमज्जतोऽधस्तादज्ञौ दातृप्रतीच्छकौ ॥** —मनु० ४।१९४

यथा पाषाणमयेनोडुपेन सन्तरन् जले निमज्जति तथैवाज्ञानिनौ दाताप्रतिग्रहीतारावधोगतिं दुःखसागरं प्राप्नुतः ।

## पाखण्डिनां लक्षणानि

**धर्मध्वजी सदालुब्धश्छाद्मिको लोकदम्भकः ।**
**वैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः ॥१॥**
**अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः ।**
**शठो मिथ्याविनीतश्च बकव्रतचरो द्विजः ॥२॥**

—मनु० ४।१९५, १९६

(१) (धर्मध्वजी) धर्ममनाचरन् धर्मव्याजेन परवञ्चकः (२) (सदालु०) नित्यं लोभसंयुक्तः परधनाभिलाषुकः (३) (छाद्मिकः) कापटिकः (४) (लोकदम्भकः) संसारीजनवदात्मनः सातिशयश्लाघकः (५) (हिंस्रः) प्राणिनां घातकः परेषां द्वेष्टा च (६) (सर्वाभि०) दुर्जनसुजनैः सर्वैः सह संगन्ता मैत्रीभावप्रदर्शकः पुमान् **वैडालव्रतिकः** विडाल इव धूर्तः पापीयाँश्च विज्ञेयः । (७) (अधो०) यशः ख्यापनाय सततमध एव निरीक्षते (८) (नैष्कृति०) ईर्ष्यकः अल्पीयस्यपि परापराधे प्राणान्तवैरनिर्यातनतत्परः (९) (स्वार्थ०) छद्माधर्मविश्वासघातैरपि स्वप्रयोजनसाधने चतुरः (१०) (शठः) असत्यामप्यात्मवार्तायां दुराग्रहाविष्टः (११) (मिथ्या०) अलीकमेव बहिष्टः शीलसाधुत्वदर्शकश्च **बकव्रतचर** उच्यते स हि बक इवाधर्मी विज्ञेयः । एतल्लक्षणाः पाषण्डिनो भवन्ति । तान् कदापि न विश्वसेत् न वा परिचरेत् ।

धर्मं शनैः सञ्चिनुयाद्वल्मीकमिव पुत्तिकाः ।
परलोकसहायार्थं सर्वभूतान्यपीडयन् ॥१॥
नामुत्र हि सहायार्थं पिता माता च तिष्ठतः ।
न पुत्रदारं न ज्ञातिर्धर्मस्तिष्ठति केवलः ॥२॥
एकः प्रजायते जन्तुरेक एव प्रलीयते ।
एको नु भुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥३॥

—मनु० ४।२३८-२४०

एकः पापानि कुरुते फलं भुङ्क्ते महाजनः ।
भोक्तारो विप्रमुच्यन्ते कर्त्ता दोषेण लिप्यते ॥४॥

—महाभारते, उद्योगप० प्रजागरप० । अ० ३३।४२

मृतं शरीरमुत्सृज्य काष्ठलोष्ठसमं क्षितौ ।
विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥५॥

—मनु० ४।२४१

यथा किल पुत्तिका शनैः शनैः वल्मीकं निर्माति तथैव स्त्रीपुरुषौ भूतमात्रमहिंसन्तौ परजन्मसुखाय शनैः शनैर्धर्मं संचिन्वीयाताम् ॥१॥ परलोके हि धर्म एवैकः साहाय्यं कर्तुं शक्नोति नतु पितृ-मातृ-पत्नी ज्ञातयः साहाय्यं कर्तुं क्षमन्ते ॥२॥ एकाक्येव जीव उत्पद्यते म्रियते च एक एव धर्मफलं सुखादिकमधर्मफलं दुःखञ्चोपभुङ्क्ते ॥३॥ इदमेवावगच्छत—कुले एक एव पुरुषः पापपूर्वकं पदार्थमानयति महाजनः सकलकुटुम्बश्च तमुपभुङ्क्ते परं भोक्तारो दोषभागिनो न भवन्ति किन्तु अधर्मानुष्ठातैव दोषेण लिप्यते ॥४॥ उपरते कस्मिँश्चित् तद्बान्धवा मृतखण्डमिव भुवि तच्छरीरमुत्सृज्य परावर्तन्ते न कोऽपि तमनुगच्छति केवलं धर्म एव तेन सह याति ॥५॥

धर्मप्रधानं पुरुषं तपसा हतकिल्बिषम् ।
परलोकं नयत्याशु भास्वन्तं खशरीरिणम् ॥१॥
तस्माद्धर्मं सहायार्थं नित्यं सञ्चिनुयाच्छनैः ।
धर्म्येण हि सहायेन तमस्तरति दुस्तरम् ॥२॥

—मनु० ४।२४२,२४३

यो हि पुरुषो धर्मं प्रधानवस्तुरूपेण स्वीकरोति यश्च धर्मानुष्ठानेन विनष्टपापः तं धर्म एव प्रकाशस्वरूपं व्योमशरीरं परलोकं परं दर्शनीयं परमात्मानमचिरादेव प्रापयति ॥१॥

तस्मात्परलोकाय परजन्मसुखसाहाय्याय च सर्वदा शनैः शनैः धर्मं संचिन्वीत । जीवो हि धर्मस्यैव साहाय्येन महतो दुस्तराद्दुःखाम्बुधेः पारं गन्तुमर्हति ॥२॥ तस्मात्—

**दृढकारी मृदुर्दान्तः क्रूराचारैरसंवसन् ।**
**अहिंस्रो दमदानाभ्यां जयेत्स्वर्गं तथा व्रतः ॥१॥**
**वाच्यर्था नियताः सर्वे वाङ्मूला वाग्विनिःसृताः ।**
**तान्तु यः स्तेनयेद्वाचं स सर्वस्तेयकृन्नरः ॥२॥**
**आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ।**
**आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम् ॥३॥**

—मनु० ४। २४६,२५६,१५६

उद्यमी, अध्यवसायी, स्थिरकर्मा, कोमलस्वभावः, जितेन्द्रियः, हिंसक-क्रूरदुराचारैः पुरुषैः परिहृतसंसर्गः, धर्मात्मा मनोजयेन विद्यादिदानेन च सुखं लभते ॥१॥

यस्यां वाचि सर्वेऽर्था व्यवहारा निश्चीयन्ते सर्वव्यवहारसंपादकतया वागेव तेषां मूलं वाचैव सर्वे व्यवहाराः सिद्ध्यन्ति यः पुमान् तादृशीं गिरं स्तेनयति मिथ्याभिधत्ते स नरः स्तेयादिसर्वपापकृद्भवतीत्यवगन्तव्यम् ॥२॥

अतो मिथ्याभाषणाद्यधर्मं परित्यज्य धर्माचारेण ब्रह्मचर्य्यजितेन्द्रिय-तया पूर्णमायुरुत्तमां सन्ततिमक्षय्यं धनं च लभते। अपि च यो धर्मपथप्रवृत्तो दुर्लक्षणानि विहन्ति तदाचारं नित्यमनुकुर्वीत ॥३॥

**दुराचारो हि पुरुषो लोके भवति निन्दितः ।**
**दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥—मनु० ४।१५०**

दुराचारो हि पुरुषो लोकेषु सद्भिर्गर्ह्यते दुःखभाक् निरन्तरं व्याधि-युक्तश्च सन्नल्पायुर्भवति। तस्मादेवं प्रयतेत—

**यद्यत्परवशं कर्म तत्तद्यत्नेन वर्जयेत् ।**
**यद्यदात्मवशं तु स्यात्तत्तत्सेवेत यत्नतः ॥१॥**
**सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।**
**एतद्विद्यात्समासेन लक्षणं सुखदुःखयोः ॥२॥**

—मनु० ४।१५९,१६०

यद्यत्पराधीनं कर्मजातं तत्तत् यत्नपूर्वकं, परित्यजेत्। यच्चात्माधीनं तत् यत्नतोऽनुतिष्ठेत् ॥१॥

पराधीनं सर्वमेव दुःखमात्माधीनन्तु सर्वमेव सुखम्। एतदेव संक्षेपेण सुखदुःखयोः लक्षणं विज्ञेयम् ॥२॥

सत्यप्येवं यदितरेतरस्याधीनं कर्मजातं तदधीनतयैव कर्तव्यं यथा दम्पत्योर्व्यवहारोऽन्योन्यायत्तः। तथाहि पुरुषेण भार्याया भार्यया च पुरुषस्य मिथः प्रियाचारानुविधानम्, व्यभिचारविरुद्धाचारयोर्न कदाप्यनुष्ठानम्, पत्युरादेशात् गृहकार्याणां भार्याधीनत्वं बाह्यकार्याणां पुरुषाधीनत्वञ्च, दुर्व्यसनप्रसङ्गादितरेतरस्य वारणम्। परिणयानन्तरमन्योन्येन क्रीताविव

दम्पती इति विज्ञेयम्। स्त्रीपुरुषयोः हावभाववीर्यादिकं यत्किञ्चिदानखाग्रशिखापर्यन्तं तत्सर्वमपि भवतीतरेतराधीनम्, अन्योन्यानुमतिं विना न किमपि व्यवहरेताम्। तत्रापि महदप्रियकराणि व्यभिचारवेश्यागमनपरपुरुषगमनादिदुष्कर्म्माणि परित्यज्य भार्यया भर्ता भर्त्रा च भार्या सर्वदैव सुप्रसन्नौ भवेताम्।

ब्राह्मणवर्णस्थः पुमान् बालान् सुशिक्षिताङ्गना च कन्या अध्यापयेत् नानाविधोपदेशव्याख्यानैस्तान् विदुषः सम्पादयेताम्। स्त्रीणां भर्तैव पूज्यो देवः। पुरुषस्यापि भार्यैव पूजनीया समादरणीयेति यावत्। अन्तेवासिन आगुरुकुलवासमध्यापकानेव जननीजनकानिव मन्येरन् अध्यापकाश्च शिष्यानपत्यानीव मन्येरन् अध्यापयितारोऽध्यापका अध्यापिकाश्च कीदृशाः भवेयुः अत्राह—

**आत्मज्ञानं समारम्भस्तितिक्षा धर्मनित्यता।**
**यमर्था नापकर्षन्ति स वै पण्डित उच्यते ॥१॥**
**निषेवते प्रशस्तानि निन्दितानि न सेवते।**
**अनास्तिकः श्रद्दधान एतत्पण्डितलक्षणम् ॥२॥**
**क्षिप्रं विजानाति चिरं शृणोति, विज्ञाय चार्थं भजते न कामात्।**
**नासम्पृष्टो ह्युपयुङ्क्ते परार्थे, तत्प्रज्ञानं प्रथमं पण्डितस्य ॥३॥**
**नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम्।**
**आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ॥४॥**
**प्रवृत्तवाक् चित्रकथ ऊहवान् प्रतिभानवान्।**
**आशु ग्रन्थस्य वक्ता च यः स पण्डित उच्यते ॥५॥**
**श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा।**
**असम्भिन्नार्यमर्यादः पण्डिताख्यां लभेत सः ॥६॥**

पद्यानीमानि महाभारते उद्योगपर्वान्तर्गतविदुरप्रजागरस्य त्रयस्त्रिंशेऽध्याये विद्यन्ते।

(आत्मज्ञानं) आत्मज्ञानी (समारम्भः) सम्यक् आरम्भो यस्य स अर्थात् यो निश्चेष्टोऽलसो नावतिष्ठत इति यावत् न कदापि निरर्थकं कालं यापयति (तितिक्षा) सुखदुःखहानिलाभमानापमाननिन्दास्तुतिषु हर्षशोकौ न कुर्वीत (धर्मनित्यता) धर्म एव नित्यं रमेत इति यावत् (यम०) यस्य मनः लौकिका दीप्तिमन्त उत्तमोत्तमविषयसम्बन्धिनः पदार्थाः नापहरेयुः स एव पण्डित उच्यते ॥१॥

सर्वदा धर्म्यकर्मणां परिसेवनम्, अधर्म्याणाञ्च परित्यागः, ईश्वरवेदसत्याचाराणामनिन्दनम्, परमेश्वरादिषु श्रद्धातिशयश्च पण्डितस्य कर्तव्यानि ॥२॥

यो गूढार्थमपि विषयमनायासेनैवावबुध्येत चिरं शास्त्राण्यधीयीत श्रूयात् विचिन्तयेच्च अवगतार्थं परोपकारे प्रयुञ्जीत, स्वार्थवशः किमपि कार्यं नानुतिष्ठेत्, अपृष्टोऽनवसरे वा परार्थे सम्मतिं न प्रयच्छेत्—तदेतत् पण्डितस्य प्रथमं प्रज्ञानं लक्षणम् ॥३॥

प्राप्तुमनर्हमर्थं नाभिलषति नष्टं वा न शोचति आपत्स्वपि न मुह्यति व्याकुलायते किंकर्तव्यतां न प्रजहाति स एव बुद्धिमान् पण्डितः ॥४॥

यस्य वाक् विचित्रा सर्वविद्यासु प्रश्नोत्तरेषु चातिनिपुणा, दुरूहशास्त्र-प्रकरणानां प्रोक्ता तर्कविद्यायां सुविशारदः स्मृतिमान् यश्च ग्रन्थार्थान् अनायासेन व्याकरोति स एव पण्डित उच्यते ॥५॥

यस्य प्रज्ञा श्रुतं सत्यार्थमनुवर्तते श्रवणञ्च बुद्धिमनुसरति यश्च कदा-प्यार्याणां साधुधार्मिकजनानां मर्यादां नोल्लङ्घयति स एव पण्डिताख्यां लभते ॥६॥

यत्रैतादृशाः पुमाँसः स्त्रियो वाध्यापयन्ति तत्रैव विद्याधर्मयोः सदा-चारस्य च प्रवर्धमानतया प्रत्यहमानन्दः संवर्द्धते ।

अध्ययनेऽसमर्थानां मूर्खाणाञ्च लक्षणम्—

**अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः ।**
**अर्थांश्चाऽकर्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः ॥१॥**
**अनाहूतः प्रविशति ह्यपृष्टो बहु भाषते ।**
**अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥२॥**

इमावपि श्लोकौ महाभारत उद्योगपर्वान्तर्गतविदुरप्रजागरस्य त्रयस्त्रिंशेऽध्याये विद्येते ।

अनधीतश्रुतशास्त्रो नितरामभिमन्ता दरिद्रोऽपि य उग्राभिलाषसंयुक्तः यश्चाकर्मणैव पदार्थान् काङ्क्षते बुद्धिमद्भिः स मूढ इत्युच्यते ॥१॥

सभां कस्यचिद् गृहं वा अनाहूतः प्रविशति, उत्तमासनमध्यास्तुं वाञ्छति, अपृष्टः सभादिषु बहु जल्पति, विश्वासानर्हेऽपि वस्तुनि मनुष्ये वा विश्वसिति स एव मूर्खो मनुष्येषु नीचतमो नराधमश्च ॥२॥

यत्रैतादृशा जना अध्यापकाः, उपदेशका गुरवः सम्मान्या वा भवन्ति तत्रैवाविद्याधर्मासभ्यताकलहविरोधविभेदाः प्रवर्धमाना दुःखानि प्रवर्धयन्ति ।

## विद्यार्थिनां लक्षणानि

**आलस्यं मदमोहौ च चापलं गोष्ठिरेव च ।**
**स्तब्धता चाभिमानित्वं तथाऽत्यागित्वमेव च ।**
**एते वै सप्त दोषाः स्युः सदा विद्यार्थिनां मताः ॥**

**सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम् ।**
**सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा त्यजेत्सुखम् ।।**

एतेऽपि विदुरप्रजागरस्य चत्वारिंशतोऽध्यायस्य श्लोका विद्यन्ते ।

(आलस्यं) बुद्धिदेहयोर्जाड्यम्, (मदः) क्षैव्यम्, (मोहः) कस्मिंश्चित् वस्तुन्यासक्तिः, (चापलम्) अनवस्थितिश्चापल्यम्, (गोष्ठिः) असम्बद्धकथानां कथनश्रवणे, (स्तब्धता) अध्ययनप्रमादः, अभिमानित्वम्, अत्यागित्वञ्च एते सप्तदोषाः छात्रेषु सम्भवन्ति । एतादृशा न जातु विद्यामधिगच्छन्ति ।।१।।

सुखमधिगन्तुकामानां कुतो विद्याधिगमः, विद्याभिलाषुकाणां वा कुतः सुखम् । विषयानुपभोक्तुकामो विद्यां, अध्येतुकामश्च विषयान् दूरतः परित्यजेत् ।।२।। इत्थं विना न कर्हिचिद्विद्या लभ्यते ।

**सत्ये रतानां सततं दान्तानामूर्ध्वरेतसाम् ।**
**ब्रह्मचर्यं दहेद्राजन् सर्वपापान्युपासितम् ।।**

ये वै सर्वदा सदाचारप्रवृत्ता जितेन्द्रिया न कदापि स्खलितवीर्या मानवास्तेषामेव ब्रह्मचर्यं यथार्थं त एव च विद्वाँसो भवन्ति ।

अतो गुरुभिरन्तेवासिभिश्च शुभलक्षणान्वितैर्भवितव्यम् । अध्यापकाश्च तथा प्रयतेरन् यथान्तेवासिनः सत्यवाचस्सत्यमन्तारस्सत्यस्यैव कर्तारः सभ्यता-जितेन्द्रियता-सुशीलतादिशुभगुणान्विताः सन्तः शरीरात्मनोर्बलं लब्ध्वा सकलवेदादिसच्छास्त्रविदो भवेयुः । गुरवः सर्वदैव स्वान्तेवासिनां दुःस्वभावापनयने विद्याध्यापने च प्रयतेरन् । येन छात्राः सर्वदा जितेन्द्रियाः शान्ताः सतीर्थ्येषु स्नेहवन्तः विचारशीलाश्च सन्तः सकलविद्यां पूर्णमायुः सर्वधर्मांश्च समधिगम्य पुरुषार्थिनो भवेयुः । ब्राह्मणवर्णस्थानामिमानि कर्माणि । क्षत्रियाणां कर्माणि राजधर्मे प्रवक्ष्यामः । सब्रह्मचर्य्यमधीत्य वेदादिविद्यां परिणीय चात्मानं सर्वदेशभाषाविज्ञानम्, नानाविधव्यापारपद्धतिपरिचयः, पदार्थानामर्थाधिगमः, क्रयविक्रयौ, द्वीपद्वीपान्तरेषु गमागमौ, लाभार्थं कर्मसमारम्भः, पशुपालनम्, चातुर्येण कृषिसमुन्नयनम्, धनोपार्जनम्, विद्याधर्मयोरुन्नतौ तद्व्ययः, सत्यवादिना कपटशून्येन सता सत्यतयैव सर्वव्यवहारानुष्ठानम्, वस्तूनाञ्च तथा संरक्षणं येन किमपि न विनश्येत् । इमानि वैश्यानां कर्माणि । शूद्रोऽपि सर्वविधसेवासु चातुर्यमधिगम्य प्राप्य च पाकविद्यासु नैपुण्यं प्रेम्णा द्विजानुपसेवेत । द्विजैरप्यस्यान्नपानवस्त्रस्थानविवाहादिकार्येषु सर्वव्ययः प्रदातव्यः । मासिकं वास्य वर्तनं निर्धारयेयुः ।

चत्वारो वर्णाः मिथः प्रीतिपूर्वकमन्योन्योपकारसौजन्यसुखदुःखहानिलाभादिष्वैकमत्येन राष्ट्रप्रजयोः समुन्नतौ देहमनोवित्तानि संव्ययेरन् ।

स्त्रीपुरुषयोर्वियोगो न कर्हिचिद्भवेत् । यतोहि—

**पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् ।**
**स्वप्नोऽन्यगेहवासश्च नारीसन्दूषणानि षट् ॥**

—मनु० ९।१३

मद्यविजयादिमादकद्रव्याणां पानम्, असत्पुरुषसंसर्गः, भर्त्रा सह विरहः, एकाकिन्या धूर्तपुरुषादिदर्शनमिषेणेतस्ततः परिभ्रमणम्, परगृहे शयनं निवासो वा इमे दुर्गुणाः स्त्रियं दूषयन्ति । पुरुषानपीमे सन्दूषयन्ति ।

द्विविधः खलु दम्पत्योर्वियोगः--क्वचित् कार्यार्थं देशान्तरेषु गमनं **प्रथमः**। मरणजनितवियोगश्च **द्वितीयः**। तत्र यात्रार्थं जनपदान्तरं गन्तुकामेन स्वभार्यापि सह नेतव्येत्याद्यस्योपायः । येन तयोश्चिरं विप्रयोगो न भवेदित्येवाभिप्रायः।

**प्र०**—स्त्रीपुरुषयोर्बहुविवाहाः समुचिता न वा ?

**उ०**—युगपद् न—एकस्मिन् समये नोचिताः ।

**प्र०**—अपि समयभेदेनानेके विवाहाः सम्भवन्ति ?

**उ०**—आम्, तथा हि—

**सा चेदक्षतयोनिः स्याद्गतप्रत्यागतापि वा ।**
**पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति ॥**

—मनु० ९।१७६

पाणिग्रहणमात्रजातसंस्कारयोः, असंभुक्तयोः—अक्षतयोनेः स्त्रियाः, अक्षतवीर्यस्य च पुरुषस्येति यावत् पुरुषान्तरेण स्त्र्यन्तरेण वा सह पुनर्विवाहः सम्भवति । परं ब्राह्मणक्षत्रियवैश्यवर्णेषु क्षतयोनेरङ्गनायाः क्षतवीर्यस्य च पुंसः पुनर्विवाहो न प्रशस्यते ।

**प्र०**—ननु पुनर्विवाहे के दोषाः ?

**उ०**—स्त्रीपुरुषयोरनुरागस्य न्यूनता **प्रथमः**। यतो हि तौ यथेच्छमन्योन्यं परित्यज्यान्येन सह सम्बन्धमुपैष्यतः । दम्पत्योरन्यतरस्य मरणेऽन्येन परिणयान्तरं कर्तुमिच्छेत्तदा प्रथमभर्तुर्भार्याया वा पदार्थापहरणम्, तद्वंश्यानाञ्च ताभ्यां सह विवादो **द्वितीयः**। बहूनां भद्रकुलानां नाम्नो चिह्नस्याप्यनवशेषतया तत्पदार्थप्रणाशः **तृतीयः**। पतिव्रतभार्याव्रतधर्मयोर्विनाश**श्चतुर्थः**। इत्यादिदोषैर्द्विजेषु पुनर्विवाहो बहुविवाहो वा न विहितः ।

**प्र०**—स्यादेतत्—वंशच्छेदेऽपि विनंक्ष्यत्येव तत्कुलम्, पुमांसो योषितश्च व्यभिचारादिषु प्रवृत्ता गर्भपातनादिदुष्कर्माणि विधास्यन्त्यतः पुनर्विवाहः प्रशस्यते ।

**उ०**—नहि, नहि । यदि स्त्रियः पुमांसो वा ब्रह्मचर्य्येणैव जीवनं व्यत्यापयितुमभिलषेयुस्तदा न किमपि दूषणं भविष्यत्यपि च कुलपरम्पराविनाशाय समानजातीयं कमपि दत्त्रिमं पुत्रं परिगृह्णीयुः तेन कुलमपि नैष्यति

नाशम्, नापि व्यभिचारो भविष्यति। ब्रह्मचर्य्येणावस्थातुमनीशैस्तु नियोगविधिना सन्ततिः समुत्पादनीया।

प्र०—पुनर्विवाहे नियोगे वा को भेदः ?

उ०—१. परिणयानन्तरं कुमार्यात्मनो जनकस्य गृहं परित्यज्य भर्तुर्गृहमासादयति पित्रा च कश्चन विशेषेण सम्बन्धो नावशिष्यते (नियोगे तु) विधवा पुनस्तस्यैवोद्वोढुर्भर्तुर्गृहे निवसति।

२. पाणिगृहीतभार्याया अपत्यानि विवाहितस्यैव पत्युर्दायभागिनो भवन्ति, विधवायाः पुनरपत्यानि रेतस्सेक्तुरपत्यत्वेन न परिगण्यन्ते नापि तेषां तद्गोत्रं भवति तस्य किञ्चित् सत्त्वमपि तेषु नावतिष्ठते। अपि तु मृतस्यैव भर्तुः पुत्राः परिगण्यन्ते गोत्रमपि तस्यैवोपलभन्ते तस्यैव धनस्य रिक्थभागिनः सन्तस्तद्गृहे निवसन्ति।

३. परिणीतयोः स्त्रीपुरुषयोरन्योन्यशुश्रूषणं पालनञ्चावश्यकं नियुक्तयोस्तु तयोः सर्वेऽपि सम्बन्धा विच्छिद्यन्ते।

४. विवाहितस्त्रीपुरुषयोः सम्बन्धो यावज्जीवनमवतिष्ठते नियुक्तयोः पुनः व्यत्येति कार्यानन्तरम्।

५. परिणीतौ स्त्रीपुंसौ एकगृहकार्यसिद्ध्यर्थं प्रयतेते नियुक्तौ तु स्वस्वगृहकार्यमनुतिष्ठतः।

प्र०—विवाहनियोगयोर्नियमाः समाना एव उत विभिन्नाः ?

उ०—सन्त्यल्पीयांसो भेदास्तेषु केचनानुपदमेव विनिर्दिष्टाः कियन्तश्चात्र निर्दिश्यन्ते—

विवाहितौ स्त्रीपुरुषौ—कृतोपयमः एक एव पतिः एका एव च भार्या सम्भूय सन्तानदशकं समुत्पादयितुमर्हतः। नियुक्तौ पुनः स्त्रीपुंसौ द्वे चतस्रो वा सन्ततीरुत्पादयितुं शक्नुतः नातोधिकाः।

कुमारयोरुद्वाह इव नियोगोऽपि मृतपतिभार्ययोरेव स्त्रीपुरुषयोः प्रशस्यते नत्वनूढयोः।

विवाहितस्त्रीपुरुषौ सर्वदा सहैव निवसतस्तथा नार्हतो नियुक्तौ सह वस्तुम्।

ऋतुदानादृते तौ सङ्गतौ न भवेताम्। यदि हि नामाङ्गनात्मार्थं नियोगमाचरेत् तर्हि द्वितीयगर्भस्थितिसमनन्तरं व्यपैतु स्त्रीपुरुषयोः सम्बन्धः। पुरुषोऽपि यद्यात्मनः कृते नियोगमनुतिष्ठेत्तदापि द्वितीयगर्भस्थितिसमनन्तरं सम्बन्धो विच्छिद्येत, परं नियुक्तैव योषित् वर्षद्वयं वर्षत्रयं वा परिपाल्य तनयान् नियुक्तमनुजाय प्रयच्छेत्। इत्थं विगतभर्तृकैकाबला द्वावात्मनः कृते द्वौ द्वौ चान्यनियुक्तपुरुषचतुष्टयस्य कृते तनयान् जनयितुमर्हति। एवं

मृतदारः पुमानप्यात्मकृते द्वौ, द्वौ द्वौ चान्यविधवार्थं पुत्रान् प्रदातुमर्हति। तदेवं मिलित्वा दश सन्तानानुत्पादयितुमादिशति वेदः—

**इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु।**
**दशास्यां पुत्राना धेहि पतिमेकादशं कृधि॥**

—ऋ० मं० १०। सू० ८५। मं० ४५

हे (मीढ्व इन्द्र) वीर्यसिञ्चनसमर्थ! ऐश्वर्यसम्पन्न! पुरुष! त्वमिमां कृतोऽयमां भार्यां विधवायोषितं वा प्रशस्तपुत्रां सौभाग्यवतीञ्च विधेहि, विवाहितपत्न्यां जनय दशपुत्रान्, भार्याञ्च विद्धि एकादशीम् (स्वात्मनः कुटुम्बस्य परिगणने) हे स्त्रि! त्वमपि पाणिग्राहकात् नियुक्ताद्वा पुरुषादपत्यदशकं समुत्पाद्य पतिमेकादशं विजानीहि।

वेदस्याज्ञयानया ब्राह्मणक्षत्रियवैश्यवर्णस्थाः स्त्रियः पुमांसो वा सन्तानदशकान्नाधिकं जनयेयुर्यत आधिक्येन निर्बलानि निर्बुद्धीनि अल्पायूंषि चापत्यानि भवन्ति। योषितः पुरुषा अपि निर्बला अल्पायुषो व्याधिनिपीडिताश्च सन्तो वार्धके बहूनि दुःखानि प्राप्नुवन्ति।

**प्र०**—व्यभिचारसन्निभः खल्वयं नियोगः संलक्ष्यते?

**उ०**—अनूढयोः पुरुषयोषितोरिवानियुक्तयोरेव समागमः व्यभिचारः। अनेन यथा सनियमं कृतोद्वाहो व्यभिचारो नाख्यायते तथैव नियमपूर्वकमनुष्ठितो नियोगोऽपि व्यभिचारो नाख्यास्यते। अन्यस्य दुहितुः कुमारान्तरेण सह शास्त्रोक्तविधिपूर्वकं विवाहेन समागम इव वेदप्रतिपादितनियोगेऽपि व्यभिचारः पापं लज्जा वा न मन्तव्या।

**प्र०**—ननु यथार्थोऽप्येष वेश्यासमागम इव संलक्ष्यते?

**उ०**—नहि, वाराङ्गनासमागमे न भवति कश्चिन्निश्चितः पुमान् नापि नियमस्तादृशः, नियोगस्य तूद्वाहसदृशा नियमा वर्तन्ते। यथान्यस्मै दुहितुः प्रदाने समुद्वाह्य वा समागमे न भवति लज्जा तथैव नियोगेऽपि न भवितव्या लज्जा। किं व्यभिचारिण्यो नार्यः पुमाँसो वा परिणीयापि प्रतिनिवर्तन्ते कुकर्मणः?

**प्र०**—नियोगेऽस्मिन् पापमिवाभिलक्ष्यते?

**उ०**—नियोगे चेत्पापमभ्युपेथ कथन्नोररीकुरुथ परिणयेऽपि पापम्, पापं तु नियोगस्यावरोध एव; यतः वैराग्यवतः पूर्णविदुषो योगिनो विनाऽन्ये सृष्टिक्रमानुकूलं स्त्रीपुरुषयोः स्वाभाविकव्यवहारं रोद्धुं न शक्नुवन्ति।

गर्भपातनरूपां भ्रूणहत्यां विगतभर्तृकाया योषितो मृतपत्नीकस्य च पुरुषस्य मानसं सन्तापज्वरमपि न गणयथ पापम्? मानसे सन्तानोत्पत्ति कामयमानानां विषयाभिलाषिणां यूनां वा राष्ट्रजातिनियमस्य प्रतिबन्धक-

तया प्रतिषिद्धवर्त्मना प्रवर्तन्ते प्रच्छन्नकर्माणि। जितेन्द्रियतयावस्थानमेवास्मात् व्यभिचारात् कुकर्मणः प्रतिनिवर्तितुं श्रेयानुपायः। जितेन्द्रियैर्विवाहनियोगयोरननुष्ठानमपि वरम्, परमवशेन्द्रियाणां परिणय आपत्काले नियोगश्चापि परमावश्यकः। अनेन हि व्यभिचारस्य न्यूनता, प्रेम्णोत्तमसन्तानसद्भावेन मनुष्याणां वृद्धिश्च सम्भवति, गर्भहत्या चापि सर्वथा विमुक्ता भवति। सद्वंशप्रसूताङ्गनानामधमजनैर्वेश्याद्यधमाङ्गनाभिः सत्पुरुषाणां व्यभिचाररूपो दुराचारः सत्कुलकलङ्को वंशसमुच्छेदः स्त्रीपुरुषयोस्संतापः गर्भहत्यादिदुष्कर्मजातञ्च विवाहनियोगाभ्यां निवर्तन्ते तस्मान्नियोगोऽनुष्ठेयः।

प्र०—ननु का पद्धतिर्नियोगस्य ?

उ०—(१) उद्वाह इव नियोगोऽपि प्राकाश्येन कर्तव्यः।

(२) यथा च खलु भवति परिणये भद्रपुरुषाणामनुमतिर्वरकन्ययोश्च सम्प्रसादः। तथैव नियोगेऽपि भवितव्यमर्थात् स्त्रीपुरुषयोर्नियोगानुष्ठानकाले "सन्तानोत्पत्त्यै नियोगमाचरावः, सम्पन्ने नियोगविधौ न कदापि संयुक्तौ भविष्यावः, इतरथा पापिनौ समाजराष्ट्रयोर्दण्ड्यौ भवेव, सकृदेव मासि गर्भमाधास्यावः, गर्भस्थितौ च यावदब्दं ब्रह्मचर्य्येण स्थास्यावः" इति नियोक्तुकामाभ्यां स्त्रीपुरुषाभ्यां स्वकुटुम्बिनां समक्षे प्रकाशयितव्यम्।

प्र०—आत्मवर्ण एव नियोगः कर्तव्यो वर्णान्तरेष्वपि वा ?

उ०—आत्मनो वर्णे स्वोत्तमवर्णस्थेन वा पुरुषेण सह नियोगः कर्तुं शक्यते तथा च वैश्याङ्गनाविड्राजन्यविप्रैः, क्षत्रिया क्षत्रियब्राह्मणाभ्यां, ब्राह्मणी च विप्रेणैव नियोगमनुतिष्ठेत्। अस्येदं तात्पर्यम्—यत् शुक्रं योषितः समानजातीयस्योत्तमस्य पुरुषस्य वा भवेन्नतु स्वतो निकृष्टस्येति। धर्मेण वैदिकवर्त्मना परिणयेन नियोगेन वा सन्तानोत्पत्तिरेव स्त्रीपुरुषयोर्निर्माणफलम्।

प्र०—पुनर्विवाहमनुष्ठातुं क्षमो मानवो नियोगं किमर्थमाचरेत् ?

उ०—द्विजेषु स्त्रीपुरुषयोः सकृदेव परिणय वेदादिशास्त्रसम्मत इति पुरस्तादेव प्रत्यपादि अस्माभिः। कुमारकुमार्योरेव परिणयो न्यायः। विधवया कुमारस्य, कन्यया च मृतपत्नीकस्य पुंसो विवाहोऽन्यायोऽधर्मश्च। यथा च पुमान् विधवां परिणेतुं नाभिलषति तथैव कुमार्य्यपि कृतोद्वाहं भुक्ताङ्गनं वा पुमांसमुपयन्तुं नाभिलषिष्यति। यदा च कापि कुमारी कृतोद्वाहं विधवाञ्चापि कश्चित् कुमारो नोपयंस्यति तदा स्त्रीपुरुषयोर्नियोग एवावश्यकः सम्पद्यते। अयमेव च धर्मो यत्समानयोरेव सम्बन्ध इति।

प्र०—वेदादिशास्त्राणां विवाह इव नियोगेऽपि प्रमाणानि सन्ति न वा ?

उ०—सन्ति बहून्यत्र प्रमाणानि—

कुहं स्विद्दोषा कुह वस्तोरश्विना कुहाभिपित्वं करतः कुहोषतुः।
को वां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ ॥

—ऋ० मं० १० । सू० ४० । मं० २

उदीर्ष्व नार्यभि जीवलोकं गतासुमेतमुप शेष एहिं ।
हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभि सं बभूथ ॥

—ऋ० मं० १० । सू० १८ । मं० ८

(१) (हे अश्विना) स्त्रीपुरुषौ ! यथा (देवरं विधवेव) विगतभर्तृका देवरेण (योषा मर्यन्न) भर्त्रा चोढाहिता योषित् (सधस्थे) समानस्थाने शय्यायां सम्भूय सन्ततीः (आकृणुते) सर्वतो भावेन समुत्पादयति तथैव युवां (कुहस्विद्दोषा) कुत्र नक्तं (कुह वस्तः) कुत्र च दिवा अवसतम् (कुहाभिपित्वं करतः) कुत्र पदार्थान् प्राप्नुतम् (कुहोषतुः) क्व च कदावात्तम् ? (को वां शयुत्रा) कुत्र युवयोः शयनस्थानम् ? किं देशवास्तव्यौ युवाम् । एतेन देशान्तरेष्वपि स्त्रीपुंसौ सहैव वसेतां पाणिग्राहकेणेव नियुक्तेनापि भर्त्रा विधवाङ्गना सन्तानमुत्पादयेदिति च सिद्धयति ।

प्र०—ननु अविद्यमाने भर्तुः कनीयसि सहोदरे केन विधवा नियोगमाचरेत् ?

उ०—देवरेण सह, परं नास्ति भवदभिमतो देवरशब्दार्थः तथा च निरुक्तम्—

**देवरः कस्मात् द्वितीयो वर उच्यते ।** —निरु० १ । अ० ३। खं० १५

विधवाया द्वितीयः पतिर्देवर उच्यते । स हि भर्तुः कनीयान् ज्यायान् वा सगर्भ्यः स्ववर्णस्थः स्वोत्तमवर्णस्थो वा भवेत् । **देवर** इति नियोक्तुर्नाम ।

(२) (नारि) विधवे ! (एतं गतासुं) परासोरस्य भर्तुराशां विहाय (शेषे) अवशिष्टेषु पुरुषेषु (अधिजीव०) जीवन्तमन्यं पतिं (उपैहि) प्राप्नुहि । परं (उदीर्ष्व) विचारय निश्चिनुहि चैतत् (हस्तग्राभस्य दिधिषोः) विधवायास्तव पुनः पाणिग्राहकस्य नियुक्तभर्तुर्लाभार्थमनुष्ठितेनानेन नियोगेन (जनित्वम्) समुत्पन्नः शिशुः तस्यैव नियुक्तपतेर्भविष्यति अथ चेत्त्वमात्महिताय नियोगमनुष्ठास्यसि तर्हि तदपत्यं तवैव भविष्यति । (इत्थमभिसंबभूथ) मनस्येवं विनिश्चिनुहि । नियुक्तः पुमानपि नियममिममनुसरेत् ।

अदेवृघ्न्यपतिघ्नीहैधि शिवा पशुभ्यः सुयमाः सुवर्चाः ।
प्रजावती वीरसूर्देवृकामा स्योनेममग्निं गार्हपत्यं सपर्य ॥

—अथर्व० कां० १४ । अनु० २ । मं० १८

हे (अपतिघ्न्यदेवृघ्नि) भर्तुर्देवरस्य चाव्यथनशीले ! (इह) अस्मिन् गृहाश्रमे (पशुभ्यः) गवादिपशुभ्यः (शिवा) कल्याणवर्तिनी (सुयमाः) धर्मनियमपथारूढा (सुवर्चाः) रूपवतीसकलशास्त्रविद्यासम्पन्ना च (प्रजावती) पुत्रपौत्रादिमती (वीरसूः) वीरतनयानां जननी (देवृकामा) कामयमाना देवरं (स्योना) सुखप्रदा च सती त्वं भर्तारं देवरं वा प्राप्य इमं गार्हपत्यमग्निं (सपर्य) सेवस्व ।

**तामनेन विधानेन निजो विन्देत देवरः ।**—मनु० ९।६९

अक्षतयोनिमङ्गनां विधवां सतीं भर्तुः कनीयान् सहोदरोऽपि शक्नोति परिणेतुम् ।

**प्र०**—एकः पुमान् योषिद्वा कतिकृत्वो नियोगमनुष्ठातुमर्हति कानि चोपयन्तृनियुक्तपतीनां नामानि ?

**सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ।**
**तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥**

—ऋ० मं० १० । सू० ८५ । म० ४०

**उ०**—अयि योषे ! यस्त्वां प्रथमं (विविदे) विवाहितः पतिः प्राप्नोति स सौकुमार्यादिगुणयुक्तत्वात् **सोमसंज्ञो** भवति (गन्धर्वो वि०) यस्तु उत्तरो द्वितीयो नियुक्तः पतिः विधवां त्वां विविदे प्राप्नोति स भोगाभिज्ञत्वात् **गन्धर्वसंज्ञां** लभते (तृतीयोऽग्नि०) येन सह त्वं तृतीयवारं नियोगं करोषि स अत्युष्णतायुक्ततयाग्निसंज्ञो जायते (तुरीयस्ते य०) हे स्त्रि ! चतुर्थमारभ्यैकादशपर्यन्तास्तव पतयः साधारणबलवीर्यत्वात् **मनुष्यनामानो** भवन्ति ।

**(इमां त्व०)** इत्यादिमन्त्रेण एकादशपुरुषपर्यन्तं योषेव पुरुषोप्येकादशनारीपर्यन्तं नियोगं कर्तुमर्हति ।

**प्र०**—एकादशशब्देन दशपुत्रानेकादशञ्च भर्तारं कथन्न गृह्णीमः ?

**उ०**—भवत्प्रतिपादितोऽयमर्थः **"विधवेव देवरम्"**—**"देवरः कस्मात् द्वितीयो वर उच्यते"** **"अदेवृघ्नि"** **"गन्धर्वो विविद उत्तरः"** इत्यादिवैदिकप्रमाणैर्विरुद्धचते । युष्मद्व्याख्यानेन हि द्वितीयोऽपि भर्ता नानुज्ञायते ।

**देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ् नियुक्तया ।**
**प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये ॥१॥**
**ज्येष्ठो यवीयसो भार्य्यां यवीयान्वाग्रजस्त्रियम् ।**
**पतितौ भवतो गत्वा नियुक्तावप्यनापदि ॥२॥**
**औरसः क्षेत्रजश्चैव ॥३॥** —मनु० ९।५९,५८,१५९

इत्यादिषु मनुना प्रतिपादितं यत् सपिण्डेन—भर्तुः षड्वंशश्रेणिसमुद्भवेन पत्युर्यवीयसा अग्रजेन वा सोदरेण स्वोत्तमवर्णस्थेन वा पुरुषेण सह

विधवाया नियोगो विधेयः। परमयं नियोगो नितरां सन्तानस्य परिक्षये सन्तानोत्पत्तिमभिलषतोरेव मृतपतिपत्नीकयोः पुंयोषितोः समुचितः। आपदि-सन्तानकामनायां ज्येष्ठेन यवीयसो भार्यायां यवीयसा चाग्रजस्त्रियां नियोग-विधिना समुत्पादितेष्वपत्येषु पुनर्मिथः संगतौ नियुक्तौ पतितौ भवेताम्।

एकस्मिन्नियोगे आद्वितीयगर्भस्थितिं तदवधिः। तदनन्तरं तौ मिथो न सङ्गच्छेताम्। उभयार्थे तु नियोगे चतुर्थगर्भो नियोगावधिः। अन्ततः पूर्वोक्त-दिशा सन्तानदशकं समुत्पादयितुं शक्यते। अतोऽधिकः समागमो विषयासक्तिः परिगण्यते पतितौ च भवतः। कृतोद्वाहा अपि नरनार्यो दशमगर्भादपि परतः संगम्यमानाः कामिनो निन्द्याश्च भवन्ति। यतः केवलं प्रजार्थमेव विवाह-नियोगावनुष्ठीयेते नतु पशुवत्कामकेलिकरणाय।

प्र०—अपि नियोगो भर्तर्युपरत एव भवत्याहोस्विद् विद्यमानेऽपि ?

उ०—भवति विद्यमानेऽपि भर्तरि।

**अ॒न्यमि॑च्छस्व सुभगे॒ पतिं॒ मत् ॥**

—ऋ० मं० १०। सू० १०। मं० १०

सन्तानोत्पादनासमर्थो भर्ता भार्यामादिशेत्—

हे सुभगे ! सौभाग्याभिलाषिणि भार्ये ! त्वं (मत्) मत्तः (अन्यत्) भर्त्रन्तरम् (इच्छस्व) कामयस्व यतो नितरामक्षमोऽस्मि साम्प्रतमपत्यजनने। भार्यापि तदानीं नियोगविधिना पुरुषान्तरेण जनयेदपत्यं, परं विवाहितं पतिं यथापूर्वं शुश्रूषेत।

एवं भार्यापि रोगादिदोषैरभिभूता सन्तानोत्पादनाक्षमा सती "अयि स्वामिन् ! परिहाय मत्तः सन्तानोत्पादकामनां कयाचित् विधवया नियोग-विधिना अपत्यानि जनयेति" भर्तारमनुजानीयात्। एवमेव राज्ञः पाण्डो-र्महिषी कुन्ती माद्रयाद्याश्च समाचरन्। किञ्च व्यासमुनिरपि उपरतयोः चित्राङ्गदविचित्रवीर्ययोः स्वभ्रातृस्त्रीषु नियोगविधिनाम्बिकायां धृतराष्ट्रं अम्बालिकायां पाण्डुं परिचारिकायां विदुरं च जनयामास। इत्याद्यैतिह्य-मप्यत्र प्रमाणम्।

**प्रोषितो धर्मकार्यार्थं प्रतीक्ष्योऽष्टौ नरः समाः।**
**विद्यार्थं षड् यशोर्थं वा कामार्थं त्रींस्तु वत्सरान् ॥**
**वन्ध्याष्टमेऽधिवेद्याब्दे दशमे तु मृतप्रजा।**
**एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥**

—मनु० ९।७६,८१

विवाहिता पत्नी धर्मार्थं प्रोषितं देशान्तरगतं भर्तारमष्टौ वर्षाणि, विद्यायशोभ्यां षड् वर्षाणि, धनादिकामनया च तिस्रः समाः, प्रतीक्ष्य परस्तात्

नियोगविधिना जनयेदपत्यानि। प्रवासात् प्रतिनिवृत्ते पुनर्विवाहिते भर्तरि नियुक्तपतिसम्बन्धो विच्छिद्येत ॥१॥ पुरुषपक्षेऽप्येतादृशा एव नियमाः। आविवाहादष्टौ वर्षाणि यावदस्थितगर्भां वन्ध्यामष्टमे वर्षे, मृतप्रजां (यस्या अपत्यानि समुत्पद्य म्रियन्ते) दशमे स्त्रीजननीं कन्याया एवोत्पादिकामेकादशे अप्रियवादिनीं च भार्यां सद्य एव परित्यज्य अन्यया योषिता नियोगपूर्वकं सन्ततीः समुत्पादयेत् ॥२॥

एवं योषिदपि प्रविहाय क्लेशप्रदं भर्तारं पुरुषान्तरनियोगेन समुत्पाद्य सन्तानान् विवाहितस्यैव पत्युर्दायभागिनः कुर्यात्। इत्यादीनि प्रमाणानि युक्तयश्च विवाहनियोगयोर्वर्तन्ते। यथा औरसा विवाहितभर्त्तुः समुत्पन्नास्तनयाः पितुः पदार्थानां स्वामिनो भवन्ति तथैव क्षेत्रजा नियोगोत्पन्ना अपि पुत्रा मृतपितुर्दायभगिनो भवन्ति।

अमूल्ये खलु शुक्ररजसीति पुमांसो योषितश्च विजानीयुः। ये अमूल्यं पदार्थमिमं परयोषिति वेश्यायां दुरात्मनां वा संसर्गे विनाशयन्ति त एव महामूर्खा भवन्ति। जडधियोऽपि मालाकारकृषीवलाः स्वक्षेत्रादारामाद्वान्यत्र बीजानि न वपन्ते। मूर्खाणां सामान्यबीजेष्वप्येतादृशव्यवहारं पश्यन्नपि यो नाम सर्वोत्तममानवदेहतरोर्बीजानि कुक्षेत्रेषु वपते स महामूर्खः। नहि तत्फलं तेनाधिगम्यते। अत्र स्त्रीपुरुषाभ्यामवधातव्यम्। अपि च—**"आत्मा वै जायते पुत्रः"** इति ब्राह्मणेष्वाम्नायते—

**अङ्गा॑दङ्गा॒त्सम्भ॑वसि॒ हृद॑या॒दधि॑जायसे।**
**आ॒त्मासि॑ पु॒त्र॒मा॒मृ॒थाः स जीव॒ श॒रद॑ः श॒तम्॥**

—इदं सामवेदस्य ब्राह्मणे वचनम्

हे पुत्र ! त्वं प्रत्यङ्गादुत्पन्नवीर्यात् हृदयाच्च संजायसे अतस्त्वं ममान्तरात्मा, मत्तः पूर्वं प्राणान्माहासीः, जीव शरदां शतम्।

येनैतादृशमहात्मनां महाशयानां वा शरीराण्युत्पद्यन्ते तस्यैव वेश्यादिपरक्षेत्रेषु वपनं शुभकेदारेषु वा दुष्टबीजस्य परिवापणं महत्पापम्।

**प्र०**—किमर्थं विवाहोऽनुष्ठेयः। विवाहेन स्त्रीपुरुषौ बन्धनं समासाद्य महद्दुःखमनुभवतोऽतो मिथः संजातानुरागौ यावत्प्रेम सङ्गतौ भवेतां पुनर्विघटितायां सम्प्रीतावन्योन्यं परित्यजेताम्।

**उ०**—पशुपक्षिणामयं व्यवहारो नतु मानवानाम्। यदि हि नाम मानवेषूद्वाहनियमो विच्छिद्येत गृहस्थाश्रमस्य सर्वं एवोत्तमव्यवहारा विलुम्पेयुः, न कोऽपि कमपि वार्धके परिचरेत्। व्यभिचारस्य परिवृद्ध्या सर्व एव मनुजा रोगिणोऽल्पायुषश्च सन्तः स्वल्पकालेन म्रियेरन्, एवञ्च भूयांसि कुलानि विनश्येयुः, न कोऽपि कुतश्चित् बिभीयात् जिह्वेद्वा। कश्चित्

कस्यचिद् पदार्थानां स्वामित्वं दायभागित्वमपि वा नार्हेत्। नापि कस्यचित् कस्मिंश्चिद्वस्तुनि सुदीर्घकालं स्वत्वमवतिष्ठेत। इत्यादिदोषपरिहाराय विवाहपद्धतिरेव सर्वथोचिता।

**प्र०**—स्त्रीपुरुषयोरेकस्मिन्विवाहे एकस्य पुंसः एकैव भार्या योषितश्चैक एव पुमान् पतिर्भविष्यति। तथा चान्तर्वत्न्यां नित्यमामयाक्रान्तायां वा भार्यायां चिरव्याधिना सम्पीडिते वा पुरुषे तरुणावङ्गनापुरुषौ ब्रह्मचर्य्येण स्थातुमशक्नुवन्तौ ननु किं विधत्ताम्?

**उ०**—नियोगविषये समाहितमेतत्। किञ्च ससत्त्वया समं वर्षमेकं समागमाभावदशायां पुरुषः, दीर्घरोगिणः पुंसो जाया च ब्रह्मचर्य्येणावस्थातुमक्षमा केनचिन्मानवेन सह नियोगविधिना तदर्थमपत्यमुत्पादयेत् नतु जात्वपि वेश्यासङ्गं व्यभिचारं वा कुर्वीयाताम्।

यथाशक्यमप्राप्तवस्तुकामना, लब्धस्य परिरक्षणम्, रक्षितस्य वृद्धिर्वर्द्धितस्य च वित्तस्य देशोपकारे व्ययो विधातव्यः। सर्वविधान्—प्रथमप्रतिपादितवर्त्मना निज निज वर्णाश्रमाचारान्—सोत्साहं कायेन, मनसा, धनेन च प्रयत्नपूर्वकं परमार्थमनुतिष्ठेयुः। जननी-जनक-श्वश्रू-श्वशुरान् यथावच्छुश्रूषेयुः। मित्रैः, प्रतिवेशिभिः, विशांपतिभिः, विचक्षणैः, भिषग्भिः, साधुभिश्च प्रीतिपूर्वकं व्यवहरेयुः, दुर्जनैरुपेक्षया, अद्रोहेण तेषां सत्पथप्रवर्तने प्रयत्नमनुतिष्ठेयुः। यथासम्भवञ्च प्रेम्णा स्वापत्यानि यथायथं धनादिव्ययेनापि विद्यासुशिक्षां लभयेयुः। धर्मव्यवहारपूर्वकं मोक्षसाधनान्यनुष्ठाय परमानन्दमुपभुञ्जीरन्। वक्ष्यमाणश्लोकान् कदाचिदपि न स्वीकुर्य्युः।

**पतितोऽपि द्विजः श्रेष्ठो न च शूद्रो जितेन्द्रियः।**
**निर्दुग्धा चापि गौः पूज्या न च दुग्धवती खरी॥१॥**
**अश्वालम्भं गवालम्भं संन्यासं पलपैतृकम्।**
**देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्॥२॥**
**नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ।**
**पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते॥३॥**

इमानि मनःकल्पितानि पाराशरी पद्यानि।

यदि हि वयं दुराचारमपि द्विजं श्रेयांसं सदाचारिणं शूद्रञ्च जघन्यं मन्येमहि, ननु किमतः परमन्योऽधर्मोऽन्यायः पक्षपातश्च सम्भवेत्। सदुग्धा निर्दुग्धावापि गौर्गोपालैश्चेत्पालनीया तदा कुम्भकारादिभिः कथन्न खरी पालनीया? अयं चापि भवतां दृष्टान्तो विषमः। द्विजशूद्रयोर्मनुष्यजातित्वात् गोगर्दभयोश्च भिन्नजातित्वात्। अथापि कथञ्चिदेकदेशेन दृष्टान्तो दार्ष्टान्ते संगच्छेत तथाप्ययं श्लोकोऽसदाशयत्वात् विचक्षणैर्न जातु मन्तव्यः॥१॥ अश्वालम्भगवालम्भौ (अश्वं गाञ्च विनिहत्य यज्ञानुष्ठानम्)

न क्वापि वेदेषु विधीयेते पुनः कलौ तन्निषेधः कुतो न वेदेभ्यो विरुद्धयते ? यदि कलियुगेऽस्याधर्मकर्मणः निषेधो मन्तव्यः, तदा त्रेतादियुगेषु अस्य विधिः सिध्येत, एवंविधदुष्टकर्मणः श्रेष्ठयुगे विधानमसम्भवम् ।

वेदादिशास्त्रेषु संन्यासस्य विहितत्वात् तन्निषेधो निर्मूलम् । मांसभक्षणस्य च निषेधोऽपि सार्वकालिकः । देवरात्सुतोत्पत्तिर्वेदविहितत्वात् श्लोककर्तुस्तद्विरोधः प्रलापमात्रम् ।।२।।

नष्टे—देशान्तरं प्रव्रजिते भर्तरि गृहस्थिता भार्या नियोगमाचरेत् तदैव च विवाहितः पतिर्गृहान् समेयात् तदा सा कस्य भार्या मन्तव्या ? उद्वोढुरिति, केनचित्प्रत्युच्येत तद्वयमपि स्वीकुर्मः, परं नेयं व्यवस्था पाराशर्यामुपन्यस्ता । अपि योषितः पञ्चैवापत्कालाः ? भर्तुर्दीर्घव्याधिना निपीडनम्, भर्त्रा सह गुरुर्विरोधः । एवमाद्या आपदः पञ्चाधिका वर्तन्ते तस्मादेतादृशश्लोकाः कर्हिचिन्न मन्तव्याः ।।३।।

प्र०—अपि भवान् पराशरमुनेरपि वचो नाभ्युपैति ?

उ०—भवेन्नाम कस्यापि वचनं, वेदविरुद्धत्वान्न मन्यामहे । इदन्तु पुनर्नास्ति पराशरस्य वाक्यं यतः केचन मानवाः प्रख्यातपुरुषाणां— ब्रह्मोवाच, वसिष्ठ उवाच, राम उवाच, शिव उवाच, विष्णुरुवाच, देव्युवाच,— रामादीनां नाम्ना निजग्रन्थान् निर्मान्ति येन ग्रन्था इमे कृत्स्नेन जगता मन्येरन् । तेषाञ्च जीविका सविशेषं सिद्ध्येत् । अतएव च तेऽनर्थगाथासंयुतान् ग्रन्थान् ग्रथ्नन्ति । ये केचित्प्रक्षिप्तभागास्तान् परित्यज्य मनुस्मृतिरेव वेदानुकूला नान्याः स्मृतयः । इत्थमेव मिथ्याकल्पितग्रन्थानां व्यवस्था ज्ञेया ।

प्र० —गृहाश्रम आश्रमान्तरेभ्यो ज्यायान् लघीयान् वा ?

उ०—सर्वेऽप्याश्रमाः स्वाचारेषु महीयांसः, परम्—

**यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम् ।**
**तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ।।१।।**

—मनु० ६।९०

**यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः ।**
**तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः ।।२।।**
**यस्मात्त्रयोप्याश्रमिणो दानेनान्नेन चान्वहम् ।**
**गृहस्थेनैव धार्य्यन्ते तस्माज्ज्येष्ठाश्रमो गृही ।।३।।**
**स संधार्य्यः प्रयत्नेन स्वर्गमक्षयमिच्छता ।**
**सुखं चेहेच्छता नित्यं योऽधार्यो दुर्बलेन्द्रियैः ।।४।।**

—मनु० ३।७७-७९

यथा वै नद्यो बृहन्तो नदाश्चासमुद्रप्राप्ति गच्छन्त्येव न क्वचिदपि विश्राम्यन्ति तथैव सर्वं आश्रमा—गृहस्थस्यैवाश्रयेण सन्तिष्ठन्ते ।।१।। यथा वायुं समाश्रित्य सर्वे प्राणिनो जीवन्ति तथैव गृहस्थाश्रमोऽपि सर्वाश्रमाणां जीवनाश्रयो न ह्येतं विना कस्याप्याश्रमस्य कश्चिदपि व्यवहारः सिद्धिमाप्नोति ।।२।।

ब्रह्मचर्यवानप्रस्थसंन्यासाख्याश्रमाणां दानेनान्नेन च प्रत्यहं धारणात् गृहस्थाश्रमो ज्येष्ठः । सर्वव्यवहारधुरन्धरोऽभिधीयते ।।३।।

तस्मात् मोक्षमैहिकञ्च सुखमिच्छता दुर्बलेन्द्रियैः—भीरुभिर्निर्बलैर्मानवैर्धारयितुमशक्यो गृहाश्रमः प्रयत्नेन संधार्यः ।।४।।

गृहाश्रम एव जगति विद्यमानसर्वव्यवहाराणां मूलम् । गृहाश्रमं विना हि सन्तानोत्पत्त्यभावात् ब्रह्मचर्यवानप्रस्थसंन्यासाश्रमाः कुतः सम्भवेयुः । गृहाश्रमस्य गर्हितेव विनिन्द्यः संस्तोतैव च प्रशस्यः । गृहाश्रमेऽपि तदैव सुखं लभ्यते यदा स्त्रीपुंसावुभावपि मिथः सुप्रसन्नौ विद्वांसौ पुरुषार्थिनौ सर्वव्यवहारज्ञातारौ च भवेताम् । ब्रह्मचर्यं पूर्ववर्णितः स्वयंवरविवाहश्च गृहाश्रमसुखस्य प्रधानं कारणम् । इति संक्षेपेण समावर्तन-विवाह-गृहाश्रम-शिक्षाविषये व्याख्यातमतः परं वानप्रस्थसंन्यासविषये व्याख्यास्यामः ।

**इति श्रीमद्दयानन्दसरस्वतीस्वामिकृते सत्यार्थप्रकाशे शङ्करदेवपाठकेन संस्कृतभाषयाऽनूदिते समावर्तनविवाहगृहाश्रमविषये चतुर्थः समुल्लासः सम्पूर्णः ।।४।।**

# अथ पञ्चमसमुल्लासारम्भः

## अथ वानप्रस्थसंन्यासविधिं वक्ष्यामः

**ब्रह्मचर्य्याश्रमं समाप्य गृही भवेत् गृही भूत्वा वनी भवद्वनी भूत्वा प्रव्रजेत् ।।**

—जाबालोपनिषद् ख० ४

उचितमेतन्नृणां यत्ते मनुष्या यथाविधि ब्रह्मचर्य्याश्रमं समाप्य गृहस्था भवेयुस्ततो वानप्रस्थाश्रमं सम्पाल्य संन्यासिनो भवेयुरिति ।

**एवं गृहाश्रमे स्थित्वा विधिवत्स्नातको द्विजः ।**
**वने वसेत्तु नियतो यथावद्विजितेन्द्रियः ।।१।।**
**गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः ।**
**अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत् ।।२।।**
**संत्यज्य ग्राम्यमाहारं सर्वं चैव परिच्छदम् ।**
**पुत्रेषु भार्यां निःक्षिप्य वनं गच्छेत्सहैव वा ।।३।।**
**अग्निहोत्रं समादाय गृह्यं चाग्निपरिच्छदम् ।**
**ग्रामादरण्यं निःसृत्य निवसेन्नियतेन्द्रियः ।।४।।**
**मुन्यन्नैर्विविधैर्मेध्यैः शाकमूलफलेन वा ।**
**एतानेव महायज्ञान्निर्वपेद्विधिपूर्वकम् ।।५।।**

—मनु० ६।१-५

इत्थमवसितब्रह्मचर्य्याश्रमो गृहाश्रमधर्मपालयिता स्नातको द्विजो ब्राह्मणः क्षत्रियो वैश्यश्च गृहाश्रमे स्थित्वा निश्चितात्मा यथाविधि विजितेन्द्रियः सन् वने वसेत् ।।१।।

यदा शिरसः केशा धवला भवेयुस्त्वक् च शिथिला स्यात् पुत्रस्यापि पुत्र उत्पद्येत तदा गृहस्थो वनमाश्रयेत् ।।२।।

सकलं ग्राम्यमाहारं सर्वञ्च सुन्दरं वस्त्रादिवस्तुनिकरं परिहाय पुत्रेभ्यश्च भार्यां समर्प्यात्मना सहैव वा नीत्वा वने निवसेत् ।।३।।

गृहस्थितमग्न्युपकरणसहितमग्निहोत्रं गृहीत्वा ग्रामान्निर्गम्यारण्ये सन्नियम्येन्द्रियाणि निवसेत् ।।४।।

नीवाराद्यन्नैः नानाविधै रुचिरैः शाकमूलपुष्पफलैश्च पूर्वोक्तान्

पञ्चमहायज्ञान् विधिपूर्वकं मनुजः कुर्यात् तैः फलमूलदिभिरेवातिथिपूजामात्मनो निर्वाहमपि कुर्यात् ।।५।।

**स्वाध्याये नित्ययुक्तः स्याद्दान्तो मैत्रः समाहितः ।**
**दाता नित्यमनादाता सर्वभूतानुकम्पकः ।।१।।**
**अप्रयत्नः सुखार्थेषु ब्रह्मचारी धराशयः ।**
**शरणेष्वममश्चैव वृक्षमूलनिकेतनः ।।२।।**

—मनु० ६।८, २६

स्वाध्यायेऽध्ययनाध्यापने सततं निरतो, विजितात्मा, सर्वेषां मित्रं, संयतेन्द्रियो, निरन्तरं विद्यादिदानदाता, सर्वथा प्रतिग्रहनिवृत्तः, सर्वप्राणिषु दयालुश्च सन् सर्वदा व्यवहरेत् ।।१।।

शरीरसुखार्थमयतमानो, भूमौ शयानः, स्वाश्रितेषु स्वाश्रितपदार्थेषु च ममत्वशून्यः सन् वृक्षमूले निवसेत् ।।२।।

**तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः ।**
**सूर्य्यद्वारेण ते विरजा प्रयान्ति यत्राऽमृतः स पुरुषो ह्यव्ययात्मा ।।**

—मुण्ड० २।११

ये शान्ता विद्वज्जनास्तपोधर्ममनुतिष्ठन्तः सत्ये च श्रद्दधाना भिक्षोपजीविनोऽरण्ये वसन्ति ते, यत्र नाशरहितो हानिलाभशून्यो विराजते पूर्णपुरुषः परमात्मा तत्र निर्मलाः सन्तः प्राणद्वारेण परमेश्वरं प्राप्यानन्दिता भवन्ति ।

**अभ्यादधामि समिधमग्नें व्रतपते त्वयि ।**
**व्रतञ्च श्रद्धां चोपैमीन्धे त्वा दीक्षितोऽअहम् ।।**

—यजु० अध्याय २० । मं० २४

"विधायाग्निहोत्रं दीक्षितो भूत्वाऽहं व्रतं सत्याचरणं श्रद्धाञ्च सम्पादयेयम्" इतीच्छन् वानप्रस्थो भवेत् । विविधैस्तपश्चरणैः सत्सङ्गैर्योगाभ्यासैः सुविचारैश्च ज्ञानं पवित्रताञ्च प्राप्नुयात् । तदनु यदा स संन्यासग्रहणाभिलाषी स्यात्तदा भार्यां पुत्रसमीपे सम्प्रेष्य संन्यस्तो भवेत् ।

**इति संक्षेपेण वानप्रस्थविधिः ।।**

## अथ संन्यासविधिः

**वनेषु च विहृत्यैवं तृतीयं भागमायुषः ।**
**चतुर्थमायुषो भागं त्यक्त्वा सङ्गान् परिव्रजेत् ।।**—मनु० ६।३३

अनेन प्रकारेण वनेषु वयसस्तृतीये भागे—पञ्चाशद्वर्षादारभ्य पञ्चसप्ततिवर्षपर्यन्तं वानप्रस्थो भूत्वा वयसस्तुरीये भागे सर्वसङ्गान् परित्यज्य परिव्राजको भवेत् ।

प्र०—गृहस्थवानप्रस्थाश्रमावननुष्ठाय यः संन्यासाश्रममनुतिष्ठेत् तस्य पापं जायते न वा ?

उ०—जायते नापि वा जायते ।

प्र०—कथं द्विविधं वचनमुच्यते भवता ?

उ०—नोच्यते द्विविधं वचनम् । यः खलु बाल्यदशायां विरज्य पुनर्विषयेषु विलीयते स महापापीयान् यश्च न विलीयेत स महापुण्यशाली सत्पुरुषः । यथा हि जावालोपनिषद्वचनमिदम्—

**यदहरेव विरजेत्तदहरेव प्रव्रजेद्वनाद्वा गृहाद्वा ब्रह्मचर्यादेव वा प्रव्रजेत् ॥**

यस्मिन् दिने वैराग्यमुत्पद्येत तस्मिन्नेव दिने गृहाद्वा वनाद्वा परिव्रजेत् । आदौ संन्यासस्य पक्षक्रमो वर्णितस्तत्रैते विकल्पाः, यथा वानप्रस्थमनुष्ठाय प्रव्रजेदिति प्रथमः पक्षः, वानप्रस्थमननुष्ठाय गृहाश्रमादेव संन्यसेदिति द्वितीयः पक्षः, विजितेन्द्रियो विषयभोगाभिलाषशून्यः परोपकारमनाः पूर्णज्ञानवान् ब्रह्मचर्यादेव संन्यसेदिति तृतीयः पक्षः । वेदेष्वपि च **"यतयः, ब्राह्मणासः, विजानतः"** इत्यादिपदेषु संन्यासविधानं वर्तते किन्तु—

**नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।**
**नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥**

—कठ० वल्ली २ । मं० २४

यो दुराचारादनिवृत्तः शान्तिरहितोऽसमाहितात्माऽशान्तचित्तश्चास्ति स संन्यस्यापि प्रज्ञानेन परमात्मानं नाधिगच्छति । ततः—

**यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेद् ज्ञान आत्मनि ।**
**ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥**

—कठ० वल्ली० ३ । मं० १३

बुद्धिमान् संन्यासी वाचं मनश्चाधर्मान्निरुध्य ज्ञाने आत्मनि च नियुञ्जीत तौ च ज्ञानात्मानौ परमात्मनि युञ्जीत । तच्च विज्ञानं शान्तरूपात्मनि स्थिरीकुर्यात्—

**परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ।**
**तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥**

ब्राह्मणः संन्यासी स्वकर्मसञ्चितान् सर्वलौकिकभोगान्निरीक्ष्य वैराग्यं प्राप्नुयात् । यतः—अकृतः परमात्मा—कृतेन केवलेन कर्मणा न प्राप्यते ततः किञ्चिदुपायनमादाय पाणौ संन्यासी वेदविदं ब्रह्मनिष्ठं गुरुमुपगम्य तद्विज्ञानायोपगम्य सर्वसन्देहान्निराकुर्यात् । परं परिहेया संगतिर्वक्ष्यमाणमानवानाम्—

**अविद्यायामन्तरे वर्त्तमानाः स्वयं धीराः पण्डितम्मन्यमानाः ।**
**जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥१॥**

**अविद्यायां बहुधा वर्त्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः ।**
**यत्कर्मिणो न प्रवेदयन्ति रागात् तेनातुराः क्षीणलोकाश्च्यवन्ते ॥२॥**

—मुण्ड० । खं० २ । मं० ८, ९

ये अविद्यायां रममाणा आत्मानं धीरं पण्डितञ्च मन्यन्ते, ते अधोगामिनो मूढा अन्धेन नीयमाना अन्धा इव दुःखं प्राप्नुवन्ति ।

ये बहुधा अविद्यायां विहरन्तो बालबुद्धयो "वयं कृतार्थाः" इत्यभिमन्यन्ते, यान् केवलकर्मकाण्डिजना रागवशात् वेत्तुं वेदयितुञ्च न प्रभवन्ति ते आतुराः सन्तो जननमरणमये दुःखे निपतन्ति ॥२॥

अतः—

**वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।**
**ते ब्रह्मलोकेषु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे ॥**

--मुण्ड० ३ । खं २ । मं० ६

परमेश्वरप्रतिपादकवेदमन्त्रार्थज्ञाने स्वाचारे च सुनिश्चिताः संन्यासयोगाद् विशुद्धान्तःकरणा यतयः परमेश्वरे मुक्तिसुखमुपलभ्य भोगानन्तरं मोक्षसुखावधिसमाप्तौ मुक्तिसुखात् परिमुच्य संसारमभिसरन्ति । मुक्ति विना दुःखनाशो न सम्पद्यते । यतः—

**न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वा वसन्तं न प्रियाप्रिये स्पृशतः ॥**--छान्दो० । प्र० ८ खं० १२ म० १

देहधारिणः खलु न कदापि सुखदुःखोपलब्धिव्यतिरिक्ताः स्थातुं शक्नुवन्ति किन्तु यदा ते विमुक्तदेहा आत्मानः सर्वव्यापिना परमात्मना सह शुद्धा वसन्ति तदा तान् सांसारिकसुखदुःखानि नोपसर्पन्ति । तस्मात्—

**पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति ॥**—शत० कां० १४ । प्र० ५ । ब्रा० २ । कं० १

लोकप्रतिष्ठां सम्मानलाभं धनोपभोगं पुत्रकलत्रादिरागञ्च परिहाय परिव्राजका भैक्षमाहरन्तो नक्तन्दिवं मोक्षसाधने निरता भवन्ति ।

**प्राजापत्यां निरूप्येष्टिं तस्यां सर्ववेदसं हुत्वा ब्राह्मणः प्रव्रजेत् ॥१॥**

---यजुर्वेदब्राह्मणे

**प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम् ।**
**आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद् गृहात् ॥२॥**
**यो दत्त्वा सर्वभूतेभ्यः प्रव्रजत्यभयं गृहात् ।**
**तस्य तेजोमया लोका भवन्ति ब्रह्मवादिनः ॥३॥**

—मनु० ६।३८, ३९

प्रजापतेः परमात्मन उपलब्धिनिमित्तामिष्टिं विधाय तस्यां यज्ञोपवीत-शिखादिचिह्नानि विसृज्याहवनीयादिपञ्चाग्नीन् प्राणापानव्यानोदानसमा-

नाख्येषु पञ्च प्राणेषु समारोप्य ब्रह्मविद् ब्राह्मणो गृहान् निःसृत्य संन्यासी भवेत् ॥१,२॥ यः सर्वभूतेभ्यः प्राणिभ्योऽभयं दत्त्वा गृहाश्रमात् परिव्रजति तस्य परमेश्वरप्रकाशितवेदोक्तधर्मादिविद्योपदेशकस्य ब्रह्मवादिनः संन्यासिनः प्रकाशमया मोक्षानन्दरूपा लोका भवन्ति ॥३॥

प्र०—को धर्मः खलु संन्यासिनाम् ?

उ०—धर्मस्तु पक्षपातराहित्येन न्यायाचरण—सत्यग्रहणासत्यपरित्याग—वेदोक्तेश्वराज्ञापालन—परोपकारसत्यभाषणादिलक्षणः सर्वाश्रमिणां मनुजानां समान एव किन्तु संन्यासिनामयं विशेषो धर्मः। यथा—

दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत्।
सत्यपूतां वदेद्वाचं मनः पूतं समाचरेत् ॥१॥
क्रुद्ध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत्।
सप्तद्वारावकीर्णां च न वाचमनृतां वदेत् ॥२॥
अध्यात्मरतिरासीनो निरपेक्षो निरामिषः।
आत्मनैव सहायेन सुखार्थी विचरेदिह ॥३॥
क्लृप्तकेशनखश्मश्रुः पात्री दण्डी कुसुम्भवान्।
विचरेन्नियतो नित्यं सर्वभूतान्यपीडयन् ॥४॥
इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च।
अहिंसया च भूतानाममृतत्वाय कल्पते ॥५॥
दूषितोऽपि चरेद्धर्मं यत्र तत्राश्रमे रतः।
समः सर्वेषु भूतेषु न लिङ्गं धर्म्मकारणम् ॥६॥
फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादकम्।
न नामग्रहणादेव तस्य वारि प्रसीदति ॥७॥
प्राणायामा ब्राह्मणस्य त्रयोऽपि विधिवत्कृताः।
व्याहृतिप्रणवैर्युक्ता विज्ञेयं परमन्तपः ॥८॥
दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥९॥
प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्विषम्।
प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान् ॥१०॥
उच्चावचेषु भूतेषु दुर्ज्ञेयामकृतात्मभिः।
ध्यानयोगेन संपश्येद् गतिमस्यान्तरात्मनः ॥११॥
अहिंसयेन्द्रियासङ्गैर्वैदिकैश्चैव कर्म्मभिः।
तपसश्चरणैश्चोग्रैस्साधयन्तीह तत्पदम् ॥१२॥
यदा भावेन भवति सर्वभावेषु निःस्पृहः।
तदा सुखमवाप्नोति प्रेत्य चेह च शाश्वतम् ॥१३॥

चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः ।
दशलक्षणको धर्मः सेवितव्यः प्रयत्नतः ॥१४॥
धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥१५॥
अनेन विधिना सर्वांस्त्यक्त्वा संगान् शनैः शनैः ।
सर्वद्वन्द्वविनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ॥१६॥

—मनु० अ० ६ । श्लो० ४६,४८,४९,५२,६०,६६,६७,७०-७३,७५, ८०,९१,९२,८१

मार्गे गच्छन् संन्यासी इतस्ततोऽनवलोकयन् भूमौ दृष्टिं निक्षिप्य गच्छेत् । सर्वदा वस्त्रशोधितं जलं पिबेत् । सदा सत्यमेव वदेत् । सततं मनसा विचार्य सत्यमङ्गीकुर्यात्, असत्यञ्च परित्यजेत् ॥१॥

क्वचिदुपदेशे संवादादौ वा सञ्जातक्रोधं कञ्चन संन्यासी न प्रतिक्रुध्येत् । निन्दितश्चान्येन स तस्मै निरन्तरं हितमेवोपदिशेन्नतु कुप्येत् । मुखनासिकानेत्रकर्णरूपसप्तद्वारेषु विकीर्णया वाचा केनापि हेतुना कदाप्यनृतं न वदेत् ॥२॥

स्वात्मनि परमात्मनि च निरतः स्थिरश्च निस्पृहो मद्यमांसादिरहित आत्मनैव सहायेन सुखार्थी सन्नस्मिन् संसारे धर्मविद्यासंवर्धनोपदेशायाविश्रान्तं विचरेत् ॥३॥

लूनकेशनखश्मश्रुर्धृतरुचिरपात्रदण्डः परिहितकुसुम्भवर्णरञ्जितवसनो निश्चितात्मा सर्वभूतान्यपीडयन् सर्वत्र परिभ्रमेत् ॥४॥

अधर्माचरणादिन्द्रियाणि निरुध्य रागद्वेषावपहाय सर्वप्राणिभिः समं निर्वैरायमाणो मोक्षसामर्थ्यमुपचिनुयात् ॥५॥

संसारे यस्मिन् कस्मिँश्चिदाश्रमे स्थितः केनचिद् दूषितो भूषितोऽपि वा सर्वप्राणिषु पक्षपातरहितः सन् स्वयं धर्ममनुतिष्ठन्नन्याँश्चापि धर्मानुष्ठाननिष्ठान् विधातुं प्रयतेत । स्वमनसि च निश्चितं जानीयादसौ—"न खलु दण्डकमण्डलुकाषायवस्त्रादिचिह्नधारणमात्रं धर्मकारणमपितु सदुपदेशविद्यादानाभ्यां निखिलमनुष्यादिप्राणिनामुन्नयनमेव संन्यासिनां प्रथमो धर्मः" इति ॥६॥

यद्यपि कतकवृक्षस्य फलं निष्पिष्य मलिनजले प्रक्षेपेण तज्जलं शोधयति तथापि फलचूर्णप्रक्षेपं विना तस्य नामोच्चारणमात्रेण केवलं श्रवणेन वा तज्जलं न शुध्यति ॥७॥

ओङ्कारपूर्वकसप्तव्याहृतिभिर्युक्तान् यावद्बलं विधिवत् प्राणायामान् विदध्यात् । किन्तु त्रिभ्यो न्यूनान् प्राणायामान् कदापि न कुर्यात् । इदमेव परमं तपः संन्यासिनाम् ॥८॥

यतो यथाग्नौ ताप्यमानानां विलाप्यमानानाञ्च धातूनां मला नश्यन्ति तथैव प्राणायामेन मन आदीन्द्रियाणां दोषा भस्मीभवन्ति ॥९॥

अतः संन्यासिनः प्रतिदिनं प्राणायामैः आत्मान्तःकरणेन्द्रियदोषान्, धारणाभिः पापम्, प्रत्याहारेण संसर्गदोषान्, ध्यानेन चानीश्वरगुणान् हर्ष-शोकाविद्यादीन् जीवात्मनो दोषान् नाशयेयुः ॥१०॥

अयोगिभिरविद्वद्भिर्दुर्ज्ञेयामुत्कृष्टापकृष्टेषु पदार्थेषु परमात्मनो व्याप्तिं स्वात्मनोऽन्तर्यामिनः परमेश्वरस्यापि गतिञ्चासौ सम्यग्ध्यानाभ्यासेन संपश्येत् ॥११॥

सर्वप्राणिषु निर्वैराचरणैरिन्द्रियाणां विषयसङ्गपरिहारैर्वेदोदितैः कर्मभिरत्युग्रैस्तपोऽनुष्ठानैश्चास्मिन् संसारे पूर्वोक्तः संन्यासी एव मोक्षपदं प्राप्नोत्यन्यांश्च प्रापयति ॥१२॥

यदासौ सर्वेषु भावेषु सर्वपदार्थेषु च निस्पृहः सन् बाह्याभ्यन्तर-व्यवहारेषु भावेन शुद्ध्यति तदैवात्र जन्मनि परजन्मनि च निरन्तरं सुखं लभते ॥१३॥

एतदर्थमेतैर्ब्रह्मचारिगृहस्थवानप्रस्थसंन्यासिभिर्वक्ष्यमाणो दशलक्षणको धर्मः सततमनुष्ठेयः प्रयत्नेन ॥१४॥

प्रथमं लक्षणम्—**धृतिः**—सदा धैर्यधारणम्। द्वितीयं **क्षमा** – निन्दा-स्तुतिमानापमानहानिलाभादिदुःखेष्वपि सहनशीलत्वम्। तृतीयं **दमः**—अधर्मान् निवार्य सदा धर्मे प्रवर्तनं मनसो येनाधर्माचरणेच्छापि न स्यात्। चतुर्थम् **अस्तेयम**—चौर्य-त्यागः, अर्थाद्विनाज्ञां विश्वासघातछलकपटादिव्यव-हारेण वा वेदविरुद्धाचरणेन चान्यद्रव्यहरणं स्तेयं तत्परित्यागोऽस्तेयम्। पञ्चमं **शौचम्**—रागद्वेषपक्षपातपरित्यागेन मनसो जलमृत्तिकामार्जनादि-भिश्च बाह्यं पावित्र्यम्।

षष्ठम् **इन्द्रियनिग्रहः**—अधर्माचरणान्निरुध्येन्द्रियाणां धर्माचरण एव सदा प्रवर्तनम्। सप्तमं **धीः**—मादकानि बुद्धिनाशकानि च द्रव्याणि, दुष्ट-संगतानि, प्रमादालस्यादिदोषाँश्चापहाय श्रेष्ठद्रव्याणां सेवनेन सज्जनानां संगतेन योगाभ्यासेन च बुद्धिवर्धनम्। अष्टमं **विद्या**—पृथिव्या आरभ्य परमेश्वरपर्यन्तस्य यथार्थज्ञानस्योपार्जनं तेन च यथायोग्यमुपकारसंपादनम्, यथात्मनि तथा मनसा, यथा मनसि तथा वाचा, यथा वाचि तथा कर्मणा सत्यानुष्ठानमेव विद्या, तद्विपरीतमविद्या। नवमं **सत्यम्**—यादृशो यः पदार्थः स तादृश एवावगन्तव्यो वर्णनीयोऽनुष्ठेयश्च। दशमञ्च **अक्रोधः**—क्रोधादि-दोषानपहाय शान्त्यादिगुणानां स्वीकरणम्। इतीमानि धर्मस्य लक्षणानि। अस्य दशलक्षणयुक्तस्य पक्षपातरहितन्यायाचरणस्य धर्मस्य सेवनञ्चाश्रमि-

भिर्विधेयम्। अमुमेव च वेदोक्तधर्मं स्वयमनुसृत्य अन्याँश्चापि बोधयित्वा तत्परिपालने नियोजनं संन्यासिनां विशेषो धर्मः ॥१५॥

अनेन विधिना शनैः शनैः सर्वान् सङ्गदोषान् परित्यज्य हर्षशोकादि-सर्वद्वन्द्वेभ्यो विनिर्मुक्तः संन्यासी ब्रह्मण्येवावतिष्ठते। सर्वान् गृहस्थादीनाश्र-मान् सर्वविधव्यवहारेषु सत्यनिश्चयं कारयित्वाऽधर्मकृत्येभ्यो विमोच्य तेषां निखिलसंशयान् निराकृत्य सत्यधर्मयुक्तव्यवहारेषु तान्प्रवर्तयेयुरित्येव प्रधानं कर्तव्यं संन्यासिनाम् ॥१६॥

**प्र०**—संन्यासग्रहणं ब्राह्मणस्यैव धर्मः क्षत्रियादेरपि वा ?

**उ०**—ब्राह्मणस्यैवाधिकारः, यतो हि ब्राह्मण इति सर्ववर्णेषु पूर्ण-पण्डितस्य धार्मिकस्य परोपकारप्रियस्य मानवस्य नाम। पूर्णपाण्डित्यं धार्मिकत्वं परमेश्वरनिष्ठत्वं वैराग्यञ्च विना संन्यासग्रहणेन जगतो विशेष उपकारो विधातुं न शक्यते। अस्ति तस्मादियं जनश्रुतिः—"**ब्राह्मणस्यैव संन्यासाश्रमाधिकारो नान्यस्येति**" अत्र मनोरपि प्रमाणम्—

**एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः।**
**पुण्योऽक्षयफलः प्रेत्य राजधर्मान् निबोधत ॥**—मनु० अ० ६।९७

एवमादिशति मनुर्भगवान् "अयि ऋषयः! एष ब्रह्मचर्यगृहस्थवान-प्रस्थसंन्यासाश्रमानुष्ठानरूपश्चतुर्विधो ब्राह्मणानां धर्मः। वर्तमानजन्मनि पुण्यस्वरूपो देहत्यागानन्तरं मोक्षरूपाक्षयानन्दप्रदश्च संन्यासधर्मः। एत-दनन्तरं राजधर्मान् शृणुत इति। "एतेन संन्यासग्रहणे प्राधान्येन ब्राह्मण-स्यैवाऽधिकारः, क्षत्रियादेर्ब्रह्मचर्य्याश्रमः" इति सिद्ध्यति।

**प्र०**—संन्यासग्रहणस्य कावश्यकतास्ति ?

**उ०**—देहे शीर्षस्येवाश्रमेषु संन्यासाश्रमस्यावश्यकता विद्यते यतस्तेन विना कदापि विद्याधर्मयोरुन्नतिर्भवितुं न शक्यते। यतोऽन्याश्रमिभिर्यथाक्रमं विद्याग्रहणगृहकृत्यसम्पादनतपश्चरणादिप्रसङ्गादतीवाल्पः समयो लभ्यते। पक्षपातराहित्येन वर्तनमन्याश्रमिभिः दुष्करम्। यथा संन्यासी सर्वतो मुक्तः सन् जगदुपकारं तनुते तथान्याश्रमिणः कर्तुं न समर्थाः। यतः संन्यासिनः सत्यविद्यया पदार्थविज्ञानोन्नतये यावन्तमवकाशं लभन्ते तावानन्याश्रमिभिर्न लभ्यते। तत्रापि यो ब्रह्मचर्य्यादेव परिव्रज्य जगतः सत्योपदेशेन यावती-मुन्नतिं विधातुं प्रभवति तावतीमुन्नतिं गृहस्थवानप्रस्थाश्रमावुपभुज्य संन्यस्तो जनो न कर्तुं पारयति।

**प्र०**—संन्यासग्रहणं परमेश्वराभिप्रायेण विरुद्धमस्ति मनुष्याणां वृद्धावीश्वरस्याभिप्रायत्वात्। यदि कोऽपि गृहमेधी न भवेत्तस्यापत्यमेव न स्यात्। यदा खलु संन्यासाश्रमो मुख्यस्तञ्च सर्वे जनाः पालयेयुस्तदा मनुष्याणां मूलोच्छेदः संपद्येत।

उ०—साधु, कृतोद्वाहानामपि केषाञ्चित् पुत्रा न जायन्ते, जाता अपि वा सत्वरं म्रियन्ते तदा तु संवृत्तमेतदपीश्वराभिप्रायप्रतिकूलम् । यदि खलूच्यते भवता—

**यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः ।**

इति कस्यापि कवेर्वचनम् । यदि प्रयत्नेनापि कार्यं न सिध्येत्तदा कस्तत्र दोषः ? कश्चिदपि नास्तीति भावः । तदा वयं पृच्छामो भवन्तं गृहाश्रमात्पुत्राः प्रभूताः प्रभूय परस्परं प्रतिकूलाचरणं विधाय युद्धे म्रियन्ते तदा कियती बलवती हानिः सञ्जायते । यदा संन्यासी एकवेदोक्तधर्मोपदेशेन परस्परं प्रीतिमुत्पादयेत् तदा लक्षमनुष्यान् परिरक्षेत् । सहस्रगृहमेधिन इवायं मनुजान्वर्धयेत् । अपि च सर्वे मनुष्याः संन्यासग्रहणं कर्तुमपि न समर्था भवन्ति, यतः सर्वे कदापि विषयसङ्गान् परिहातुं न पारयिष्यन्ति । ये केचन मानवाः संन्यासिनामुपदेशेन धार्मिका भवेयुस्ते सर्वे संन्यासिनां पुत्रा इवेति मन्तव्यम् ।

प्र०—"अस्माकं किमपि कर्तव्यन्नास्ति" इति संन्यासिनः कथयन्ति । अन्नवस्त्रमादाय सानन्दं स्थेयम् । अविद्यामयेन जगता वृथा शिरःपीडनं किमर्थं विधेयम् ? आत्मानं ब्रह्म परिकल्प्य संतुष्टैरवस्थेयम् । कश्चिदुपगम्य पृच्छेच्चेत्त्वमपि ब्रह्मासीति सोऽपि समुपदेष्टव्यः 'न त्वां पापपुण्ये स्पृशतः, यतो हि शीतोष्णे शरीरस्य, क्षुत्तृषे प्राणानां, सुखदुःखं च मनसो धर्मः, जगन्मिथ्या जगतो व्यवहाराश्चापि सर्वे परिकल्पिता मिथ्या सन्तीति तेषु प्रसक्तिर्बुद्धिमतामनर्हा । यत्किञ्चित्पापपुण्यं भवति तद्देहेन्द्रियाणां धर्मो नात्मनः" इत्युपदिशन्ति ते । भवता तु केचन विलक्षणाः संन्यासिनां धर्मा वर्णिताः । तद् वयं कस्य वचनं सत्यं कस्य चासत्यं मन्यामहे ?

उ०—किं तैरुत्तमानि कर्माण्यपि न कर्तव्यानि ? पश्यत (**वैदिकैश्चैव कर्मभिः**) वैदिकानि कर्माणि—यानि धर्मयुक्तानि कर्माणि—तानि संन्यासिभिरवश्यं करणीयानि नित्यमिति मनुना प्रतिपादितम् । किन्ते भोजनाच्छादनादीनि कर्माणि परित्यक्तुं प्रभविष्यन्ति । एतत्कर्म विहातुमशक्तास्त उत्तमकृत्यपरित्यागेन पतिताः पापभाजश्च किं न भविष्यन्ति ? यदा गृहमेधिभ्योऽन्नवस्त्रादीनि गृह्णन्ति ताँश्चेन्न प्रत्युपकुर्वीरँस्तदा ते किं पापीयाँसो न भवेयुः ? यथा नेत्राभ्यां दर्शनं कर्णाभ्यां च श्रवणं न स्याच्चेन्नेत्रकर्णानां वैयर्थ्यप्रसङ्गस्तथैव यदि संन्यासिनः सत्योपदेशं वेदादिसत्यशास्त्राणां विचारं प्रचारञ्च न विदध्युस्तदा तेऽपि संसारे वृथा भारभूता एव । ये चाविद्यारूपेण जगता शिरःस्फोटनं किमिति करणीयमित्यादि लिखन्ति समुपदिशन्ति च तेऽनृतवादिनः पापसंवर्द्धकाः पापीयाँसः सन्ति । यत्किञ्चित् देहादिना कर्म विधीयते तदखिलमात्मन एव, तस्य फलभोक्तापि चात्मैवास्ति । ये

जीवं ब्रह्म वर्णयन्ति तेऽविद्यानिद्रायां निद्राणा वर्तन्ते। कुतः ? जीवो हि अल्पोऽल्पज्ञः, ब्रह्म च सर्वव्यापकं सर्वज्ञम्। नित्यशुद्धबुद्धमुक्तस्वभावयुक्तं ब्रह्म, जीवश्च कदाचिद् बध्यते कदाचिन्मुच्यते। सर्वव्यापकत्वात्सर्वज्ञत्वाच्च ब्रह्मणः कदापि भ्रमोऽविद्या वा न सम्भवति जीवस्य तु कदाचिद् विद्या कदाचिदविद्या च सम्भवति। ब्रह्म जननमरणदुःखं कदापि न प्रपद्यते जीवस्तु प्रपद्यत इति वितथस्तेषामुपदेशः।

प्र०—संन्यासी सर्वकर्मविनाशी वर्तते स चाग्निं धातूंश्च न स्पृशतीति वार्ता वितथाऽवितथा वा ?

उ०—वितथा।

"सम्यङ् नित्यमास्ते यस्मिन् यद्वा सम्यङ् न्यस्यन्ति दुःखानि कर्माणि येन स **संन्यासः** स प्रशस्तो विद्यते यस्य स **संन्यासी**।"

यः खलु नित्यं ब्रह्मणि तस्याज्ञायां च स्थितो दुष्कर्मपरिहारिप्रकृष्ट-स्वभाववानस्ति स संन्यासी कथ्यते।

प्र०—अध्यापनमुपदेशञ्च गृहिणः कुर्वन्ति ततः संन्यासिनां किं प्रयोजनम् ?

उ०—सत्योपदेशं सर्वाश्रमिणः कुर्युः शृणुयुश्च किन्तु यावानवकाशो यावती च निष्पक्षपातता संन्यासिनां भवति तावान् तावती च गृहिणां न भवति। आम्, ब्राह्मणेषु पुरुषाः पुरुषान् स्त्रियश्च स्त्रीः सत्यमुपदिशेयुर्विद्याञ्च पाठयेयुरित्येव ब्राह्मणानां कार्यम्। यावान् भ्रमणसमयः संन्यासिभिः लभ्यते तावान् गृहस्थब्राह्मणादिभिः कदापि लब्धुं न शक्यते। वेदविरुद्धमाचरतः संन्यासी नियमयति। एषा हि संन्यासिनामावश्यकता वर्तते।

प्र०—**"एकरात्रिं वसेद् ग्रामे"** इत्यादिवचनैः संन्यासिनैकामेव रात्रि-मेकत्र वस्तव्यं नातोऽधिकम्।

उ०—अल्पांशतस्तु सत्यमिदं वचनं यदेकस्मिन्नेव स्थाने निवासात् विशेषो जगदुपकारो न सम्भवति स्थानविशेषस्याभिमानश्चापि जायते राग-द्वेषावपि वर्द्धेते। किन्तु यद्येकत्रावस्थानात् विशेषोपकारः सम्पद्येत तदा निवसेत्। यथा जनकराजनगरे चतुरो मासान् पञ्चशिखादयोऽन्ये च संन्यासिनः कियन्ति वर्षाणि निवासं चक्रिरे। अपि च—**"एकत्र न वसेत्"** इति वचनमद्यतनानां पाखण्डिसम्प्रदायिनां निर्मितम्। यतः संन्यास्येकत्राधिकं निवसेच्चेत्तेषां पाखण्डः खण्डितः स्यात् अधिकञ्च न वर्द्धेत।

प्र०—**यतीनां काञ्चनं दद्यात्ताम्बूलं ब्रह्मचारिणाम्।**
**चौराणामभयं दद्यात्स नरो नरकं व्रजेत्॥**

इत्यादिवचनैर्यः संन्यासिभ्यः सुवर्णादिदानं दद्यात्स दाता नरकगामी स्यादित्यभिप्रायः ।

उ०—इदमपि वर्णाश्रमविरोधिभिः सम्प्रदायिभिः पौराणिकैश्च कल्पितमस्ति । यतः संन्यासिनो धनं प्राप्नुयुस्तेषामधिकं खण्डनं कर्तुं शक्नुयुस्तेषाञ्च हानिस्स्यात्तेषामधीनाश्चापि न भवेयुः । यदा च भिक्षादिव्यवहारस्तदायत्तो भवेत्तदा संन्यासिनस्तेभ्यो बिभीयुः । मूर्खेभ्यः स्वार्थिभ्यश्च दानमुत्तमं मन्यन्ते चेत्तदा तु प्राज्ञेभ्यः परोपकारिभ्यः संन्यासिभ्यो दातुं कश्चिदपि दोषो न सम्भाव्यते । पश्यत—

**विविधानि च रत्नानि विविक्तेषूपपादयेत् ।**—मनु० ११।६

विविधानि सुवर्णादिधनानि रत्नानि च विविक्तेभ्यः संन्यासिभ्यः समर्पयेत् । अपि च युष्माभिरुपन्यस्तः स श्लोकोऽनर्थकः । यतः संन्यासिभ्यः सुवर्णविश्राणनेन यजमानश्चेन्नरकं व्रजेत्तदा किं रजतमुक्ताहीरकादिवितरणेन स स्वर्गं गच्छेत् ?

प्र०—अत्र पण्डितः पाठमिमं पठन् विस्मृतवान् । स चैवम्—**"यतिहस्ते धनं दद्यात्"** इति यः संन्यासिनो हस्ते धनं ददाति स नरकं व्रजतीति भावः ।

उ०—इदं वचनमप्यविदुषा विरचितम्, यतो हस्ते धनवितरणेन दाता नरकं गच्छेच्चेच्चरणयोर्वितरणेन पोटलिकायां निबध्य दानेन वा स्वर्गं गच्छेत् किमु ? अतो न मन्तव्येदृशी कल्पना । आम्, यः संन्यासी योगक्षेमादधिकं रक्षिष्यति स तस्करादिपीडितो मोहितश्चापि भविष्यति । किन्तु विद्वानयोग्याचरणं कदापि न करिष्यति तन्मोहेऽपि वा न पतिष्यति स हि पूर्वं गृहाश्रमे सकलान् भोगानुपभुक्तवान् दृष्टवाँश्चापि । यश्च ब्रह्मचर्यात् प्रव्रजति स पूर्णवैराग्ययुक्तत्वात् कदापि क्वचिदपि न सज्जति ।

प्र०—श्राद्धे संन्यासी चेदागच्छेत्तञ्च यजमानो भोजयेत्तदा तस्य पितरः पलायेरन् नरके च पतेयुरिति जना वदन्ति ।

उ०—प्रथमं तु मृतपितॄणामागमनं कृतश्राद्धस्य च मृतपितॄणां समीपे प्रापणमेवासम्भवं वेदप्रतिकूलं युक्तिविरुद्धञ्चेत्यनृतम् । नागच्छन्त्येव यदा तदा के नाम पलायिष्यन्ते । यदा च निजपापपुण्यवशतः परमात्मनो प्रेत्य जीवो जन्म लभते तदा तस्यागमनं कथं सम्भाव्यते । तस्मादियं वार्तापि उदरम्भरिभिः पौराणिकैर्धूर्तवरैः परिकल्पितैव वर्तते । आम्, इदं तु सत्यं यद् यत्रैव संन्यासी गमिष्यति तत एव वेदविरुद्धत्वादस्य मृतकश्राद्धस्य पाखण्डः पलायिष्यते ।

प्र०—ब्रह्मचर्यादेव परिव्रजितमानवस्य निर्वाहः सुदुष्करं काम-

निरोधश्चाप्यतिदुष्करः। अतो गृहमेधिनां वानप्रस्थाश्रमं समाप्य वार्द्धके संन्यासग्रहणमत्युत्तमम्।

उ०—निर्वाहासमर्थं इन्द्रियनिग्रहाशक्तश्च ब्रह्मचर्यान्न संन्यसेत्। यस्तु शक्तः स कथं नोररीकुर्यात्। यः पुरुषो विषयदोषान् वीर्यसंरक्षण-गुणाँश्च विज्ञातवान् स कर्हिचिदपि विषयासक्तो न भवति। विचाराग्ने-रिन्धनमिव चास्ति तद्वीर्यं विचार एव तद् व्ययते। रुग्ण एव वैद्यमोषध-ञ्चापेक्षते नतु स्वस्थः। एवं यः पुरुषो या च स्त्री विद्यां धर्मञ्च वर्द्धयितुं सकलं जगच्चोपकर्तुमेव वाञ्छेतां नोद्वहेताम्। यथा पञ्चशिखादयः पुरुषा गार्गीप्रमुखाश्च स्त्रियो बभूवुः। एतदर्थमधिकारिणां संन्यासग्रहणमुचितम्। अनधिकारिणश्चेत् संन्यासमङ्गीकरिष्यन्ति स्वयं ते दुःखे पतिष्यन्ति, अन्याँश्च पातयिष्यन्ति। यथा सम्राट् चक्रवर्ती नृपो भवति तथैव "परिव्राट्" संन्यासी भवति। प्रत्युत नृपः स्वदेशे स्वसम्बन्धिजनेषु वा पूज्यते तथा संन्यासी सर्वत्र पूज्यते। अत्र चाणक्यनीतिशास्त्रस्यायं श्लोको यथा—

**विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन।**
**स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते॥**

विदुषो नृपस्य च कदापि सादृश्यं न सम्भवति। राजा हि निजदेश एव सत्क्रियते बुधस्तु सर्वदेशेषु समाद्रियते। अतो विद्याध्ययनाय सुशिक्षाग्रहणाय बलसम्पादनाय च ब्रह्मचर्याश्रमः, सर्वविधोत्तमव्यवहारसिद्ध्यै गृहाश्रमः, विचारध्यानविज्ञानवृद्धिनिमित्ताय तपश्चरणाय वानप्रस्थाश्रमः, वेदादि-शास्त्राणां प्रचाराय धर्मव्यवहारग्रहणाय दुष्टव्यवहारपरिहाराय सत्योपदेश-करणाय सर्वेषाञ्च संदेहनिराकरणाय संन्यासाश्रमो विद्यते। परं ये सत्योप-देशादिकं संन्यासिनां मुख्यधर्मं नाचरन्ति ते पतिता नरकगामिनश्च भवन्ति। तस्मात्संन्यासिनः सत्योपदेशेन शङ्कासमाधानेन वेदादिसच्छास्त्राध्यापनेन वेदोक्तधर्मवर्द्धनप्रयत्नेन च सकलसंसारोन्नतिं विदध्युः।

प्र०—संन्यासिभ्यो व्यतिरिक्ता ये साधवो वैरागी, गुसाईं, खाखी-त्यादिनामभृतस्तेऽपि संन्यासाश्रमे गणयितुं शक्यन्ते न वा ?

उ०—नहि। यतस्तेषु संन्यासिन एकमपि लक्षणं न वर्तते। ते तु वेदविरुद्धपद्धतौ प्रवर्तमाना वेदेभ्योऽपि स्वसम्प्रदायाचार्याणां वचनानि बहु मन्यन्ते। स्वमतमेव च स्तुत्वा मिथ्याव्यवहारे समासक्ताः स्वार्थतत्परा अपरानपि स्वस्वमतजाले निपातयन्ति। सन्मार्गनयनं तु दूरमास्ताम्, प्रत्युत लोकं प्रतार्याधः पातयन्ति स्वार्थञ्च साधयन्ति ते। तदर्थममी संन्यासाश्रमे न गणयितुं शक्यन्ते। नूनममी प्रबलाः स्वार्थाश्रमिणः, नात्र संदेहलवोऽपि विद्यते। ये स्वयं धर्मे प्रवृत्य निखिलं लोकमपि तथा प्रवर्तयन्ति, इह जन्मनि परजन्मनि च स्वयं सुखमुपभुञ्जते सकलान्मनुजाँश्च सुखभाजः कुर्वन्ति त

एव धर्मात्मानो जनाः संन्यासिनो महात्मानश्च सन्ति । इयं संक्षेपेण संन्यासाश्रमस्य शिक्षा वर्णिता अतोऽग्रे राजप्रजाधर्मविषयं वर्णयिष्यामः ।

**इति श्रीमद्दयानन्दसरस्वतीस्वामिकृते सत्यार्थप्रकाशे शङ्करदेवपाठकेन संस्कृतभाषयाऽनूदिते वानप्रस्थसंन्यासाश्रमविषये पञ्चमः समुल्लासः सम्पूर्णः ।।५।।**

# अथ षष्ठसमुल्लासारम्भः

## अथ राजधर्मान् व्याख्यास्यामः

**राजधर्मान् प्रवक्ष्यामि यथावृत्तो भवेन्नृपः।**
**सम्भवश्च यथा तस्य सिद्धिश्च परमा यथा ॥१॥**
**ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि।**
**सर्वस्यास्य यथान्यायं कर्त्तव्यं परिरक्षणम् ॥२॥**

—मनु० ७।१, २

महाराजो मनुर्ब्रवीति—हे महर्षयः! चतुराश्रमाणां चतुर्वर्णानां च व्यवहारप्रतिपादनानन्तरं राजधर्मानिदानीं वक्ष्यामः। कीदृशो राजा भवेत्? कथं च तत्सम्भवः? कथङ्कारञ्चायं परमसिद्धिं प्राप्नुयात्? इति सर्वं व्याख्यास्यते ॥१॥ क्षत्रियो ब्राह्मण इव परमविद्वान् सुशिक्षितः सन् न्यायेन सर्वराज्यं यथावत् परिरक्षेत् ॥२॥ तस्यायं प्रकारः—

**त्रीणि राजाना विदथे पुरूणि परि विश्वानि भूषथः सदांसि ॥**

—ऋ० मं० ३। सू० ३८। मं० ६

ईश्वर उपदिशति—हे (**राजाना**) राजन्! प्रजाप्रतिनिधयः! यूयं सर्वे मिलित्वा (**विदथे**) सुखप्राप्त्येकसाधकविज्ञानवृद्धिकारकराजप्रजासम्बन्धिव्यवहारार्थं (**त्रीणि सदांसि**) विद्यार्य्यसभा, राजार्य्यसभा, धर्मार्य्यसभास्तिस्रः समितीः संस्थाप्य (**पुरूणि**) बहुविधान् (**विश्वानि**) सर्वप्रजासम्बन्धिमनुष्यादिप्राणिनः (**परिभू०**) सर्वतो भावेन विद्यास्वातन्त्र्यधर्मसुशिक्षाधनादिभिः विभूषयत तथा—

**तं सभा च समितिश्च सेना च ॥१॥**

—अथर्व० कां० १५। अनु० २। व० ९। मं० २

**सभ्य सभां मे पाहि ये च सभ्याः सभासदः ॥२॥**

—अथर्व० कां० १९। अनु० ७। व० ५५। मं० ६

(**सभा**) विद्यार्य्यसभादयः (**समितिश्च**) सङ्ग्रामादीनां व्यवस्थापिका सभा (**सेना**) सैन्यञ्च (**तम्**) राजधर्ममेकमत्येन पालयेयुः ॥१॥

राजा सर्वान् सभासदो निर्देष्टुमर्हति—

हे (**सभ्य**) सभायां साधो मुख्यसभासद ! त्वम् (**मे**) मम (**सभाम्**) सभाया धर्मयुक्तव्यवस्थां (**पाहि**) रक्ष। ये च (**सभ्याः**) सभायां साधवः सभासदस्तेऽपि सभाव्यवस्थां पालयेयुः ॥२॥ अस्यायमभिप्रायो यदेकस्मै एव स्वातन्त्र्येण राष्ट्रस्याधिकारो न देयः किन्तु सभापते राज्ञोऽधीना सभा, सभाधीनश्च राजा, राजसभे च प्रजाधीने, तथा प्रजा च राजसभयोरधीना भवेदित्यभिप्रायः। अन्यथा हि—

**राष्ट्रमेव विश्याहन्ति तस्माद्राष्ट्री विशं घातुकः। विशमेव राष्ट्रायाद्यां करोति तस्माद्राष्ट्री विशमत्ति न पुष्टं मन्यत इति ॥**

—शत० कां० १३। प्र० २। ब्रा० ३। कं० ७, ८

यदि नाम प्रजातः स्वतन्त्रः स्वाधीनो राजवर्गो भवेत् तर्हि (**राष्ट्रमेव विश्याहन्ति**) राज्यं प्रविश्य प्रजां विनाशयेत्। यतो हि केवलः स्वाधीनो नराधिप उन्मत्तः सन् (**राष्ट्री विशं घातुकः**) प्रजां विनाशयति (**विशमेव राष्ट्रायाद्यां करोति**) स प्रजां भक्षयतीवातितरां निपीडयति, अतः कोऽप्येको राष्ट्रे स्वाधीनो न विधातव्यः। यथा वै सिंहोऽन्यो वा कश्चन मांसाशी हृष्ट-पुष्टाङ्गं पशुं व्यापाद्य भक्षयति तथैव (**राष्ट्री विशमत्ति**) स्वतन्त्रो राजा प्रजामुच्छिनत्ति कस्यापि स्वस्मादाधिक्यं न सहते, श्रीमतो जनानन्यायेन दण्डयित्वा विलुण्ठ्य च स्वार्थं साधयति, अतः—

**इन्द्रो जयाति न परा जयाता अधिराजो राजसु राजयातै।**
**चर्कृत्य ईड्यो वन्द्यश्चोपसद्यो नमस्यो भवेह ॥**

—अथर्व० कां० ६। अनु० १०। सू० ९८। मं० १

हे मनुष्याः ! यो वै (**इह**) मनुष्यसमुदाये (**इन्द्रः**) परमैश्वर्यसम्पन्नः सन् शत्रून् (**जयाति**) जेतुं समर्थः (**न पराजयातै**) न च रिपुभिः पराजीयते यश्च (**राजसु**) नृपेषु (**अधिराजः**) सम्राट् महाराजाधिराजः सन् (**राजयातै**) प्रकाशते दीप्यते। यश्च (**चर्कृत्यः**) सभापतिपदयोग्यः (**ईड्यः**) प्रशंसनीय-गुणकर्मस्वभावः (**वन्द्यः**) सत्करणीयः (**चोपसद्यः**) समीपगम्यः शरणयोग्यः शरण्यः (**नमस्यः**) सर्वमान्यश्च (**भव**) भवेत्तमेव सभापतिं राजानं विधत्त।

**इमन्देवाऽअसपत्न ँ सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय ॥**—यजु० अ० ९। मं० ४०

हे (**देवाः**) विद्वांसः राजप्रजाजनाः ! यूयम्, एवम्भूतं पुरुषं (**महते क्षत्राय**) चक्रवर्तिराज्यकरणाय (**महते ज्यैष्ठ्याय**) अतिशयसमृद्धिवर्द्धनाय (**महते जानराज्याय**) पूर्णविद्वद्युक्तराष्ट्रपालनाय (**इन्द्रस्येन्द्रियाय**) परमैश्व-

र्य्युक्तराष्ट्रस्य धनस्य च रक्षणाय (असपत्न ँ सुवध्वम्) सम्मतिं विधाय पक्षपातविवर्जितं पूर्णविद्याविनयसम्पन्नं सर्वेषां मित्रं सभापतिं राजानं सर्वाधीशमङ्गीकृत्य निखिलां पृथिवीं शत्रुविरहितां कुरुत। तथा च—

**स्थिरा वः सन्त्वायुधा पराणुदे वीळू उत प्रतिष्कभे।**
**युष्माकमस्तु तविषी पनीयसी मा मर्त्यस्य मायिनः॥**

—ऋ० मं० १। सू० ३९। मं० २

ईश्वर उपदिशति—हे राजपुरुषाः! (**वः**) युष्माकं (**आयुधा**) आग्नेयादीन्यस्त्राणि शतघ्नीभुशुण्डी [तोप बन्दूक इति लोके] धनुःशरांस्यादीनि शस्त्राणि च शत्रूणाम् (**पराणुदे**) पराजयाय (**उत**) तथा तेषाम् (**प्रतिष्कभे**) वारणाय च (**वीळू**) प्रशंसितानि उत्तमानि (**स्थिरा**) दृढानि (**सन्तु**) भवन्तु। तथा युष्माकं (**तविषी**) सेना (**पनीयसी**) प्रशंसनीया (**अस्तु**) भवतु। येन युष्माकं सदा विजयो भवेत्। किन्तु (**मायिनः**) गर्हितान्यायरूपकर्मकारिणो जनस्य पूर्वोक्तपदार्थाः (**मा**) न कर्हिचिदपि भवेयुरिति। यावद्धि मानवा धार्मिका भवन्ति तावदेव राष्ट्रमेधते, दुष्टाचारित्वे पुनस्तेषां नितरां विनश्यति। अतो महाविद्वांसो विद्यासभाधिकारिणः, धार्मिका विद्वांसो धर्मसभाधिकारिणः, प्रशंसनीया धर्मात्मानश्च राजसभाधिकारिणो विधेयाः। यश्च सर्वोत्कृष्टगुणकर्म्मस्वभावत्वेन सर्वेभ्यो गरीयान् तं राजसभायाः सभापतिं मत्वा सर्वत उन्नतिं कुर्वीरन्। तिसृणां सभानां सम्मतिभिरेव राजनीतेरुत्तमनियमाः स्युः। नियमाश्च प्रजाभिः पालनीयाः। सर्वहितकारककर्मसु सम्मतिं प्रदर्श्य सर्वहितहेतुभूतकार्ये परतन्त्राः, तथा धर्मयुक्तकर्त्तव्येषु निजकार्येषु सर्वे स्वतन्त्राः स्युः।

सभापतिः कीदृशगुणसम्पन्नो भवेदित्यत्राह—

**इन्द्राऽनिलयमार्काणामग्नेश्च वरुणस्य च।**
**चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः॥१॥**
**तपत्यादित्यवच्चैष चक्षूंषि च मनांसि च।**
**न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम्॥२॥**
**सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्मराट्।**
**स कुबेरः स वरुणः स महेन्द्रः प्रभावतः॥३॥**

—मनु० ७।४,६,७

स सभेशो राजा सभापतिः (**इन्द्रः**) विद्युद्वदाश्वैश्वर्यविधायकः, (**अनिलः**) वायुरिव प्राणवत् प्रियः, परेषां हृदयज्ञः (**यमः**) पक्षपातरहितः सन् न्यायाधीश इव व्यवहर्ता (**सूर्यः**) तथा सूर्य इव न्यायधर्मविद्यानां प्रकाशेनान्धकाररूपयोरविद्याऽन्याययोर्निरोधकः (**अग्निः**) अग्निवद्दुष्टानां

भस्मसात्कर्ता (**वरुणः**) बन्धयितेव दुष्टानां नैकधा बन्धकः। (**चन्द्रः**) चन्द्र-वच्छ्रेष्ठानां धर्मात्मनामाह्लादकः (**कुबेरः**) धनाध्यक्षवद्धनानां विविध-कोषाणां विधायको भवेत् ॥१॥

यः सूर्य्यवत् प्रतपति सर्वेषां बहिरन्तो मनांसि स्वतेजसा तापयति, यञ्चेह लोके क्रूरदृष्टया कश्चिदपि द्रष्टुं न शक्नोति ॥२॥

यः स्वप्रभावेणाग्निवायुसूर्य्यसोमधर्मसन्निभः प्रकाशको धनवर्द्धको दुष्टानां बन्धयिता महदैश्वर्यसम्पन्नश्च स एव सभाध्यक्षः सभेशो भवितुमर्हति ॥३॥

को वै सन्नृप इत्यत्राह—

**स राजा पुरुषो दण्डः स नेता शासिता च सः।**
**चतुर्णामाश्रमाणां च धर्मस्य प्रतिभूः स्मृतः ॥१॥**
**दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति।**
**दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥२॥**
**समीक्ष्य स धृतः सम्यक् सर्वा रञ्जयति प्रजाः।**
**असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः ॥३॥**
**दुष्येयुः सर्ववर्णाश्च भिद्येरन्सर्वसेतवः।**
**सर्वलोकप्रकोपश्च भवेद्दण्डस्य विभ्रमात् ॥४॥**
**यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा।**
**प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥५॥**
**तस्याहुः संप्रणेतारं राजानं सत्यवादिनम्।**
**समीक्ष्यकारिणं प्राज्ञं धर्मकामार्थकोविदम् ॥६॥**
**तं राजा प्रणयन्सम्यक् त्रिवर्गेणाभिवर्द्धते।**
**कामात्मा विषमः क्षुद्रो दण्डेनैव निहन्यते ॥७॥**
**दण्डो हि सुमहत्तेजो दुर्धरश्चाकृतात्मभिः।**
**धर्माद्विचलितं हन्ति नृपमेव सबान्धवम् ॥८॥**
**सोऽसहायेन मूढेन लुब्धेनाकृतबुद्धिना।**
**न शक्यो न्यायतो नेतुं सक्तेन विषयेषु च ॥९॥**
**शुचिना सत्यसन्धेन यथाशास्त्रानुसारिणा।**
**प्रणेतुं शक्यते दण्डः सुसहायेन धीमता ॥१०॥**

—मनु० ७।१७-१९, २४-२८, ३०, ३१

दण्ड एव पुरुषो राजा च स एव न्यायप्रचारकः सर्वेषां शासकश्च स एव च चतुर्णां वर्णानामाश्रमाणाञ्च धर्मस्य च प्रतिभूः ॥१॥

स एव दण्डः प्रजामनुशास्ति, सर्वतश्च पालयति, सुप्तेषु प्रजाजनेषु जागर्ति, स एव दण्डो धीमद्भिर्धर्म इत्याख्यायते ॥२॥

सम्यग् विचारपूर्वकं ध्रियमाणो दण्डः सर्वप्रजामाह्लादयति। अविचारेण प्रयुक्तस्तु सर्वतो राजानं विनाशयति ॥३॥

दण्डं विना सर्वे वर्णा दुष्येयुः सर्वधर्ममर्यादाश्च छिद्येरन् सर्वत्र च सर्वलोकक्षोभो भवेत् ॥४॥

यत्र हि कृष्णवर्णो रक्तनेत्रो भयङ्करो जन इव पापविनाशको दण्डो विचरति तत्र प्रजा मोहमप्राप्ता सती आनन्दमाप्नोति यदि दण्डप्रयोक्ता पक्षपातविवर्जितो विद्वान् भवेत् ॥५॥

सत्यवादिनं विचारवन्तं मतिमन्तं धर्मार्थकामानां साधने निपुणमेव नराधिपं विद्वाँसस्तद्दण्डसम्प्रणेतारमाहुः ॥६॥

यो हि नृपस्तं दण्डं साधूपयुङ्क्ते स धर्मार्थकामानां सिद्धिं प्रवर्धयति। विषयलम्पटः कुटिल ईर्ष्यकः क्षुद्रो नीचमतिर्न्यायाधीशस्तु दण्डेनैव निहन्यते ॥७॥

सोऽयं दण्डो महातेजस्वी—यमविद्वाँसोऽधर्मात्मानो धारयितुं न शक्नुवन्ति—धर्मविवर्जितं राजानमेव समुन्मूलयति ॥८॥

यः खलु आप्तपुरुषाणां साहाय्येन, विद्यासुशिक्षाभ्यां च रहितः, विषयासक्तो मूढधीः सोऽन्यायेन दण्डं प्रवर्तयितुं न शक्नोति ॥९॥

किन्तु यः कश्चन पूतात्मा सत्याचारः सत्पुरुषाणां सहचरः यथावन्नीतिशास्त्रानुकूलव्यवहर्ता साधुजनसहायसंयुतो धीमान् स एव न्यायरूपदण्डप्रवर्तने क्षमः ॥१०॥

**सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च।**
**सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥१॥**
**दशावरा वा परिषद्यं धर्मं परिकल्पयेत्।**
**त्र्यवरा वापि वृत्तस्था तं धर्मं न विचालयेत् ॥२॥**
**त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः।**
**त्रयश्चाश्रमिणः पूर्वे परिषत्स्याद्दशावरा ॥३॥**
**ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च।**
**त्र्यवरा परिषज्ज्ञेया धर्मसंशयनिर्णये ॥४॥**
**एकोपि वेदविद्धर्मं यं व्यवस्येद् द्विजोत्तमः।**
**स विज्ञेयः परो धर्मो नाज्ञानामुदितोऽयुतैः ॥५॥**
**अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्।**
**सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥६॥**

**यं वदन्ति तमोभूता मूर्खा धर्ममतद्विदः।**
**तत्पापं शतधा भूत्वा तद्वक्तॄननुगच्छति ।।७।।**

—मनु० १२।१००, ११०–११५

सर्वसेनानां सेनापतीनाञ्चाधिपत्यम्, सर्वविघ्नदण्डव्यवस्थाधिपत्यम्, सर्वेषामाधिपत्यं, सर्वाधीशत्वम्, राज्याधिकारः–एषु चतुर्विधप्रधानाधिकारेषु सकलवेदशास्त्रपारङ्गताः पूर्णविद्यावन्तो जितेन्द्रिया धर्मात्मानः सौशील्यवन्त एव पुरुषा नियोक्तव्याः। प्रथमो मुख्यसेनानायकः, द्वितीयो मुख्यराज्याधिकारी, तृतीयो मुख्यन्यायाधीशः, चतुर्थः सभापतिः (राजा) एते चत्वारो ऽपि सर्वविद्यासु-पूर्णविद्वाँसो भवेयुः ।।१।।

न्यूनतो न्यूनं दशविद्वत्पुरुषाणाम्, दशविदुषामुपलब्ध्यभावे त्रिपुरुषाणां सभा यां काामपि व्यवस्थां व्यवस्थापयेन्न तां कश्चिदप्युल्लङ्घयेत् ।।२।।

यस्यां सभायां ब्रह्मचर्यगृहस्थवानप्रस्थाश्रमिणश्चतुर्वेदन्यायशास्त्रनिरुक्तधर्मशास्त्रवेत्तारो विद्वाँसः सभासदो भवेयुः सा सभा न्यूनातिन्यूनं दशविद्वद्भिः संघटिता भवेत् ।।३।।

यद्वा यस्यां सदसि ऋग्यजुःसामवेदवेत्तारस्त्रयः सभासदो यां व्यवस्थां व्यवस्थापयेयुस्तां कोऽपि नातिक्रामेत् ।।४।।

सर्ववेदविद् द्विजेषूत्तम एकोऽपि संन्यासी यमेव धर्मं व्यवस्थापयेत्स एव श्रेष्ठो धर्मः। अयुतैरसङ्ख्यैरपि मूढैः कल्पितो धर्मस्तु कदाचिदपि नाङ्गीकर्तव्यः ।।५।।

ब्रह्मचर्य्यसत्यभाषणादिव्रतविरहितानां वेदविद्याविचारशून्यानां केवलं जात्यैव शूद्रवद्विद्यमानानां पुरुषाणां सहस्रैरपि संघटिता समितिः समितिर्न भवति ।।६।।

अविद्वाँसो मूर्खा वेदानभिज्ञा मानवा यं धर्मं इति वदन्ति स कर्हिचिदपि नानुसरणीयः। मूर्खप्रदर्शितधर्ममनुसरन्तो हि नानाविधपापेषु सज्जन्ति। अतस्त्रिविधासु विद्याधर्मराजसभासु मूर्खा न प्रवेश्याः किन्तु विद्वाँसो धार्मिका एव पुरुषा नियोज्याः ।।७।।

सर्वराजानो राजसभासदश्चेदृशाः कथं सम्भवन्तीत्यत्राह—

**त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिञ्च शाश्वतीम्।**
**आन्वीक्षिकीं चात्मविद्यां वार्त्तारम्भाँश्च लोकतः ।।१।।**
**इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम्।**
**जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः ।।२।।**
**दश कामसमुत्थानि तथाष्टौ क्रोधजानि च।**
**व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत् ।।३।।**

कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः ।
वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु ॥४॥
मृगयाक्षो दिवास्वप्नः परिवादः स्त्रियो मदः ।
तौर्य्यत्रिकं वृथाटचा च कामजो दशको गणः ॥५॥
पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् ।
वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोष्टकः ॥६॥
द्वयोरप्येतयोर्मूलं यं सर्वे कवयो विदुः ।
तं यत्नेन जयेल्लोभं तज्जावेतावुभौ गणौ ॥७॥
पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् ।
एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥८॥
दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे ।
क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदा ॥९॥
सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषङ्गिणः ।
पूर्वं पूर्वं गुरुतरं विद्याद्व्यसनमात्मवान् ॥१०॥
व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते ।
व्यसन्यधोऽधो व्रजति स्वर्यात्यव्यसनो मृतः ॥११॥

—मनु० ७।४३-५३

**(त्रैविद्येभ्यः)** चतुर्वेदस्थानां कर्मोपासनाज्ञानविद्यानां ज्ञातृभ्यो विद्वद्भ्यः **(त्रयी वि०)** तथोक्तां त्रिविधां विद्याम्, सनातनीं दण्डनीतिम् **(आन्विक्षिकीम्)** न्यायविद्याम् (आत्म०) परमात्मनो गुणकर्मस्वभावाभिधायिकां ब्रह्मविद्यां तथा लोकाच्च वार्तानामारम्भं [कथनं, पृच्छाम्] ज्ञात्वैव सर्वे सभापतिः सभासदश्च भवेयुः ॥१॥

सर्वे सभासदः सभापतिश्चेन्द्रियाणि विजित्य—स्ववशे स्थाप्य नित्यं धर्मेण व्यवहरेयुरधर्माच्च निवर्तेरन् । एतदर्थं दिनक्षपयोर्नियतवेलायां योगाभ्यासमनुतिष्ठेयुः । अजितेन्द्रियो हीन्द्रियाणि—मनः प्राणशरीरात्मिकामन्तःप्रजामविजित्य बाह्यप्रजां विजेतुं स्ववशे स्थापयितुं कर्हिचिदपि न क्षमते ॥२॥

येषु प्रसक्तः कृच्छ्रेण निस्सरति तानि कामोत्पन्नानि दश, क्रोधाज्जातानि चाष्टौ व्यसनानि दृढोत्साहः सन् प्रयत्नेन त्यजेत् ॥३॥

कामोद्भवेषु व्यसनेषु प्रसक्तो भूपोऽर्थराज्यधर्मादिभ्यः प्रच्यवते, क्रोधाज्जातेषु व्यसनेष्वासक्तश्च स्वशरीरादेव हीयते ॥४॥

कामजानि व्यसनानि परिगण्यन्ते—(१) आखेटः (२) अक्षक्रीडा (३) दिने शयनम् (४) कामकथा परनिन्दा वा (५) स्त्रीसङ्गः (६) मादकद्रव्याणां मद्याहिफेनविजयानां तद्विकाराणां गांजाचरस इति ख्यातानां

सेवनम् (७) गानं [गानश्रवणम्] (८) वादनम् (९) नृत्यानुष्ठानं दर्शनं वा (१०) इतस्ततो निरर्थकं भ्रमणम्—एतानि सदा कामजानि व्यसनानि भवन्ति ।।५।।

क्रोधजव्यसनानि परिगण्यन्ते—(१) 'पैशुन्यम्' अर्थात् कर्णेजपत्वम् (२) बलात्कारेण परस्त्रीसम्भोगः (३) द्वेषः (४) परोत्कर्षामर्षः (५) दोषेषु गुणारोपणम् गुणेषु च दोषारोपणम् (६) अधर्मयुक्तेऽसद्व्यवहारे धनादीनां व्ययः (७) आक्रोशः (८) अतिवादोऽपराधं विनापि दण्डनं भर्त्सनञ्च एते क्रोधोत्पन्ना अष्टौ दुर्गुणाः ।।६।।

एतेषां कामक्रोधजव्यसनानां कारणं लोभमेव विद्वांसो वदन्ति । अतस्तं लोभं यत्नेन जह्यात् । लोभजावेव हि कामक्रोधौ ।।७।।

मद्यानां मदकारकद्रव्याणां सेवनम्, द्यूतक्रीडा, स्त्रीणां सविशेषसङ्गः, आखेटश्चैतानि चत्वारि व्यसनानि कामजेषु महादुष्टानि भवन्ति ।।८।।

अपराधं विनापि दण्डप्रदानम्, क्रूरवचनानामुपयोगः, दुष्टकर्त्तव्येषु धनादीनां व्ययश्च एतत्त्रयं क्रोधजेषु महत्कष्टकरं भवति ।।९।।

कामक्रोधजगणयोः परिगणितेषु सप्तदोषेषु पूर्वं पूर्वं—व्यर्थव्ययात्कठोरभाषणम्, वाक्पारुष्यादन्यायः, अन्यायाद्दण्डपातनम्, तस्माद् मृगया, मृगयातः स्त्रीजनसङ्गः, ततो द्यूतक्रीडा, ततोऽपि च मद्यादिसेवनं महत्कष्टकरम् ।।१०।।

अतो दुर्व्यसनप्रसङ्गान्मरणमेव श्रेयः । यतो हि दुराचारः पुमान् बहुकालं जीवन्नधिकपापानुष्ठानेनाधोगतिं—दुःखबाहुल्यं प्राप्स्यति । कस्मिंश्चिदपि व्यसनेऽनिमग्नस्तु मृतोऽपि सुखं लप्स्यतेऽतः सर्वे मनुष्या विशेषतश्च नरपतिर्मृगयामद्यपानादिदुष्कर्मसु कर्हिचिन्न प्रसज्जेयुः । दुर्व्यसनेभ्यश्च पृथग्भूय धर्म्यगुणकर्मस्वभावाः सन्तः सत्कर्माण्यनुतिष्ठेयुः ।।११।।

राजसभासदो मन्त्रिणश्च कीदृशा भवेयुरित्यत्राह—

**मौलान् शास्त्रविदः शूराँल्लब्धलक्षान् कुलोद्गतान् ।**
**सचिवान्सप्त चाष्टौ वा प्रकुर्वीत परीक्षितान् ।।1।।**
**अपि यत्सुकरं कर्म तदप्येकेन दुष्करम् ।**
**विशेषतोऽसहायेन किन्नु राज्यं महोदयम् ।।2।।**
**तैः सार्द्धं चिन्तयेन्नित्यं सामान्यं सन्धिविग्रहम् ।**
**स्थानं समुदयं गुप्तिं लब्धप्रशमनानि च ।।3।।**
**तेषां स्वं स्वमभिप्रायमुपलभ्य पृथक् पृथक् ।**
**समस्तानाञ्च कार्य्येषु विदध्याद्धितमात्मनः ।।4।।**
**अन्यानपि प्रकुर्वीत शुचीन् प्राज्ञानवस्थितान् ।**
**सम्यगर्थसमाहर्तॄनमात्यान्सुपरीक्षितान् ।।5।।**

निवर्त्ततास्य यावद्भिरितिकर्त्तव्यता नृभिः ।
तावतोऽतन्द्रितान् दक्षान् प्रकुर्वीत विचक्षणान् ॥६॥
तेषामर्थे नियुञ्जीत शूरान् दक्षान् कुलोद्गतान् ।
शुचीनाकरकर्मान्ते भीरूनन्तर्निवेशने ॥७॥
दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम् ।
इङ्गिताकारचेष्टज्ञं शुचिं दक्षं कुलोद्गतम् ॥८॥
अनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालवित् ।
वपुष्मान्वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते ॥९॥

—मनु० ७।५४-५७, ६०-६४

स्वराज्यस्वदेशोद्भवान्, वेदादिशास्त्रज्ञान्, पराक्रमिणः, अनिष्फल-विचारान्, कुलीनान्, सुपरीक्षितांश्च सप्त अष्टौ वा धार्मिकान् मन्त्रिणः कुर्यात् ॥१॥

यतः सरलमपि कर्म्म विशेषसाहाय्यमन्तरेणैकेन दुष्करं भवति । एवं च महद्राज्यकर्म एकः कथं साधयेत् ? अतएव स्वतन्त्रः कश्चिद्राजा तद्विचार एव सम्पूर्णराज्यभारनिर्भरश्च महद्गर्हितं कर्म ॥२॥

सन्धिः—मित्रता, विग्रहो—विरोधः, स्थानम्—स्थितिसमयं प्रतीक्ष्य स्वराज्यरक्षापूर्वकमुदासीनतया व्यवहारः, समुदयः—आत्मन उदये वृद्धौ दुष्टशत्रोरुपर्याक्रमणम्, गुप्तिम्—राज्ञो मूलसैन्यकोशादि रक्षणम् लब्धप्रशमनम्—प्राप्तदेशेषु शान्तिस्थापनम्—एतेषु षड्विषयेषु राज्यकार्यकुशलैः विद्वन्मन्त्रिभिः सह सभापतिना प्रत्यहं विचारः कर्त्तव्यः ॥३॥

तेषां सभासदां पृथक् पृथक् स्वं स्वमभिप्रायमाशयमाकर्ण्य बहुपक्षानु-सारेणात्मनोऽन्येषाञ्च यद्धितं तत्कुर्यात् ॥४॥

पवित्रात्मनो बुद्धिमतः स्थिरमतीन् पदार्थसंग्रहकुशलान् (धर्मादिना) परीक्षितान् सचिवान् कुर्वीत ॥५॥

अस्य राज्ञो यत्संख्याकैर्मानवैः राज्यकार्यं सम्पद्येत तत्संख्याकान् मनुष्यानालस्यशून्यान् बलवतो विदग्धान् प्रधानपुरुषान् नराधिपः कुर्यात् ।

तेषामधीनतायां विक्रान्तान्, बलवतः, सत्कुलसम्भूतान्, पवित्रभृत्यान् महत्कर्मसु भीरूँश्चान्तःपुरकार्येषु नियुञ्जीत ॥७॥

सुकुलोद्गतं चतुरं शुचिं हावभावचेष्टाभिर्हृदयान्तर्निहितस्य भाविनो ऽप्यर्थस्य ज्ञातारं सकलशास्त्रपारङ्गतं पुमांसं दूतकर्मणि विनियुञ्जीत ॥८॥

राष्ट्रकार्येषु सोत्साहः प्रीतिमान् निश्छलः पवित्रात्मा देशकालानुकूलं व्यवहर्ता शोभनरूपसम्पन्नः निर्भीको वावदूकश्च पुरुषो राजदूतकर्मणि प्रशस्यते ॥९॥

कस्मै कोऽधिकारः प्रदेय इत्यत्राह—

अमात्ये दण्ड आयत्तो दण्डे वैनयिकी क्रिया।
नृपतौ कोशराष्ट्रे च दूते सन्धिविपर्ययौ ॥१॥
दूत एव हि सन्धत्ते भिनत्त्येव च संहतान्।
दूतस्तत्कुरुते कर्म भिद्यन्ते येन वा न वा ॥२॥
बुद्ध्वा च सर्वं तत्त्वेन परराजचिकीर्षितम्।
तथा प्रयत्नमातिष्ठेद्यथात्मानं न पीडयेत् ॥३॥
धनुर्दुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा।
नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत्पुरम् ॥४॥
एकः शतं योधयति प्राकारस्थो धनुर्धरः।
शतं दशसहस्राणि तस्माद्दुर्गं विधीयते ॥५॥
तत्स्यादायुधसम्पन्नं धनधान्येन वाहनैः।
ब्राह्मणैः शिल्पिभिर्यन्त्रैर्यवसेनोदकेन च ॥६॥
तस्य मध्ये सुपर्याप्तं कारयेद्गृहमात्मनः।
गुप्तं सर्वर्त्तुकं शुभ्रं जलवृक्षसमन्वितम् ॥७॥
तदध्यास्योद्वहेद्भार्यां सवर्णां लक्षणान्विताम्।
कुले महति सम्भूतां हृद्यां रूपगुणान्विताम् ॥८॥
पुरोहितं प्रकुर्वीत वृणुयादेव चर्त्विजम्।
तेऽस्य गृह्याणि कर्माणि कुर्य्युर्वैतानिकानि च ॥९॥

—मनु० ७। ६५, ६६, ६८, ७०, ७४-७८

मन्त्रिणि दण्डाधिकार आयत्तः, दण्डे च विनयक्रिया आयत्ता भवेत्; येनान्यायरूपो दण्डो न भवेत्। भूपतौ कोशराष्ट्रप्रबन्धावायत्तौ भवेताम्। राजा सर्वविधप्रबन्धं सभाधीनं, सन्धिविरोधौ च गुप्तचराधीनौ कुर्यात् ॥१॥

दूतस्तदाचरेत् येन शत्रवो भेदं प्राप्नुयुः। यो वै भिन्नान् सम्मेलयति सम्मिलितांश्च भेदयति तं दूतं प्रचक्षते ॥२॥

सभापतिः सभासदो दूताश्च परेषां शत्रूणामन्यविरोधिनो राज्यस्य वाऽऽशयं याथार्थ्येनावगम्य तथाविधं प्रबन्धं कुर्युर्येन स्वराज्यपीडा न भवेत् ॥३॥

अतः स्वराज्यस्य रक्षणार्थं रमणीये वने धनधान्ययुक्ते देशे वा धनुर्धारिभिः पुरुषै रक्षितम्, अतएव (**दुर्गम्**) दुर्गमम् (**महीदु०**) मृदादिभिर्निमितप्राकारम् (**अब्दुर्गम्**) परितो जलैः परिवृतम् (**वार्क्षम्**) सर्वतो वृक्षसमूहैर्वेष्टितम्, (**नृदुर्गम्**) समन्ततः सेनाभिरावृतम् (**गिरिदुर्गम्**) परितो महापर्वतैर्वा समाकुलं नगरं निर्माय निवसेत् ॥४॥

दुर्गस्थो धनुर्धरो योद्धा स्वयमेकः सन्नपि सशस्त्रान् शतं शत्रून् योधयति, तत्रस्थाश्च शतयोद्धारो दशसहस्रशत्रुभिः समं योद्धुं क्षमाः। अतएव नगरं परितः प्राकारोऽवश्यं निर्मातव्यः ॥५॥

तच्च दुर्गं शस्त्रास्त्रैरायुधैर्युक्तम्, द्रव्यान्नाश्वरथादिभिः संकुलम्, उपदेष्टृभिरध्यापकैर्ब्राह्मणैः शिल्पिभिः कारुभिः नानाविधकलाकौशलयन्त्रैः तृणादिना जलेन च सम्पन्नं स्यात् ॥६॥

तस्य दुर्गस्य मध्यप्रदेशे सर्वतो रक्षितं सर्वर्त्तुषु सुखकरं धवलं जल-वृक्षपुष्पादिभिरावृतञ्च गृहं निर्मिमीत। यत्र सकलराष्ट्रकार्य्यनिर्वाहः स्यात् ॥७॥

एवं ब्रह्मचर्य्याश्रमे स्थित्वा विविधां विद्यामधीत्य तावद्राष्ट्रकार्यं विधायानन्तरं सौन्दर्यलावण्यगुणयुक्तां हृदयप्रियामुत्तमकुलोत्पन्नां स्वतुल्य-विद्यादिगुणकर्मस्वभावामेकामेव भार्य्यां विवहेत। अन्याश्चागम्या इति बुद्ध्वा चक्षुषापि न वीक्षेत ॥८॥

पुरोहितर्त्विजौ हि नैत्यिकमग्निहोत्रं पक्षेष्टयादिराजकृत्यञ्च कुर्य्या-ताम्, एतदर्थमेतौ वृणुयात् स्वयञ्च राष्ट्रकार्यतत्परो भवेत्। राज्ञ एतदेव हि सन्ध्योपासनादिकर्मास्ति येन राष्ट्रकार्य्येषु प्रवृत्तः सन्न तद्विपन्नभावं प्रापयेत् ॥९॥

वार्षिककरनियमानाह—

सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद्बलिम्।
स्याच्चाम्नायपरो लोके वर्त्तेत पितृवन्नृषु ॥१॥
अध्यक्षान् विविधान् कुर्यात् तत्र तत्र विपश्चितः।
तेऽस्य सर्वाण्यवेक्षेरन्नृणां कार्याणि कुर्वताम् ॥२॥
आवृत्तानां गुरुकुलाद्विप्राणां पूजको भवेत्।
नृपाणामक्षयो ह्येष निधिर्ब्राह्मो विधीयते ॥३॥
समोत्तमाधमै राजा त्वाहूतः पालयन् प्रजाः।
न निवर्त्तेत संग्रामात् क्षात्रं धर्ममनुस्मरन् ॥४॥
आहवेषु मिथोऽन्योन्यं जिघांसन्तो महीक्षितः।
युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ॥५॥
न च हन्यात्स्थलारूढं न क्लीबं न कृताञ्जलिम्।
न मुक्तकेशं नासीनं न तवास्मीति वादिनम् ॥६॥
न सुप्तं न विसन्नाहं न नग्नं न निरायुधम्।
नायुध्यमानं पश्यन्तं न परेण समागतम् ॥७॥
नायुधव्यसनं प्राप्तं नार्त्तं न परिक्षतम्।
न भीतं न परावृत्तं सतां धर्ममनुस्मरन् ॥८॥

यस्तु भीतः परावृत्तः सङ्ग्रामे हन्यते परैः ।
भर्त्तुर्यद्दुष्कृतं किञ्चित्तत्सर्वं प्रतिपद्यते ॥९॥
यच्चास्य सुकृतं किञ्चिदमुत्रार्थमुपार्जितम् ।
भर्त्ता तत्सर्वमादत्ते परावृत्तहतस्य तु ॥१०॥
रथाश्वं हस्तिनं छत्रं धनधान्यपशूंस्तथा ।
सर्वद्रव्याणि कुप्यं च यो यज्जयति तस्य तत् ॥११॥
राज्ञश्च दद्युरुद्धारमित्येषा वैदिकी श्रुतिः ।
राज्ञा च सर्वयोधेभ्यो दातव्यमपृथग्जितम् ॥१२॥

—मनु० ७।८०-८२, ८७, ८९; ९१-९७

आप्तानां सत्पुरुषाणां द्वारैव वार्षिकं करमाददीत, सभापती राजा प्रधानपुरुषादयश्च प्रजासु पितृवद् वेदानुकूलाः सन्तो व्यवहरेयुः ॥१॥

सभा तत्तद्राष्ट्रकार्येषु विविधानध्यक्षान् नियुञ्जीत, ते चाधिपतयो राजपुरुषाणां कार्याणि लोकेरन् (तत्तद्राजकर्मणि विनियुक्ता राजपुरुषा यथावन्नियमेन स्वकार्यं कुर्वन्ति नवेति) नियमेन कार्यसाधकः सत्कर्तव्यः, विरुद्धक्रियाश्च यथावद्दण्डनीयाः ॥२॥

नृपतीनां वेदप्रचाररूपो यो ब्राह्मो निधिरक्षयकोशस्तस्य प्रचाराय ब्रह्मचर्येण वेदादिशास्त्राण्यधीत्य गुरुकुलादागतानां सत्पुरुषाणां यथावदादरो राज्ञा सभाभिश्च विधेयः, यैरध्यापिता विद्वाँसो भवन्ति तेऽपि सत्कर्तव्याः ॥३॥

एवं हि राष्ट्रे विद्योन्नत्या महानुदयः सञ्जायते। स्वतुल्येन, उत्कृष्टेन, हीनबलेन वा संग्रामार्थमाहूतः प्रजापालको नृपः क्षात्रधर्ममनुस्मरन् संग्रामान्न निवर्तेत किन्तु चातुर्येण तथा युद्ध्येत येन स्वविजयः स्यात् ॥४॥

संग्रामेषु परस्परं हन्तुमिच्छन्तो नृपा यथाशक्तयभीरुत्वेनापराङ्मुखाः सन्तो युद्ध्यमानाः सुखमाप्नुवन्ति । तस्मात्ते कदाचिदपि विमुखा न भवेयुः, किन्तु शत्रुजयार्थं तत्सम्मुखात्कादाचित्कोऽदृश्यभावस्तूचित एव । येन प्रकारेण शत्रुजयः स्यात् तथैवाचरेत्, यथा सक्रोधः सिंहोऽभिमुखमागच्छञ्शस्त्राग्नौ भस्मसाद् भवति न तथा स्वयं मूढभावेनात्मानं भ्रंशयेत् ॥५॥

युद्धसमये इतस्तत आसीनम्, नपुंसकम्, प्रणमन्तम्, अबद्धकेशम्, उपविशन्तम्, तवैव शरणं गतोऽस्मीति ब्रुवन्तम् ॥६॥

निद्रितम्, मूर्च्छितम्, अवस्त्रम्, शस्त्ररहितम्, सङ्ग्राममवलोकयन्तं शत्रुणा सहागतम् ॥७॥ तथा—

आयुधप्रहारसम्पीडितम्, दुःखितम्, विक्षतं, भीरुम्, तथा पलायमानञ्च पुरुषं सत्पुरुषाणां धर्ममनुस्मरन्तो योद्धारो जात्वपि न हन्युः । किन्तु राजा तान्निगृह्य अक्षतान् कारागारे स्थापयेत्, तेषां भोजनाच्छादनप्रबन्धो

यथावद् भवेत्, क्षतशरीराणामौषधादिभिर्विधिपूर्वकं सततं रुक्प्रतीकारं कुर्यात्। तान् न क्षोभयेत् नचापि दुःखयेत्, तैश्च यथायोग्यं कार्यं कारयेत्, स्त्रीबालवृद्धातुरशोकसन्तप्तपुरुषान्न प्रहरेत्। अत्रैव सविशेषमवधातव्यम्, तथा तेषां बालकाँश्च स्वसन्तानवत्पालयेत्, स्त्रियश्चापि स्वस्वसृदुहितृवद् बुद्ध्वा रक्षणीयाः, विषयाभिकांक्षया चक्षुषापि न ताः समीक्षेत। राष्ट्रस्य स्थिरतायां च यैः सह न भूयो युद्धसम्भवस्तान् सत्कारपूर्वकं परित्यज्य स्वस्वगृहाणि स्वदेशान् वा प्रस्थापयेत्, किन्तु यैः समं भविष्यति काले युद्धसम्भवस्ताँस्तु निरन्तरं कारागार एव स्थापयेत् ॥८॥

यः खलु योधो भयत्रस्तः, सङ्ग्रामात् पलायमानः शत्रुभिर्हन्यते, स स्वस्वामिनोऽपराद्धः दण्डनीयो भवेत् ॥९॥

पलायमानस्य हतस्य योद्धुः प्रतिष्ठां ययात्र परलोके च सुखसम्भावनाऽऽसीत् स्वाम्येवादत्ते। यस्तु धर्मेण यथावत् युद्धचते स एव पुण्यफलमश्नाति ॥१०॥

रथाः, वाजिनः, छत्र-धन-धान्य-पशवः सर्वद्रव्याणि, कुप्यं ताम्रादिकं, घृततैलादिकञ्च, एषां यो यो भृत्यः सेनापतिर्वा यत् जयति तत्सर्वं तस्यैव भवति ! नेमां व्यवस्थां कश्चिदप्युल्लङ्घयेत् ॥११॥

किन्तु योद्धृभिर्जितद्रव्याणां षोडशांशो राज्ञे प्रदेयः। राजापि सर्वैर्मिलित्वा जितद्रव्याणां षोडशांशान् सेनास्थवृद्धेभ्यः प्रदद्यात्, संग्रामे निहतानां च भार्याभ्यो बालेभ्यो वा तस्यांशः प्रदेयः। संग्रामविनिहतानामसमर्थं कलत्रपुत्रादिकं यथावत्परिरक्षेत्। सामर्थ्यमुपपन्नास्तु ते यथायोग्यमधिकारेषु विनियोज्याः। यः स्वराज्यवृद्धिमिच्छेत् यश्च प्रतिष्ठां विजयञ्चाभिकाङ्क्षेत् स नैतां मर्यादामतिक्रामेत् ॥१२॥

**अलब्धं चैव लिप्सेत लब्धं रक्षेत्प्रयत्नतः।**
**रक्षितं वर्द्धयेच्चैव वृद्धं पात्रेषु निःक्षिपेत् ॥१॥**
**एतच्चतुर्विधं विद्यात्पुरुषार्थप्रयोजनम्।**
**अस्य नित्यमनुष्ठानं सम्यक् कुर्यादतन्द्रितः ॥२॥**
**अलब्धमिच्छेद्दण्डेन लब्धं रक्षेदवेक्षया।**
**रक्षितं वर्द्धयेद् वृद्धचा वृद्धं दानेन निःक्षिपेत् ॥३॥**
**अमाययैव वर्त्तेत न कथंचन मायया।**
**बुध्येतारिप्रयुक्तां च मायां नित्यं सुसंवृतः ॥४॥**
**नास्य छिद्रं परो विद्याच्छिद्रं विद्यात्परस्य तु।**
**गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥५॥**
**बकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत्।**
**वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत् ॥६॥**

एवं विजयमानस्य येऽस्य स्युः परिपन्थिनः ।
तानानयेद्वशं सर्वान् सामादिभिरुपक्रमैः ॥७॥
यदि ते तु न तिष्ठेयुरुपायैः प्रथमैस्त्रिभिः ।
दण्डेनैव प्रसह्यैतांश्छनकैर्वशमानयेत् ॥८॥
यथोद्धरति निर्दाता कक्षं धान्यं च रक्षति ।
तथा रक्षन्नृपो राष्ट्रं हन्याच्च परिपन्थिनः ॥९॥
मोहाद्राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया ।
सोऽचिराद् भ्रश्यते राज्याज्जीविताच्च सबान्धवः ॥१०॥
शरीरकर्षणात्प्राणाः क्षीयन्ते प्राणिनां यथा ।
तथा राज्ञामपि प्राणाः क्षीयन्ते राष्ट्रकर्षणात् ॥११॥
राष्ट्रस्य संग्रहे नित्यं विधानमिदमाचरेत् ।
सुसंग्रहीतराष्ट्रो हि पार्थिवः सुखमेधते ॥१२॥
द्वयोस्त्रयाणां पञ्चानां मध्ये गुल्ममधिष्ठितम् ।
तथा ग्रामशतानां च कुर्याद्राष्ट्रस्य संग्रहम् ॥१३॥
ग्रामस्याधिपतिं कुर्याद्दशग्रामपतिं तथा ।
विंशतीशं शतेशं च सहस्रपतिमेव च ॥१४॥
ग्रामे दोषान्समुत्पन्नान् ग्रामिकः शनकैः स्वयम् ।
शंसेद् ग्रामदशेशाय दशेशो विंशतीशिने ॥१५॥
विंशतीशस्तु तत्सर्वं शतेशाय निवेदयेत् ।
शंसेद् ग्रामशतेशस्तु सहस्रपतये स्वयम् ॥१६॥
तेषां ग्राम्याणि कार्याणि पृथक्कार्याणि चैव हि ।
राज्ञोऽन्यः सचिवः स्निग्धस्तानि पश्येदतन्द्रितः ॥१७॥
नगरे नगरे चैकं कुर्यात्सर्वार्थचिन्तकम् ।
उच्चैः स्थानं घोररूपं नक्षत्राणामिव ग्रहम् ॥१८॥
स ताननुपरिक्रामेत्सर्वानेव सदा स्वयम् ।
तेषां वृत्तं परिणयेत्सम्यग्राष्ट्रेषु तच्चरैः ॥१९॥
राज्ञो हि रक्षाधिकृताः परस्वादायिनः शठाः ।
भृत्या भवन्ति प्रायेण तेभ्यो रक्षेदिमाः प्रजाः ॥२०॥
ये कार्यिकेभ्योऽर्थमेव गृह्णीयुः पापचेतसः ।
तेषां सर्वस्वमादाय राजा कुर्यात्प्रवासनम् ॥२१॥

—मनु० ७।९९-१०१, १०४-१०८, ११०-११७, १२०-१२४

राजा राजसभा चाप्राप्तं लब्धुमिच्छेत्, प्राप्तञ्च यत्नेन गोपायेत्, सुगुप्तञ्च परिवृंहयेत्, परिवर्धितधनञ्च वेदविद्याधर्मप्रचारे विद्यार्थिवेदमार्गोपदेशकानामसमर्थानां च रक्षणे व्ययेत ॥१॥

एतच्चतुर्विधपुरुषार्थप्रयोजनमवगम्य निरालसः सन् यथावदमुमनुतिष्ठेत् ।।२।।

दण्डेनाप्राप्तस्य प्राप्तिकामनां, सततं पर्यवेक्षणेन प्राप्तस्य रक्षणं, रक्षितस्य वृद्धिं कुसीदादिना परिवर्धनं कुर्यात् प्रवृद्धं च धनं पूर्वोक्तमार्गेषु व्ययेत् ।।३।।

नैव कश्चिद् वञ्चयितव्यः, किन्तु निश्छलं सर्वैस्सह व्यवहरणीयम् । सदैव स्वरक्षां कुर्वन् शत्रुप्रयुक्तकपटं ज्ञात्वा तन्निवारणाय यतेत ।।४।।

कश्चिदपि रिपुः स्वछिद्रं नैर्बल्यं न विजानीयात्, रिपोश्छिद्राणि तु स्वयं विजानीयात् । यथा कच्छपः स्वाङ्गानि गूहति, तथैव शत्रोः प्रवेशछिद्रमाच्छादयेत् ।।५।।

यथा बको मत्स्यनिग्रहे ध्यानावस्थितः सन् निर्निमेषचक्षुषा पश्यति, तद्वदर्थसंग्रहान् विचिन्तयेत्, द्रव्यादिपदार्थान्बलं च प्रवर्ध्य शत्रोर्जये केसरीवत्पौरुषं विदध्यात् । शार्दूलवदन्तर्हितः शत्रून्निगृह्णीत । समीपमागतान् बलवतो रिपून् दृष्ट्वा च शशवत्पलायेत् । ततस्तान् वञ्चयित्वा निगृह्णीयात् ।।६।।

एवमुक्तप्रकारेण विजयमानस्य सभापते राष्ट्रे ये (परिपन्थिनः) दस्यवः पाटच्चराः स्युस्तान् साम-दाम-भेदैरुपायैर्वशमानयेत् । तत्र साम= शान्तिः । दाम=किञ्चित्प्रदानम् । भेदः=परतो विश्लेष्य आत्मसात्करणम् ।।७।।

य एतैरुपायैर्वशं न गच्छेयुस्तानत्युग्रदण्डैर्वशमानयेत् ।।८।।

यथा कृषीवलः (कक्षम्) तृणादिकं पृथक्कृत्य शस्यादिकं रक्षति, एवं नराधिपः पाटच्चरान् हत्वा राष्ट्रं विवर्धयेत् ।।९।।

यो हि नराधिपो मोहादविचारेण स्वराष्ट्रं निर्बलतां नयति सोऽचिरेणैव सराष्ट्रान्वयः प्रणश्यति ।।१०।।

यथा प्राणिनां प्राणाः शरीरकार्श्येन क्षीयन्ते तथैव प्रजानां दुर्बलीकरणेन राज्ञां प्राणा बलादीनि सान्वयं विनश्यन्ति ।।११।।

अतो राजा राजसभा च राज्यकार्यसिद्धयर्थं तथा प्रयतेत येन तद् यथावत् सिद्धयेत् । नित्यं राष्ट्रपालनतत्परो भूपः निरन्तरं सुखमनुभवति ।।१२।।

अतो द्वित्रिपञ्चशतग्रामाणां मध्ये राज्यस्थानमेकैकं निर्मिमीत । तेषु यथायोग्यं भृत्यान् राजपुरुषान् नियोज्य सकलराष्ट्रकार्याणि साधयेत् ।।१३।।

प्रत्येकस्मिन् ग्राम एकैकः प्रधानपुरुषः कार्यः, तेष्वेव दशग्रामेष्वन्यो द्वितीयः, एवमेतेष्वेव विंशतिग्रामेष्वन्यस्तृतीयः, तथैव शतग्रामेष्वपरश्चतुर्थः, तेष्वेव सहस्रग्रामेष्वपरः पञ्चमो ग्रामाधिपतिः प्रधानपुरुषः स्थापनीयः ।

यथेदानीमेकैकस्मिन् ग्रामे क्षेत्रमापकः (पटवारी पदवाच्यः) दशग्रामेष्वेको निग्रहालयः (थानाख्यः) द्वयोर्निग्रहालययोरेको महानिग्रहालयः, पञ्चस्वेतेषु "तहसीलनामकम्" स्थानमेकम् दशसु चैतेषु मण्डल—(जिला)—एको नियतोऽस्ति। अयं प्रबन्धप्रकारो मन्वादिधर्मशास्त्रात्परिगृहीतः ॥१४॥

एवं प्रबन्धं विधायैते ग्रामाधिपतयः समादेश्याः यत् ग्रामिकोऽधिपतिः तत्र समुत्थितान्दोषान् गुप्तरूपेण प्रत्यहं दशग्रामाधिपतये निवेदयेत्। दशग्रामाधिपतिश्च तथैव विंशतीशिने दशग्रामवृत्तान्तं सूचयेत् ॥१५॥ तथा—

विंशतीशेन शतेशः सूचनीयः, शतेशेन तत्रत्यवृत्तान्तजातैः सहस्रेशः सूचनीयः, एवं सहस्रेशेन दशसहस्रेशः, दशसहस्रेशेन च लक्षग्रामेशः, लक्षग्रामेशैस्तु नित्यं प्रात्यहिकवृत्तान्तै राजसभा सूचनीया, तथा राजसभायाः सभासद्भिः सार्वभौमचक्रवर्तिमहाराजसभायां सार्वभौगोलिकवृत्तान्ता विज्ञापनीयाः ॥१६॥

प्रतिदशसहस्रग्रामं द्वौ सभापती नियोजयेत्। ययोरेको राजसभाकार्याण्यवेक्षेत, अपरश्च निरालसः सन् सर्वन्यायाधीशादिराजपुरुषाणां कार्याणि परिभ्रम्य निरीक्षेत ॥१७॥

प्रत्येकस्मिन् महानगरे विचारिकायाः संसदो विशालमुन्नतं चन्द्रवद्रमणीयं गृहं निर्मापयेत्। महान्तो विद्यया कृतसर्वविधपरीक्षा विद्यावृद्धास्तत् समास्थाय विचारं कुर्युः। राजप्रजयोरुन्नतिकरान् नियमान् विद्याश्च प्रकाशयेयुः ॥१८॥

परिभ्रमणेन कार्यनिरीक्षकसभापतेरधीनाः सर्वे गुप्तचरा भवेयुः। ये हि क्षत्रियवर्णसम्भवा अन्यवर्णसम्भवा वा स्युः तैर्गुप्तचरैरेव राज्यप्रजानां गुणदोषौ गुरप्तरीत्या विजानीयात्। अपराधिनो दण्ड्याः, सत्पुरुषा गुणिनश्च सत्कर्तव्याः ॥१९॥

राज्ञोऽधिकृता राजपुरुषास्तु सुपरीक्षिताः, सुकुलोत्पन्नाः, धर्मात्मानश्च भवेयुः। तदधीना नियुक्तपुरुषाः प्रायो दुष्टाः परपदार्थहर्तारो मोषकाश्च भवन्ति, एभ्योऽपि वृत्तिदानेन दुष्कर्मभ्यस्तान् परिरक्षेत्। तेभ्यश्चेमाः प्रजाः परिरक्षेत् ॥२०॥

यो राजपुरुषोऽन्यायेन वादिप्रतिवादिभ्यां गुप्तरूपेण धनमादाय पक्षपातेनान्यायं विदधीत तस्य सर्वस्वहरणं विधाय यस्मान्न पुनरावर्तनं तथाभूतं स्थानं तं प्रेषयेत्। अन्यथा ह्येतस्य दण्डाभावेऽन्येऽप्येनमनुकुर्युः। दण्डिते च तस्मिन् दण्डभयात्सर्वे निर्दोषाः स्युः। यावता धनादिना तेषां राजपुरुषाणां योगक्षेमौ सम्यग् भवेताम्, तावद् धनं भूमिर्वा राष्ट्रात् प्रतिमासं प्रतिसंवत्सरं सकृदेव वा तेभ्यः प्रदातव्या। वार्द्धक्यमुपपन्नेष्वपि तेषु तद्वृत्तेरर्धभागं वेतनमामरणान्तं यथावत्तेभ्यः प्रदद्यात्। एषामपत्यानि सत्कर्तव्यानि, गुणानुसा-

रेणैभ्योऽपि वृत्तिरवश्यं प्रदातव्या। तथा असमर्थेभ्यस्तद्दारकेभ्यो भार्यायै च —यदि जीविता भवेत्—निर्वाहार्थं धनं राष्ट्रात् दापयेत। परं यदि तत्पत्नी तत्पुत्राश्च दुष्कर्मिणः स्युस्तदा किमप्येभ्यो न प्रयच्छेत्। इयञ्च नीतिः सदैवानुसरणीया ॥२१॥

यथा फलेन युज्येत राजा कर्त्ता च कर्मणाम्।
तथावेक्ष्य नृपो राष्ट्रे कल्पयेत्सततं करान् ॥१॥
यथाल्पाऽल्पमदन्त्याद्यं वार्य्योकोवत्सषट्पदाः।
तथाऽल्पाऽल्पो ग्रहीतव्यो राष्ट्राद्राज्ञाब्दिकः करः ॥२॥
नोच्छिन्द्यादात्मनो मूलं परेषां चातितृष्णया।
उच्छिन्दन्ह्यात्मनो मूलमात्मानं ताँश्च पीडयेत् ॥३॥
तीक्ष्णश्चैव मृदुश्च स्यात्कार्यं वीक्ष्य महीपतिः।
तीक्ष्णश्चैव मृदुश्चैव राजा भवति सम्मतः ॥४॥
एवं सर्वं विधायेदमितिकर्त्तव्यमात्मनः।
युक्तश्चैवाप्रमत्तश्च परिरक्षेदिमाः प्रजाः ॥५॥
विक्रोशन्त्यो यस्य राष्ट्राद्ध्रियन्ते दस्युभिः प्रजाः।
सम्पश्यतः सभृत्यस्य मृतः स न तु जीवति ॥६॥
क्षत्रियस्य परो धर्मः प्रजानामेव पालनम्।
निर्दिष्टफलभोक्ता हि राजा धर्मेण युज्यते ॥७॥

—मनु० ७।१२८,१२९,१३९,१४०,१४२-१४४

येन राजा कर्मणां कर्ता राजपुरुषः प्रजाजनो वा सुखात्मकफलेन युज्येत तथैव विचार्य राजा राजसभा च स्वराष्ट्रे करनियमान् कुर्यात् ॥१॥

वारि जलम्, तदेव ओकः स्थानं यस्य स वार्योकः "जोंक" इत्याख्यातः वत्सो गो-बालः, षट्पदो भ्रमर एते यथाद्यं भक्षणीयमल्पतरमेव भक्षयन्ति, एवं राज्ञापि प्रजातोऽल्पतर एव वार्षिकः कर आदेयः ॥२॥

अतिलोभेन स्वस्य तथाऽन्येषां सुखमूलं नोन्मूलयेत्, यो व्यवहारं सुखमूलञ्चोच्छिनत्ति स स्वमन्याँश्चापि दुःखयत्येव ॥३॥

राजा कार्यवशात्कठिनस्वभावः कोमलश्च भवेत्, दुष्टेषु क्रूरदृष्ट्या श्रेष्ठेषु च कोमलदृष्ट्या सदैवातिमान्यः सञ्जायते ॥४॥

एवं सर्वविधं प्रवन्धं विधाय प्रमादरहितस्तत्परश्च सन् निरन्तरं प्रजाः पालयेत् ॥५॥

सभृत्यस्य यस्य राज्ञः पश्यत एव दस्यवो रुदतीनां विलपन्तीनां च प्रजानां पदार्थान् प्राणाँश्चापहरन्ति स भृत्यामात्यसहितो मृत एव नतु जीवति महद् दुःखं चाप्नोति ॥६॥

अत एव प्रजानां पालनमेव राज्ञः परमो धर्मः। मनुस्मृतेः सप्तमाध्याये

यथाकरनियमो व्यवस्थापितः, यथा वा सभा व्यवस्थापयेत्तमनुसरन्नराधिपः धर्मेण युक्तः सन् सुखमधिगच्छति, अन्यथा तु दुःखं लभते ॥७॥

**उत्थाय पश्चिमे यामे कृतशौचः समाहितः ।**
**हुताग्निर्ब्राह्मणाँश्चार्च्य प्रविशेत्स शुभां सभाम् ॥१॥**
**तत्र स्थिताः प्रजाः सर्वाः प्रतिनन्द्य विसर्जयेत् ।**
**विसृज्य च प्रजाः सर्वा मन्त्रयेत्सह मन्त्रिभिः ॥२॥**
**गिरिपृष्ठं समारुह्य प्रासादं वा रहोगतः ।**
**आरण्ये निःशलाके वा मन्त्रयेदविभावितः ॥३॥**
**यस्य मन्त्रं न जानन्ति समागम्य पृथग्जनाः ।**
**स कृत्स्नां पृथिवीं भुङ्क्ते कोशहीनोऽपि पार्थिवः ॥४॥**

—मनु० ७।१४५-१४८

रात्रेरन्तिमप्रहर उत्थाय, शौचं विधाय सावधानमतिरीश्वरं ध्यायेत्। अग्निहोत्रं कृत्वा धार्मिकान् सत्कृत्य भोजनादिकञ्च निर्वर्त्य सभां प्रविशेत् ।

तत्रोपस्थिताः सर्वाः प्रजा (सम्भाषणदर्शनादिभिः) आदृत्य विसर्जयित्वा च राजव्यवस्थाविचारं कुर्यात् ॥२॥

पर्वतशिखरमारुह्य एकान्तगृहे निःशलाके वने निर्जने वा स्थाने विरोधभावं परित्यज्य मन्त्रिभिस्सह राष्ट्रकार्यं चिन्तयेत् ॥३॥

यस्य राज्ञो मनोगतभावमन्ये जनाः सम्भूयापि न विदन्ति, यस्य शुद्धो गम्भीरः परोपकारनिमित्तो विचारः सर्वदा सुगुप्तो भवति । स द्रव्यहीनोऽपि राजा सकलपृथ्वीशासने समर्थः । तस्माद् भूपः सभासदामनुमतिमन्तरेण न किमपि स्वेच्छयाऽनुतिष्ठेत् ॥४॥

**आसनं चैव यानं च सन्धिं विग्रहमेव च ।**
**कार्यं वीक्ष्य प्रयुञ्जीत द्वैधं संश्रयमेव च ॥१॥**
**सन्धिं तु द्विविधं विद्याद्राजा विग्रहमेव च ।**
**उभे यानासने चैव द्विविधः संश्रयः स्मृतः ॥२॥**
**समानयानकर्मा च विपरीतस्तथैव च ।**
**तथा त्वायतिसंयुक्तः संधिर्ज्ञेयो द्विलक्षणः ॥३॥**
**स्वयंकृतश्च कार्यार्थमकाले काल एव वा ।**
**मित्रस्य चैवापकृते द्विविधो विग्रहः स्मृतः ॥४॥**
**एकाकिनश्चात्ययिके कार्ये प्राप्ते यदृच्छया ।**
**संहतस्य च मित्रेण द्विविधं यानमुच्यते ॥५॥**
**क्षीणस्य चैव क्रमशो दैवात्पूर्वकृतेन वा ।**
**मित्रस्य चानुरोधेन द्विविधं स्मृतमासनम् ॥६॥**

बलस्य स्वामिनश्चैव स्थितिः कार्यार्थसिद्धये ।
द्विविधं कीर्त्यते द्वैधं षाड्गुण्यगुणवेदिभिः ॥७॥
अर्थसम्पादनार्थं च पीड्यमानः स शत्रुभिः ।
साधुषु व्यपदेशार्थं द्विविधः संश्रयः स्मृतः ॥८॥
यदावगच्छेदायत्यामाधिक्यं ध्रुवमात्मनः ।
तदात्वे चाल्पिकां पीडां तदा सन्धिं समाश्रयेत् ॥९॥
यदा प्रहृष्टा मन्येत सर्वास्तु प्रकृतीर्भृशम् ।
अत्युच्छ्रितं तथात्मानं तदा कुर्वीत विग्रहम् ॥१०॥
यदा मन्येत भावेन हृष्टं पुष्टं बलं स्वकम् ।
परस्य विपरीतं च तदा यायाद्रिपुं प्रति ॥११॥
यदा तु स्यात्परिक्षीणो वाहनेन बलेन च ।
तदासीत प्रयत्नेन शनकैः सान्त्वयन्नरीन् ॥१२॥
मन्येतारिं यदा राजा सर्वथा बलवत्तरम् ।
तदा द्विधा बलं कृत्वा साधयेत्कार्यमात्मनः ॥१३॥
यदा परबलानां तु गमनीयतमो भवेत् ।
तदा तु संश्रयेत् क्षिप्रं धार्मिकं बलिनं नृपम् ॥१४॥
निग्रहं प्रकृतीनां च कुर्याद्योऽरिबलस्य च ।
उपसेवेत तं नित्यं सर्वयत्नैर्गुरुं यथा ॥१५॥
यदि तत्रापि सम्पश्येद्दोषं संश्रयकारितम् ।
सुयुद्धमेव तत्राऽपि निर्विशङ्कः समाचरेत् ॥१६॥

—मनु० ७।१६१-१७६

अत्र सर्वं राजादिराजपुरुषैरवधातव्यम्—

**(आसनम्)** स्थिरता, **(यानम्)** शत्रुमुखाभिगमनम्, **(सन्धिः)** मैत्री, **(विग्रहः)** दुष्टशत्रुभिर्विरोधः, **(द्वैधं)** सैन्यं द्विधा विधाय स्वविजयसाधनं **(संश्रयः)** नैर्बल्यदशायां प्रबलराजाश्रयणम्, एतानि षट् कर्माणि यथावत्कार्यं विचार्य तत्र प्रयोज्यानि ॥१॥

सन्धिर्विग्रहो यानमासनं द्वैधीभावः संश्रयश्च द्विप्रभेदाः । तान् यथावत् विजानीयात् ॥२॥

सन्धिर्द्विविधः शत्रुणा मैत्री विपरीतभावो वा । किन्तु तात्कालिकं तथोत्तरकालिकञ्च कर्म कुर्वन्नेव द्विविधं सन्धिं समाचरेत् ॥३॥

विग्रहश्चापि द्विविधः । स्वार्थसिद्धयै योग्यायोग्यसमयमविचार्य संग्रामानुष्ठानमेकः, तथा सुहृन्निमित्तः संग्रामो द्वितीयः ॥४॥

यानञ्चापि द्विविधम् । आकस्मिके स्वार्थलाभे स्वेच्छया युद्धे प्रवर्तनमाद्यम्, मित्रयोगेनारिमुखाभिसर्पणं द्वितीयम् ॥५॥

स्वयं कथञ्चित् क्षीणस्य निर्बलस्य मित्रेण वा निवारितस्य स्वस्थानावलम्बनमिति द्विविधमासनम् ।।६।।

कार्यसिद्धयै सेनापतीन् सैन्यानि च द्विधा विभज्य विजयसाधनं द्विविधं द्वैधमुच्यते ।।७।।

स्वप्रयोजनसिद्धयर्थं कस्यचिद् बलवतो राज्ञो महात्मनो वा शरणाश्रयणं—येन शत्रुणा पीडितो न भवेत्—द्विविधः संश्रय उच्यते ।।८।।

तात्कालिकयुद्धे स्वल्पेऽपि नाशसम्भवे तथोत्तरकालसंग्रामे च स्ववृद्धिविजयलाभावगमे शत्रुणा सहोचितकालावधिं सन्धिं कुर्यात् ।।९।।

यदैव निजां सर्वां प्रजां सेनाञ्च सुप्रसन्नामुन्नतिशीलां विजानीयात्, आत्मानमपि च तथैव मन्येत तदा शत्रुणा युद्धयेत ।।१०।।

यदात्मनो बलं सैन्यं प्रहृष्टं पुष्टियुक्तं सुप्रसन्नञ्च जानीयाच्छत्रोश्च बलमतो विपरीतं निर्बलं भवेत् तदा शत्रुमभियायात् ।।११।।

यदा सैन्येन रथाश्वादिभिर्वाहनैश्च परिक्षीणो भवेत् तदा शत्रुं सामोपायेन शनैः शनैः शान्तिमुपनयन्नासनमाचरेत् ।।१२।।

वैरिणं बलीयांसं विलोक्य द्वैधमाश्रयेत्, स्वकार्यञ्च सम्पादयेत् ।।१३।।

शत्रोराक्रमणसम्भावनायां तु तूर्णं धर्मात्मानं बलीयांसं राजानमाश्रयेत् ।।१४।।

संश्रितो यः कश्चिद् भूपः शत्रो राज्याङ्गं शक्तिञ्च नाशयितुं प्रभवेत् स हि विशेषतो गुरुवत्सेव्यः ।।१५।।

यद्याश्रितोऽपि कस्यचिदाश्रयदातुः कर्मणि दोषं पश्येत्तेन सहापि निर्भीकः सन् युद्धमाचरेत् । धार्मिकेण राज्ञा समं न कदाचिदपि विरोधं कुर्यात् किन्तु तेन साकं सदैव मैत्रीमुपगच्छेत् । दुर्जनस्य तु प्रबलस्यापि शत्रोर्जयार्थं पूर्वोक्ताः प्रयोगाः प्रयोज्याः ।।१६।।

**सर्वोपायैस्तथा कुर्यान्नीतिज्ञः पृथिवीपतिः ।**
**यथास्याभ्यधिका न स्युर्मित्रोदासीनशत्रवः ।।१।।**
**आयतिं सर्वकार्याणां तदात्वं च विचारयेत् ।**
**अतीतानां च सर्वेषां गुणदोषौ च तत्त्वतः ।।२।।**
**आयत्यां गुणदोषज्ञस्तदात्वे क्षिप्रनिश्चयः ।**
**अतीते कार्य्यशेषज्ञः शत्रुभिर्नाभिभूयते ।।३।।**
**यथैनं नाभिसंदध्युर्मित्रोदासीनशत्रवः ।**
**तथा सर्वं संविदध्यादेष सामासिको नयः ।।४।।**

—मनु० ७।१७७-१८०

नयविन्नृपः सर्वविधैरुपायैरेवं प्रबन्धं विदधीत येन मित्राणि, उदासीनाः, शत्रवश्चाधिका न भवेयुः ।।१।।

त्रिष्वपि भूतभविष्यद्वर्तमानकालेषु कर्तव्यविषयान्याथार्थ्येन गुण-दोषाणां विचारपुरस्सरं चिन्तयेत् ॥२॥

ततश्च दोषाणां निवारणे गुणानाञ्च स्थैर्यसम्पादने यतेत। यो भूप आगामिकालेषु विधातव्यविषयाणां गुणदोषौ वेत्ति, यश्च तात्कालिकेषु प्रत्युत्पन्नमतिः, यो वाऽनुष्ठितकार्येषु कर्त्तव्यावशेषं सम्यग् जानाति नैव स कर्हिचिदपि शत्रुभिः पराभूयते ॥३॥

सर्वैं राजपुरुषैर्विशेषेण च सभापतिना तथा प्रयतनीयम्, येन सुहृदः, उदासीनाः, रिपवो वा नैनं राजानं राष्ट्रं वा परिभवेयुः। संक्षेपतोऽत्रेयमेव नीतिः ॥४॥

कृत्वा विधानं मूले तु यान्त्रिकं च यथाविधि।
उपगृह्यास्पदं चैव चारान् सम्यग्विधाय च ॥१॥
संशोध्य त्रिविधं मार्गं षड्विधं च बलं स्वकम्।
सांपरायिककल्पेन यायादरिपुरं शनैः ॥२॥
शत्रुसेविनि मित्रे च गूढे युक्ततरो भवेत्।
गतप्रत्यागते चैव स हि कष्टतरो रिपुः ॥३॥
दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा।
वराहमकराभ्यां वा सूच्या वा गरुडेन वा ॥४॥
यतश्च भयमाशंकेत्ततो विस्तारयेद्बलम्।
पद्मेन चैव व्यूहेन निविशेत सदा स्वयम् ॥५॥
सेनापतिबलाध्यक्षौ सर्वदिक्षु निवेशयेत्।
यतश्च भयमाशङ्केत् प्राचीं तां कल्पयेद्दिशम् ॥६॥
गुल्माँश्च स्थापयेदाप्तान् कृतसंज्ञान् समन्ततः।
स्थाने युद्धे च कुशलानभीरूनविकारिणः ॥७॥
संहतान् योधयेदल्पान् कामं विस्तारयेद् बहून्।
सूच्या वज्रेण चैवैतान् व्यूहेन व्यूह्य योधयेत् ॥८॥
स्यन्दनाश्वैः समे युध्येदनूपे नौद्विपैस्तथा।
वृक्षगुल्मावृते चापैरसिचर्मायुधैः स्थले ॥९॥
प्रहर्षयेद् बलं व्यूह्य ताँश्च सम्यक् परीक्षयेत्।
चेष्टाश्चैव विजानीयादरीन् योधयतामपि ॥१०॥
उपरुध्यारिमासीत राष्ट्रं चास्योपपीडयेत्।
दूषयेच्चास्य सततं यवसान्नोदकेन्धनम् ॥११॥
भिन्द्याच्चैव तडागानि प्राकारपरिखास्तथा।
समवस्कन्दयेच्चैनं रात्रौ वित्रासयेत्तथा ॥१२॥

प्रमाणानि च कुर्वीत तेषां धर्म्यान्यथोदितान् ।
रत्नैश्च पूजयेदेनं प्रधानपुरुषैः सह ॥१३॥
आदानमप्रियकरं दानञ्च प्रियकारकम् ।
अभीप्सितानामर्थानां काले युक्तं प्रशस्यते ॥१४॥

—मनु० ७। १८४-१९२,१९४-१९६,२०३, २०४

स्वराष्ट्ररक्षाप्रबन्धं विधाय यात्रानिमित्ताः सैन्य-पान-वाहन-शस्त्रास्त्राद्याः सर्वसामग्रीरादाय दूतान्—सार्वत्रिकसमाचारप्रदपुरुषाँश्च सुगुप्तं संस्थाप्य शत्रोरभिमुखं योद्धुं यायात् ॥१॥

त्रिविधं पन्थानं—एकं स्थले, द्वितीयं भूमौ—जले, समुद्रेषु, नदीषु वा तृतीयमाकाशे संशोध्य, भूमिमार्गे रथाश्वकरिभिः, जले नौकाभिः, आकाशे च विमानादियानैर्गच्छेत् । पदातिरथाश्वहस्तिशस्त्रास्त्रान्नपानादिसामग्रीं यथावदादाय केनचिद् व्यपदेशेन शनैः शनैः शत्रुनगरसमीपं यायात् ॥२॥

योऽन्तर्वृत्त्या रिपुणा संयुक्तः, निजेन समञ्चापि बहिर्भावेन मित्रत्वमुपागतो, गूढभावेन च शत्रुं सूचयति, स हि महारिपुरवगन्तव्यः । तस्य गमनागमनयोः स्तेन सहाऽऽलापे च सावधानमतिर्भवेत् । अन्तःशत्रुरुपरिमित्रं पुमान् महाशत्रुरवगन्तव्यः ॥३॥

व्यूहो हि नाम सैन्यविन्यासः, युद्धनिमित्तं सैनिकानां रचनाविशेषः । व्यूहरचनाविशेषं राजपुरुषान् शिक्षयेत्, स्वयं नृपोऽप्यभ्यसेत्, एवं सर्वप्रजाजनाँश्चापि शिक्षयेत्, शिक्षिता एव योद्धारः सम्यग् योद्धुं विजानन्ति, शिक्षाकाले तथाविधशिक्षया दण्डव्यूहेन दण्डवत्तिर्यग्रचनाविशेषस्तेन, शकटव्यूहेन—शकटो रथस्तद्वत्तेन व्यूहेन, वराहव्यूहेन—यथा हि शूकरा धावन्तोऽन्योऽन्यमनुयान्ति कर्हिचिच्च सर्वे संयुज्य निचयेन यान्ति तद्वत्, मकरव्यूहेन—मकरो यथा जले प्लवते तथा, सूचीव्यूहेन—यथासूचिकाग्रभागः सूक्ष्मः तदन्तर्भागः स्थूलः तथा सैन्यं चालयेत् । नीलकण्ठः पक्षिविशेषो यथोपरि-अधश्चोत्प्लुत्य प्रहरति तद्वत् सैनिकान् व्यूह्य योधयेत् ॥४॥

यतो भीतिसन्देहस्तत एव सेनां प्रसारयेत् । स्वयञ्च सर्वसेनापतिभिः परिवृतः पद्मव्यूहेन सर्वतः सैन्यानि स्थापयित्वा मध्ये तिष्ठेत् ॥५॥

सेनानायकान्योद्धॄँश्चाष्टासु दिक्षु स्थापयेत् । यतो दिग्भागतः समरसम्भवस्तदभिमुखमेव सेनामुखं कारयेत्, तथान्यास्वपि दिक्षु सुप्रबन्धो विधेयः, अन्यथा हि पृष्ठपार्श्वभागेनापि वैरिघातः सम्भवति ॥६॥

युद्धविद्यानिपुणान् धार्मिकान् अवस्थानयुद्धयोः प्रवीणान् निर्भयानव्यभिचारिणः स्थिरस्तम्भानिव सैन्यैकदेशान् गुल्माख्यान् सर्वदिक्षु सैन्यं परितः स्थापयेत् ॥७॥

स्वल्पकैः सैनिकैर्बहुभिः सह सम्पराये सङ्घेन योद्धव्यम् । सत्यवसरे

चाल्पानेव झटिति विस्तारयेत्। नगराणि दुर्गान् शत्रुसैन्यं वा प्रविश्य योधने सूचीव्यूहेन वज्रव्यूहेन वा द्विधारोऽसिरिव सव्यापसव्यं शत्रून् योधयन्तः प्रविशेयुः। अन्ययापि नैकविधव्यूहरचनया–सैन्यस्थित्या—योधयेयुः। सम्मुख एव शतघ्नीभुशुण्डीनां प्रहारे तु सर्पव्यूहेन—सर्पवद्भूमिं स्पृशन्तो गच्छेयुः। शतघ्नीसान्निध्ये पुनः सम्प्राप्ते तत्रस्थान् जनान् निहत्य निगृह्य च शतघ्नीमुखं शत्रोरभिमुखं विधाय ताभिरेव शतघ्नीभुशुण्ड्यादिभिररीन् हन्युः। अथवा वृद्धपुरुषान् तुरङ्गेष्वारोप्य शतघ्नीसम्मुखं धावयेयुः, मध्ये च शूरानश्वारोहिणः संस्थाप्य रिपुमुपगम्य प्रहरेयुः ॥८॥

समभूमौ रथाश्वपदातिभिः, जलनिधौ पोतैः, स्वल्पजले गजैः, तरुगुल्मावृतप्रदेशे धनुर्बाणैः, सैकतप्रदेशेषु कृपाणैश्चर्मायुधैश्च (ढाल इत्याख्यातैः) युद्ध्येरन् योधयेयुश्च ॥९॥

समर-समये योद्धॄन् उत्साहयेत्, तथा हर्षयेदपि। युद्धान्ते च शौर्य-पराक्रमोत्साहोत्पादकैर्व्याख्यानैरन्नपानशस्त्रास्त्रभेषजदानैश्च सर्वसैनिकानां मनांस्याह्लादयेत्। व्यूहं विना न युद्ध्येत नापि योधयेत्। तथा योधानामरिभिः सह युद्ध्यमानानामपि सोपध्यनुपधिचेष्टां बुध्येत ॥१०॥

सत्यवसरे यथाकामं शत्रून् परित आवृत्य निरुन्ध्यात्, राज्यञ्चास्य समुत्साद्य यवसघासान्नोदकेन्धनादिकं दूषयेत् ॥११॥

शत्रोः सरांसि विनाशयेत्, तथा दुर्गप्राकारपरिखा भिन्द्यात्। रात्रौ चैनं वित्रासयेत् जयोपायञ्च विदधीत ॥१२॥

विजित्य प्रमाणं प्रतिज्ञादिकं लेखयेत्। तद्वंश्यमेवान्यं धार्मिकनरं राजानं कुर्वीत। तस्माच्च संविदं कारयेत् "यथास्माकमादेशः, यथा च धार्मिका राजनीतिस्तामनुसृत्य न्यायेन प्रजाः पालनीयाः" इति। एवमुपदिश्य तदभ्याशे तादृशाः पुमांसो नियोजनीया येन भूय उपद्रवो न जायेत। विजितञ्च प्रधानपुरुषैः सह रत्नाद्युत्कृष्टपदार्थप्रदानेन सत्कुर्वीत। येन कार्यनिर्वाहोऽप्यस्य न भवेत्तथैनन्न कुर्यात्। काराक्षिप्तमप्येनं यथार्हमर्चयेत्। येनासौ पराभवशोकविमुक्तः सन्नानन्दमनुभवेत् ॥१३॥

लोके हि परपदार्थानां ग्रहणमप्रीतिकरं स्वपदार्थप्रदानञ्च प्रीतेः कारणमिति प्रसिद्धमेव विशेषतश्च यथाकालं कर्तव्यानुष्ठानं प्रशस्यते। पराजितपुरुषाय तन्मनोऽभिलषितपदार्थप्रदानन्तु नितरां श्रेयः। नैनं कदाचिदपि गर्हयेदुपहसेद्वा। अपि चास्माभिस्त्वं विजितोऽसीति तत्पुरः जात्वपि न भाषेत। किन्तु स "भवानस्मदीयो बन्धुः" एवमादिवचोभिः सततं मान्य आदरणीयश्च ॥१४॥

कीदृशाः सुहृदो भवेयुरित्यत्राह—

**हिरण्यभूमिसम्प्राप्त्या पार्थिवो न तथैधते ।**
**यथा मित्रं ध्रुवं लब्ध्वा कृशमप्यायतिक्षमम् ॥१॥**
**धर्मज्ञं च कृतज्ञं च तुष्टप्रकृतिमेव च ।**
**अनुरक्तं स्थिरारम्भं लघुमित्रं प्रशस्यते ॥२॥**
**प्राज्ञं कुलीनं शूरं च दक्षं दातारमेव च ।**
**कृतज्ञं धृतिमन्तञ्च कष्टमाहुररिं बुधाः ॥३॥**
**आर्य्यता पुरुषज्ञानं शौर्य्यं करुणवेदिता ।**
**स्थौललक्ष्यं च सततमुदासीनगुणोदयः ॥४॥**

—मनु० ७। २०८-२११

भूमिसुवर्णलाभेन पार्थिवस्तथा न वृद्धिमेति यथा स्थिरानुरागिणं दूरदर्शिनं कार्यसाधकं समर्थं सुहृदम्, अपि वा दुर्बलमपि मित्रं लब्ध्वा वर्धते ॥१॥

धर्मज्ञं, कृतोपकारस्य स्मर्तारम्, प्रसन्नस्वभावम्, अनुरागिणं, स्थिरकार्यारम्भं, निर्बलमपि सुहृदं लब्ध्वा महीपतिः प्रशस्यते ॥२॥

बुद्धिमन्तं, महाकुलं, विक्रान्तं, चतुरं, दातारं, उपकारस्मर्तारं, धैर्यवन्तं (सुखदुःखयोरेकरूपम्) पुमांसं न कर्हिचित् शत्रुभावमापादयेत्, अन्यथाह्यात्मानं क्लेशयिष्यति ॥३॥

सुप्रशस्यगुणान्वितः, सदसत्पुरुषविशेषज्ञः, विक्रान्तः, कृपालुः, स्थूललक्ष्यश्च—सततं स्वासम्बद्धवार्ताश्रावकः—पुमान् उदासीन इति गीयते ॥४॥

**एवं सर्वमिदं राजा सह संमन्त्र्य मन्त्रिभिः ।**
**व्यायम्याप्लुत्य मध्याह्ने भोक्तुमन्तःपुरं विशेत् ॥**—मनु० ७।२१६

एवं पूर्वोक्तचर्यया प्रातरुत्थाय कृतशौचः सन्ध्याग्निहोत्रादिकं निर्वर्त्यान्यैः पुरोहितादिभिर्वा कारयित्वा मन्त्रिभिः सह सम्मन्त्र्य सेनासन्निवेशमभ्येत्य सैनिकान् सेनानायकाँश्च निरीक्ष्य तान् विविधव्यूहरचनाप्रकारं शिक्षयित्वा हस्त्यश्वगोशालां शस्त्रास्त्रागारं वेधालयं द्रव्यकोशञ्च प्रत्यहं परीक्ष्य प्रबन्धप्रतिबन्धकानपनुदेत्। ततो व्यायामशालामेत्य शारीरं परिश्रमं विधाय मध्याह्ने भोक्तुं भार्यादिनिवासस्थानमन्तःपुरं प्रविशेत्। सुपरीक्षितं बुद्धिबलपराक्रमारोग्यवर्धकं रोगहरं विविधान्नव्यञ्जनपानयुतं सुगन्धिमिष्टाद्यनेकरससंयुक्तमुत्तमाशनं भुञ्जीत। येन सदैव सौख्यं भवेत्। इत्थं सुप्रबन्धेन सकलराष्ट्रकार्यमुन्नयेत्।

प्रजासम्बन्धिनः करविषयकनियमानाह—

**पञ्चाशद्भाग आदेयो राज्ञा पशुहिरण्ययोः ।**
**धान्यानामष्टमो भागः षष्ठो द्वादश एव वा ॥** —मनु० ७।१३०

व्यवसायिशिल्पिजनेभ्यः पशुसुवर्णरजतादिव्यापारेषु लब्धलाभानां पञ्चाशत्तमो भागः, धान्याद्यन्नेषु षष्ठोऽष्टमो द्वादशो वा भागो ग्राह्यः।

धनादानं तथा विदधीत येन कृषीवला धनाद्यभावेन क्लेशभाजो न स्युः। यतो वै प्रजानां धनाढ्यारोगत्वे अन्नपानादिभिः सम्पन्नत्वे च राजानः प्रवर्धन्ते। राजपुरुषैः स्वसन्तानवत्प्रजाः पालनीयाः, प्रजाभिश्च राजानो राजपुरुषादयश्च पितृवदवगन्तव्याः। कृषकप्रभृतयः श्रमजीविनो राज्ञामपि राजान इति तथ्यमेव। राजा तु तेषां केवलं रक्षकः। प्रजानामभावे हि स कस्य राजा भवेत्? राज्ञश्चाभावे कस्य ताः प्रजाः स्युः? इत्थं द्वावपि स्वस्वकर्तव्यकर्मसु स्वतन्त्रौ, अन्योऽन्याश्रितोपकारककर्मसु च परतन्त्रावासाताम्। प्रजासम्मतिविरुद्धा राजानो राजपुरुषाश्च न भवेयुः। राजादेशविरोधिनश्च राजपुरुषाः प्रजाश्च न स्युः। एवं राजकीयं राजनीतिविषयककर्तव्यविधानं समासतो वर्णितम्, विस्तरस्तु चतुर्वेदेषु, मनुस्मृतौ, शुक्रनीतौ, महाभारतादिषु च द्रष्टव्यः। प्रजानां न्यायव्यवहारविषयश्च मनुस्मृतेरष्टमनवमाध्याये वर्णितः, तदनुसारेण व्यवहर्तव्यम्। संक्षेपेणात्रापि विन्यस्यते —

प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः।
अष्टादशसु मार्गेषु निबद्धानि पृथक् पृथक्॥१॥
तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः।
सम्भूय च समुत्थानं दत्तस्यानपकर्म च॥२॥
वेतनस्यैव चादानं संविदश्च व्यतिक्रमः।
क्रयविक्रयानुशयो विवादः स्वामिपालयोः॥३॥
सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके।
स्तेयं च साहसं चैव स्त्रीसङ्ग्रहणमेव च॥४॥
स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च।
पदान्यष्टादशैतानि व्यवहारस्थिताविह॥५॥
एषु स्थानेषु भूयिष्ठं विवादं चरतां नृणाम्।
धर्मं शाश्वतमाश्रित्य कुर्यात्कार्यविनिर्णयम्॥६॥
धर्मो विद्धस्त्वधर्मेण सभां यत्रोपतिष्ठते।
शल्यं चास्य न कृन्तन्ति विद्धास्तत्र सभासदः॥७॥
सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम्।
अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी॥८॥
यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च।
हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः॥९॥
धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः।
तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतोऽवधीत्॥१०॥
वृषो हि भगवान् धर्मस्तस्य यः कुरुते ह्यलम्।
वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत्॥११॥

एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः।
शरीरेण समन्नाशं सर्वमन्यद्धि गच्छति ॥१२॥
पादोऽधर्मस्य कर्त्तारं पादः साक्षिणमृच्छति।
पादः सभासदः सर्वान् पादो राजानमृच्छति ॥१३॥
राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः।
एनो गच्छति कर्त्तारं निन्दार्हो यत्र निन्द्यते ॥१४॥

—मनु० ८।३-८, १२-१६

सभाभी राजभी राजपुरुषैश्च देशाचारशास्त्रव्यवहारहेतुभिरष्टादश-विवादास्पदविषयेषु विवादयुक्तविषयाः प्रत्यहं निर्णेतव्याः। शास्त्रोक्त-नियमानामभावे सुनियमाश्चापि निर्धार्याः, येन राजप्रजयोरुन्नतिर्भवेत् ॥१॥

ते च वक्ष्यमाणा अष्टादश विवादास्पदविषयाः—

१. ऋणादानम्—केनचिदृणादानप्रदानयोर्विवादः। २. निक्षेपः—न्यासः। स्वधनस्यान्यस्मिन्नर्पणम्। ३. अस्वामिविक्रयः—पदार्थास्वामिना कृतो विक्रयः। ४. सम्भूय समुत्थानम्—संहतैरन्यस्मिन्नत्याचारः। ५. दत्तस्यानपकर्म च—दत्तानां पदार्थानां पुनरदानम् ॥२॥

६. वेतनस्यैव चादानम्—कर्मकरस्य भृतेरदानमल्पदानं ततो ग्रहणं वा। ७. संविदश्च व्यतिक्रमः—कृतव्यवस्थातिक्रमः। ८. क्रयविक्रयानुशयः—क्रये विक्रये च कृते पश्चात्तापाद् विप्रतिपत्तिः। ९. स्वामिपालयोर्विवादः—पशूनां स्वामिनः पालयितुश्च परस्परविरोधः ॥३॥

१०. सीमाविवादधर्मः—ग्रामादिसीमाविप्रतिपत्तिः। ११. दण्ड-पारुष्यम्—कठोरदण्डप्रदानम्। १२. वाक्पारुष्यम्—अभिवादः। १३. स्तेयम्—चौर्यम्। १४. साहसम्—प्रसह्य बलात्कारेण कार्यानुष्ठापनम्। १५. स्त्री-संग्रहणम्—स्त्रीपुरुषयोर्व्यभिचारः ॥४॥

१६. स्त्रीपुंधर्मः—स्त्रीपुरुषयोर्धर्मे व्यतिक्रमः। १७. विभागः—दाय-भागविषये कलहः। १८. द्यूतसमाह्वयश्च—द्यूतसमाह्वयौ "जुआ" इति ख्यातौ तत्र अप्राणिभिर्यत् क्रियते तल्लोके द्यूतमुच्यते, प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः। एतानि चाष्टादशविधानि विरोधकारणानि ॥५॥

एष्वृणादानादिव्यवहारस्थानेषु बाहुल्येन विवादं कुर्वतां नृणां सनातन-धर्ममवलम्ब्य कार्यनिर्णयं कुर्यात्, पक्षपातः कस्यापि न विधेयं इति यावत् ॥६॥

अधर्मेण पीडितो धर्मः यां सभां समुपतिष्ठते, तत्रत्याश्च सभासदः शल्यमिव धर्मापवादं नोद्धरन्ति, अधर्मञ्च न प्रणिहन्ति। धर्मवन्तो न सम्मान्यन्तेऽधर्मात्मानश्च न दण्डयन्त इति यावत्, तदा त एव तेनाधर्मशल्येन विद्धा इव भवन्ति ॥७॥

धार्मिकेण पुरुषेण सदसि प्रवेशो न विधेयः, प्रविष्टेन च सत्यं याथा-

तथ्यमेव वक्तव्यम्, यो वै सभायामन्यायं विलोकयन्नपि तूष्णीमवतिष्ठते, सत्यन्यायविरुद्धं च भाषते स पापीयान् भवति ।।८।।

यत्र परिषदि प्रेक्षमाणानां सभासदां धर्मोऽधर्मेण सत्यञ्चासत्येन विहन्यते, तत्र सर्वे सभासदो हता भवन्ति । न कश्चित् तस्यां प्राणितीति यावत् ।।९।।

हतो धर्मो धर्महन्तारं निहन्ति, रक्षितश्च धर्मो रक्षकं विरक्षति, निहतो धर्मोऽस्मान् हन्यादिति विचार्य धर्मो न हन्तव्यः ।।१०।।

यो वै सकलैश्वर्यप्रदं सुखजनकं धर्मं विलुम्पति, तमेव विद्वांसो वृषलं शूद्र इति संचक्षते, अतो धर्मो न विलोपनीयः ।।११।।

धर्म एवैकः सुहृदिह लोके, यो हि मरणेऽप्यनुगच्छति, अन्ये सर्वे पदार्थाः सङ्गिनश्च शरीरनाश एव विनश्यन्ति, सर्वेषां सङ्गः परिहीयते धर्मस्तु तदापि तत्साहचर्यं न मुञ्चतीति यावत् ।।१२।।

यत्र राजसंसदि पक्षपातेनान्यायः समनुष्ठीयते तत्राधर्मस्य चतुर्विभागा भवन्ति, एकोऽधर्मस्य कर्तारं, द्वितीयः साक्षिणम्, तृतीयः सभासदः, चतुर्थश्चाधार्मिकं सभापतिं राजानं व्याप्नोति ।।१३।।

यस्यां पुनः सभायां निन्दार्हो निन्द्यते, स्तोतव्यः स्तूयते, दण्डचो दण्डचते, मान्यश्च मान्यते, तत्र राजा सभासदश्च सर्वे पापान्निर्मुक्ताः सन्तः पूतात्मानो भवन्ति, पापदोषाश्च तत्कर्तारमेवानुयान्तीति ।।१४।।

साक्षिणः कीदृशा भवेयुरित्यत्राह—

**आप्ताः सर्वेषु वर्णेषु कार्य्याः कार्येषु साक्षिणः ।**
**सर्वधर्मविदोऽलुब्धा विपरीतांस्तु वर्जयेत् ।।१।।**
**स्त्रीणां साक्ष्यं स्त्रियः कुर्युर्द्विजानां सदृशा द्विजाः ।**
**शूद्राश्च सन्तः शूद्राणामन्त्यानामन्त्ययोनयः ।।२।।**
**साहसेषु च सर्वेषु स्तेयसङ्ग्रहणेषु च ।**
**वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः ।।३।।**
**बहुत्वं परिगृह्णीयात्साक्षिद्वैधे नराधिपः ।**
**समेषु तु गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान् ।।४।।**
**समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिध्यति ।**
**तत्र सत्यं ब्रुवन्साक्षी धर्मार्थाभ्यां न हीयते ।।५।।**
**साक्षी दृष्टश्रुतादन्यद्विब्रुवन्नार्य्यसंसदि ।**
**अवाङ्नरकमभ्येति प्रेत्य स्वर्गाच्च हीयते ।।६।।**
**स्वभावेनैव यद् ब्रूयुस्तद् ग्राह्यं व्यावहारिकम् ।**
**अतो यदन्यद्विब्रूयुर्धर्मार्थं तदपार्थकम् ।।७।।**

सभान्तः साक्षिणः प्राप्तानर्थिप्रत्यर्थिसन्निधौ ।
प्राड्विवाकोऽनुयुञ्जीत विधिनाऽनेन सान्त्वयन् ॥८॥
यद् द्वयोरनयोर्वेत्थ कार्येऽस्मिन् चेष्टितं मिथः ।
तद् ब्रूत सर्वं सत्येन युष्माकं ह्यत्र साक्षिता ॥९॥
सत्यं साक्ष्ये ब्रुवन्साक्षी लोकानाप्नोति पुष्कलान् ।
इह चानुत्तमां कीर्तिं वागेषा ब्रह्मपूजिता ॥१०॥
सत्येन पूयते साक्षी धर्मः सत्येन वर्द्धते ।
तस्मात्सत्यं हि वक्तव्यं सर्ववर्णेषु साक्षिभिः ॥११॥
आत्मैव ह्यात्मनः साक्षी गतिरात्मा तथात्मनः ।
मावमंस्थाः स्वमात्मानं नृणां साक्षिणमुत्तमम् ॥१२॥
यस्य विद्वान् हि वदतः क्षेत्रज्ञो नाभिशङ्कते ।
तस्मान्न देवाः श्रेयांसं लोकेऽन्यं पुरुषं विदुः ॥१३॥
एकोऽहमस्मीत्यात्मानं यत्त्वं कल्याण मन्यसे ।
नित्यं स्थितस्ते हृद्येषः पुण्यपापेक्षिता मुनिः ॥१४॥

—मनु० ८।६३, ६८, ७२—७५, ७८—८१, ८३,८४, ९६, ९१

कृत्स्नवर्णेषु ये धार्मिका, विद्वांसो, निश्छलाः, सर्वविधधर्मज्ञाः, क्षोभरहिताः, यथार्थवादिनश्च त एव न्यायव्यवस्थायां साक्षिणः कर्तव्याः, न त्वेभ्यो विपरीता इति ॥१॥

स्त्रीणां स्त्रियः, द्विजानां द्विजाः, शूद्राणां शूद्रास्तथान्त्यजानामन्त्यजा एव साक्षिणः स्युः ॥२॥

बलात्कारेषु चौर्यव्यभिचाराभिवाददण्डनिपातेषु साक्षिणः परीक्षा न विधेया, दोषा ह्येते गुप्तरूपेण भवन्ति ॥३॥

उभयवर्तिसाक्षिषु बहुसम्मत्यनुसारेण, तुल्यसाक्षिषूत्कृष्टगुणिनां विचारानुकूल्येन, तथोभयवर्तिसाक्षिणामुत्तमगुणत्वे तुल्यत्वे च द्विजोत्तमानामृषिमहर्षियतीनां साक्ष्यनुसारेण न्यायव्यवस्थां विदधीत ॥४॥

साक्षी हि द्विविधो भवति साक्षाद् दर्शनादाद्यः, श्रवणाच्च द्वितीयः । यः साक्षी सदसि पृष्टः सन् सत्यं ब्रूते न स धर्मार्थाभ्यां हीयते, यः पुनरनृतं ब्रुवीत, स यथायथं दण्डनीयः ॥५॥

यो वै राजसभायां सत्पुरुषाणां वा संसदि दृष्टश्रुतादन्यादृशं वदेत् स जिह्वाच्छेदनदण्डेनेह जन्मनि दुःखरूपां दुर्गतिमियात्, मरणानन्तरञ्च सुखाद्भ्रश्येत ॥६॥

साक्षिणस्तदेव वचनमभ्युपगमनीयं यत्स्वाभाविकं व्यवहारसिद्धं भवति, एतस्माद् विपरीतमन्यत् सर्वं व्यर्थं मिथ्याभूतमपरैः शिक्षितमित्यूह्यम् ॥७॥

वादिप्रतिवादिनोः सम्मुखे सभान्तःस्थितान् साक्षिणः शान्तिमयेन

वचसा प्राड्विवाको न्यायाधीशश्चैवं पृच्छेत् ॥८॥

हे साक्षिणः ! द्वयोरेतयोः परस्परकर्मणि यत्किमपि यूयं जानीथ तत्सर्वं यथार्थं कथयत, द्रष्टृत्वादेवात्र हि यूयं साक्षिणः ॥९॥

साक्षी साक्ष्ये कर्मणि सत्यं वदन् जन्मान्तरेषु जन्मोत्कृष्टलोकांश्च सम्प्राप्य शोभनं सुखं भुङ्क्ते, अत्रामुत्र च शुभ्रं यशः संलभते। यतः खलु इयं वागेव वेदेषु आदरानादरयोः कारणं विनिर्दिष्टा। सत्यं भाषमाणः सुप्रतिष्ठितोऽलीकवादी च विनिन्दितो भवति ॥१०॥

यस्मात् सत्याभिधानेन साक्षी पापान्मुच्यते (पूयते) सत्येनैव धर्मं एधते, सर्ववर्णस्थैः साक्षिभिरतः सत्यमेव वक्तव्यम् ॥११॥

आत्मनः साक्षी खल्वात्मैव भवति, आत्मैव चात्मनः शरणम्। हे साक्षिन् ! एवमवगम्य त्वं स्वमात्मानं नराणामुत्तमं साक्षिणं मृषाभिधानेन मावज्ञासीः। तवात्ममनोवाक्षु प्रतिष्ठितमेव सत्यमतो विपरीतञ्चालीकमिति ॥१२॥

यस्य वदतः पुरुषस्य विद्वान् क्षेत्रज्ञो देहाधिगन्ता वै आत्मान्तर्न शङ्केत तस्मादन्यं प्रशस्ततरं पुमांसं विद्वांसो न जानन्ति ॥१३॥

हे भद्र ! यत्त्वं "एक एवाहमस्मि" इति स्वात्मनि निश्चित्य मृषा ब्रवीषि नैतत्समुचितम्, यतस्तव हृदयेऽन्तर्यामिरूपेण पुण्यपापदृक् परमेश्वरो मुनिरास्ते। तस्मादेव बिभीय निरन्तरं सत्यं ब्रूहि ॥१४॥

**लोभान्मोहाद्भयान्मैत्रात्कामात् क्रोधात्तथैव च।**
**अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते ॥१॥**
**एषामन्यतमे स्थाने यः साक्ष्यमनृतं वदेत्।**
**तस्य दण्डविशेषाँस्तु प्रवक्ष्याम्यनुपूर्वशः ॥२॥**
**लोभात्सहस्रं दण्ड्यस्तु मोहात्पूर्वन्तु साहसम्।**
**भयाद्द्वौ मध्यमौ दण्ड्यौ मैत्रात्पूर्वं चतुर्गुणम् ॥३॥**
**कामाद्दशगुणं पूर्वं क्रोधात्तु त्रिगुणं परम्।**
**अज्ञानाद् द्वे शते पूर्णे बालिश्याच्छतमेव तु ॥४॥**
**उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम्।**
**चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च ॥५॥**
**अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः।**
**साराऽपराधौ चालोक्य दण्डं दण्ड्येषु पातयेत् ॥६॥**
**अधर्मदण्डनं लोके यशोघ्नं कीर्त्तिनाशनम्।**
**अस्वर्ग्यञ्च परत्रापि तस्मात्तत्परिवर्जयेत् ॥७॥**
**अदण्ड्यान्दण्डयन् राजा दण्ड्याँश्चैवाप्यदण्डयन्।**
**अयशो महदाप्नोति नरकं चैव गच्छति ॥८॥**

**वाग्दण्डं प्रथमं कुर्याद्धिग्दण्डं तदनन्तरम्।**
**तृतीयं धनदण्डं तु वधदण्डमतः परम् ॥९॥**

—मनु० ८।११८—१२१, १२५—१२९

लोभ-मोह-भय-मैत्र-काम-क्रोधवशात्तथाऽज्ञानाद् बालस्वभावाच्च यत्साक्ष्यं तदलीकमाख्यायते ॥१॥

एषां लोभादीनामन्यतमनिमित्ते सति योऽन्यथा साक्ष्यं ब्रुवीत स हि वक्ष्यमाणैरनेकविधदण्डैर्दण्डचः ॥२॥

लोभेन मृषा साक्ष्यं ददानः १५॥=) दण्डचः, मोहेन साक्ष्येऽनृतं वदन् ३=) दण्डचः, भयेनानृतं भाषमाणः ६।) दण्डचः, मैत्रात्त्वनृतं वदन् १२॥) दण्डचः ॥३॥

कामानुरोधेन मिथ्या ब्रुवाणः २५), यः क्रोधाद् वितथं साक्ष्यं वदति स ४६।॥=), अज्ञानवशेन मिथ्या साक्ष्ये ६), बालिश्यान्मिथ्याभिधाने १॥-) दण्डचः ॥४॥

उपस्थेन्द्रियम्, जठरम्, जिह्वा, करौ, चरणौ, नेत्रे, नासिका, श्रोत्रे, द्रव्यम्, शरीरञ्चैतानि दश दण्डस्थानानि ॥५॥

किन्तु यद्दण्डविधाने लिखितं पुरतो वा विधास्यते, यथा वै लोभेन साक्ष्ये मृषाभिधाने १५॥=) दण्डोऽभिहितः, अपराधकारिणो धनादिसारमपेक्ष्य अकिञ्चनस्य न्यूनं श्रेष्ठिनस्तु द्विगुणस्त्रिगुणश्चतुर्गुणो वा दण्डो विधातव्यः। अपराधिनोऽपराधगौरवलाघवं देशकालाववलोक्य दण्डनीयेषु दण्डं कुर्यात् ॥६॥

इह लोकेऽधर्मेण दण्डनं यशो विनाशयति, तथा वर्तमाने भविष्यति परजन्मनि च भाविनीं कीर्तिं व्यपनयति, परजन्मनि च महाकष्टदं भवति। तस्मादधर्मेण कमपि न दण्डयेत् ॥७॥

यो महीपतिर्दण्डनीयानदण्डयन्नदण्डनीयाँश्च दण्डयति, स वै जीवन् गर्ह्यते, उपरतश्च महाक्लेशमनुभवति, अतएव सापराध एव नरो दण्डचः, अदोषश्च न कर्हिचिदपि दण्डनीयः ॥८॥

प्रथमापराधे वाङ्निर्भर्त्सनं कुर्यात्। ततः (द्वितीयापराधे) धिक् त्वां कथं त्वमेतत् पापमनुष्ठितवानसीत्येवं "धिग्दण्डम्" विदधीत। परतः (तृतीयापराधे) धनदण्डमस्य तृतीयं कुर्यात्, अनन्तरं (चतुर्थापराधे) वधदण्डं कशावेत्रादिभिस्ताडनं शिरश्छेदो वास्य विदध्यात् ॥९॥

**येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते।**
**तत्तदेव हरेदस्य प्रत्यादेशाय पार्थिवः ॥१॥**
**पिताचार्य्यः सुहृन्माता भार्य्या पुत्रः पुरोहितः।**
**नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मे न तिष्ठति ॥२॥**

कार्षापणं भवेद्दण्ड्यो यत्रान्यः प्राकृतो जनः ।
तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा ॥३॥
अष्टापाद्यन्तु शूद्रस्य स्तेये भवति किल्बिषम् ।
षोडशैव तु वैश्यस्य द्वात्रिंशत् क्षत्रियस्य च ॥४॥
ब्राह्मणस्य चतुःषष्टिः पूर्णं वापि शतं भवेत् ।
द्विगुणा वा चतुःषष्टिस्तद्दोषगुणविद्धि सः ॥५॥
ऐन्द्रं स्थानमभिप्रेप्सुर्यशश्चाक्षयमव्ययम् ।
नोपेक्षेत क्षणमपि राजा साहसिकं नरम् ॥६॥
वाग्दुष्टात्तस्कराच्चैव दण्डेनैव च हिंसतः ।
साहसस्य नरः कर्ता विज्ञेयः पापकृत्तमः ॥७॥
साहसे वर्त्तमानन्तु यो मर्षयति पार्थिवः ।
स विनाशं व्रजत्याशु विद्वेषं चाधिगच्छति ॥८॥
न मित्रकारणाद्राजा विपुलाद्वा धनागमात् ।
समुत्सृजेत् साहसिकान्सर्वभूतभयावहान् ॥९॥
गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् ।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥१०॥
नाततायिवधे दोषो हन्तुर्भवति कश्चन ।
प्रकाशं वाऽप्रकाशं वा मन्युस्तन्मन्युमृच्छति ॥११॥
यस्य स्तेनः पुरे नास्ति नान्यस्त्रीगो न दुष्टवाक् ।
न साहसिकदण्डघ्नौ स राजा शक्रलोकभाक् ॥१२॥

—मनु० ८।३३४-३३८, ३४४-३४७, ३५०,३५१,३८६

येन येनाङ्गेन हस्तपादादिना येन प्रकारेण (सन्धिछेदादिना) चौरो मनुष्येषु विरुद्धं चेष्टते तस्य तदेवाङ्गं मनुजानामुपदेशाय छेदयेत् ॥१॥

पित्राचार्यमित्रभ्रातृपत्नीपुत्रपुरोहितानां मध्यात्स्वधर्मे यो नावतिष्ठते स राज्ञोऽदण्डनीयो नास्ति ॥२॥

यत्रापराधे साधारणो नरः पणमेकं दण्ड्यो भवेत्, भूपतिस्तस्मिन्नेवापराधे पणसहस्रं दण्डनीयः, अर्थाद् भूपतिः प्राकृताज्जनात् सहस्रगुणं दण्ड्यो भवति, राजमन्त्रिणोऽष्टशतगुणं, तदवरे सप्तशतगुणं, ततोऽप्यपकृष्टाः षट्शतगुणं दण्डनीया भवेयुः। इत्थं राजपुरुषेषु सर्वेषां लघीयान् दण्डधरो (सिपाही) ऽपि अष्टगुणं दण्डनीयः ॥३॥

यस्मिन्स्तेये यो दण्ड उक्तः स स्तेयगुणदोषज्ञस्य विवेकिनः शूद्रस्याष्टगुणः कर्तव्यः, षोडशगुणो वैश्यस्य, द्वात्रिंशद्गुणः क्षत्रियस्य ॥४॥

ब्राह्मणस्य चतुष्षष्टिगुणः शतगुणो वाष्टाविंशत्यधिकशतगुणो वा दण्डः कर्तव्यः। यस्य यादृशं ज्ञानं प्रतिष्ठाधिक्यञ्च तस्य तावदेवाधिकदण्ड-

नियमो विधातव्यः ॥५॥

राज्याधिकारिणो धर्मैश्वर्याणि-अभिलषन्नरपतिश्च प्रसह्यकर्मकारिणो मलिम्लुचान् दण्डितान् क्षणमपि नोपेक्षेत ॥६॥ साहसिकलक्षणन्तु—

वाक्पारुष्यकृतः, चौरात्, अपराधं विनापि दण्डप्रदातुश्च साहसकृन्मनुष्योऽतिशयेन पापकारी बोद्धव्यः ॥७॥

यो राजा साहसे वर्तमानं नरमदण्डयित्वा क्षमते स शीघ्रमेव विनश्यति तद्राष्ट्रे च विद्वेषः समुत्तिष्ठति ॥८॥

सौहार्दात् प्रचुरधनावाप्त्या वा नरपतिः सर्वभूतनिपीडकान् साहसिकान् बन्धनच्छेदाभ्यां विना न जातु परिमुञ्चेत् ॥९॥

धर्मं परित्यज्याधर्मपथप्रवृत्तान् निरपराधं परघातकान् गुरुप्रभृतीन्—गुरुं, पुत्रादिबालान्, पित्रादिवृद्धान्, विप्रं, बहुश्रुतमपि निर्विचारं हन्यात्। पूर्वं निहत्य पश्चाद्विचारः कर्तव्यः ॥१०॥

जनसमक्षं रहसि वा दुर्जनानां मारणे हन्तुर्न किमपि पापं जायते, यतः खलु क्रुध्यतः क्रोधेन हननं मन्युना मन्योः सम्परायः ॥११॥

यस्य राज्ञो राष्ट्रे चौरः, पारदारिकः, साहसिकः, दण्डघ्नः नृपादेशसमुल्लङ्घकश्च नास्ति स एव भूपतिरतितरां प्रशस्यः ॥१२॥

**भर्तारं लङ्घयेद्या स्त्री स्वज्ञातिगुणदर्पिता।**
**तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते ॥१॥**
**पुमांसं दाहयेत्पापं शयने तप्त आयसे।**
**अभ्यादध्युश्च काष्ठानि तत्र दह्येत पापकृत् ॥२॥**
**दीर्घाध्वनि यथादेशं यथाकालङ्करो भवेत्।**
**नदीतीरेषु तद्विद्यात्समुद्रे नास्ति लक्षणम् ॥३॥**
**अहन्यहन्यवेक्षेत कर्मान्तान्वाहनानि च।**
**आयव्ययौ च नियतावाकरान्कोषमेव च ॥४॥**
**एवं सर्वानिमान् राजा व्यवहारान्समापयन्।**
**व्यपोह्य किल्बिषं सर्वं प्राप्नोति परमां गतिम् ॥५॥**

—मनु० ८।३७१, ३७२, ४०६, ४१९, ४२०

या स्त्री स्वोत्कृष्टजातिदर्पेण, सौन्दर्यगुणदर्पेण वा गर्विता स्वपतिं परिमुच्य व्यभिचरति, प्रभूतानां स्त्रीपुरुषाणां समक्षे बहुभिर्जीविताम् एव तां श्वभी राजा खादयेत् ॥१॥ तथैव यः पुरुषः स्वपत्नीं विहाय परस्त्रीगमनं, वेश्यागमनं वा कुरुते तं पापिनं पुरुषं पावकप्रदीप्तमयोमयं पर्यङ्कमधिष्ठाप्य जीवन्तमेव सवसम्मुखे दाहयेत् ॥२॥

**प्र०**—यदि राजा राज्ञी वा, न्यायाधीशस्तत्पत्नी वा व्यभिचारादिकुत्सितकर्माचरेत् कस्तान् दण्डयेत् ?

उ०—राजसभा। ते तु नूनं प्रजापुरुषेभ्योऽप्यधिकं दण्डनीयाः।

प्र०—नरपतिप्रमुखाः प्रजाभ्यः कथं दण्डं ग्रहीष्यन्ति।

उ०—नृपोऽपि पुण्यात्मा भाग्यसम्पन्नो मनुष्यः। स एव यदि दण्डनीयो न भवेत्, दण्डञ्चापि नाददीत, कथमन्येऽपि दण्डनिपातं स्वीकुर्वीरन्? अपि च यदाखिला प्रकृतिः, अधिकृताः पुरुषाः, सभा च धार्मिकतया राजानं दण्डयितुमिच्छेयुस्तदा केवलो नरपतिः किं कर्तुं शक्नुयात्। एवंविधव्यवस्थाभावे भूपतिः प्रधानोऽन्ये च शक्तिशालिनः पुमांसोऽन्यायनिमग्नाः सन्तो न्यायधर्मं प्रतिहत्य कृत्स्नप्रजां विनाश्य स्वयमपि विनश्येयुः। "स राजा पुरुषो दण्डः, दण्डं धर्मं विदुर्बुधाः" इति श्लोकार्थः स्मरणीयः। यो दण्डधर्मं लोपयति नास्ति तस्मात्कश्चननीचतरः पुरुषः।

प्र०—क्लिष्टदण्डविधानं नैतदुचितम्, नहि कश्चिद् विनष्टाङ्गस्यावयवान् निर्मातुं मृतं वा प्राणयितुं समर्थः, अतो नैषा दण्डव्यवस्था युक्ता।

उ०—व्यवस्थामिमां क्लिष्टां विजानन्तो नहि सन्ति राजनीतिज्ञाः। एकस्य कठोरदण्डविधानेनान्येषामसत्कर्मणि प्रवृत्त्यभावात्सर्वेऽसत्सरणिं परित्यज्य धर्माध्वानमधिष्ठास्यन्ति। यथार्थञ्चैतत्—यद्ययमेव दण्डः सर्वविभागेषु विभक्तः स्यात्तर्हि सर्षपमात्रोऽपि न समेष्यति एकस्य भागे, सुगमदण्डविधाने हि कुत्सितकर्मणां नैरन्तर्येणोन्नतिर्भवेत्, यञ्च दण्डं सुगमं मन्यसे स हि कठोरतमोऽस्ति। दण्डस्य सारल्येन प्रभूतानां जनानां दुष्कर्मसु प्रवृत्तेः स्वल्पदण्डितानामपि सर्वेषां सर्वदण्डसङ्कलनेन प्रभूतदण्डोपपत्तेश्च, बहूनां मनुष्याणां दुष्कर्मसु तत्परत्वेन ते दण्ड्या भविष्यन्ति, यथा ह्येकः खारीपरिमितो दण्डितः, द्वितीयश्च कुडवपरिमितः, (द्वयोः सङ्कलनेन) कुडवाधिकखारीपरिमितो दण्डो भवति, प्रत्येकस्य भागे कुडवार्धो विंशतिप्रस्थाश्च भवन्ति। ईदृशं सरलं दण्डं दुर्जनाः किमपि न परिगणयन्ति, यथा सहस्रजनेषु कुडवपरिमितेन दण्डेन दण्डितेषु सपादः षट्खारीपरिमितो दण्डो मनुष्यजातौ निपतति, अतोऽयमेव दण्डो गरीयान्कठोरश्च, खारीपरिमितदण्डस्तु सहस्रजनेषु विभक्तो न्यूनं सुगमश्च।

दूराध्वसु, समुद्रखातेषु, नदीषु, महानदेषु च देशदैर्घ्यानुरूपमेव करं व्यवस्थापयेत्। महासमुद्रे तु निश्चितं शुल्कं न सम्भवति। अतो यथा नृपनाविकावुभावपि लाभवन्तौ भवेतां तथा यथावसरं तार्यं व्यवस्थापयेत्। एतेन "पुरा पोता नासन्" इति वादिनो नितरां "मृषाभाषिणः" इति सिद्ध्यति। देशान्तरेषु, द्वीपान्तरेषु च नौभिर्गन्तॄन् प्रजापुरुषान्परितः पायात् येन कथञ्चिदपि ते दुःखिता न स्युः ॥३॥

नरपतिः प्रत्यहं कर्मणां समाप्तिं, हस्त्यश्वादीनि वाहनानि, आयव्ययौ सुवर्णरत्नोत्पत्तिस्थानानि, कोषं भाण्डागारञ्चावेक्षेत ॥४॥

एवमुक्तप्रकरेण सर्वंव्यवहारान्नियमेन समाप्य सर्वविधदुरितानि निवार्यं च नरपतिः परममपदं मोक्षमधिगच्छति ॥५॥

प्र०—संस्कृतविद्यायां सम्पूर्णा राजनीतिरपूर्णा वा ?

उ०—सम्पूर्णा । भूमण्डले या या राजनीतिः प्रवृत्ता प्रवत्स्यति वा सा सर्वापि संस्कृतविद्याया एव गृहीता । यत्र च स्पष्टं नोपदिश्यते तत्र—

**प्रत्यहं लोकदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः ॥** —मनु० ८।३

ये ये नियमा राजप्रजयोर्हितकारका धर्मयुक्ताश्च सर्वे ते विदुषां सभाभिर्व्यवस्थापनीयाः । (किन्तु) यथाशक्यं बाल्यविवाहनिरोधे प्रयतेरन्, तारुण्येऽपि मिथः प्रसन्नतां विना नोद्वहेत्, न चाप्युद्वाहयेत् । ब्रह्मचर्यस्य यथावत्पालनं कर्तव्यं कारयितव्यञ्च । व्यभिचारबहुविवाहौ च निषेध्यौ येन शरीरात्मानौ पूर्णबलवन्तौ भवेताम् । आत्मिकबलस्य तथा विद्याविज्ञानानामेवोन्नतिः स्यात् शारीरिकबलं चोपेक्ष्येत चेदेक एव बलवान् पुमान् शतविदुषो ज्ञानिनो जेतुं शक्नोति । तथैव यदि केवलं दैहिकं बलं प्रवर्ध्येत न त्वात्मिकं तदापि राज्यपालनोत्कृष्टव्यवस्था विद्यया विना न सम्भवति । राष्ट्रस्य सुव्यवस्थाभावे मिथः कलहविरोधयोर्वृद्ध्या सर्वराष्ट्रस्य विनाशः स्यात्, अतः शारीरिकात्मिकबलद्वयमप्यावश्यकम् । सततमेतद् वर्धनीयम् । यथा च बलबुद्धीनां विनाशकौ व्यभिचारातिविषयप्रसंगौ भवतो न तथान्यः कश्चिदस्ति । विशेषतस्तु क्षत्रियादयो दृढाङ्गा बलीयांसश्च भवेयुः । यदि नाम त एव विषयेषु प्रसज्जेयुस्तर्हि सर्वराष्ट्रधर्मो विनश्येत **"यथा राजा तथा प्रजा"** इति न्यायात् । अतो विशेषतो राज्ञा राजपुरुषैश्च कुत्सिताचारो न कदाचिदप्याचरणीयः, अपि तु धार्मिकव्यवहारेण सर्वानुन्नेतुं स्वजीवनं ह्यादर्शतां नेयम् । संक्षेपेणायं राजधर्मो वर्णितः । विशेषतश्च वेदेषु, मनुस्मृतेः सप्तमाष्टमनवमाध्यायेषु, शुक्रनीतौ, विदुरप्रजागरे तथा महाभारतस्य शान्तिपर्वान्तर्गतराजधर्मापद्धर्मप्रकरणेषु समीक्ष्य कृत्स्नां राजनीतिमधिगम्य माण्डलिकं सार्वभौमचक्रवर्त्तिराज्यञ्च प्राप्नुयुः ।

**प्रजाप॑तेः प्रजा ऽअ॑भूम ।**—य० १८।२९

वयं (प्रजापतेः) प्रजानां पालयितुः परमेश्वरस्य प्रजाः, तथा परमात्मा चास्माकं राजा, वयञ्च तस्यानुचरवत्स्म इति । स परमेश्वरोऽनुग्रहेण स्वसृष्टावस्मान् राज्याधिकारिणः कुर्यात्, तथास्मन्मुखेन स्वसत्यन्यायव्यवस्थां प्रवर्तयेदिति, अतः परमीश्वरवेदविषयौ व्याख्यास्यामः ।

**इति श्रीमद्दयानन्दसरस्वतीस्वामिकृते सत्यार्थप्रकाशे शङ्करदेवपाठकेन संस्कृतभाषयाऽनूदिते राजधर्मविषये षष्ठः समुल्लासः सम्पूर्णः ॥६॥**

# अथ सप्तमसमुल्लासारम्भः

## अथेश्वरवेदविषयं व्याख्यास्यामः

ऋचो अक्षरे परमे व्योमन्यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥१॥

—ऋ० मं० १ । सू० १६४ । मं० ३९

ईशा वास्यमिदꣳ सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ॥२॥

—यजु० अ० ४० । मं० १

अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि सं जयामि शश्वतः ।
मां हवन्ते पितरं न जन्तवोऽहं दाशुषे वि भजामि भोजनम् ॥३॥
अहमिन्द्रो न परा जिग्य इद्धनं न मृत्यवेऽव तस्थे कदा चन ।
सोममिन्मा सुन्वन्तो याचता वसु न मे पूरवः सख्ये रिषाथन ॥४॥

—ऋ० मं १० । सू० ४८ । मं० १, ५

अहं दां गृणते पूर्व्यं वस्वहं ब्रह्म कृणवं मह्यं वर्धनम् ।
अहं भुवं यजमानस्य चोदिताऽयज्वनः साक्षि विश्वस्मिन् भरे ॥५॥

—ऋ० १०।४९।१

(ऋचो अक्षरे) उक्तः खल्वर्थो मन्त्रस्यास्य ब्रह्मचर्याश्रमविधौ । तथा हि—यो दिव्यगुणकर्मस्वभावो यस्मिन्पृथिव्यादयो लोकाः प्रतिष्ठिताः, यश्चाकाश इव सर्वत्र व्यापको देवानामपि देवः परमेश्वरो विद्यते ये नरास्तथाविधमीश्वरं न जानन्ति न मन्यन्ते न च ध्यायन्ति, नास्तिका मूढधियस्त एव दुःखाम्बुधौ सततं निमज्जन्ति, अतस्तमेव विदित्वा सर्वमानवैः सुखमासाद्यते ।

प्र०—वेदेष्वीश्वरानेकत्वप्रतिपादनमभ्युपगम्यते न वा भवद्भिः ?

उ०—नैव मन्यामहे । कुतः ? चतुर्ष्वपि वेदेषु ईश्वरबहुत्वप्रतिपादकं

वाक्यं न क्वापि गोचरीक्रियते। प्रत्युतेश्वरैकत्वबोधकं वाक्यजातं सततं निरीक्ष्यते।

**प्र०**—वेदेषु देवताबाहुल्यं प्रतिपाद्यते ननु कोऽभिप्रायस्तस्य ?

**उ०**—देवताः किल दिव्यगुणयोगात्तथोच्यन्ते पृथिवी च दिव्यगुण-समवेता, अतः सापि देवतेत्युच्यते। (एवमन्ये सूर्यादयोऽपि देवता उच्यन्ते) परं कुत्रापि पृथिव्यादेरीश्वरत्वमुपास्यत्वं वा नाङ्गीक्रियते। किञ्चास्मिन्नेव मन्त्रे प्रतिपादितम्—"यो हि सर्वेषां देवानामधिष्ठानं स एवेश्वरो ज्ञातव्य उपासनीयश्च" इति। परमेश्वरो हि देवानामपि देवत्वेन **महादेवः**, सर्वजगत उत्पत्तिस्थितिप्रलयकर्ता न्यायाधीशोऽधिष्ठाता च। अत्र च—"**त्रयस्त्रिंशत् त्रिशता**" इत्यादिवैदिकं प्रमाणम्। व्याख्यायते च तत् शतपथब्राह्मणे—"**त्रयस्त्रिंशद्देवाः** सन्ति" इति। तत्र सर्वेषां वासभूमितया पृथिव्यप्तेजोवाय्वा-काशचन्द्रसूर्य्यनक्षत्राण्यष्टौ **वसवः**। देहं परिमुञ्चन्तः सर्वेषां रोदकतया प्राणापानसमानव्यानोदाननागकूर्मकृकलदेवदत्तधनञ्जयनामानो दशप्राणा जीवात्मा चैकः, एवमेकादश (११)—**रुद्राः**। सर्वेषामायूंष्याददत इति संवत्सरस्य द्वादश मासास्तावन्तो द्वादश—**आदित्याः**। परमैश्वर्यसम्पादक-तया इन्द्राख्या एका—**विद्युत्**। वायुवृष्टिजलौषधीनां संशोधनात् विदुषां सत्कारान्नानाविधशिल्पविद्यया प्रजानां परिपालनाच्च प्रजापतिनामधेयो एकः—**यज्ञः**। एते पृथिव्यादयः पूर्वोक्तगुणयोगात् त्रयस्त्रिशद्देवा उच्यन्ते। एषां नियन्तृत्वात् सर्वतो बृहत्वाच्च परमात्मा चतुस्त्रिशत्तमः समुपास्यो देव इति शतपथब्राह्मणस्य चतुर्दशे काण्डे स्पष्टं वर्ण्यते। तथैव चान्यत्रापि प्रति-पादितम्। यदीमे शास्त्राणीमान्यद्रक्ष्यन् कथं तर्हि "वेदेष्वनेकेश्वरसद्भाव" इति भ्रमगर्त्तेऽपतिष्यन्।

(२) हे मनुष्य ! यत्किञ्चिदस्मिन् जगति वस्तुजातमीक्ष्यते सर्वत्रापि तत्र परिव्याप्य सर्वनियन्ता जगदात्मा सर्वान् नियमयति। तस्माद्बिभीय त्वमन्यायेन मा कस्यापि धनं कांक्षीः। अन्यायपरित्यागेन न्यायाचरणरूप-धर्मेण चानन्दमुपभुङ्क्ष्व।

(३) ईश्वरः सर्वानुपदिशति यत्—"अयि मानवाः ! अहमीश्वरः सर्वेभ्यः प्राग् विद्यमानः सकलस्य जगतः पतिरस्मि। अहमेवास्य सर्गस्य सनातनं कारणम्। सकलधनविजेता प्रदाता चास्मि, मामेव सर्वे जीवाः पुत्राः पितृनिवाह्वयन्तु। सर्वेभ्यः सुखप्रदस्य जगतः पालनाय नानाविध-भोजनानि विभजामि।"

(४) परमैश्वर्यवानहं सूर्य्य इव सकलमपि भुवनं प्रकाशयामि न कदापि पराजयं लभे नापि कर्हिचिन्म्रिये। अहमेव निर्माता जगद्धनस्य। कृत्स्नजगत उत्पादयितारं मामेव वित्त। अयि जीवाः ! ऐश्वर्यप्राप्तये यतमाना

यूयं मत्त एव याचध्वं विज्ञानादिधनम्। कदापि मम सख्यपदवीं मा विमुञ्चत।

(५) हे मनुजाः! सत्यभाषणरूपां स्तुतिं विदधते मनुजाय प्रयच्छामि सनातनं ज्ञानादिधनम्। अहमेव ब्रह्मणो वेदस्य प्रकाशकः। मामेव च यथावदाख्याति वेदः। तेनैव सर्वेषां ज्ञानं परिवर्धयामि। अहमेव सत्पुरुषाणां प्रेरको यज्ञकर्तृभ्यः फलप्रदश्च। अहमेवास्मिन् कृत्स्नजगति विद्यमानकार्यजातस्य प्रणेता धारकश्चास्मि तस्माद् विहाय मां मान्यं कमप्यार्चिष्ट मा चाङ्गीकार्ष्ट।

**हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत्।**
**स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥**

—यजु० १३।४

हे नराः! यः खलु सृष्टेरपि पूर्वं सूर्यादिज्योतिष्मतां लोकानां प्रभव आधारश्चासीत्, सर्वस्यापि भूतस्य भवतो भविष्यतश्च वस्तुनः पतिरासीत्, अस्ति, भविष्यति च; स एव पृथिव्यादिसूर्यान्तममुं सर्गं निर्माय धारयति। सुखस्वरूपस्य तस्य परमात्मनोऽस्मानिव यूयमपि भक्तिं विधत्त।

**प्र०**—भवन्तो "हीश्वर ईश्वरः" इत्यसकृदभिदधति परं कथं तं साधयन्ति?

**उ०**—सर्वैरपि प्रत्यक्षादिप्रमाणैः।

**प्र०**—परमात्मनि प्रत्यक्षादिप्रमाणानि न कर्हिचित्संगच्छन्ते।

**उ०—इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्॥**—न्याय०। अ० १। सू० ४

श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणमनसां शब्दस्पर्शरूपरसगन्धसुखदुःखात्मकसत्यासत्यविषयैः सम्बन्धेन समुत्पन्नं निर्भ्रमात्मकं ज्ञानं प्रत्यक्षम्। अत्रेदं विचारणीयम्—इन्द्रियैर्मनसा च गुणा एव प्रत्यक्षीक्रियन्ते न तु गुणवान्। यथा हि—त्वगादिचतुर्भिः करणैः स्पर्शरूपरसगन्धानां ज्ञानेन गुणवती पृथिवी आत्मसंयुक्तेन मनसा प्रत्यक्षीक्रियते तथैव पुरोवर्तिन्यामस्यां सृष्टौ रचनाविशेषप्रमुखज्ञानादिगुणानां प्रत्यक्षतया परमेश्वरस्यापि प्रत्यक्षं भवति। यदा चायमात्मा मनः, मनश्चेन्द्रियाणि नियोजयति यस्मिन्कस्मिन्नपि विषये, अथवा स्तेयादिदुरितानि परोपकारादिपुण्यानि वा समारभते तदानीं जीवात्मन इच्छाज्ञानादयो गुणास्तदेवाभीष्टविषयं प्रवणा भवन्ति। तस्मिन्नेव क्षणे पापाचरणे भयवितर्कलज्जाः सत्कर्मानुष्ठाने चाभयनैशङ्क्यानन्दोत्साहाः समुदयन्ति। सर्वमिदं परमात्मनः प्रेरणया न तु जीवात्मनः। यदा च जीवात्मा विशुद्धः सन् ध्यायति परमात्मानं तदैव तमुभावपि प्रत्यक्ष-

तामापद्येते। सति परमात्मनः प्रत्यक्षेऽनुमित्यादिना तज्ज्ञाने कोऽवकाशः संशयस्य। कार्यं हि दृष्ट्वा कारणमनुमीयते।

प्र०—परमेश्वरो व्यापक आहोस्विद्देशविशेषेऽवतिष्ठते।

उ०—व्यापको वर्तते। यदि हि नामैकदेशेऽवतिष्ठते न भवेत्तर्हि सर्वान्तर्यामी, सर्वज्ञः, सर्वनियन्ता, सर्वेषां स्रष्टा, धर्त्ता, संहर्त्ता च। न ह्यप्राप्तदेशे कर्तुः क्रिया सम्भवति।

प्र०—परमेश्वरो न्यायकारी दयालुर्वास्ति न वा ?

उ०—वर्तते।

प्र०—मिथो विप्रतिषिद्धौ गुणाविमौ। न्यायमाचरतो दया, दयां परिपालयतश्च न्यायः परित्यक्तो भवति। यस्माद्धि "कर्मानुरूपेण–नाधिकं नापि न्यूनं–सुखदुःखप्रापणं न्यायः"। "अदण्डयित्वा वापराधिनो विमुञ्चनञ्च दया" अभिधीयते।

उ०—अल्पीयानेवैतयोर्भेदः। यतो हि न्यायेन यत्प्रयोजनं सिद्ध्यति तदेव दययापि। परिमुच्य पापेभ्यो मानवा दुःखानि नाप्नुयुरित्येव दण्डफलम्, दया चापि परदुःखप्रहापणम्। भवत्प्रतिपादितस्तु न्यायदययोरर्थो न साधीयान्। कुतः ? येन यादृशं यावत्पापकर्माचरितं तस्मै तादृशस्तावानेव दण्डः प्रदातव्यः, एष एव न्यायः। अपराधिनोऽपि दण्डाभावे दया खलु विलुप्येत। एकस्यापराधिनः पाटच्चरस्यादण्डनं ह्यनेकसाधुजननिपीडनम्। यदा चैकस्य मोक्षे सहस्रशो जना दुःखिता भवन्ति तदा कथङ्कारं भवेत् सा दया ? वस्तुतः कारायां निक्षेपेण पापेभ्यो विनिवर्तनं दस्यौ, तद्घातेन चान्यसहस्रजनेषु दया प्रकाशिता भवति।

प्र०—किमर्थं तर्हि न्यायदये इति शब्दद्वयं प्रवृत्तम्। यदि हि नाम तयोरभिन्नोऽर्थस्तन्निरर्थिकैव शब्दद्वयप्रवृत्तिः। अपित्वेकस्यैव शब्दस्य प्रयोगः साधीयान्। तस्मान्नास्त्येकं प्रयोजनं न्यायदययोरिति युक्तमुत्पश्यामः।

उ०—अपि न भवन्त्येकस्यार्थस्यानेकानि नामानि, एकस्य वा नामधेयस्यानेकेऽर्थाः।

प्र०—भवन्ति।

उ०—कुतस्तर्हि संदिह्यते भवता ?

प्र०—यतः खलु श्रूयते जगति।

उ०—लोके तु सत्यासत्यं द्वयमपि श्रूयते परं तदात्मना सुविचार्य विनिश्चेतव्यम्। इयमेव परमात्मनो महती दया यदनेनाशेषप्राणिनां कृते जगति समुत्पाद्य सर्वे पदार्थास्तेभ्यः प्रतिपादिताः, का नाम स्यादितो व्यतिरिक्ता गरीयसी तदनुकम्पा। न्यायस्यापि फलं प्रत्यक्षं समीक्ष्यते यत्

'सुखदुःखव्यवस्थाधिक्येन न्यूनतया च फलं प्रकाशयति'। इयानेवैतयोर्भेदः- अन्तरात्मनि सर्वेभ्यः सुखप्रापणदुःखपरिहाणेच्छापूर्वकं क्रियानुष्ठानं दयेति, बाह्यचेष्टा च—बन्धनछेदनादिका—यथावद्दण्डनं—न्याय इत्युच्यते। उभयोरपि पापाद् दुःखेभ्यश्च निवारणं सममेव फलम्।

प्र०—परमेश्वरो निराकारः साकारो वा ?

उ०—निराकारः। साकारे हि सति व्यापकत्वं न सङ्गच्छते। अव्यापके च परमात्मनि सर्वज्ञादयो गुणा न संघटेरन्। यतो हि परिमिते वस्तुनि गुणकर्मस्वभावा अपि परिमिता भवन्ति। किञ्च परमेश्वरः साकारः सन् शीतोष्णक्षुत्तृषारोगछेदनभेदनादिदोषेभ्यः पृथग् न भवेत्, अतः परमेश्वरो निराकार एवेति निश्चीयते। साकारत्वे हि तस्य नासिकाकर्णचक्षुराद्यवयवानां निष्पादकेनान्येन भवितव्यम्। यतः संयोगादुत्पद्यमानस्य संयोजयित्रा निराकारचेतनेनावश्यं भवितव्यम्। ईश्वरः स्वेच्छया स्वेनैवात्मनः शरीरं निर्मातीति चेन्न। एवमप्यात्मनो देहनिर्माणात्प्राक् तस्य निराकारत्वस्यैव सिद्धत्वात्। तस्मान्न कर्हिचित्परमेश्वरः शरीरं गृह्णाति अपि तु निराकारतया सकलं जगत् सूक्ष्मकारणैः स्थूलतामापादयति।

प्र०—परमेश्वरः सर्वशक्तिमानस्ति न वा ?

उ०—वर्तते। परं नैवास्ति भवदभिमतोऽर्थः सर्वशक्तिमच्छब्दस्य। अपितु उत्पत्तिस्थितिप्रलयादिषु, यथायथं सर्वजीवानां पापपुण्यव्यवस्थाद्यात्मकर्मसु किञ्चिदपि कस्यापि साहाय्यं नापेक्षते किन्त्वात्मनोऽनन्तसामर्थ्येनैव सकलकर्मजातमनुतिष्ठतीत्येव सर्वशक्तिमच्छब्दार्थः।

प्र०—वयन्त्वेवं मन्महे यत्परमेश्वरो यथेच्छं कर्तुमर्हति न कश्चित्तमधितिष्ठति ?

उ०—ननु किमिच्छति परमेश्वरः ? सर्वमभिलषति कर्तुं चार्हतीति चेदुच्येत तर्हि भवानेवात्र पृष्ट आचष्टम्—"अपि परमेश्वरः स्वात्मनो हननम्, अनेकेश्वरोत्पादनम्, आत्मानमविद्वांसं सम्पादयितुम्, चौर्यव्यभिचारादिपापकर्माण्यनुष्ठाय दुःखान्युपभोक्तुं क्षमते न वेति ?" यदीमानि कर्माणि परमेश्वर आत्मनो गुणकर्मस्वभावविरुद्धत्वान्नानुतिष्ठति तदा "सर्वं कर्त्तुं क्षमो हि सः" इति भवद्वचो न जातु सङ्गच्छते। अतोऽस्मत्प्रतिपादित एव सर्वशक्तिमच्छब्दस्यार्थः साधीयान्।

प्र०—सादिरनादिर्वा परमेश्वरः ?

उ०—अनादिः। अर्थात् यस्य नास्त्यादिः—किमपि कारणं समयो वा—स अनादिः। इत्यादयः सर्वेऽर्थाः प्रथमसमुल्लासे समुपदिष्टास्तत्रैव द्रष्टव्याः।

प्र०—ननु परमेश्वरः किं वाञ्छति ?

उ०—सर्वेषां कल्याणं सर्वेभ्यः सुखञ्च वाञ्छति । परं स्वातन्त्र्येणाकृतपापाचारं कमपि पराधीनं न कुरुते ।

प्र०—परमात्मनः स्तुतिप्रार्थनोपासनाः समनुष्ठेया न वा ?

उ०—विधेयाः ।

प्र०—अपि परमेश्वरः स्तुत्याद्यनुष्ठानेन त्यक्त्वात्मनो व्यवस्थां स्तोतुः प्रार्थयितुर्वा क्षंस्यते दुरितानि ?

उ०—नहि ।

प्र०—किमर्थं तर्हि विधेये स्तुतिप्रार्थने ?

उ०—अन्यदेव तदनुष्ठानफलम् ।

प्र०—किं तत् ?

उ०—स्तुतिविधानेनात्मनि प्रीतिः, तदीयगुणकर्मस्वभावैश्चात्मनो गुणकर्मस्वभावानां संशुद्धिः । प्रार्थनया निरभिमानत्वमुत्साहसाहाय्ययोश्च सम्प्राप्तिः ।

प्र०—स्फुटं व्याख्यायताम् ।

उ०—अथ स्तुतिः । यथा—

स पर्यंगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम् ।
कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥—यजु० अ० ४० । मं० ८

सर्वत्र व्यापकः, आशुकरः, अनन्तबलवान्, शुद्धः, सर्वज्ञः, सर्वान्तर्यामी, सर्वातिशायी, सनातनः, स्वयंसिद्धः परमेश्वरः सनातनानादिजीवरूपां प्रजां निजनित्यविद्यया यथावदर्थान् वेदमुखेन बोधयति । तत्तद्गुणविशिष्टपरमेश्वरस्य स्तवनादियं सगुणा स्तुतिः । (**अकायम्**) देहविवर्जितस्यात्मनोऽच्छिद्रस्य नाड्यादिबन्धरहितस्यापापचारिणः क्लेशदुःखाज्ञानसंभिन्नस्य परमात्मनस्तत्तद्रागद्वेषादिगुणैः पृथक्तया स्तुतिविधानं निर्गुणा स्तुतिः । परमेश्वरस्येवात्मनोऽपि गुणकर्मस्वभावसंविधानमस्याः फलम् । यथाहि परमेश्वरो न्यायकारी तथैव स्वयमपि न्यायमनुतिष्ठेत् ।

यस्तु केवलं भण्ड इव परमात्मनो गुणान् कीर्तयति नतु निजचारित्र्यं परिष्करोति व्यर्थमेव तस्य स्तुतिविधानम् ।

प्रार्थना—

यां मेधां देवगणाः पितरश्चोपासते ।
तया मामद्य मेधयाऽग्ने मेधाविनं कुरु स्वाहा ॥१॥
—यजु० अ० ३२ । मं० १४

तेजोऽसि तेजो मयि धेहि वीर्य्यमसि वीर्य्यं मयि धेहि
बलमसि बलं मयि धेह्योजोऽस्योजो मयि धेहि मन्युरसि मन्युं
मयि धेहि सहोऽसि सहो मयि धेहि ॥२॥

—यजु० अ० १९। मं० ९

यज्जाग्रतो दूरमुदैति दैवन्तदु सुप्तस्य तथैवैति।
दूरङ्गमञ्ज्योतिषां ज्योतिरेकन्तन्मे मनः शिवसंकल्पमस्तु ॥३॥
येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः।
यदपूर्वं यक्षमन्तः प्रजानान्तन्मे मनः शिवसंकल्पमस्तु ॥४॥
यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतम्प्रजासु।
यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु ॥५॥
येनेदम्भूतं भुवनम्भविष्यत्परिगृहीतममृतेन सर्वम्।
येन यज्ञस्तायते सप्त होता तन्मे मनः शिवसंकल्पमस्तु ॥६॥
यस्मिन्नृचः साम यजूंषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः।
यस्मिँश्चित्तꣳसर्वमोतम्प्रजानान्तन्मे मनः शिवसंकल्पमस्तु ॥७॥
सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिनऽइव।
हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसंकल्पमस्तु ॥८॥

—यजु० अ० ३४। मं० १-६

(१) हे अग्ने! प्रकाशस्वरूपपरमेश्वर! यां बुद्धिं विद्वांसो ज्ञानिनो योगिनश्च समुपासते कृपयाद्य तयैव मेधया विधेहि नो धीमतः।

(२) हे परमात्मन्! त्वं प्रकाशस्वरूपोऽसि कृपया मय्यपि प्रकाशमाधेहि। अनन्तबलयुक्तोऽसि कृपाकटाक्षेण मय्यपि बलं निधेहि। अनन्तसामर्थ्ययुक्तोऽसि मह्यमपि सामर्थ्यं प्रदेहि। पापकर्मसु पापेषु च मन्युं विदधासि मामपि तथैव विधेहि। निन्दास्तुतिस्वापराधिनश्च सहसे कृपया मामपि तथैव विधेहि।

(३) हे दयानिधे! भवत्कृपया यन्मदीयं मनः जागरितावस्थायां दूरं दूरं गच्छति, दिव्यगुणसंयुक्तं तिष्ठति तदेव शयानस्य मे सुषुप्तिं समुपैति स्वप्नेषु वा दूरं गच्छदिव व्यवहरति सर्वप्रकाशकानां प्रकाशकमेकं मे मनः शिवसङ्कल्पमर्थादात्मनः परेषाञ्च शिवमनुध्यायेत्, मा कस्याप्यपकारमनुचिन्तयेत्।

(४) हे सर्वान्तर्यामिन्! येन मनसा कर्मनिष्ठा धर्मात्मानो विपश्चितो

यज्ञेषु सङ्ग्रामेषु वा कर्मानुतिष्ठन्ति, यच्च प्रजानामन्तर्निवसति, पूर्णसामर्थ्यं-युक्तं पूजनीयञ्चास्ति, तन्मे मनः धर्मप्रियं सदधर्मं सर्वथा परित्यजतु ।

(५) यदुत्कृष्टज्ञानस्वरूपं परेषां प्रतिबोधकमध्यवसायात्मकवृत्ति-रूपञ्च, यच्च प्रजानामन्तःप्रकाशं नाशरहितं येन विना न किञ्चिदपि कर्म क्रियते तन्मे मनः शुद्धगुणानभिलषद्दुर्गुणेभ्यः पृथगवतिष्ठेत ।

(६) हे जगदीश्वर ! येन चेतसा सकलयोगिनो भूतभविष्यद्वर्तमान-व्यवहारानवगच्छन्ति, यच्चाविनश्वरं जीवात्मानं परमात्मना संयोज्य त्रिकालज्ञं विदधाति, यच्च ज्ञानक्रिययोरधिष्ठानं, यच्च ज्ञानेन्द्रियैः पञ्चभि-र्बुद्ध्यात्मना च संयुज्यते, येन च योगरूपो यज्ञो विस्तीर्यते तन्मे मनो विज्ञानरूपं सदविद्यादिक्लेशैः पृथगवतिष्ठताम् ।

(७) हे परमविद्वन् ! परमेश्वर ! भवत्कृपया यस्मिन्मनसि रथना-भावरा इव ऋग्यजुस्सामाथर्ववेदाः प्रतिष्ठिता भवन्ति, यस्मिंश्च सर्वज्ञं सर्वव्यापकं प्रजासाक्षिभूतं चित्तचेतनं ब्रह्म विदितं भवति (यन्मनः परब्रह्म-ज्ञानसम्पादनसाधनम्) तन्मे मनो विनाश्याविद्यां विद्याप्रियं भवतु ।

(८) हे सर्वनियन्तः जगदीश्वर ! यन्मे मनः सारथी रश्मिभिरश्वानिव मानवान् भृशमितस्ततो गमयति यच्च हृदि प्रतिष्ठितं गतिमद्वेगवत्तरञ्चास्ति तन्मे मनः सर्वाणीन्द्रियाणि प्रतिनिवर्त्याधर्माचारात् धर्मपथे सर्वदा प्रेरयतु । भवानीदृशीं कृपां विधेहि मयि ।

**अग्ने नय॑ सु॒पथा॑ रा॒येऽअ॒स्मान् विश्वा॑नि देव व॒युना॑नि वि॒द्वान् ।**
**यु॒यो॒ध्य॒स्मज्जु॑हुरा॒णमेनो॒ भूयि॑ष्ठां ते॒ नम॑ऽउक्तिं विधेम ॥**

—यजु० ४०।१६

हे सुखप्रद स्वप्रकाशस्वरूप सर्ववेदिन् परमात्मन् ! भवान्नः श्रेयो वर्त्मना अशेषप्रज्ञानानि समधिगमय । यश्चास्मासु कुटिलपापाचाररूपो मार्गस्तमप्यस्मत्पृथग्विधेहि । अत एव वयं भवतः सविनयं स्तुतिं कुर्वीमहि येन पुनातु भवान्न इति ।

**मा नो॑ म॒हान्त॑मु॒त मा नो॑ऽअर्भ॒कं मा न॒ऽउक्ष॑न्तमु॒त मा न॑ऽउक्षि॒तम् ।**
**मा नो॑ वधीः पि॒तरं॒ मोत मा॒तरं॒ मा नः॑ प्रि॒यास्त॒न्वो रुद्र रीरिषः ॥**

—यजु० अ० १६ । मं० १५

हे रुद्र ! (दुष्टेभ्यो दुःखरूपफलं प्रदाय रोदयितः परमेश्वर !) भवान-स्माकमल्पवयसः प्रवयसो वा जनान्, गर्भं जननीजनकप्रियबन्धुवर्गं, शरीराणि च हन्तुं कमपि मा प्रेरय । तेन पथास्मान्नय येन भवतो दण्डनीया न भवेम ।

**असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्माऽमृतं गमयेति ।**

—शतपथ ब्रा० १४।३।१।३०

हे परमगुरो परमात्मन्! परावर्त्यास्मानसन्मार्गात् प्रापय सन्मार्गम्, अविद्यान्धकारमपनीय विद्यासूर्यं लम्भय। अपिच मृत्युरोगसकाशात् मोक्षानन्दरूपममृतं प्रापयेति।

यद्यद्दोषदुर्गुणाभ्यां परमेश्वरमात्मानञ्च पृथङ् मत्वा परमात्मनः प्रार्थना विधीयते सैव विधिनिषेधमुखतया सगुणनिर्गुणप्रार्थनेत्यभिधीयते। यस्य वस्तुनो येन मानवेन प्रार्थना क्रियते तेन तदनुसारेणैव व्यवहर्तव्यमपि। यथा हि मेधां धियं लब्धुं परमेश्वरं प्रार्थयित्रा यथाशक्यं प्रयत्नोऽपि तदर्थं विधेयः। अर्थादात्मनः पुरुषार्थसमनन्तरमेव प्रार्थना समुचिता। न कदाप्येवं प्रार्थनीयम्। परमेश्वरोऽपि तां नाङ्गीकुरुते यत्—हे परमेश्वर! विनाशय नः सपत्नान्, विधेहि मां सर्वमूर्धन्यम्, ममैव प्रतिष्ठा मदधीनाश्च सर्वे जायन्तामिति। यतो हि शत्रुद्वयेन क्रियमाणायामन्योऽन्यविनाशप्रार्थनायां किमुभावपि विनाशयेत्परमेश्वरः? यद्यत्र कश्चिदेवमभिदधीत् यस्य पुंसः परमात्मनि प्रचुरः प्रेमा भवेत् तस्य प्रार्थनाङ्गीक्रियतामिति। तत्रास्माभिर्वक्तुं शक्यते यस्याल्पीयः प्रेम तस्यापि शत्रोः स्तोक एव विनाशो भवेदिति। एवं मूर्खतया प्रार्थयमानः कश्चिदित्थमपि प्रार्थयिष्यते—हे परमेश्वर! त्वमस्मान् निर्माय रोटिकां भोजय, मार्जन्या परिशोधयास्मद्गृहम्, प्रक्षालय वस्त्राणि, विधेहि च कृषिकर्मापीति। ये हीत्थं परमात्मानमवलम्ब्य सालस्यं मुधैव समयं यापयन्ति ते महामूर्खाः। यतो वै परमेश्वरस्य पुरुषार्थानुष्ठानरूपमादेशमुल्लङ्घयन्तो न कदापि सुखमासादयिष्यन्ति। तथा हि—

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः।

—यजु० अ० ४०। मं० २

परमेश्वरः समादिशति यत्—मानवः शतं संवत्सरान् यावज्जीवमिति यावत् कर्माणि कुर्वन्नेव जीवितुमिच्छेत् नालसः कर्हिचिद् भवेत्। पश्यत सर्वे अत्र चेतनाऽचेतना वा सर्व एव कर्माण्याचरन्तो यतमानाः संलक्ष्यन्ते। तथा च पिपीलिकादयोऽजस्रं प्रयतन्ते, पृथिव्यादयस्सर्वदा परिभ्रमन्ति वृक्षादयोऽपि नित्यमुपचीयन्तेऽपचीयन्ते च। उदाहरणानीमानि मानवैरप्यादेयानि। यथा प्रयतमानाय जनायान्योऽपि प्रयच्छति साहाय्यम्, तथैव धर्मेण पुरुषार्थमाचरतो नरस्य परमेश्वरोऽपि साहाय्यं कुरुते। यथा उद्यमिनमेव मानुषं भृत्यत्वे नियोजयन्ति नान्यमलसम्। दिदृक्षमाणं नेत्रवन्तञ्चैव मानुषं दर्शयन्ति नहि विगतचक्षुषम्। तथैव परमेश्वरोऽपि सर्वोपकृतिप्रार्थनायामेव साहाय्यं प्रददाति नतु हानिकारककर्मणि। मधुरो गुड इति मुहुर्मुहुः प्रलपतापि गुडस्तत्स्वादो वा न लभ्यते, यतमानेन पुनर्झटिति विलम्बेन वा लभ्यत एव।

इदानीं तृतीयोपासना—

**समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत् ।**
**न शक्यते वर्णयितुं गिरा तदा स्वयन्तदन्तःकरणेन गृह्यते ॥**

—इदमुपनिषद्-[मैत्रायणीय ४।९]-वचनम्

समाधियोगेन यस्य पुरुषस्याविद्यादयो मला विनाशमाप्ताः, येन चात्मस्थेन सता परमात्मनि समासञ्जितञ्चेतस्तेन परमात्मनो योगेन यत्सुखं लभ्यते यद् वाचा वर्णयितुं न शक्यते तद्धि स्वान्तःकरणेनानुभवति जीवात्मा ।

सामीप्यसम्प्राप्तिरुपासनाशब्दार्थः । अष्टाङ्गयोगेन परमात्मनः समीपेऽवस्थातुं सर्वव्यापिसर्वान्तर्यामिरूपेण प्रत्यक्षयितुञ्चावश्यकं सर्वं कार्यजातमनुष्ठेयम् । अर्थात्—

**तत्राऽहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ।**

—योगशा० साधनपादे । सू० ३०

इत्यादिसूत्राणि पातञ्जलयोगशास्त्रे पठ्यन्ते । उपासनां प्रारभमाणस्यायमेव प्रारम्भो यत्स वैरं परित्यजेत्, सततं सर्वैरनुरज्येत्, सत्यं वदेत् न त्वलीकं, किञ्चिदपि न स्तेनयेत्, सत्यं व्यवहरेत्, निरहङ्कारश्च भवेत्, लम्पटः सगर्वो वा न भवेत् । समाहृता इमे पञ्च यमा उपासनायोगस्य प्रथमाङ्गम् ।

**शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ।**

—योगशा० साधनपादे । सू० ३२

रागद्वेषादिपरित्यागेनान्तो जलादिना च बहिः पूतो भवेत् । धर्मपूर्वकं पुरुषार्थानुष्ठानेन लाभालाभयोः समदर्शितया सुप्रसन्नः सन्नालस्यं विहाय पुरुषार्थमनुतिष्ठेत् । सर्वदा सुखदुःखादिद्वन्द्वं सहेत । धर्ममेवानुतिष्ठेन्नत्वधर्मम् । नित्यं सत्यशास्त्राणामध्ययनाध्यापने, साधुजनसमागमञ्चाचरेत् । ओ३मित्येकं परमात्मनो नामार्थचिन्तनपूर्वकं प्रत्यहञ्जपेत् । परमेश्वराज्ञानुसारेणात्मानं समर्पयेत् । इमे पञ्च नियमा उपासनायोगस्य द्वितीयमङ्गम् । अत उत्तरमङ्गषट्कं योगशास्त्रे 'ऋग्वेदादिभाष्यभूमिकायाम्' वा द्रष्टव्यम् ।

यदोपासितुमभिलषेयुस्तदा गत्वा विजने शुद्धप्रदेशे, विरच्यासनम्, अनुष्ठाय प्राणायामम्, संयम्येन्द्रियाणि बाह्यविषयेभ्यः, स्थैर्यमापाद्य मनसो नाभिप्रदेशे, वक्षसि, कण्ठे, चक्षुषोः शिखायां पृष्ठस्थमध्यास्थनि वा, विविच्य परमात्मानमात्मानञ्च परमात्मनि प्रेमनिमग्नाः सन्तः संयमिनो भवेयुः ।

एतत्साधनान्याचरत आत्मान्तःकरणञ्च परिपूतं सत्सत्येन परिपूर्यते । स च सततं ज्ञानविज्ञाने प्रवर्धयन् मोक्षमप्यासादयति । यः खल्वष्टयामेषु घटिकामात्रमप्येवमनुध्यायति सोऽनिशमभ्युदेति ।

**सगुणनिर्गुणोपासना**—

सर्वज्ञादिगुणविशिष्टस्य परमात्मन उपासना **सगुणोपासना**। रूपरसगन्धस्पर्शादिगुणैश्चासंपरिष्वक्त इति विभाव्य सूक्ष्मतरस्यात्मनो बाह्यान्तर्व्यापके परमेश्वरे सम्यक् स्थितिः **निर्गुणोपासना**। यथा वै शीतातुरस्य वह्निसामीप्येन शीतं विनिवर्तत तथैव परमात्मनः समुपसत्त्याऽखिलदोषदुःखान्युच्छिद्य परमेश्वरस्य गुणकर्मस्वभावा इव जीवात्मनोऽपि गुणकर्मस्वभावाः पूयन्ते। अतः परमेश्वरस्य स्तुतिप्रार्थनोपासना अवश्यमनुष्ठेयाः। उपासनया ह्यात्मनो बलं तावत्प्रवर्धिष्यते येन पर्वत इव महादुःखसंक्लिष्टोऽपि नोद्विजिष्यते सर्वञ्च सहिष्यते। अपि च—यो वै परमात्मनः स्तुतिप्रार्थनोपासना न विधत्ते स एव कृतघ्नो महामूर्खश्च भवति। यस्माद्धि येन परमात्मना जगतः सर्वे पदार्था जीवेभ्यः सुखाय प्रतिपादितास्तस्यैव गुणविस्मरणं तदनङ्गीकारश्चाकृतवेदित्वं मौर्ख्यञ्च वर्तते।

**प्र०**—श्रोत्रनेत्रादीन्द्रियाभावे परमेश्वर इन्द्रियकार्याण्यनुष्ठातुं कथं शक्नुयात् ?

**उ०—अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः।**
**स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्॥**

—श्वेताश्वतरोपनिषद् अ० ३। मं० १९

हस्तयोरभावेऽप्यात्मनः सामर्थ्यरूप-पाणिना सर्वमादत्ते निर्माति च। अविद्यमानचरणोऽपि व्यापकत्वात्सर्वेभ्यो वेगवत्तमः। चक्षुरिन्द्रियगोलकरहितोऽपि सर्वं यथावत् पश्यति। कर्णविहीनोऽप्याकर्णयति सर्वेषां वार्ताः। अन्तःकरणशून्योऽपि जानाति सर्वं जगत्। परमियत्तया न स केनापि परिच्छेत्तुं शक्यते। स एव सनातनः सर्वेभ्यः श्रेष्ठत्वात्सर्वत्र परिपूर्णत्वाच्च पुरुषोऽभिधीयते। स हीन्द्रियान्तःकरणसाधनीयकर्माणि स्वीयसामर्थ्येनैवानुतिष्ठति।

**प्र०**—केचन मानवास्तं निर्गुणं निष्क्रियञ्च प्रतिपादयन्ति, अपि तत् सत्यम् ?

**उ०**—अत्रोच्यते—

**न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते।**
**परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च॥**

—श्वेताश्वतरोपनिषद् अ० ६ मं० ८

परमात्मनः किञ्चिदपि तद्रूपकार्यं नोत्पद्यते (नास्ति परमेश्वरः कस्याप्युपादानम्) नापि तेन किमप्यन्यत्करणं साधकमपेक्ष्यते, नास्ति कोऽपि तत्समानस्ततोऽधिको वा। तस्मिंश्चानन्तज्ञानबलक्रियासंयुक्ता स्वाभाविकी सर्वोत्तमा शक्तिः श्रूयते। निष्क्रियो हि परमेश्वरो जगत उत्पत्तिस्थितिभङ्गान् कर्तुं न शक्नुयात्, अतः स विभुरपि चेतनत्वेन क्रियावान् वर्तते।

प्र०—तेनानुष्ठीयमाना क्रिया सान्ता भवत्यनन्ता वा ?

उ०—यावति देशे काले वा क्रियां कर्तुमभिप्रैति तावत्येव देशे काले विदधाति, नाधिके नापि न्यूने, यतो वै स ज्ञानवान्।

प्र०—अपि परमेश्वरः स्वीयमन्तमवैति न वा ?

उ०—परमेश्वरो वै पूर्णज्ञानवान्। तदेव हि ज्ञानं येन यथावद् विज्ञायेत। यः पदार्थो यादृशो भवेत्तस्य तथैव विज्ञानं ज्ञानमिति यावत्। अनन्तस्य परमात्मनः स्वानन्तत्वावगमनमेव ज्ञानमतो विपरीतमज्ञानमर्थात् अनन्तसान्तयोः क्रमेण सान्तानन्तत्वविज्ञानं भ्रमः। **"यथार्थदर्शनं ज्ञानमिति"** यस्य वस्तुनो यादृशा गुणकर्मस्वभावा भवेयुस्तं तथैवावगत्याङ्गीकरणं ज्ञानविज्ञाने, तद्विरुद्धमज्ञानम्। अतएव—

**क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः।**

—योग० स० सू० २४

अविद्यादिक्लेशैः कुशलाकुशलेष्टानिष्टोभयफलप्रदया कर्मणां वासनया च विवर्जितः सर्वजीवेभ्यो विशिष्ट ईश्वर इत्यभिधीयते।

प्र०—**ईश्वरासिद्धेः** ॥१॥—सां० अ० १। सू० ९२

**प्रमाणाभावान्न तत्सिद्धिः** ॥२॥—सां० अ० ५। सू० १०

**सम्बन्धाभावान्नानुमानम्** ॥३॥—सां० अ० ५। सू० ११

(१) ईश्वरसिद्धौ प्रत्यक्षप्रमाणं न संगच्छते।

(२) प्रत्यक्षाभावे चानुमित्यादीन्यपि प्रमाणानि न सम्भवन्ति।

(३) व्याप्तिसम्बन्धाभावेन चानुमानं न सम्भवति। प्रत्यक्षानुमानाभ्यां विना शब्दादीन्यपि प्रमाणानि न संगच्छन्ते तस्मान्नेश्वरः सिद्ध्यति।

उ०—अत्रेश्वरसद्भावे प्रत्यक्षप्रमाणं नास्तीत्येवोच्यते। नापीश्वरो जगत उपादानकारणम्। पुरुषात् (जीवात्मनो) विलक्षणतया अर्थात्सर्वत्र परिपूर्णतया परमात्मा, पुरि शरीरे शयनाच्च जीवात्मा पुरुष इत्युच्यते।

अत्रैव प्रकरणे ह्युच्यते—

**प्रधानशक्तियोगाच्चेत्सङ्गापत्तिः** ॥१॥

**सत्तामात्राच्चेत्सर्वैश्वर्यम्** ॥२॥

**श्रुतिरपिप्रधानकार्य्यत्वस्य** ॥३॥

—सां० अ० ५। सू० ८, ९, १२

(१) प्रधानशक्तचा युज्येत चेत्पुरुषस्तर्हि तत्रापि भवेत्सङ्गापत्तिः। सूक्ष्मपरमाणूनां मेलनेन प्रकृतिर्यथा कार्यरूपे परिणमति तथैवेश्वरोऽपि स्थूलतामाश्रयेत्, तस्मान्नेश्वरो जगत उपादानकारणमपि तु निमित्तकारणम्।

(२) चेतनाच्चेदिदं जगदुत्पद्येत तर्हि यथा परमेश्वरः समग्रैश्वर्य-

सम्पन्नस्तथा लोकोऽपि सर्वैश्वर्येण युज्येत न तु तथा वर्तते, तस्मान्नेश्वरो जगत उपादानकारणमपि तु निमित्तकारणम् ।

(३) उपनिषदपि प्रधानमेव जगत उपादानकारणं वर्णयति—

**अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।**

—श्वेताश्वतरोपनिषद् अ० ४ । मं० ५

जन्मविवर्जिता सत्त्वरजस्तमोगुणात्मिका प्रकृतिरेव स्वरूपाकारेण बहुप्रजाभावमापद्यते । परिणामितया प्रकृतिरेव रूपान्तरेषु परिणमति पुरुषस्त्वपरिणामितयाऽवस्थान्तरमापन्नो नासादयति रूपान्तरम् । स तु सततं कूटस्थो निर्विकारश्चैवावतिष्ठते । अतो यः खलु कपिलाचार्यमनीश्वरवादीत्यभिधत्ते स एवानीश्वरवादी न तु कपिलाचार्य इति विज्ञेयम् ।

(अन्येऽपि शास्त्रकारा न खलु सन्त्यनीश्वरवादिनः) तथा च धर्मधर्मिशब्दप्रयोगेण मीमांसा, आत्मशब्देन च न्यायवैशेषिकावीश्वरसद्भावमङ्गीकुरुतः । तथा च सर्वज्ञत्वादिधर्मसंयुक्तं "अतति सर्वत्र व्याप्नोति" इति व्युत्पत्त्या सर्वत्र व्यापकं सर्वजीवानामप्यात्मानं(पुरुषं)मीमांसान्यायवैशेषिका ईश्वरं मन्यन्ते ।

प्र०—ननु परमेश्वरोऽवतारं गृह्णाति न वा ?

उ०—नहि । **अज एकपात्०** [३४।५३] **स पर्यगाच्छुक्रमकायम्०** [४०।८] एवमादीनि याजुषानि वचांसि; एतैर्हि परमेश्वरो न कर्हिचित् जायते इति सिद्धं भवति ।

**प्र०—यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥**

—भ० गी० [अ० ४ । श्लो० ७]

यदा यदा धर्मो विलुप्यते तदा तदाहं देहं धारयामीति श्रीकृष्णो ब्रवीति ।

उ०—वेदविरुद्धत्वादप्रमाणमिदम् । "धर्मात्मा धर्मं परिरक्षितुकामश्च श्रीकृष्णो युगे युगे (प्रतिकल्पं) समुत्पद्य दुर्जनान् विनाशयेयम्, सज्जनाँश्च पालयेयमिति" कांक्षति स्म इति तु कथमपि सम्भवति नात्र कश्चिद् दोषः । यतो हि **'परोपकाराय सतां विभूतयः'** साधुजनानां देहमनोवित्तानि परोपकारायैव भवन्ति, तथापि नैतेन श्रीकृष्ण ईश्वरो भवितुमर्हति ।

प्र०—यद्येवन्तर्हि जगत्यस्मिन् परमेश्वरस्य चतुर्विंशतिरवतारा भवन्ति, कथमेषामवतारत्वमङ्गीक्रियते ?

उ०—वेदार्थज्ञानाभावेन, साम्प्रदायिकानां प्रतारणया, स्वस्य चाविद्वत्त्वेन भ्रमपाशबद्धाः सन्त एवंविधप्रमाणशून्यवार्ताः समाचक्षते मन्यन्ते च ।

प्र०—नावतरेच्चेदीश्वरः कथन्तर्हि कंसरावणप्रभृतयः पापीयांसो विनाश्येरन् ?

उ०—प्रथमं तावत् यो हि जायते सोऽवश्यं म्रियतेऽपरञ्चावतारमन्तरेणैव (देहधारणं विनैव) यः सकलजगत उत्पत्तिस्थितिप्रलयान् कुरुते कंसरावणप्रभृतयस्तस्य पुरतो नावहन्ति पिपीलिकासाम्यमपि। स हि सर्वव्यापकतया कंसादिशरीरेष्वपि परिव्याप्तः। अभिलषन्नेव च मर्माणि विदार्य तान् विनाशयितुं शक्नोति। अनन्तगुणकर्मस्वभावोऽपि परमेश्वरः नितरां क्षुद्रजन्तोर्व्यापादनाय जायते म्रियते चेति वादिने मूर्खत्वव्यतिरिक्तं किमन्यपदौपम्यं प्रदीयेत। यदपि भक्तजनसमुद्धाराय बिभर्ति जन्मेति केचित्संचक्षते तदपि न। भक्तजना हि परमात्मनो निदेशमनुवर्तन्ते तानुद्धर्तुं च तस्मिन् वर्तते पूर्णसामर्थ्यम्। अपि नाम परमेश्वरस्य पृथिवीसूर्यचन्द्रादिजगतः सर्जनधारणप्रलयादिकर्मभ्यः कंसादीनां हननम्, गोवर्धनादिपर्वतानाञ्च समुत्थापनं महत् कर्म ? यः कश्चिदस्मिन् जगति परमेश्वरस्य कर्माणि विचिन्तयेत् तेन **"अहो न भूतो न भविष्यति"** इति विनिश्चेष्यते।

युक्त्यापि परमात्मनो जन्म न सिद्ध्यति। अनन्तमिदमाकाशं गर्भस्थं करतलगतं वा समभवदिति कस्यचिद् वचनं न कर्हिचित् सत्यं भवितुमर्हति यतो ह्याकाशमनन्तं सर्वगतञ्च वर्तते न जातु तद् बहिर्निर्गच्छति नाप्यन्तः प्रविशति। एवं परमात्मनोऽनन्तत्त्वात् विभुत्वाच्च तस्य प्रवेशनिर्गमौ न सिद्ध्यतः। आत्मनानधिष्ठित एव प्रदेशे कस्यचिद् गतागतं सम्भवति। किं परमेश्वरो गर्भे नासीत् व्यापको येन कुतोऽपि समायातः ? बहिरेव वा नाभवत् येनाभ्यन्तरान्निर्गतः। अविद्वद्भिर्विना न केनाप्येवं परमात्मनो विषये वक्ष्यते मंस्यते च। अत एव च यीशुप्रभृतयोऽपि नेश्वरस्यावतारा इति विभावनीयम्। ते हि रागद्वेषक्षुत्तृषाभयशोकसुखदुःखजन्ममरणादिगुणयोगेन मानवा एवाभवन्।

प्र०—ईश्वरः स्वभक्तानां पापानि क्षमते न वा ?

उ०—नहि, पापानि क्षमेत चेदीश्वरस्तर्हि तस्य न्यायो विनश्येत्। सर्वे च मानवा महापापिनो भवेयुः। क्षमाप्रदानवार्तामाकर्ण्यैव तेषां पापाचारे निर्भयत्वोत्साहौ प्रवर्धेताम्। यथा नराधिपेन क्षान्ताः पापिनः सोत्साहं महापापानि प्रकुर्वन्ति। यतो वै "क्षंस्यते नोऽपराधान्नराधिपः, वयमप्यञ्जलिबन्धाद्यनुनयेन स्वापराधान् क्षमयिष्यामः" इति विश्रब्धा भवन्ति। निरपराधिनोऽप्यबिभ्यतोऽपराधेभ्यः पापकर्मसु सज्जन्ति, तस्मात् सर्वकर्मणां यथावत्फलप्रदानमैश्वरं कर्म नतु क्षमाप्रदानम्।

प्र०—अपि स्वतन्त्रः परतन्त्रो वायं जीवात्मा ?

उ०—आत्मकर्तव्येषु स्वाधीनः परमात्मनो व्यवस्थायाञ्च परतन्त्रः।

**स्वतन्त्रः कर्तेति** पाणिनीयं [१।४।५४] सूत्रं, स्वतन्त्र एव कर्तेति तदभिप्रायः।

**प्र०**—स्वतन्त्र इति कमाचक्षते ?

**उ०**—शरीरप्राणेन्द्रियान्तःकरणादयो यदायत्ताः (स स्वतन्त्र इत्यभिधीयते) यदि हि नाम न भवेज्जीवः स्वतन्त्रस्तर्हि पापपुण्यफलावाप्तिरपि तस्मै न भवेत्। यथा हि भर्तुर्निदेशेन भृत्यः, सैन्यञ्च सेनाप्रणेतुराज्ञया प्रेरणया वा निहत्यापि संग्रामेषु प्रभूतान् मानवान् नापराध्यति, तथैव परमात्मनः प्रेरणया तदधीनतया च कर्माणि कुर्वन्तं जीवात्मानं न स्पृशेतां पापपुण्ये। तत्फलमपि प्रेरकेण परमेश्वरेणैव लभ्येत। सुखदुःखात्मकस्वर्गनरकयोस्सम्प्राप्तिः परमेश्वरस्यैव जायेत। यथा च शस्त्रेण कस्यचिद् निहन्तैव पुरुषो गृह्यते दण्ड्यते च नतु शस्त्रम्, तथैव परायत्तो जीवः पापपुण्ययोर्भोक्ता न भवेत्। तस्मादात्मनः सामर्थ्येन कर्मानुष्ठाने जीवः स्वतन्त्रः, परमनुष्ठितपापः परमात्मनो व्यवस्थायां परायत्तः सन् पापफलमुपभुङ्क्ते। अतएव कर्मानुष्ठाने जीवस्य स्वातन्त्र्यं दुःखात्मकपापफलोपभोगे च पारतन्त्र्यम्।

**प्र०**—परमेश्वरो जीवं न निरमास्यत् नापि तस्मै सामर्थ्यं प्रादास्यच्चेद् तर्हि स किमपि कर्तुं नाशक्ष्यत् तस्मात् परमेश्वरस्य प्रेरणयैव जीवः कर्माणि कुरुते इति अनुमिमीमहे।

**उ०**—नायं जीवः कर्हिचित् समुत्पन्नः। स हि जगतो निमित्तकारणं परमेश्वर इवोपादानकारणं प्रधानवच्चानादिरस्ति। यद्यपि जीवात्मनः शरीरमिदमिन्द्रियाणां गोलकानि च परमेश्वरविरचितानि परं तानि जीवस्यैवायत्तानि। मनोवाक्कायैः कृतपापपुण्यो जीव एव तत्फलमुपभुङ्क्ते नतु परमेश्वरः। यथा हि कश्चित् शिल्पकारः पर्वतात् निष्कासयति लौहम्। तञ्चापरः क्रीणाति वणिक् तस्यापि निषद्यातः परिक्रीयायस्कारो निर्माति करवारं तस्मात्समादाय सैनिकस्तरवारिं व्यापादयति कमपि मनुजम्। यथात्र लौहखनिकं, तत्क्रेतारमयस्कारं तरवारिं वा परिगृह्य नरपतिर्न दण्डयति अपि तु करवारेण निहन्तैव दण्डमाप्नोति तथैव शरीरादीनामुत्पादयिता परमेश्वरस्तत्कृतकर्माणि नोपभुङ्क्ते अपि तु जीवाय कर्मफलं प्रयच्छति। परमेश्वरेणैव कर्माणि चेत् क्रियेरन् तर्हि कोऽपि जीवो नानुतिष्ठेत् पापम्। पवित्रो धार्मिकश्च परमेश्वरः पापकर्मणि कमपि जीवं न प्रेरयति। अतो जीवः स्वीयकर्मानुष्ठाने स्वतन्त्रो वर्तते। यथा च जीवः स्वकर्मसु स्वतन्त्रस्तथैव परमेश्वरोऽपि निजकर्मसु स्वतन्त्रः।

**प्र०**—जीवेश्वरयोः स्वरूपगुणकर्मस्वभावाः कीदृशाः ?

**उ०**—उभावपि चेतनस्वरूपौ। स्वभाव उभयोरपि पवित्रः, अविनाशी धार्मिकत्वादिसंयुक्तश्च। परं सर्गस्योत्पत्तिस्थितिप्रलयाः, सर्वेषां नियमेन

अवस्थापनम्, जीवेभ्यः पापपुण्यफलप्रदानादिकञ्च परमेश्वरस्य धर्म्याण्येव कर्माणि। जीवस्य तु सन्तानसमुत्पादनं, तत्परिपालनं, शिल्पविद्यादिकञ्च सदसदुभयविधान्यपि कर्माणि। ईश्वरस्य नित्यज्ञानानन्दानन्तबलप्रभृतयो गुणाः। जीवस्य पुनः—

**इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति।**

—न्यायद० अ० १। आ० १। सू० १०

**प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तर्विकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि॥** —वैशेषिकद० अ० ३। आ० २। सू० ४

(**इच्छा**) पदार्थानां प्राप्तिसमभिलाषः (**द्वेषः**) दुःखादीनामनभिलाषो वैरञ्च (**प्रयत्नः**) पुरुषार्थबले, (**सुखम्**) आनन्दः, (**दुःखम्**) विलापोऽप्रसन्नता च, (**ज्ञानं**) विवेकः, न्यायवैशेषिकयोरेते गुणास्तुल्याः परन्तु वैशेषिके (**प्राणः**) प्राणवायोर्बहिर्निष्कासनम्, (**अपानः**) बहिःप्रदेशात् प्राणवायोरन्तर्ग्रहणम्, (**निमेषः**) चक्षुषोर्मीलनम् (**उन्मेषः**) नेत्रयोरुन्मीलनम्, (**जीवनम्**) प्राणानां धारणम्, (**मनः**) अध्यवसायस्मरणाहङ्कारानुष्ठानम्, (**गतिः**) गमनम् (**इन्द्रि०**) सर्वेन्द्रियप्रेरणम्, (**अन्तर्विकारः**) क्षुत्तृट्हर्षशोकादिभिस्संयोगः। जीवात्मनः खल्विमे गुणाः परमात्मगुणेभ्यो भिन्नाः। एभिरेव गुणैरात्मा प्रत्येतव्यः यतो वै स नास्ति स्थूलः। आत्मनाधिष्ठित एव देहे गुणा इमे प्रकाशन्ते। यदा चायं विहाय शरीरं निर्याति तदेमे गुणा अपि तद् विमुञ्चन्ति। ये गुणा यस्य सदसद्भावमवलम्बन्ते ते तस्यैव भवन्ति। यथा प्रदीपभानुमतोरभावे प्रकाशाभावो विद्यमानयोस्तु तयोः प्रकाशसद्भावस्तथैवेश्वरजीवयोर्ज्ञानमपि तद्गुणद्वारेणैव जायते।

प्र०—ननु परमेश्वरस्त्रिकालदर्शितया भविष्यतोऽप्यर्थान् जानाति, यथा च स निर्णेष्यति जीवस्तथैव विधास्यति। नापीश्वरो जीवं दण्डयितुमर्हति यतो हि यथेश्वरः स्वज्ञानेन निश्चैषीत् तथैव विदधाति जीवः।

उ०—परमेश्वरस्त्रिकालदर्शीति कथनमज्ञानविचेष्टितम्। यतः खलु यद् भूत्वा न भवति स भूतकालः। अभूत्वा च यद् भवति स भविष्यत्काल इत्युच्यते। अपि परमात्मनः किञ्चिज्ज्ञानं सद् विनश्यति असद् वोत्पद्यते? परमात्मनो ज्ञानं सर्वदैकरसमखण्डितमवतिष्ठते। भूतं भविष्यदिति हि जीवानामपेक्षया। जीवात्मनां कर्मापेक्षया परमात्मनि त्रिकालज्ञता वर्तते ननु स्वाभाविकी। यथा स्वातन्त्र्येणात्मा विदधाति तथैव सर्वज्ञत्वेनावगच्छति परमेश्वरः। यथा चावैति परमात्मा तथैवानुतिष्ठति जीवात्मा। भूतं भवद्भविष्यदिति कालत्रयस्य विज्ञाने कर्मणां फलप्रदाने च स्वतन्त्रः परमेश्वरः। परमात्मनो ज्ञानस्यानादित्वेन कर्मणो ज्ञानमिव दण्डप्रदान-

ज्ञानमप्यनादि। तस्य ज्ञानद्वयमपि सत्यमेव। अपि कर्मणो ज्ञानं सत्यं दण्डज्ञानञ्चासत्यमिति शक्यते भवितुम्? तस्मान्नास्त्यत्र कश्चिद्दोषः।

प्र०—जीवात्माऽस्मिन्देहे भिन्नविभुः परिच्छिन्नो वा?

उ०—परिच्छिन्नः। विभुत्वे हि तस्य जाग्रत्स्वप्नसुषुप्तिजन्ममरणसंयोगवियोगगमनागमनप्रभृतीनि न सम्भवेयुः। तस्मादयमात्मा स्वरूपेणाल्पज्ञः सूक्ष्मश्च। परमेश्वरस्तु नितरां सूक्ष्मतमोऽनन्तः सर्वज्ञः सर्वव्यापकश्च। अत एवेश्वरजीवयोर्व्याप्यव्यापकसम्बन्धः।

प्र०—ननु एकस्मिन्प्रदेशे एकस्यैव वस्तुनः स्थितिसम्भवात् जीवेश्वरयोः संयोगसम्बन्ध एव सङ्गच्छते नतु व्याप्यव्यापकसम्बन्धः।

उ०—समानाकारेष्वेव पदार्थेष्वयन्नियमः संघटते न पुनरसमानाकारेषु। यथा ह्ययः स्थूलं, वह्निः सूक्ष्मो भवति तत्र लोहे वैद्युतोऽग्निर्व्यापकः सन्नेकस्मिन्नेवावकाशे तेन सहैव सन्तिष्ठते। तथैव परमात्मनोऽपेक्षया जीवस्य स्थूलत्वात्, परमेश्वरस्य च जीवतः सूक्ष्मत्वात्परमेश्वरो व्यापको जीवश्च व्याप्यो वर्तते। जीवेश्वरयोः व्याप्यव्यापकसम्बन्धवत् सेव्यसेवकाधाराधेयस्वामिभृत्यादीनि सम्बन्धान्तराण्यपि वर्तन्ते।

प्र०—ननु ब्रह्मात्मनोरैक्याभावे—

**प्रज्ञानं ब्रह्म ॥१॥ अहं ब्रह्मास्मि ॥२॥ तत्त्वमसि ॥३॥ अयमात्मा ब्रह्म ॥४॥**

इति चैवमादीनां वेदमहावाक्यानां कोऽर्थः?

उ०—ब्राह्मणग्रन्थवचनानीमानि न वेदवाक्यानि। नाप्येषां क्वापि सच्छास्त्रेषु महावाक्यत्वव्यपदेशो विलोक्यते। अयञ्चैषामभिप्रायः—(प्रज्ञानं ब्रह्म) ब्रह्म प्रकृष्टं ज्ञानस्वरूपं वर्तते। (अहं) अहङ्कारपदवाच्योऽहमात्मा (ब्रह्म) ब्रह्मस्थः (अस्मि) भवामीति। "मञ्चाः क्रोशन्तीति" वाक्ये जडतया मञ्चानां मञ्चकर्तृकक्रोशत्वासम्भवात् मञ्चस्थाः पुरुषाः क्रोशन्तीतिवदत्रापि तात्स्थ्योपाधिरेवावगन्तव्या। ननु सर्वेषामेव पदार्थानां ब्रह्मणि स्थिततयात्मनो ब्रह्मस्थत्वप्रतिपादने को विशेष इति चेत्। सत्यम्। सत्स्वपि ब्रह्मस्थेषु सर्वपदार्थेषु यथा जीवो ब्रह्मणः साधर्म्ययुक्तो निकटस्थश्च वर्तते न तथान्ये वर्तन्ते। जीवात्मैव च ब्रह्मणो ज्ञानं प्रतिपद्यते कैवल्ये च स एव ब्रह्मणा सह साक्षाद्वसति। तस्मादात्मनो ब्रह्मणा सह तात्स्थ्यरूपस्तत्सहचरितरूपो वा सम्बन्धो भवितुमर्हति। एतेन जीवब्रह्मणोरनैक्यं सिद्ध्यति। यथा हि कश्चित्कमपि "अयमहञ्चाभिन्नाविति वदेत्" तत्राविरोधिनावावामित्येव तदभिप्रायः। तथैव समाधिस्थेनात्मनापि परमेश्वरप्रेमनिमग्नेन सता "अहं ब्रह्म चेदमभिन्नावविरोधिनावेकावकाशस्थायिनौ" इति वक्तुं शक्यते। यो वै जोवः परमात्मनो गुणकर्मस्वभावानुकूलमात्मनो गुणकर्मस्वभावान्

विदधाति स एव साधर्म्येण ब्रह्मणा सहैकत्वं शक्नोति वक्तुम् ।

प्र०—नन्वेवं कोऽर्थोऽस्य (तत्) ब्रह्म (त्वं) जीवोऽसि । हे जीव ! त्वं तद् ब्रह्मासीति ।

उ०—अत्र तच्छब्देन किमभ्युपेयते युष्माभिः ?

प्र०—ब्रह्मेति ।

उ०—कुतोऽनुवर्तितं ब्रह्मपदम् ?

प्र०—**सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म ॥**

इति पूर्ववाक्यात् ब्रह्मपदमनुवर्तयामः ।

उ०—अहो न छान्दोग्योपनिषदमवालोकिष्ठा अपि अन्यथा मैवमलीकं वादीः । न हि तत्र ब्रह्मशब्दः पठ्यते ।

छान्दोग्ये हि—

**सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥**

—छां० प्र० ६ । खं० २ । मं० १

इत्येव पाठो वर्तते । नास्ति तत्र ब्रह्मशब्दः ।

प्र० –तर्हि तच्छब्देन भवन्त एव किमभ्युपयन्ति ?

उ०—**स य एषोऽणिमा ॥ एतदात्म्यमिद ँ सर्वं तत्सत्य ँ स आत्मा तत्त्वमसि श्वेतकेतो इति ॥**—छान्दो० । प्र० ६ । खं० ८ । मं० ६,७

**तदात्मकस्तदन्तर्यामी त्वमसि ॥**

स परमेश्वरो विज्ञातव्यः यो वै अत्यन्तसूक्ष्मः सर्वस्यास्य जगतो जीवस्य चात्मा वर्तते स एव सत्स्वरूप आत्मनोऽपि चात्मा स्वयमेव । हे श्वेतकेतो ! प्रियपुत्र ! तदात्मकस्तदन्तर्यामी त्वमसि । तेनान्तर्यामिपरमात्मना युक्तस्त्वमसीति । अयमेवार्थ उपनिषद्भिरविरुद्धचते यतः—

**य आत्मनि तिष्ठन्नात्मनोऽन्तरोऽयमात्मा न वेद यस्यात्मा शरीरम् ।**
**आत्मनोऽन्तरो यमयति स त आत्मान्तर्याम्यमृतः ॥**

बृहदारण्यकोपनिषदो वचनमिदम् । उद्दालकमुपदिशति महर्षिर्याज्ञवल्क्यः । भो उद्दालक ! यः परमेश्वर आत्मनि जीवे स्थितोऽपि ततो भिन्नो वर्तते यञ्च स्वात्मनि व्याप्तमपि न वेत्ति मूढोऽयमात्मा, यस्य परमात्मनो जीवात्मैव शरीरम्—अर्थात् यथा शरीरे जीवो निवसति, तथैवात्मनि स परमेश्वरो व्यापको वर्तते । यश्च जीवात्मभिर्विभिन्नः सन् साक्षिरूपेण तेषां सुकृतदुरिते संपश्यन् तत्फलञ्च तेभ्यः प्रतिपादयन् तान् नियमयति अविनाशिस्वरूपः स एव तवाप्यन्तर्यामी त्वयि व्यापकस्तं विजानीहि । नह्येवमादीनां वचसामर्थोऽन्यथा कर्तुं शक्यते केनापि । यदा वै समाधिदशायां योगिने परमेश्वरः साक्षात्संपद्यते तदा **"अयमात्मा ब्रह्मेति"** ममात्मनि व्याप्तमेतद् ब्रह्मैव सर्वत्र व्यापकमित्यभिधत्ते । अत एव ब्रह्मात्मनोरैक्यमा-

पादयन्त ऐदंयुगीना वेदान्तिनो नावगच्छन्ति वेदान्तशास्त्रम् ।

**प्र०—अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि ।।**

—छा० प्र० ६ । खं० ३ । मं० २

**तत्सृष्ट्वा तदेवानुप्राविशत् ।**—तैत्तिरीय० [ब्रह्मान० अनु० ६]

परमेश्वरोऽभिधत्ते यदहं विरच्य जगदिदं शरीरञ्च, जगति व्याप्य देहे च जीवरूपेण प्रविशन् नामरूपे व्याकरवाणीति । परमेश्वरो जगच्छरीरञ्च निर्माय तत्रैव प्रविष्ट इति चैवमादीनां श्रुतीनामर्थः कथमन्यथेष्यते ?

उ०—यदि हि नाम भवन्तः पदवाक्ययोरर्थान् व्यज्ञास्यन् नैवन्तर्ह्यनर्थं व्यधास्यन् । अत्रैवं समवधेयम्—एकः प्रवेशोऽपरश्चानुप्रवेश उच्यते । परमेश्वरः शरीरेषु प्रविष्टैरात्मभिस्सहानुप्रविष्ट इव भूत्वा सकलां नामरूपादिविद्यां प्रकाशयति वेदमुखेन । प्रवेश्य च देहेषु जीवात्मनः स्वयमपि तदन्तरनुप्रविष्टो वर्तते । यदि हि नाम भवन्तोऽनुशब्दार्थमज्ञास्यन् तर्हि जात्वपि तादृशं विरुद्धार्थं नाकरिष्यन् ।

प्र० —"सोऽयं देवदत्तो य उष्णकाले काश्यां दृष्टः स इदानीं प्रावृट्समये मथुरायां दृश्यते" अत्र देशकालयोः (काशीमथुरात्मकदेशस्य उष्णप्रावृड्रूपस्य च कालस्य) परित्यागे शरीरमात्रे लक्ष्येण देवदत्तो लक्ष्यते । तथैव भागत्यागलक्षणयानया ब्रह्मणः परोक्षदेशकालमायोपाधीनां जीवस्य च प्रत्यक्षदेशकालाविद्याल्पज्ञतोपाधीनां परित्यागेन केवलं चेतने लक्ष्यप्रदानेनैकमेव ब्रह्मरूपं वस्तूभयत्रापि संलक्ष्यते । अस्यां हि भागत्यागलक्षणायां किञ्चिद् गृह्यते, किञ्चिच्च परित्यज्यते तथाच परित्यज्य सर्वज्ञत्वादिवाच्यार्थं परमात्मनोऽल्पज्ञत्वाद्यभिधेयार्थञ्च जीवस्य, चेतनमात्रस्य च लक्ष्यार्थस्य सङ्ग्रहेणाद्वैतं सिद्ध्यति । किमत्र भवतां वाचो युक्तिः ?

उ०—प्रथमं तावत् "जीवेश्वरौ" नित्यावनित्यौ वेति वक्तव्यम् ?

प्र०—उपाधिजन्यतया कल्पितत्वादनित्याववेति मन्यामहे ।

उ० —भवतां सोपाधिर्नित्याऽनित्या वा ?

प्र०—अस्माकं मते—

**जीवेशौ च विशुद्धाचिद्विभेदस्तु तयोर्द्वयोः ।**
**अविद्या तच्चितोर्योगः षडस्माकमनादयः ।।१।।**
**कर्मोपाधिरयं जीवः कारणोपाधिरीश्वरः ।**
**कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते ।।२।।**

संक्षेपशारीरके शारीरकभाष्ये च कारिकाद्वयमिदं पठ्यते । वेदान्तिनो वयं षट् पदार्थान्प्रथमञ्जीवम्, द्वितीयमीश्वरं, तृतीयं ब्रह्म, तुरीयं जीवेश्वरविशेषभेदं, पञ्चममविद्यामज्ञानम्, षष्ठमविद्याचेतनयोर्योगम्—इत्येताननादीन् मन्यामहे । परमेष्वेक ब्रह्मानाद्यनन्तम्, अवशिष्टपञ्चकञ्चाना-

दिसान्तं यथा प्रागभावो भवति। यावदज्ञानं चेदं पञ्चकं विद्यमानं तिष्ठति। यतश्चामीषां पञ्चानामादिर्न ज्ञायते तस्मादनादयः। ज्ञानानन्तरञ्च विनश्यन्ति अतः सान्ता नाशवन्तश्चोच्यन्ते।

उ०—भवत उभावपि श्लोकावशुद्धौ। नह्यविद्यायोगं विना जीवः, विना च मायासङ्गमीश्वरो भवतान्नये सिद्धयति, अतस्तच्चितोर्योग इत्यनेन परिगणितः षष्ठः पदार्थो नोपपद्यते। स ह्यविद्यामायाजीवेश्वरेषु चरितार्थः समभवत्। अपि चेश्वरस्याविद्याब्रह्मभ्यां पार्थक्येन परिगणनमकिञ्चित्करम् (दुर्घटम्) नहि ब्रह्मणो मायाऽविद्ययोश्च योगं विनेश्वरः सिद्धयति। तस्मात्पदार्थद्वयमेव भवतां सिद्धयति, ब्रह्मैकमपरा चाविद्येति न तु षट् पदार्थाः ॥१॥ किञ्चानन्तनित्यशुद्धबुद्धमुक्तस्वभावे सर्वगते ब्रह्मणि प्रसाद्धयैवाज्ञानं भवद्भिः कार्यकारणोपाधिभ्यां जीवेश्वरौ सुशकौ साधयितुम्। तस्य चैकदेशे स्वाश्रयेण स्वविषयकमनाद्यज्ञानं सर्वत्राभ्युपेयेत चेत्; तर्हि सकलेनापि ब्रह्मणाऽशक्यं शुद्धेनावस्थातुम्। एकदेशेऽज्ञानाभ्युपगमे च तस्य परिच्छिन्नतयेतस्ततः परिभ्रमिष्यति। (तथा च) तदज्ञानं यं यं देशमधिष्ठास्यति तत्रत्यं ब्रह्माज्ञानि यं यं पुनः परिहास्यति देशं, तत्रत्यं ब्रह्मापि ज्ञानवत्सम्पत्स्यते। एवं कुत्रत्यमपि ब्रह्मानादिशुद्धज्ञानसंयुक्तं वक्तुं न शक्ष्यथ। किञ्चाज्ञानपथवर्तिनो ब्रह्मणस्तदज्ञानवेदितृतया बाह्यान्तर्भेदेन द्विधा भङ्क्ष्यति तद्ब्रह्म। भवतु नाम ब्रह्मणो द्विधाभावः किन्तेन तस्य परिहीयत इति चेत्। न। एवं हि तस्याखण्डत्वं नावतिष्ठते, अखण्डत्वे चाज्ञानित्वं व्याहन्यते। तथा ज्ञानाभावस्य विपरीतज्ञानस्य वा गुणत्वेन द्रव्येण सह तस्य समवायसम्बन्ध एवाभ्युपेतव्यः (गुणगुणिनोः समवायसम्बन्धस्यैव स्वीकारात्) तथा च न कर्हिचित्तदनित्यं भवेत्। शरीरैकदेशे जायमानस्फोटेन यथा सर्वस्मिन्नपि देहे दुःखमनुभूयते तथैवैकदेशेऽज्ञानस्य सुखदुःखादिक्लेशानाञ्चोपलब्धितया सकलस्यापि ब्रह्मणो दुःखाद्यनुभवेनैव कार्योपाधेरर्थादन्तःकरणोपाधेर्योगेन ब्रह्म जीवं मन्यामह इति चेत्। तत्रैवं ब्रूमः। ब्रह्म व्यापकं परिच्छिन्नं वेत्युच्यताम्? ब्रह्म व्यापकमुपाधिश्च परिच्छिन्नैकदेशिनी नाना च उभयमपि च पृथक् पृथक् वर्तते इति चेदुच्येत तर्हि तदन्तःकरणमितस्ततो गच्छति नवेति ब्रूत?

उ०—आम्, परिभ्रमति।

प्र०—अन्तःकरणेन सह ब्रह्मापि परिभ्रमति न वा?

उ०—नहि, तत् खलु स्थिरमवतिष्ठते।

प्र०—एवं ह्यन्तःकरणेन परिहृतदेशस्थं ब्रह्माज्ञानविवर्जितमधिष्ठितदेशस्थं चाज्ञानी सम्पत्स्यते। तथैव ब्रह्मणो ज्ञानाज्ञानयोः क्षणिकतया मोक्षबन्धयोरपि क्षणिकत्वमापादितं भवति। किञ्चान्येनानुभूतस्यापरेण

स्मरणमिव पूर्वेद्युर्दृष्टस्य वस्तुनः श्रुतस्यार्थस्य वाद्य ज्ञानं नावतिष्ठेत। यतो वै दर्शनश्रवणयोरन्यो देशः कालो वा स्मरणस्य चापरः। एकं ब्रह्मेति चेत् कथन्न तत्सर्वज्ञम्? अन्तःकरणान्यन्योन्यतो भिन्नानि सन्ति, तेन सर्वेषां ज्ञानमपि भिद्यत इति चेदुच्येत। तन्न। तस्य (अन्तःकरणस्य) जडत्वेन ज्ञानाधारत्वाभावात्। न केवलं ब्रह्म नापि केवलमन्तःकरणं ज्ञानं प्रतिपद्यते, अपित्वन्तःकरणस्थचिदाभासस्य जायते ज्ञानमितिचेदभ्युपगम्येत तथाप्यन्तःकरणमुखेन चेतन एव ज्ञानोत्पत्त्या कथं नेत्रादि द्वारा तज्ज्ञानसामर्थ्ये परिमिते? अतः कार्यकारणोपाधियोगेन ब्रह्म जीवेश्वरौ च साधयितुं न शक्याः। वस्तुतस्तु ईश्वर इति ब्रह्मण एव व्यपदेशः। ब्रह्मणो भिन्नस्यानाद्यनुत्पन्नामृतस्वरूपस्य जीवात्मनश्च जीव इति नामधेयम्। जीवशब्देन प्रणश्यमानतया मोक्ष सुखं कःचिदाभास एवोच्यत इति चेत्। तदप्यसमञ्जसम्। तस्य क्षणभङ्गुरत्वेन समुपभोक्ष्यते? तस्माद् ब्रह्म जीवो जीवश्च ब्रह्म न कर्हिचिदभवन्न भवति नापि भविष्यति।

प्र०—नन्वेवं **"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"** (छान्दोग्य०) एवमादिवाक्येषु प्रतिपादितोऽद्वैतभावः कथं सेत्स्यति? अस्माकं मते तु ब्रह्मणस्सजातीयविजातीयस्वगतभेदशून्यतया केवलमेकं ब्रह्मैव सिद्धयति। विद्यमाने द्वितीयेऽस्मिञ्जीवे कथमद्वैतसिद्धिर्भवितुमर्हति?

उ०—कथमस्मिन् भ्रमे निपतिता बिभीत। विशेष्यविशेषणविद्यां विजानीत किन्तस्य प्रयोजनमिति। **व्यावर्तकं विशेषणं भवतीति चेत्**, सत्यम्। परं **प्रवर्तकं प्रकाशकमपि विशेषणं भवती**त्येतदपि मन्तव्यम्। तत्रेदमवगच्छत—अत्राद्वैतमिति ब्रह्मणो विशेषणं तच्चात्मनो व्यावर्तकधर्मेणानेकजीवतत्वादिभ्यो ब्रह्म व्यवच्छिनत्ति। स्वीयप्रकाशकधर्मेण चैकत्वं ब्रह्मणः प्रतिपादयति यथा "अस्मिन्नगरेऽद्वितीयो धनाढ्यो देवदत्तः। अस्यां सेनायामद्वितीयः शूरवीरो विक्रमसिंहः" एवमादिवाक्यजातेनास्मिन्नगरे देवदत्तसमाना अन्ये धनवन्तो न सन्ति, सैन्ये च विक्रमसिंहनिभा अपरे वीरा न सन्ति ततो न्यूनास्तु सन्तीत्येव प्रतिपाद्यते। पृथिव्यादयोऽप्राणिनः पश्वादयश्च प्राणिनस्तत्र विद्यमाना निषेद्धुं न शक्यन्ते। तथैव ब्रह्मणा तुल्यो नास्ति जीवः प्रकृतिर्वा। ततो हीनस्तु वर्तत एव। एतेन ब्रह्म सदैकं जीवात्मानः प्रकृतिस्थतत्वानि चानेकानीति सिद्धं भवति। अद्वैतमद्वितीयमिति वा विशेषणमपि जीवप्रधानाभ्यां तद् विभिद्य ब्रह्मण एकत्वं साधयति। न त्वनेन जीवप्रधानयोः कार्यरूपजगतो वाभावो निषेधो वा वार्यते। सर्वमिदं सदपि ब्रह्मणा तुल्यं न वर्तत इत्येव प्रतिपाद्यते। नैतेनाद्वैतसिद्धिः द्वैतहानिर्वा जायते। मोद्विजध्वं, विचारयत, बुध्यध्वञ्च।

प्र०—सच्चिदानन्दरूपेण ब्रह्मणः, अस्तिभातिप्रियरूपेण च जीवस्य

भवत्यैक्यं कथं पुनर्निराकुर्वन्ति भवन्तः ?

उ०—नहि किञ्चित्साधर्म्येणैक्यं सञ्जायते। यथेयं पृथिव्यचेतना दृश्या च तथैव जलवह्न्यादयोऽप्यचेतना दृश्याश्च, परं नैतेनैक्यं सञ्जायते। एषु वैधर्म्यसम्पादकानां-भेदजनकानां विरुद्धधर्माणामपि वर्तमानत्वात्। तथा च गन्धवत्वरौक्ष्यकाठिन्यादयो गुणाः पृथिव्यां, रसद्रवत्वकोमलत्वादिधर्मा जले, रूपदाहकत्वादिधर्माश्चाग्नौ विद्यन्ते। यथा च मानवाः पिपीलिकादयश्च चक्षुषा पश्यन्ति आस्येनाश्नन्ति पद्भ्यां च चलन्ति तथापि पदद्वयवन्मानवाकृतेरनेकचरणवत्तया च पिपीलिकाद्याकृतेरैक्यं न भवति। तथैव ब्रह्मणोऽनन्तज्ञानानन्दबलक्रियानिर्भ्रान्तत्वव्यापकत्वादिधर्माणां जीवतः, आत्मनश्चाप्यल्पज्ञानाल्पबलाल्पस्वरूपभ्रान्तत्वपरिच्छिन्नत्वादिगुणानां ब्रह्मतो भिन्नत्वेन नैकौ जीवपरमेश्वरौ। अपि चानयोः स्वरूपमपि (ब्रह्मणोऽतिसूक्ष्मत्वात् तदपेक्षया च किञ्चित्स्थूलत्वाज्जीवस्य) अन्योऽन्यतो विभिन्नमिति।

प्र०—**अथोदरमन्तरं कुरुते। अथ तस्य भयं भवति द्वितीयाद्वै भयं भवति।** बृहदारण्यकोपनिषदो वचनमिदम्। यः खलु ब्रह्मात्मनोरल्पमपि भेदं भावयति तस्य भयं जायते। अन्यस्मादेव हि भयमुत्पद्यते ?

उ०—नैषोऽर्थः साधीयानपि तु येन खल्वात्मा परमात्मा वा निषिद्ध्येत, कस्मिंश्चिद् देशविशेषे कालविशेषे वा ब्रह्म परिछिन्नं मन्येत, तन्निदेशेन तदीयगुणकर्मस्वभावैर्वा विरुद्ध्येत, जनान्तरेण सह वैरं वानुष्ठीयेत तस्य भयं भवति। ब्रह्मणा सह नास्ति मम कोऽपि सम्वन्ध इति द्वितीयबुद्धिर्हि भयमुत्पादयति। तथैव नाहन्त्वां किमपि मन्ये, नहि त्वं मे शक्नोषि किञ्चिदप्यनिष्टमाचरितुमिति परस्मै वादिनम्, परस्य ज्यानिं वा सम्पादिनम्, परपीडकञ्च तेभ्यो भयमाविशतीति। सर्वथाऽविरुद्धानामैक्यं गीयते। लोकेऽपि देवदत्तयज्ञदत्तविष्णुमित्राणामैक्यमविरोध इति व्यवह्रियते। अविरोधे सुखं, विरोधे च दुःखमुत्पद्यते।

प्र०—ननु ब्रह्मात्मानौ नित्यं पृथगवतिष्ठेते, आहोस्वित्कदापि तयोरैक्यमपि जायते न वा ?

उ०—अत्रानुपदमेव किञ्चिदवोचाम। साधर्म्यान्वयभावेनैकता संजायते। यथा आकाशस्य मूर्तद्रव्याणाञ्च जडत्वेन कर्हिचित् पृथगनवस्थिततया चैक्यम्, नभसो विभुत्वसूक्ष्मत्वारूपत्वानन्तत्वादिगुणानां मूर्तस्य च परिच्छिन्नत्वदृश्यत्वादिधर्माणां वैधर्म्येण भवति भेदश्च। अयं भावः—यथा पृथिव्यादिद्रव्याणि आकाशाद् भिन्नानि न भवन्ति, न ह्यवकाशं विना मूर्त्तद्रव्याणि शक्नुवन्त्यवस्थातुमित्यन्वयेन तेषामैक्यं व्यतिरेकेण च पार्थक्यमेतेषाम्। एवं ब्रह्मणो व्यापकत्वेन जीवात्मानः पृथिव्यादिद्रव्याणि च ततः पृथक् नावतिष्ठन्ते स्वरूपतश्च संयुक्ता अपि न भवन्ति। गृहनिर्माणात्पूर्वं

तत्तद्देशेषु वर्तमानानि मृत्काष्ठायःप्रमुखानि वस्तून्याकाश एवावतिष्ठन्ते निर्मितेऽपि सद्मनि व्योम्न्येव सीदन्ति । भग्ने पुनर्गृहे विशीर्णतां गतेष्वपि तदवयवेषु नभस्येव विद्यन्ते, एवं कालत्रयेऽप्याकाशतो भेदेन नावस्थातुं शक्नुवन्ति स्वरूपतश्च भिन्नतया तेषां न कदाप्यैक्यमासीत्, नास्ति, नापि भविष्यति । एवमेव जीवा जगतः सर्वेऽपि पदार्थाश्च ब्रह्मणि व्याप्यत्वेन त्रिष्वपि कालेषु परमात्मनो भिन्ना न भवन्ति । स्वरूपेण भिन्नतया च कदाचिदप्येकतां न गच्छन्ति । इदानीन्तनवेदान्तिनां दृष्टिरेकाक्षपुरुषवदन्वयं विलोकयन्ती व्यतिरेकभावात्सर्वथैव विपर्यस्ता । नहि विद्यते तादृशं किमपि द्रव्यं यत्र न भवेतां सागुण्यनैर्गुण्ये, अन्वयव्यतिरेकौ, साधर्म्यवैधर्म्ये विशेष्यविशेषणभावश्च न स्यादिति ।

**प्र०**—निर्गुणः सगुणो वा परमेश्वरः ?

**उ०**—उभयविधो वर्तते ।

**प्र०**—एकस्मिन्नेव वस्तुनि सगुणत्वं निर्गुणत्वं वा कथं सम्भवति ? नह्येकस्मिन्कोशे द्वावसी निवस्तुमर्हतः ।

**उ०**—यथा ह्यचेतनेषु रूपादितद्गुणानां सद्भावाद् ज्ञानादिचेतनगुणानाञ्चासद्भावात्, चेतनेष्वपीच्छादिधर्माणां विद्यमानत्वाद्रूपाद्यचेतनगुणानामविद्यमानत्वाच्च सगुणत्वं निर्गुणत्वमुभयमपि व्यवतिष्ठते । यद्धि गुणैः सह वर्तमानं तत्सगुणम् । गुणेभ्यो यन्निर्गतं पृथग्भूतं तन्निर्गुणम् । स्वीयस्वाभाविकगुणैर्विशिष्टत्वादपरप्रतिद्वन्द्विनो गुणैरविशिष्टत्वाच्च सर्व एव पदार्थाः सगुणा निर्गुणा वा वर्तन्ते । नहि विद्यते तादृशं किमपि वस्तु यत्र केवलं निर्गुणत्वं सगुणत्वं वावतिष्ठते । अपित्वेकत्रैव नित्यं सगुणत्वं निर्गुणत्वं च व्यवतिष्ठते, तथैव परमेश्वरोऽप्यात्मनोऽनन्तज्ञानबलादिगुणैस्सह विद्यमानत्वात् सगुणः । रूपाद्यचेतनगुणैर्द्वेषादिजीवगुणैश्च पृथक्त्वेन निर्गुणः ।

**प्र०**—लोके निराकारं निर्गुणं साकारं सगुणं सञ्चक्षते । अर्थादगृहीतजन्मा परमेश्वरो निर्गुणः, धृतावतारश्च सगुण इति ।

**उ०**—केवलमज्ञानिनोऽविद्वाँसश्चेत्थं कल्पयन्ति । निर्विद्याश्चैवं पशुवदनर्गलं भाषन्ते । सन्निपातज्वराभिभूतस्य मानवस्येव वचनमविदुषामपि वाक्यं लेखो वा अकिञ्चित्करः ।

**प्र०**—परमेश्वरो रागवान् विरक्तो वा ?

**उ०**—उभयशून्यः परमेश्वरः । रागो हि स्वतो भिन्नेषु स्वस्मादुत्तमेषु पदार्थेषु जायते । न च परमेश्वरात्कश्चिदन्यः पृथगुत्तमो वा वर्तते तस्मान्नास्ति तत्र रागसम्भवः । किञ्च लब्धं परित्यजन् विरक्त उच्यते । व्यापकत्वाच्चेश्वरो न कमपि पदार्थं परिहातुमीष्टे अतो नास्ति स विरक्तोऽपि ।

प्र०—परमेश्वर इच्छास्ति न वा ?

उ०—अस्ति परमात्मनीच्छा परं न भवदपिप्रेता यतो ह्यप्राप्तमनुत्तमं प्राप्त्या सुखप्रदञ्च वस्तु काम्यते। परमेश्वरस्य पुनर्नाप्राप्तं किमपि। न च तस्मात्कश्चिदुत्तमः येन तत्रेच्छा भवेत्। पूर्णसुखयुक्तत्वाच्च सुखमपि नाभिलषति अतः परमेश्वरे वाञ्छा न सम्भवति, परं सर्वविद्यादर्शनात्मकं सकलसर्गसर्जनस्वरूपमीक्षणं तत्र वर्तते। इत्थं संक्षिप्तैरेव विषयैः साधवो बहुविज्ञास्यन्ति।

संक्षेपेण प्रतिपाद्य ब्रह्मविषयं साम्प्रतं वेदविषयो निरुच्यते—

**यस्मा॒दृचो॒ अ॒पात॑क्षन्॒ यजु॒र्यस्मा॑द॒पाक॑षन्। सामा॑नि॒ यस्य॒ लोमा॑न्यथर्वाङ्गि॒रसो॒ मुखं॑ स्क॒म्भं तं ब्रू॑हि कत॒मः स्वि॑दे॒व सः॥**

—अथर्व० १०।७।२०

प्र०—यस्मात्परमात्मनः सकाशाद् ऋग्यजुःसामाथर्वाख्याश्चत्वारो वेदाः प्रादुर्भूताः स कतमो देवः ?

उ०—यः सर्वमुत्पाद्य धारयति स परमेश्वरः—

**स्व॒यम्भू॒र्या॑थातथ्य॒तोऽर्था॒न् व्य॒दधाच्छाश्व॒ती॑भ्य॒ः समा॑भ्यः।**

—यजु० अ० ४०। मं० ८

स्वयम्भूः सर्वव्यापकः शुद्धः सनातनो निराकारः परमेश्वरो जीवरूपप्रजायाः कल्याणाय याथार्थ्येन विधिपूर्वकं वेदमुखेन समुपदिशति सकला विद्याः।

प्र०—भवन्तः परमेश्वरं साकारं निराकारं वा मन्यन्ते ?

उ०—निराकारः परमेश्वर इति मन्महे।

प्र०—ननु निराकारत्वे स कथं वेदविद्यां समुपदेष्टुमशकत्, नहि विना मुखं वर्णा उच्चारयितुं शक्यन्ते। वर्णसमुच्चारणे हि ताल्वादिस्थानानां जिह्वायाश्च प्रयत्नेनावश्यं भवितव्यम् ?

उ०—सर्वशक्तिमत्त्वात्सर्वव्यापकत्वाच्चेश्वरो जीवान् स्वव्याप्त्या वेदविद्यामुपदेष्टुं नापेक्षते मुखाद्यङ्गानि। यतः खलु परान् बोधयितुमेव मुखेन जिह्वया च वर्णा उच्चार्यन्ते न तु स्वात्मबोधाय। मुखवाचोर्व्यापारमन्तरेणापि हि मानसेऽनेकव्यवहाराणां विचारः, शब्दोच्चारणमपि नित्यं जायते। अङ्गुलीभिः पिधाय कर्णौ श्रूयतां—मुखजिह्वाताल्वादिस्थानमन्तरेणापि कीदृशाः शब्दाः समुत्पद्यन्त इति। तथैव परमेश्वरोऽप्यन्तर्यामिरूपेण जीवानुपादिशत्। केवलं परान्बोधयितुमेवोच्चारणमावश्यकम्। निरवयवत्वाद् व्यापकत्वाच्च परमेश्वरो जीवस्थस्वरूपेण जीवात्मनि प्रकाशयति निखिलामात्मनो वेदविद्याम्। ततश्च कृतोपदेशो मानवः स्वमुखेनोच्चार्य वर्णान् परान्

श्रावयति । तस्मान्न स्पृशति परमात्मानमयं दोषः ।

प्र०—ननु केषामात्मनि, कदा च वेदाः प्रकाशिताः ?

**उ०—अग्नेर्ऋग्वेदो वायोर्यजुर्वेदः सूर्य्यात्सामवेदः ।**

—शत० ११।८।३।३

सर्गारम्भे परमेश्वरोऽग्निवाय्वादित्याङ्गिरसामृषीणामात्मनि वेदमेकैकं प्राकाशयत् ।

**प्र०—यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदाँश्च प्रहिणोति तस्मै ।**

—श्वेताश्व० अ० ६ । मं० १८

अनेन वचसा "ब्रह्मणो वेधस आत्मनि हृदये वेदाः समुपदिष्टाः" इति प्रतीयते कथं तर्ह्यग्न्याद्यृषीणामात्मनि प्रकाशः समभवदिति प्रोच्यते ?

उ०—वेधसोऽपि हृदयेऽग्न्यादिद्वारैव वेदान् प्राकाशयत् ।

पश्यत किमाह मनुः—

**अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् ।**
**दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ।।** —मनु० १।२३

परमात्मना कल्पादौ समुत्पाद्य मानवानग्न्यादिचतुर्महर्षिमुखेन चत्वारो वेदा ब्रह्माणं प्रापिताः स चाग्निवाय्वादित्याङ्गिरोभ्य ऋग्यजुःसामाथर्ववेदान् जगृहे ।

प्र०—चतुर्णामेव हृदयेषु कुतो वेदाः प्रकाशिताः ? नान्येषामेतेन स पक्षपाती सम्पद्यते ।

उ०—त एव चत्वारः सर्वजीवेभ्योऽधिकाः पवित्रात्मान आसन्, अन्ये च तत्तुल्या नाभवन्तस्मात्तेष्वेव पवित्रां विद्यां प्राकाशयत् ।

प्र०—कस्याञ्चिद् देशभाषायां वेदानप्रकाश्य संस्कृतवाच्येव कथं प्रकाशिताः ?

उ०—देशविशेषस्य भाषायां प्राकाशयिष्यच्चेत् तर्हि तस्मिन् पक्षपातित्वमायास्यत् । यतो हि यस्य देशस्य भाषायां वेदान् प्राकाशयिष्यत् तद्देशस्थेभ्यो वेदानामध्ययनाध्यापनेषु सारल्यं वैदेशिकेभ्यश्च काठिन्यमभविष्यत्, अतः संस्कृतभाषायामेव वेदान् प्राकाशयत् । नहीयं कस्यचिद्देशस्य भाषा वर्तते । अपिचेयं वैदिकी भाषा भाषान्तराणां मूलम्, तत्रैव वेदान् प्राकाशयत् । यथायं परमात्मनः पृथिव्यादिसर्गः सर्वदेशेभ्यस्तद्देशस्थेभ्यश्च समानः शिल्पविद्यामूलभूतश्च, तथैव परमात्मनो विज्ञानभाषयापि समानयैव भवितव्यम् । अतएव वेदाध्ययनाध्यापनयोः सकलदेशस्थेभ्यः परिश्रमसाम्येन नेश्वरः पक्षपाती संजायते । सर्वभाषाणामादिकारणञ्चेयं भाषा ।

प्र०—वेदा ईश्वरनिर्मिता नत्वन्यकृता इत्यत्र किं प्रमाणम् ?

उ०—यथा खलु परमेश्वरः पवित्रः सर्वविद्यावित् शुद्धगुणकर्मस्वभावः,

न्यायकारी, दयाप्रभृतिगुणवाँश्च वर्तते तथैव यत्र ग्रन्थे परमात्मनो गुणकर्मस्वभावाविरुद्धं कथनं भवेत् स परमेश्वरकृतो नान्यः। यदीयकथनञ्च सृष्टिक्रमेण प्रत्यक्षादिप्रमाणैराप्तानां पवित्रात्मनां व्यवहारेण च न विरुध्येत स एवेश्वरप्रोक्तः। अपि च परमात्मनो निर्भ्रमज्ञानमिव यत्र पुस्तके निर्भ्रान्तज्ञानं प्रतिपाद्येत तदीश्वरप्रोक्तम्। किञ्च यत्—यथास्ति परमेश्वरो यथाच तदीयः सृष्टिक्रमः, तथैवेश्वरं सृष्टेः कार्यं कारणं जीवात्मानञ्च प्रतिपादयति, यच्च प्रत्यक्षादिप्रमाणविषयं शुद्धात्मनः स्वभावेन च न विरुध्येत तदीश्वरप्रोक्तम्। वेदाश्च तादृशाः सन्ति नत्वन्यानि "बाइबिल" "कुरान" प्रभृतीनि पुस्तकानि। प्रकरणमिदं बाइबिल-कुरान-वर्णनात्मके त्रयोदशे चतुर्दशे च समुल्लासे विशेषतो वक्ष्यामः।

**प्र०**—ननु मानवा एव क्रमशो ज्ञानसमुन्नयनेन ग्रन्थानपि निर्मास्यन्त्येव पुनः किमिति "वेदाः परमेश्वरेण निर्मिता" इत्यभ्युपगम्यते ?

**उ०**—न कदापि निर्मातुं प्रभवन्ति। नहि कारणं विना कार्योत्पत्तिः सम्भवा। आरण्यका मानवाः सृष्टिं पश्यन्तोऽपि विद्वाँसो न भवन्ति परमुपदेष्टुः साहाय्येन विद्वाँसो भवन्ति। साम्प्रतमप्यनधीत्य कुतश्चिन्नहि भवति कश्चिद् विचक्षणः। तथैव परमेश्वरः कल्पादौ समुत्पन्नर्षीन् वेदविद्यां नोपदिशेत्, ते चान्यान् नाध्यापयेयुश्चेत् तर्हि सर्व एवाविद्वाँसो भवेयुः। यथा कस्यचित्सन्तानं जन्मनः प्रभृत्येकान्तदेशेऽविदुषां पशूनां वा साहचर्ये रक्षेत् सोऽपि स्वसङ्गमेवानुवर्त्स्यति। अरण्यस्थाः किरातप्रभृतयोऽद्याप्येतन्निदर्शनम्। यावन्मिश्रयूनानहरिवर्षादिदेशान्तरेष्वप्यस्मादार्यावर्तजनपदात् शिक्षा न गताऽभवत्तावत् तत्रत्या मनुजा अविद्वाँस एवाभवन्। यावच्च पुर्तगालदेशस्थाः कोलम्बसप्रभृतयः पुमाँसो पातालदेशं नेयुः, तावत्तत्रत्या अपि वर्षाणां सहस्रलक्षकोटिभिर्मूर्खा विद्याविहीना एवावतिष्ठन्त। पुनः सुशिक्षालाभेन विद्वाँसः समजनिषत तथैव कल्पादौ परमात्मनोऽधिगम्यैव विद्याशिक्ष उत्तरोत्तरं विद्वाँसो भवन्ति।

**स पूर्वेषामपि गुरुः कालेनानवच्छेदात्।**

—योगसू० समाधिपादे सू० २६

साम्प्रतं यथास्मादादयोऽधीत्यैव गुरुभ्यो विद्वाँसो भवामस्तथैव सर्गारम्भे समुत्पन्नाग्न्याद्यृषीणां परमात्मैव गुरुरध्यापकः। यतो वै यथा जीवात्मानः सुषुप्तौ प्रलये च ज्ञानविवर्जिता भवन्ति न तथा परमेश्वरः। नित्यं खलु तदीयं ज्ञानम्, तस्मान्निमित्तं विना नैमित्तिकोऽर्थो न सिद्ध्यतीति दृढमवगम्यताम्।

**प्र०**—वेदाः खलु संस्कृतवाचि प्रादुरभवन्। अग्न्यादयश्च ऋषयस्तां संस्कृतभाषां न विदन्तिस्म, कथं पुनस्तैरधिगतो वेदार्थः ?

उ०—परमात्मनैव वेदार्थोऽप्यधिगमितः। किञ्च यदा धर्मात्मानो योगिनो महर्षयो यं यमर्थं जिज्ञासमाना ध्यानावस्थिताः सन्तः परमात्मनः स्वरूपे समाधिस्था अभवन् तदा तानेव परमात्मनाऽभीष्टमन्त्रार्थाः प्रबोधिताः। यदा च बहूनामात्मसु वेदार्थप्रकाशः समभवत्तदा ऋषिमुनयस्तदर्थद्योतकान् ऋषिमुनीनामितिवृत्तपराँश्च व्यरचयन् ब्राह्मणग्रन्थान्। तेषाञ्च ब्रह्मणो वेदस्य व्याख्यानग्रन्थत्वेन ब्राह्मण इति व्यपदेशः समजनि। अपि च—

**ऋषयो मन्त्रान्सम्प्रादुः।** —निरु० १।२०

यः खलु ऋषिर्यस्य यस्य मन्त्रस्यार्थमपश्यत्, सर्वतः प्रागेव प्रादुर्भाव्य चेतरानध्यापयामास ततस्तन्मन्त्रेण तन्नामधेयमद्य यावदपि स्मर्यते। ये केचिदृषयो मन्त्रकर्तार इति संचक्षते तेऽलीकभाषिणो विज्ञेयाः।

प्र०—केषां ग्रन्थानां "वेदः" इति नामधेयम्?

उ०—ऋग्यजुस्सामाथर्वाख्यमन्त्रसंहितानां नान्येषाम्।

प्र०—**मन्त्रब्राह्मणयोर्वेदनामधेयम्।**

एवमादीनि कात्यायनादिप्रणीतप्रतिज्ञासूत्राणि कथं व्याख्यास्यथ?

उ०—संहिताग्रन्थस्यारम्भेऽध्यायपरिसमाप्तौ चानादिकालतः "वेदः" इति शब्दो लिखितो दृश्यते परं ब्राह्मणग्रन्थस्यारम्भेऽध्यायसमाप्तौ वा न क्वापि तच्छब्दो विलिख्यते।

**इत्यपि निगमो भवति। इति ब्राह्मणम्।**—नि० अ० ५। खं० ३।४

**छन्दोब्राह्मणानि च तद्विषयाणि।** —अष्टाध्या० ४।२।६६

मन्त्रभागो वेदः, व्याख्याभागश्च ब्राह्मणमिति सुस्पष्टमेभिः प्रमाणैरवगम्यते। विशेषमत्र परिज्ञातुकामैरस्मन्निर्मितायामृग्वेदादिभाष्यभूमिकायामवलोकनीयम्। तत्र हि प्रमाणशतैः परिसाधितमसत्यं कात्यायनीयवचनमिदमनेकशः प्रमाणैर्विरुद्धत्वात्। एवञ्चेदभ्युपेयेत तर्हि वेदानां सनातनत्वं न सिद्ध्येत्। ब्राह्मणग्रन्थेषु हि बहूनामृषिमुनीनां भूमिपालानाञ्च वृत्तान्यधिगम्यन्ते, इतिहासविलेखश्च कस्यचिज्जन्मनः पश्चादेव सम्भवति। तद्वृत्तवर्णनपरस्य ग्रन्थस्यापि ततः परभवत्वमावश्यकम्। वेदेषु पुनः कस्याप्यैतिह्यं न वर्ण्यते। अपि तु यो यः शब्दो विद्यां बोधयति स सम्प्रयुक्तः। नहि तत्र कस्यचिन्मानवस्य नामधेयं कथाविशेषप्रसङ्गश्चापि वर्तते।

प्र०—ननु वेदानां कियत्यः शाखाः?

उ०—सप्तविंशत्यधिकैकादशशतम्।

प्र०—शाखाशब्देन किमभिप्रेयते।

उ०—व्याख्यानं शाखेत्युच्यते।

प्र०—ननु लोके विपश्चितो वेदावयवभूतविभागान् शाखा मन्यन्ते (अपि सत्यमेतत्?)

उ०—मनागत्रावधेयम्। सर्वा अपि शाखा आश्वलायनाद्यृषीणां नामभिः प्रसिद्धिं गताः, मन्त्रसंहितास्तु परमात्मनो नाम्ना प्रसिद्धाः। यथा चतुरोऽपि वेदानीश्वरकृतो मन्यन्ते तथैवाश्वलायनिप्रभृतिशाखा अपि तत्तदृषिनिर्मिता मन्यन्ते। किञ्च सर्वास्वपि शाखासु मन्त्रप्रतीकमादायैव व्याख्यायते, यथा तैत्तिरीयशाखायां **"इषे त्वोर्जेति"** एवमादिप्रतीकमादायैव व्याख्यातम्। वेदसंहितासु पुनः कस्यापि प्रतीकं नैव समादत्तम्। तस्मात्परमेश्वरनिर्मितानां चतुर्णामपि वेदानां वृक्षत्वम्, आश्वलायनाद्यृषिप्रणीतव्याख्यानग्रन्थानाञ्च शाखात्वम्। विशेषतोऽस्मिन् विषये ऋग्वेदादिभाष्यभूमिकायां द्रष्टव्यम्। पितरौ यथानुकम्पया स्वसन्ततीनामुन्नतिं कामयेते, तथैव परमेश्वरेण कृपां विधाय सर्वजनेषु वेदाः प्रकाशिताः। येन खलु मानवाः परिमुच्याविद्यान्धतमसो भ्रमपाशात् समधिगम्य च विद्याविज्ञानभानुं सुखेन निवसेयुर्विद्यासुखानि च प्रवर्धयेयुः।

प्र०—ननु नित्या अनित्या वा वेदाः ?

उ०—नित्याः, परमेश्वरस्य नित्यतयैव तदीयज्ञानादिगुणा अपि नित्याः। नित्यवस्तूनां गुणकर्मस्वभावा अपि नित्याः, अनित्यानाञ्चानित्या भवन्तीति।

प्र०—अपीदं पुस्तकमपि नित्यम् ?

उ०—नहि। पुस्तकं हि पत्रमस्यादिविनिर्मितम्, कथं तन्नित्यं भवितुमर्हति। शब्दार्थसम्बन्धा एव नित्याः।

प्र०—परमेश्वरो मनुष्येभ्यो ज्ञानं प्रादात्, तज्ज्ञानेनैव तैर्वेदा निरमायिषतेत्येव कुतो नाभ्युपेयते ?

प्र०—ज्ञेयमन्तरेण ज्ञानं न भवति। गायत्र्यादिच्छन्दसां षड्जादीनामुदात्तानुदात्तादिस्वराणाञ्च विज्ञानपूर्वकं निर्माणे सर्वज्ञं विहाय नान्यस्य कस्यापि सामर्थ्यं वर्तते—यो हीदृशसर्वज्ञानयुतं शास्त्रं निर्मातुं शक्नुयात्। वेदानामध्ययनानन्तरं व्याकरणनिरुक्तछन्दःप्रभृतिग्रन्थानृषिमुनयो विद्याप्रकाशाय प्राणैषुः। परमात्मना अप्रकाशितेषु वेदेषु न कोऽपि किमपि निर्मातुं प्रभवेत्। अतो वेदाः परमेश्वरप्रणीताः। वेदानुसारेणैव सर्वैर्व्यवहर्तव्यम्। "किम्मतं भवतामिति" केनचिदनुयुक्तेन "वेदा एवास्माकं मतम्" वेदप्रतिपादितमेव मन्यामहे इत्युत्तरं प्रदातव्यम्।

अतः परं सृष्टिविषये वक्ष्यामः। इदं समासतो वेदेश्वरविषये वर्णितम्।

**इति श्रीमद्दयानन्दसरस्वतीस्वामिकृते सत्यार्थप्रकाशे शङ्करदेवपाठकेन संस्कृतभाषयाऽनूदिते ईश्वरवेदविषये सप्तमस्समुल्लासः सम्पूर्णः ॥७॥**

# अथाष्टमसमुल्लासारम्भः

## अथ सृष्ट्युत्पत्तिस्थितिप्रलयविषयान् व्याख्यास्यामः

इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न।
यो अस्याध्यक्षः परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेद ॥१॥
तम आसीत्तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदम्।
तुच्छ्येनाभ्वपिहितं यदासीत्तपसस्तन्महिनाजायतैकम् ॥२॥
—ऋ० मं० १० । सू० १२९ । मं० ७, ३

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥३॥
—ऋ० मं० १० । सू० १२१ । मं० १

पुरुषऽएवेद ँ सर्वं यद्भूतं यच्च भाव्यम्।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥४॥
—यजु० अ० ३१ । मं० २

यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति।
यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद् ब्रह्म ॥
—तैत्तरीयोपनि० [भृगुवल्ली अनु० १]

(१) हे (अङ्ग) मानव ! यतो विविधेयं सृष्टिः प्राकाशत, यश्चैनां धारयति, यस्मिंश्चेयं प्रलीयते, योऽस्य सर्वस्याध्यक्षः यत्र च व्यापके सर्वमिदञ्जगदुत्पद्यते, तिष्ठति, प्रलीयते च। स परमेश्वरस्तमेव त्वं विद्धि, नापरं सृष्टिकर्तारं मन्यस्व।

(२) सर्वमिदञ्जगत् सृष्टेः पूर्वं तमसावृतम्प्रलयाख्यरात्रौ ज्ञातुमनर्हमासीत्। सर्वञ्चेदमाकाशरूपमनन्तपरमेश्वरापेक्षया तुच्छमल्पीयश्चाभवत्। तदनु परमात्मना स्वीयसामर्थ्येन कारणात् कार्यरूपमापादितम्।

(३) हे मनुष्याः ! सूर्यादिज्योतिष्मतां पदार्थानामाधारस्य, उत्पन्नस्योत्पत्स्यमानस्य चास्य जगतोऽद्वितीयपतेः, सर्गस्यास्य सर्जनात्प्रागपि विद्यमानस्य, पृथिवीमारभ्य सूर्यपर्यन्तं जगन्निर्मितवतः परमात्मनो निरतिशयां भक्तिं प्रेम्णा विदध्याम।

(४) हे मनुष्याः ! यः सर्वत्र परिपूर्णः यश्चाविनश्यतो जगदुपादानस्य जीवात्मनश्चाध्यक्षः, यश्च पृथिव्याद्यचेतनेभ्यो जीवेभ्यश्च व्यतिरिक्तस्तेनैव पुरुषेण भूतम्भवत् भविष्यच्चेदं सर्वं जगन्निर्मीयते ।

(५) यस्य परमात्मनो रचनया पृथिव्यादीनि सर्वभूतान्युत्पद्यन्ते, यत्र निवसन्ति प्रलीयन्ते च तद् ब्रह्म, तदेव ज्ञातुं कामयन्तां भवन्त इति ।

**जन्माद्यस्य यतः ।** —शारीरकसू० अ० १ । पा० १ । सू० २

यतो ब्रह्मणस्सकाशादस्य जगत उत्पत्तिः स्थितिः प्रलयश्च सम्भवति वेद्यं खलु तदेव ब्रह्मेति ।

प्र०—अपीदञ्जगत्परमेश्वरादुत्पन्नमन्यतो वा ?

उ०—निमित्तकारणात्परमात्मनः समुत्पन्नम्परमस्योपादानकारणं-प्रकृतिः ।

प्र०—अपि नोदपादयत्परमेश्वरः प्रकृतिम् ?

उ०—नहि, अनादिः खलु सा ।

प्र०—किन्नामानादित्वम् ? कियन्तो वा अनादिपदार्थाः ?

उ०—न विद्यते आदिकारणं यस्य सोऽनादिः । ईश्वरो जीवः जगत्-कारणञ्चैतत्त्रयमनादि ।

प्र०—किमत्र प्रमाणम् ?

उ०—**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परि षस्वजाते ।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति ॥१॥**

—ऋ० मं० १ । सू० १६४ । मं० २०

**शाश्वतीभ्यः समाभ्यः** ॥२॥—यजु० अ०४० । मं० ८

(१) (**द्वा**) जीवात्मपरमात्मानावुभावपि (**सुपर्णा**) चैतन्यपालनादि-गुणैः समानौ (**सयुजा**) व्याप्यव्यापकभावेन संयुक्तौ (**सखाया**) मिथो मैत्री-भावसंयुजौ सनातनावनादी स्तः । किञ्च तथैव वृक्षमूलभूतेयं प्रकृतिः, यस्याः सर्वमिदञ्जगच्छाखारूपं विद्यते यद्धि प्रलयावसरे स्वात्मकारणेषु प्रलीयते, अनादिर्वर्तते । एषाङ्गुणकर्मस्वभावा अप्यनादयः । जीवब्रह्मणोरेको जीवात्मा वृक्षात्मकेऽस्मिन् संसारे पापपुण्यात्मकफलानि (**स्वाद्वत्ति**) सम्यगश्नाति । परमेश्वरश्चापरोऽनश्नन् कर्मफलान्यभितो बहिरन्तस्सर्वत्र प्रकाशते । जीवादीश्वर ईश्वराच्च जीवः, उभाभ्याञ्चेयम्प्रकृतिर्भिन्नस्वरूपा । त्रयोऽप्यनादयो वर्तन्ते ।

(२) (**शाश्वती०**) परमेश्वरोऽनादिसनातनजीवरूपप्रजायै वेदमुखेन सर्वा विद्या उपादिशत् ।

**अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।**
**अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ।।**

—श्वेताश्वतरोपनिषदि अ० ४ । म० ५

प्रकृतिर्जीवः परमेश्वरश्चेति त्रयोऽप्यजन्मानः—न कदापि जायन्ते । एते त्रयो हि सर्वजगतः कारणम् । नैषां पुनः कारणं किमपि । अनादिर्जीवात्मा प्रकृतिमनादिम्परिभुञ्जानस्तत्र सज्जति । परमेश्वरस्तु तामनश्नन्नावलिप्यते । जीवेश्वरयोर्लक्षणमीश्वरविषयेऽवोचाम । प्रकृतेस्त्विदँल्लक्षणम्—

**सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, प्रकृतेर्महान्, महतोऽहङ्कारोऽहङ्कारात् पञ्चतन्मात्राण्युभयमिन्द्रियं, पञ्चतन्मात्रेभ्यः स्थूलभूतानि पुरुष इति पञ्चविंशतिर्गणः ।।** —साङ्ख्यसू० अ० १ । सू० ६१

(सत्त्वं) शुद्धं (रजः) मध्यम् (तमः) जाड्यं त्रयाणामेषां सङ्घातः प्रकृतिनाम्ना व्यपदिश्यते । प्रकृतेर्महत्तत्वं बुद्धिस्तस्मादहङ्कारः ततोऽपि पञ्चतन्मात्राणि [सूक्ष्मभूतानीति यावत्] दशेन्द्रियाण्येकादशं मनः । पञ्चतन्मात्रेभ्यः पृथिव्यादिपञ्चभूतानि चतुर्विंशतिरिमे पंचविंशतितमः पुरुषश्चार्थादात्मा परमात्मा चेति । तत्र प्रधानमविकृतिमत् [न कस्यापि विकृतिरिति यावत्] । महत्तत्त्वाहङ्कारपञ्चसूक्ष्मभूतानि प्रकृतेः कार्याणि, इन्द्रियाणाम्मनसः स्थूलभूतानाञ्च कारणानि [एवमेषां प्रकृतिविकृतित्वमुभयमपि] । पुरुषस्तु न कस्यचिदप्युपादानन्नापि कस्यचित्कार्यम् ।

**प्र०—सदेव सोम्येदमग्र आसीत् ।।१।।** —छान्दो० प्र० ६ । ख० २

**असद्वा इदमग्र आसीत् ।।२।।**

—तैत्तिरीयोपनि० । ब्रह्मानन्दव० अनु० ७

**आत्मैवेदमग्र आसीत् ।।३।।** —बृह० अ० १ । ब्रा० ४ । म० १

**ब्रह्म वा इदमग्र आसीत् ।।४।।** —शत० १४ । ४ । २ । २१

उपनिषदामिमानि वचनानि । हे श्वेतकेतो ! सृष्टेः प्राग्जगदिदम्, सत् ।।१।। असत् ।।२।। आत्मा ।।३।। ब्रह्मस्वरूपञ्चासीत् ।।४।। तदनु—

**तदैक्षत बहुः स्यां प्रजायेयेति ।।** —छान्दो० ६।२।३

**सोऽकामयत बहुः स्यां प्रजायेयेति ।।**

—तैत्तिरीयोपनि० ब्रह्मानन्दवल्ली० अनु० ६

स एव परमेश्वरः स्वेच्छया बहुरूपतां गतः ।

**सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चन ।**

इदमप्युपनिषदो वचनम् । सर्वमिदं जगदसंशयम्ब्रह्मैव । तत्रापरे नानाविधपदार्था न वर्तन्ते । अपि तु सर्वे ब्रह्मरूपाः ।

उ०—कथमेतद्वचसामनर्थङ्कुरुथ । तास्वेव खलूपनिषत्सु—

**एवमेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छाद्भिस्सोम्य शुङ्गेन**

**तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः** ॥ —छान्दो० प्र० ६। खं० ८। मं० ४

हे श्वेतकेतो ! अन्नात्मकेन पृथिवीकार्येणापो मूलकारणन्त्वं विद्धि। कार्यात्मिकाभिरद्भिस्तेजोरूपमूलम्, तेजोरूपकार्येण सद्रूपकारणं नित्यां प्रकृतिमवगच्छ। इयमेव सत्स्वरूपा प्रकृतिः सर्वस्य जगतो मूलं स्थितिनिकेतनञ्च वर्तते। (तस्माद् "असद्वेदमग्र आसीद्" इत्यादिवाक्यानां भवत्प्रतिपादितोऽर्थः "इदं जगत् सृष्टेः पूर्वन्नासीदिति" न साधीयान् वस्तुतस्तु अयमभिप्रायः) सर्वमिदं जगत् सृष्टेः पूर्वं सत्—कार्यरूपे परिणतं दृश्यमानन्नाभवदपितु स्वात्मकारणे प्रकृतौ लीनं सदसत्कल्पमासीत्। जीवब्रह्मणी च विद्यमाने आस्तामिति। सर्वं खल्विदमिति वचनन्तु मन्त्रद्वयादंशांशेन संगृहीतं नैकत्रेदं पठ्यते। तथाच—

**सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत्।**

—छान्दो० प्र० ३। खं० १४। मं० १

**नेह नानास्ति किंचन** ॥—कठोप० अ० २। वल्ली ४। मं० ११

यथा देहाङ्गानि यावच्छरीरेण सह संयुज्यन्ते तावत्कार्यक्षमाणि, वियुक्तानि च निरर्थकानि जायन्ते तथैव प्रकरणस्थमेव वाक्यं सार्थकं, प्रकरणप्रच्युतमन्येन वा संयुक्तं सर्वथैवानर्थकं सम्पद्यते। श्रूयतामस्यायमर्थः—हे जीव ! त्वं ब्रह्म समुपास्स्व यतो ब्रह्मणस्सकाशादस्य जगतो जन्मस्थितिजीवनानि सम्भवन्ति, यस्य रचनया धारणेन च प्रवर्तते सर्वमिदं जगत् ब्रह्मणा सहचरितं वा तद् विहाय मान्यमुपास्स्व। चेतनमात्रेऽखण्डैकरसेऽस्मिन् ब्रह्मणि नास्ति संकरोऽनेकविधद्रव्याणामपितु इमे सर्व एव पदार्थाः स्वरूपेण पृथक् पृथग्वर्तमानाः परमेश्वराधारे स्थिताः।

**प्र०**—कियन्ति खलु जगतः कारणानि ?

**उ०**—त्रीणि। एकं निमित्तम्, द्वितीयमुपादानम्, तृतीयं साधारणं चेति। यन्निर्माणेन किञ्चिज्जायेतानिर्माणेन पुनर्न जायेत—स्वयमनुत्पद्यान्यत् प्रकारान्तरं कुर्यात्तन्निमित्तकारणम्।

न सिद्धयेत् किमपि येन विना, अवस्थान्तरितं सत् तदेव समुत्पद्येत विनश्येच्च **तदुपादानकारणं द्वितीयम्।**

निर्मितिसाधनं साधारणनिमित्तञ्च **साधारणं कारणम्।**

द्विविधं खलु निमित्तकारणम्—समस्तस्याप्यस्य सर्गस्य कारणात् समुत्पादयिता, भर्ता संहर्ता नियन्ता च सर्वेषां मुख्यं निमित्तकारणम्परमेश्वरः। परमात्मनस्सर्गात् पदार्थानादाय स्रष्टा नानाविधानां कार्यान्तराणां साधारणं निमित्तकारणं जीवात्मा द्वितीयम्।

उपादानकारणं प्रकृतिः परमाणवः यां सर्वसंसारनिर्माणसामग्री-

माचक्षते साऽचेतनत्वान्नात्मना परिणन्तुं व्येतुं वा शक्नोति अपि त्वन्यस्यैव रचनया प्राप्नोति निर्माणम्, विनाशेन च समुपैति नाशम्। यद्यप्यचेतनस्यापि निमित्तेन क्वचिदचेतनानामप्युत्पत्तिविनाशौ जायेते। परमात्मनो विरचितबीजानि पृथिव्यां सम्पातेन अपां लाभेन च वृक्षत्वमापद्यन्ते। वह्न्याद्यचेतनसंयोगेन पुनः प्रणश्यन्त्यपि तथाप्येषां सनियममुत्पत्तिविनाशौ परमेश्वरजीवात्मनोरायत्तौ। यस्य कस्यचिद् वस्तुनो निर्माणकाले ज्ञानदर्शनबलहस्तादिनानाविधसाधनानि दिक्कालाकाशानि च साधारणकारणानि भवन्ति। यथा घटनिर्मितौ कुम्भकारो निमित्तम्, मृदुपादानम्, दण्डचक्रादिकम्, दिक्कालाकाशप्रकाशचक्षुर्हस्तज्ञानक्रियादिकञ्च साधारणं कारणम्। एतत् कारणत्रयं विना न केनपि वस्तुना समुत्पत्तुं विनष्टुं वा शक्यम्।

**प्र०**—ननु नवीनवेदान्तिनः केवलं परमात्मानमेव जगतोऽभिन्ननिमित्तोपादानकारणं मन्यन्ते। तथाच—

**यथोर्णनाभिः सृजते गृह्णते च ॥** —मुण्डको० मुं० १। खं० १। मं० ७

यथा खलूर्णनाभिरनादाय कमपि पदार्थम्बहिःप्रदेशात्, अवकृष्य च तन्तुं स्वान्तःप्रदेशाज्जालं निर्माय तत्रैवाभिरमते। एवं ब्रह्माप्यात्मनावसृज्य जगत् स्वयं जगदाकारं सत्तत्रैव संक्रीडते। "बहुरूपमहं स्यां जगदाकारतया परिणमेयमिति" समकल्पयत् ब्रह्मैव स्वात्मनस्संकल्पमात्रेण जगद्रूपे परिणतम्। यतो हि—

**आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ॥**—गौडपादीय०, श्लो० ३६

माण्डूक्योपनिषदि कारिकेयं पठ्यते। यः प्रथमन्न भवेदन्तेऽपि नावतिष्ठेत तद् वर्तमानेऽपि न भवति। सृष्ट्यादौ जगन्नासीत् ब्रह्म चासीत्। प्रलयान्ते च जगद् विनङ्क्ष्यति। केवलम्ब्रह्मावशेक्ष्यति एवं वर्तमानेऽपि सर्वं जगद् ब्रह्म कथन्न भवेत् ?

**उ०**—भवतान्नयेन जगदुपादानकारणं ब्रह्म भवेच्चेत्तर्हि तत् परिणाम्यवस्थान्तरयुक्तं विकारि च सम्पद्येत। किञ्च—उपादानकारणस्य गुणकर्मस्वभावा कार्येषु संक्रामन्ति। तथा च—

**कारणगुणपूर्वकः कार्य्यगुणो दृष्टः ॥**—वैशेषि० अ० २। आ० १। सू० २४

(एवञ्च कार्यकारणयोर्जगद्ब्रह्मणोर्गुणवैपरीत्यं दुर्घटं स्यात् उभयोर्गुणविरोधश्च प्रत्यक्षं समीक्ष्यते) तथा हि—ब्रह्म सच्चिदानन्दस्वरूपं जगच्च कार्यरूपेणासदचेतनमानन्दशून्यञ्च। ब्रह्माजं, जायमानञ्च जगत्। ब्रह्मादृश्यं दृश्यञ्च जगत्। ब्रह्माखण्डं जगच्च खण्डरूपम्। यदि हि ब्रह्मणस्सकाशात् पृथिव्यादिकार्याणि समुत्पद्येरन् तर्हि पृथिव्यादिकार्याणामचेतनत्वादयो गुणा ब्रह्मण्यपि भवेयुः। तथैव परमेश्वरवत् पृथिव्यादिकार्यमपि चेतनं स्यात्। अपि च लूतानिदर्शनं न पोषयति भवतां मतम्, किन्तु बाधते। तत्र हि

अचेतनं शरीरं तन्तूनामुपादानं जीवात्मा च निमित्तकारणम्। अयमपि परमात्मनोऽद्भुतरचनाप्रभावः। नह्यन्यजन्तुदेहात् जीवस्तन्तुं निस्सारयितुं शक्नोति। तथैव सर्वगतं ब्रह्म स्वात्मनि व्याप्तेन प्रधानेन परमाणुभिश्च स्थूलं जगन्निर्माय स्थूलरूपमापाद्य स्वयन्तत्रैव व्याप्तं सत्साक्षिभूतमानन्दमयं सन्तिष्ठते। यच्च परमात्मना—"अहं सर्वं जगन्निर्माय प्रसिद्धो भवेयमिति" ईक्षणं दर्शनं विचारः कामना वा व्यधायि (तस्यायमभिप्रायः) यदा खल्विदं जगदुत्पद्यते तदैवात्मनां विचारज्ञानध्यानोपदेशश्रवणेषु ब्रह्म प्रसिद्धिं लभते। प्रभूतैश्च स्थूलपदार्थैस्सह वर्तमानं भवति। प्रलये च परमेश्वरं मुक्तजीवाँश्च त्यक्त्वा नान्यः कोऽपि तदवगच्छति। "आदावन्ते" इति कारिका तु सर्वमेव भ्रममूला। सृष्टेः पूर्वमर्थात्प्रलये जगदिदं प्रसिद्धं नासीत्सर्गान्ते प्रलयप्रारम्भाद् यावद् द्वितीयवारं सर्गो नोत्पद्यते तावज्जगतः कारणं सूक्ष्मतया प्रसिद्धं सदवतिष्ठते। यतो हि—

**तम॑ आसी॒त्तम॑सा गू॒ळ्हमग्रे॑** ॥—ऋ० मं० १०। सू० १२९। मं० ३

**आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।**
**अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः॥** —मनु० १।५

जगदिदं सृष्टेः प्राक् प्रलयकाले तमोभूतन्तमसाच्छन्नं बभूव। तदानीं न केनापि ज्ञातुं तर्कयितुं वाशक्यत। न च प्रसिद्धलिङ्गैः संयुतमिन्द्रियग्राह्यमासीत् नापि भविष्यति, केवलं वर्तमानमेव ज्ञायते। प्रसिद्धलिङ्गैश्च संयुतं भवति ज्ञातव्यं यथावच्चोपलभ्यते। एवञ्च कारिकानिर्मातुर्वर्तमानेऽपि जगतोऽभावप्रतिपादनं सर्वथाऽप्रमाणम्। नहि प्रमात्रा प्रमाणैर्विज्ञातो लब्धो वार्थः कदाप्यन्यथा भवितुमर्हति।

**प्र०**—ननु जगन्निर्माणे परमात्मनः किं फलम्?

**उ०**—नन्वकरणेऽपि किं फलम्?

**प्र०**—जगतो निर्माणाभावे तेनाप्यानन्दे स्थीयेत जीवेभ्यश्च सुखदुःखावाप्तिर्न भवेत्।

**उ०**—अलसा दरिद्राश्चैवं भावयन्ति न तु पुरुषार्थिनः। किमिव च प्रलयकाले सुखं दुःखं वा जीवेभ्यः प्रतिपद्यते। क्रियमाणायाञ्च सृष्टौः सुखदुःखनिर्धारणायां तत्र समधिकसुखमुपलभामहे। भूयाँसश्च पवित्रात्मानो जीवा मुक्तिसाधनान्यनुष्ठाय प्राप्नुवन्ति मोक्षानन्दमपि। प्रलये तु पुनः सुषुप्तिवन्निश्चेष्टाः सन्तिष्ठन्ते। किञ्च प्रलयात् पूर्वं सृष्टौ जीवात्मभिः कृतकर्मणाम्फलमीश्वरः कथं तेभ्यो दातुं प्रभवेत्? ते चापि कथं भुञ्जीरन्? चक्षुषस्सद्भावे किं फलमित्यनुयुक्तो भवान् "दर्शनमित्येव" प्रतिवक्ष्यति। एवमीश्वरस्यापि जगतो निर्माणस्य विज्ञानबलक्रियाणां जगदुत्पादनमन्तरेण

किं फलं शक्नोति भवितुम् ? नह्यत्र किञ्चिदन्यत् प्रतिवक्तुं शक्ष्यथ। जगन्निर्माणेन चैव परमात्मनो न्यायधारणदयादिगुणानां सार्थक्यं सम्भवति। तस्यानन्तसामर्थ्यमपि जगतः सृष्टिस्थितिसंहृतिभिः व्यवस्थया च सफलं वर्तते। किञ्च चक्षुषो दर्शनमिव परमात्मनोऽपि जगदुत्पाद्य जीवेभ्योऽसंख्य-पदार्थान् प्रदाय परोपकार एव स्वाभाविको गुणः।

प्र०—बीजानि प्रथमं भवन्ति वृक्षा वा ?

उ०—बीजम्, यतो बीजं हेतुर्निदानं निमित्तं कारणमित्यादीनि पदान्येकार्थवाचकानि। कारणञ्च कार्यात्प्रागेव भवति।

प्र०—यदि परमेश्वरः सर्वशक्तिमाँस्तर्हि स कारणं जीवाँश्चाप्युत्पाद-यितुं शक्नोति अन्यथा तु तस्य सर्वशक्तिमत्ता परिहीयेत।

उ०—सर्वशक्तिमच्छब्दार्थं पूर्वमलिखाम। परं किमसम्भवार्थानु-ष्ठातैव सर्वशक्तिमानुच्यते ? यः खलु कारणाद् विना कार्योत्पादनरूपम-सम्भवार्थं कर्तुं शक्नोति, अपि नाम स निमित्तं विनाऽपरं परमेश्वरं निर्मातु-मीष्टे। स्वयं मृतो दुःखितोऽन्यायकारी अपवित्रो दुष्कर्मा वा भवितुमर्हति न वा ? वह्नेरौष्ण्यमपां शैत्यादिकान्नैसर्गिकान् नियमान् परिवर्तयितुम्, पृथिव्याद्यचेतनाँश्चायथोक्तगुणवतो विधातुं नेष्टे खलु परमेश्वरोऽपि। परमात्मनो नियमास्सत्याः पूर्णाश्चातः परिवर्तयितुं न शक्यन्ते। अतः "सहायान्तरमनपेक्ष्यैव परमेश्वरः कर्माणि संविधातुं शक्नोति" इत्येव सर्वशक्तिमच्छब्दस्यार्थः।

प्र०—ईश्वरः साकारो निराकारो वा ? निराकारत्वे हि स हस्तादि-साधनमन्तरेण जगन्निर्मातुं न शक्ष्यति। साकारत्वे पुनर्नास्ति कश्चिद् दोषः।

उ०—निराकारः खलु परमेश्वरः। यो वै साकारो वपुष्मान् स नास्ति परमेश्वरः। साकारो हि परिमितशक्तिसंयुक्तः देशकालवस्तुषु परिच्छिन्नः क्षुत्तृषाछेदनभेदनशीतोष्णज्वरपीडादिसंयुतो भवेत्। तत्र केवलं जीवगुणाः संगच्छेरन् नतु परमात्मनः। यथा किल यूयं वयं च साकारत्वा-द्देहित्वात् त्रसरेण्वणुपरमाणून् प्रकृतिञ्च वशे स्थापयितुं न प्रभवामस्तथैव स्थूलशरीरी परमेश्वरस्तैः सूक्ष्मपदार्थैः स्थूलं जगन्निर्मातुं न शक्नोति। भौतिकेन्द्रियगोलकैर्हस्तपादाद्यवयवैश्च विवर्जितः परमेश्वरो जीवप्रकृतिभ्यां कर्तुमक्षमाणि कार्याणि स्वानन्तशक्तिबलपराक्रमैर्विदधाति। किञ्च प्रकृतेरपि सूक्ष्मतया तत्र व्यापकत्वेन च तां समादाय जगदाकारे परिणामयति।

प्र०—ननु यथा मानवादीनां पितरौ साकारौ तयोरपत्यान्यपि साकाराणि भवन्ति, निराकारत्वे तु पुनरेषां सन्ततिः निराकारा एव भवेत्।

तथैव परमेश्वरोऽपि चेन्निराकारस्तर्हि तन्निर्मितं जगदपि निराकारम्भवेत् ?

उ०—अहो बालस्येवायं भवतः प्रश्नः। नहि ब्रह्म जगत उपादानकारणम्, अपितु निमित्तकारणमित्यनुपदमेवास्माभिरवोचि। स्थूलतां व्रजन्ती प्रकृतिः परमाणवः सृष्टेरुपादाननिमित्तं सा च न सर्वथा निराकारा अपितु परमात्मनोऽपेक्षया स्थूलं कार्यान्तरापेक्षया च सूक्ष्ममाकारं सन्धत्ते।

प्र०—किं कारणं विना कार्यमुत्पादयितुं न शक्नोति परमेश्वरः ?

उ०—नहि, असतोऽविद्यमानस्य वस्तुनः कदापि भावः—वर्तमानत्वं न सम्भवति। यथा कश्चिद् गल्पमाचक्षीत "वन्ध्यापुत्रयोरुद्वाहमहमद्राक्षम्, उभौ नारशृङ्गं धनुराकाशकुसुमस्रजं च सन्दधानौ बभूवतुः, मृगतृष्णिकायां सस्नतुः, गन्धर्वनगरे चोषतुः, तत्र मेघैर्विना वृष्टिः, पृथिवीञ्च विना सर्वसस्यानां समुत्पत्तिर्भवति स्म" यथैषां नास्ति सम्भवस्तथैव कारणाद् विना कार्योत्पत्तिरपि सर्वथाऽसंभाव्या। यथा वा कश्चिदेवमभिदधीत "मम मातापितरौ न स्तोऽहमेवमेव जातः, मम मुखे जिह्वा नास्ति वदामि च, नासीत् बिले सर्पो निरगाच्च, अहं क्वापि नासमेते चापि क्वापि नासन् सर्वे च वयमागताः"। एवमसम्भवार्थाः प्रमत्तगीतानि भवन्ति।

प्र०—यदि हि नाम कारणमन्तरा कार्यन्नोत्पद्यते किं तर्हि कारणस्यापि कारणम् ?

उ०—केवलं कारणभूतानि द्रव्याणि न कस्यचित् कार्याणि भवन्ति यत्तु कस्यचित्कारणं कस्यचिद् वा कार्यम् भवति तदपरम्। यथेयं पृथिवी गृहादीनां कारणं जलादीनाञ्च कार्यम्। परमादिकारणम्प्रकृतिरनादिरेव। तथा च—

**मूले मूलाभावादमूलं मूलम् ॥**

—सांख्य अ० १। सू० ६७

मूलस्य कारणस्य मूलं कारणं न भवति तस्मादकारणं—कारणान्तरविवर्जितं सर्वकार्याणां कारणम्। यतो हि कार्योत्पत्तेः प्रागवश्यं भवति कारणत्रयम्। यथाहि वस्त्रनिर्माणात्पूर्वं तन्तुवाय-तन्तुतुरीप्रभृतीनां विद्यमानतायामेव पटो निर्मीयते तथैव जगत उत्पत्तेः पूर्वं परमेश्वरप्रकृतिकालाकाशजीवात्मनामनादितया विद्यमानत्वेन समुत्पद्यते जगदिदम्। एषामेकस्याप्यभावे जगन्नोत्पद्येत।

अत्र नास्तिका आहुः—

**शून्यं तत्त्वं भावो विनश्यति वस्तुधर्मत्वाद्विनाशस्य ॥१॥**

—सांख्यद अ० १। सू० ४४

**अभावाद् भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् ॥२॥**

**ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् ॥३॥**

**अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात् ॥४॥**
**सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् ॥५॥**
**सर्वं नित्यं पञ्चभूतनित्यत्वात् ॥६॥**
**सर्वं पृथग् भावलक्षणपृथक्त्वात् ॥७॥**
**सर्वमभावो भावेष्वितरेतराभावसिद्धेः ॥८॥**
**न स्वभावसिद्धिरापेक्षिकत्वात् ॥९॥**

--न्याय सू० अ० ४। आ० १। [१४,१९,२२,२५,२९,३४,३७,३९]

**तत्र प्रथमो नास्तिकः**—शून्यमेवैकः पदार्थः। सृष्टेः पूर्वं शून्यमासीदन्तेचापि शून्यमेवावशेक्ष्यति। यतो वै भावस्य वर्तमानपदार्थस्याभावे शून्यं भविष्यति।

**उ०**—आकाशादृश्यावकाशबिन्दवोऽपि शून्यशब्देनोच्यन्ते। अचेतनेऽस्मिन् शून्ये सर्वे पदार्था अदृश्यतयावतिष्ठन्ते। यथा ह्येकेन बिन्दुना रेखा, रेखाणाञ्च वर्तुलत्वेन भूमिपर्वतादयः परमात्मनो रचनया सम्पद्यन्ते। अपि च शून्याधिगन्त्रा नहि शक्यं शून्येन भवितुम् ॥१॥

**द्वितीयो नास्तिकः**—अभावाद्भावः समुत्पद्यते नहि बीजोपमर्दनं विनाङ्कुरः प्रार्दुभवति, न च बीजं खण्डयित्वाऽवलोकनेनाङ्कुरो जातु दृश्यते यदा च प्रथमङ्कुरो न दृश्यते स्म तर्ह्यभावादुत्पत्तिर्बभूव।

**उ०**—यस्तावदुपमृद्नाति बीजं स पूर्वत एव बीज आसीत्। अन्यथा कर्हिचिन्नोत्पद्येत।

**तृतीयो नास्तिकः**—पुरुषेण कर्मानुष्ठानेनैव कर्मफलं नोपलभ्यते, कानिचित्कर्माणि निष्फलान्यपि दृश्यन्ते। तस्मादनुमीयते कर्मफलप्राप्तिरीश्वरायत्तेति। परमेश्वरो यस्य कर्मणः फलं प्रदातुमिच्छति ददाति, यस्य नेच्छति फलं तस्य न प्रयच्छति—अतः कर्मफलमीश्वराधीनम्।

**उ०**—कर्मणां फलमीश्वराधीनञ्चेत्तर्ह्यन्तरेण कर्म किमिति न प्रयच्छति तत्फलम्? अतो यादृशं कर्म पुरुषस्समनुतिष्ठति तादृशमेव तस्मै फलं प्रयच्छति। नहीश्वरोऽप्यकर्मकृते मनुजाय जातु कर्मफलं प्रदातुमीष्टे। अपि तु जीवो यादृशं कर्म कुरुते तादृशमेव परमेश्वरः फलं प्रयच्छति।

**तुरीयो नास्तिकः**—निमित्तं विनैव भावमात्रस्योत्पत्तिर्भवतीति। कुतः? कण्टकतैक्ष्ण्यादिदर्शनात्—यथा हि खल्वनिमित्तादेव कण्टकीप्रभृतिवृक्षाणां कण्टकानि तीक्ष्णमुखानि दृश्यन्ते तथैव प्रतिसर्गारम्भे देहादिभावा अपि निमित्तमन्तरैव समुत्पद्यन्त इति।

**उ०**—यस्मात् पदार्थः समुत्पद्यते तदेव तस्य निमित्तम्। कण्टकीवृक्षमन्तरेण कण्टकानि कथं नोत्पद्यन्ते?

**पञ्चमो नास्तिकः**—सर्वेऽपि पदार्था उत्पत्तिविनाशशालिनोऽतः सर्वेऽनित्याः। तथा च क्वचिदभिधीयते—

**श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः।**
**ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः॥**

आधुनिका वेदान्तिनोऽपि पञ्चमनास्तिकस्य कोटौ परिसंख्यातुं शक्यन्ते। ते हि "ब्रह्मसत्यं जगन्मिथ्या जीवश्च ब्रह्मणोऽभिन्न इति ग्रन्थसहस्राणां सिद्धान्त" इति वदन्ति।

उ०—सर्वेषां नित्यताया नित्यत्वान्न सर्वमनित्यं भवितुमर्हति।

प्र०—यथा ह्यग्निः काष्ठानि विनाश्य पश्चात् स्वयमपि विनश्यति तथैव सर्वेषां नित्यताऽप्यनित्या।

उ०—यथावदुपलभ्यमानस्य वस्तुनो वर्तमानेऽनित्यत्वम्, परमसूक्ष्मकारणञ्चानित्यमिति कथमपि वक्तुं न शक्यते। ब्रह्मणो जगत उत्पत्तिमभ्युपगच्छतां वेदान्तिनान्तु ब्रह्मणस्सत्यत्वेन न जातु तत्कार्यस्य युज्यतेऽसत्यत्वम्। स्वप्नरज्जुसर्पादिवदस्य कल्पितत्वं चेदुच्येत। तदपि न। कल्पनाया गुणत्वान्न तस्या द्रव्यमुत्पद्यते गुणस्य च गुणिनः पृथगवस्थातुमशक्यत्वात्। अपि च कल्पयितुर्नित्यत्वे तत्कल्पनयापि नित्ययैव भवितव्यमितरथा तु कल्पयितारमप्यनित्यमभ्युपेयेत। यथान्तरेण दर्शनश्रवणाभ्यां न जातु स्वप्नः समागच्छति जागरितावस्थायां वर्तमानसमये सत्यवस्तूनां साक्षात्सम्बन्धेन समुत्पन्ने प्रत्यक्षादिज्ञाने तत्संस्कारो वासनात्मकं ज्ञानमात्मनि सन्तिष्ठते, स्वप्ने तु प्रत्यक्षेणानुभूयते। यथा च सुषुप्तिदशायां बाह्यवस्तूनां ज्ञानाभावेऽपि बाह्यपदार्थानामभावो न भवति, तथैव प्रलयेऽपि कारणद्रव्यं वर्तमानं भवति। संस्कारमन्तरेण स्वप्नश्चेदनुभूयेत तर्ह्याजन्मनो विगतचक्षुरपि स्वप्ने रूपं भावयेत् तस्मात्तत्र तेषां केवलं ज्ञानमात्रं वहिश्च पदार्थानां वर्तमानत्वम्।

प्र०—ननु यथा जागरितावस्थाया भावाः स्वप्ने तयोश्च सुषुप्तावनित्या भवन्ति तथैव जाग्रतः पदार्थाः स्वप्नवदभ्युपेतव्याः।

उ०—नैवं जातु मन्तुं शक्यते, स्वप्नसुषुप्त्योर्हि बाह्यभावानामज्ञानमात्रं भवति नतु सर्वथाऽभावः। यथाहि कस्यचित्पृष्ठदेशस्थिताः पदार्था अदृष्टा एव भवन्ति नतु तेषामभावः। स्वप्नसुषुप्त्योरपि सैव दशा। तस्मात् यदस्माभिर्ब्रह्म जीवोऽस्य जगतः कारणञ्चानादिनित्यञ्चेति प्रत्यपादि तदेव सत्यम्।

**षष्ठो नास्तिकः**—पञ्चभूतानां नित्यत्वात् सर्वमिदं जगन्नित्यमित्याचष्टे।

उ०—नेदं सत्यं, येषां पदार्थानामुत्पत्तिविनाशयोः कारणं समीक्ष्यते ते चेन्नित्या भवेयुस्तर्हि सर्वमिदं स्थूलं जगत् देहघटपटादिपदार्था नित्या

भवेयुः। परमेषामुत्पत्तिविनाशौ नित्यं समीक्ष्येते तस्मात् कार्यं नित्यं नाङ्गीकर्तुं शक्यते।

**सप्तमो नास्तिकः**—सर्वे भावाः पृथक् पृथग्वर्तन्ते न कोऽप्येको भावः। यं यं पदार्थं वयमवलोकयामो न तत्र कश्चिदन्य एकः पदार्थः समीक्ष्यत इति।

उ०—अवयवेष्ववयवी वर्तमानकाल आकाशः, परमात्मा, जातिश्चेति पृथक् पृथक् पदार्थसमूहेष्वेकैकं विद्यते। नास्ति कश्चित् पदार्थस्ततः पृथग्भूतः। तस्मात् स्वरूपतः पृथक् पृथग्वर्तमानेष्वप्येकः पदार्थो वर्तत एव।

**अष्टमो नास्तिकः**—सर्वपदार्थेष्वन्योन्याभावसिद्धेः सर्वं भावजातमभावात्मकं वर्तते यथा—अनश्वो गौः, अगौरश्व इति। तस्मात् सर्वमभावरूपमिति मन्तव्यम्।

उ०—सर्वभावेष्वितरेतराभावसद्भावेऽपि गवि गौः, अश्वे चाश्वो भावरूपो वर्तत एव, न जात्वभावस्सम्भवति, सर्वपदार्थानामभावे इतरेतराभावेनापि कुत्र स्थीयेत?

**नवमो नास्तिकः**—जगदिदं स्वभावतः समुत्पद्यते एष हि पदार्थानां स्वभावो यन्मिथः संयोगेन पदार्थान्तरमुत्पादयन्ति इति। यथा समाहृतजलान्नयोगेन कृमयः, वीजोर्वीवारीणां योगेन घासवृक्षादयः पाषाणादयश्च समुत्पद्यन्ते यथा वा सागरपवनयोस्संयोगेन वीचयः, वीचिभ्यो हिण्डीरं समुद्भवति। यथा च हरिद्रासुधाजम्भीरसानां सम्मिश्रेण कुङ्कुमं (रोली) निष्पद्यते। तथैव समस्तोऽप्ययं सर्गस्तत्त्वानां स्वाभाविकगुणैः समुत्पन्नः। नहि विद्यते कर्तास्य कश्चिदन्यः।

उ०—जगदिदं स्वभावाच्चेदुत्पद्येत न जातु विनश्येत्। विनाशश्चापि स्वभावादेवाभ्युपेयेत न तर्हि समुत्पद्येत। उत्पत्तिविनाशावुभावपि युगपदेव द्रव्येष्वङ्गीक्रियेताञ्चेत् तद्युत्पत्तिविनाशयोर्न जातु व्यवस्था सम्भवेत्। निमित्तसद्भावेनोत्पत्तिविनाशावभ्युपेष्यति तदानीमुत्पादविनाशशीलद्रव्येभ्यः पृथक् निमित्तमङ्गीकर्तव्यम्। स्वभावादेव चेदुत्पत्तिविनाशौ परिनिष्पद्येते तर्हि युगपदेवोत्पत्तिविनाशौ न जातु सम्भवतः। अपि च स्वभावादेवोत्पद्यमाने जगति भूगोलस्यास्य सन्निधौ, अपरा पृथिवी चन्द्रसूर्यादयो वा कथन्नोत्पद्यन्ते? किं च यद्यद्वस्तुसंयोगेन यद्यद्द्रव्यमुत्पद्यते तत्तदपि परमेश्वरविरचितद्रव्यान्तरसंयोगेनैव जायते। यथाहि तद्रचितानामेव वीजान्नजलादीनां संयोगेन घासवृक्षकृमिप्रभृतयः समुत्पद्यन्ते नतु तमन्तरेण। यथा वा हरिद्रासुधाजम्बीररसादयो देशान्तरेभ्यः स्वयमागत्य न संयुञ्जन्ति अपित्वपरेण केनचित् संयोज्यन्ते तत्रापि यथावद् वस्तुसंमेलनेनैव कुङ्कुमं (रोली) निष्पद्यते नत्वाधिक्येन न्यूनतयाऽन्यथा वा। तथैव प्रकृतिः परमाणवश्चाप्यचेतना भावा नान्तरेण ब्रह्मणो ज्ञानयुक्तिपूर्वकं सम्मेलनं कार्यसिद्ध्यै पदार्थान्तरे परिणन्तुं

शक्नुवन्ति तस्मात् सृष्टिरियं न स्वभावतः समुत्पद्यते अपि तु ब्रह्मणो रचनया निष्पद्यते ।

**प्र०**—ननु नासीदस्य जगतः स्रष्टा, नास्ति, नापि च भविष्यति । अपित्वनादिकालाद् यथातथमवतिष्ठते न जातु समुत्पन्नं न चापि विनंक्ष्यति ।

**उ०**—कर्तुर्विना नहि काचित् क्रिया, क्रियाजन्यो वा पदार्थः समुत्पद्यते । येषु पृथिव्यादिपदार्थेषु संयोगविशेषजन्यं निर्माणं समीक्ष्यते न ते कथमप्यनादयो भवितुं शक्नुवन्ति । अपि च संयोगादुत्पद्यमानः संयोगात्पूर्वं वियोगान्ते वा नावतिष्ठते । अनभ्युपगच्छता च पुनरिदं भवता कठिनतरं पाषाणं हीरकमयो वा संत्रोट्य, विलीय भस्मीकृत्य वा निरीक्ष्यतां यदत्र विभिन्नाः परमाणवः सम्मिलिता नवेति । सम्मिलिताश्चेत् कालेन वियोक्ष्यन्त अपि !

**प्र०**—ननु नास्ति कश्चिदनादिरीश्वरोऽपितु योगाभ्यासेन लब्धाणिमाद्यैश्वर्यः, सर्वज्ञादिगुणोपेतः, मुक्तः ज्ञानी जीवात्मैव परमेश्वर इत्यभिधीयते ।

**उ०**—जगतः स्रष्टुरनादिपरमात्मनोऽभावे साधनैः सिद्धिमुपयतां जीवानामाधारभूतं जीवनरूपमिदं जगत् शरीरमिन्द्रियाणां गोलकानि च कथमुत्पत्तुमर्हन्ति । न चैतेभ्यो विना साधनानि समनुष्ठातुं प्रभवति जीवः । अलब्धसाधनश्च पुनरयं कुत एव सिद्धिमुपलभेत । केनापि साधनेन सिद्धिमुपगतो जीवात्मा ब्रह्मणोऽनन्तसिद्धिसंयुतां सनातनीमनादिसिद्धिं तोलयितुं नार्हति । यतो ह्यात्मनः परां काष्ठामुपगतायामपि ज्ञानविवृद्धौ परिमितज्ञानवानल्पसामर्थ्यश्चैवावतिष्ठते जीवात्मा । न ह्यस्य ज्ञानमनन्तं सामर्थ्यं वाऽपरिमितं शक्नोति भवितुम् । अपि च—नहि अद्य यावत् कोऽपि योगी परमात्मना प्रवर्तितस्य सृष्टिक्रमस्य परिवर्तकोऽभवन्नापि भविष्यति । यथा ह्यनादिसिद्धपरमेश्वरेण चक्षुषा दर्शनस्य श्रवसा च श्रवणस्य नियमः प्राकल्पि न तं कोऽपि योगी परिवर्तयितुमीष्टे । तस्मान्न जीव ईश्वरो भवितुमर्हति ।

**प्र०**—ननु प्रतिकल्पमीश्वरः समानामेव सृष्टिं निर्माति आहोस्विद् विसदृशीम् (आहोस्विद् वैसादृश्यं तत्र किमपि जनयति ?)

**उ०**—यादृशी साम्प्रतं वर्तते, आसीत् पुरापि तादृशी अग्रेऽपि च भविष्यति न तत्र भेदं जनयति । यथा च ऋचाऽभिधीयते—

**सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।**
**दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥**

—ऋ० । मं० १० । सू० १९० । मं० ३

**(धाता)** यथा खलु परमेश्वरः पूर्वस्मिन् कल्पे सूर्यचन्द्रविद्युत्पृथिव्यन्तरिक्षादीन् निरमात् तथैवास्मिन्कल्पे व्यरचयत् निर्मास्यति च भाविनि कल्पे

यतः परमात्मनः कार्याणि निर्दोषतया सर्वदैकविधान्येव भवन्ति। अल्पज्ञस्य किंवा यस्य ज्ञानं याति वृद्धिक्षयौ, तस्यैव कार्येषु दोषाः परापतन्ति नतु परमात्मनः कार्येषु।

प्र०—ननु सृष्टिविषये वेदादिशास्त्राणि विरुद्धचन्ते न वा ?

उ०—न विरुद्धचन्ते।

प्र०—अविरोधश्चेत्।

**तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधिभ्योऽन्नम्। अन्नाद्रेतः। रेतसः पुरुषः। स वा एष पुरुषोऽन्नरसमयः।**

—तैत्तिरीयोपनि० ब्रह्मानन्दव० अनु० १

तस्माद् ब्रह्मणः प्रकृतेश्चाप्याकाशोऽवकाशः। (सर्वत्र प्रसृतकारणरूपद्रव्यसमाहरणेनावकाश उत्पन्न इवाभाति वस्तुत आकाशो नोत्पद्यते। यतस्तेन विना प्रकृतिः परमाणवश्च कुत्र स्थीयेरन्)। आकाशानन्तरं वायुः। वायोः पश्चादग्निः। अग्नेः समनन्तरमापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधिभ्योऽन्नम्। अन्नाद्वीर्यम्। वीर्यात् पुरुषः-शरीरमुत्पद्यते। अत्राकाशादिक्रमेण, छान्दोग्येऽग्न्यादिक्रमेण, ऐतरेये च जलादिक्रमेण सृष्टेरुत्पत्तिरुपवर्णिता। वेदेष्वपि क्वचित्पुरुषात् क्वचित् हिरण्यगर्भादिभ्यः, मीमांसायां कर्मणः, वैशेषिके कालात्, न्याये परमाणुभ्यः योगे पुरुषार्थात् सांख्ये प्रधानात् वेदान्ते च ब्रह्मणः, सृष्टच्युत्पत्तिर्वर्णिताऽस्ति। कतमत्तत्र सत्यमसत्यं वा जानीमहे।

उ०—एषु सर्व एव सत्यवादिनो न कोऽपि मिथ्याभिधायकः, स एवालीकभाषी यो हि याथार्थ्यं नावबुद्धचते। यतो हि जगतोऽस्य निमित्तं परमेश्वरः प्रकृतिरुपादानमिति। अत्रेदमवधेयम्—महाप्रलयादनन्तरमग्रिमसर्गारम्भ आकाशात्प्रारभ्यते एवं यदा प्रलयो वह्न्यन्तः सम्पद्यते आकाशवायू त्ववशिष्येते ततः परभवः सर्गो वह्नेः, यदाचाग्निविद्युतौ न विनश्यतः तदाद्भ्यः सर्गारम्भः सञ्जायते। यत्र कल्पे यावतां पवनादिभावानां प्रलयः सम्भवति ततः परस्मिन् सर्गे तत एव सृष्टिरुत्पद्यते इति भावः। पुरुष हिरण्यगर्भादीनि नामानि परमेश्वरस्यैव सन्तीति प्रथमसमुल्लासेऽवर्णयाम। एकस्मिन्नेव कार्ये विषये वा विरुद्धवादो विरोध इत्यभिधीयते। षट्स्वपि दर्शनेषु मिथोऽविरोधश्चेत्थमवधेयः "नास्ति जगति तादृक् किमपि कार्यं यस्य निर्माणे न क्रियते कर्मचेष्टेति" मीमांसायाम्। "कालमन्तरेण नोत्पत्तुं शक्यते किमपीति" वैशेषिके। "उपादाननिमित्ताभावे न किञ्चिदपि निर्मीयत इति" न्याये। "विद्याज्ञानविचाराणामसद्भावेऽपि न जायत इति" योगशास्त्रे। "तत्त्वानां संयोगं विना नोद्भवितुमर्हतीति" सांख्ये। "असति निर्मातरि न

केनापि पदार्थेन शक्यमुत्पत्तुमिति" वेदान्ते वर्णितमत: कारणै: षड्भि: सृष्टिरियमुत्पद्यते, तेषाञ्च षण्णां कारणानामेकैकं व्याख्यातं प्रतिशास्त्रमिति नास्ति तत्र लेशतोऽपि विरोध:। यथाहि खलु षड् जनाश्छदिषमेकामुत्तोल्य भित्तिष्ववस्थापयेयुस्तथैव सृष्टिरियं षड्भिर्दर्शनकारैर्मिलित्वा व्याख्यातेति विभावनीयम्। यथा वा कश्चिज्जन: पञ्च विगतचक्षुष एकं मन्ददृष्टिं चैकैकं प्रदेशं हस्तिन: समबोधयत्। कीदृशो हस्तीत्यनुयुक्तेष्वेक: स्तम्भनिभ इति समभाषत, अपर: सूपाकार इति, तृतीयो मुसलसंनिभ इति, तुरीयो मार्जनीसम इति, पञ्चमो वेद्याकार इति आचष्टे। षष्ठस्तु कृष्णवर्णश्चतुर्णां स्तम्भानामुपरिमहिषाकार इवेति प्रत्युवाच। इत्थमेवाधुनिकैरनार्षनव्यग्रन्थाध्येतृभि: प्राकृतभाषामात्रवेदिभिश्चानधीत्यर्षिप्रणीतग्रन्थानधीत्य च क्षुद्रबुद्धिकल्पितान् नव्यान् संस्कृतभाषामयानन्योऽन्यं निन्दद्भिर्मुधैवायं कलह: प्रावर्ति। कथनमेषां धीमद्भिरितरैर्वा न मन्तव्यम्। विगतचक्षुषोऽन्धाननुसरन्त: कथं दु:खं नाप्नुयु:? तथैवेदानीन्तनाल्पविद्यावतां, स्वार्थिनामिन्द्रियारामतत्पराणां जनानां लीला जगतो विनाशिका।

प्र०—ननु कारणं विना कार्यं नोत्पद्यते चेत्तर्हि कथन्न भवति कारणस्यापि कारणम्?

उ०—अयि! मुग्धा भ्रातर: कथन्न स्वधियापि किञ्चिद् विचारयन्ति भवन्त:। पश्यत—संसारेऽस्मिन् द्वावेव पदार्थौ भवत:, एकं कारणमपरञ्च कार्यमिति। तत्र नाप्नोति कारणं कार्यताम्। कार्यमपि कार्यकाले नाधिगच्छति कारणत्वम्। यावच्च मानवो यथावन्नावैति सृष्टिम्, तावद् यथार्थज्ञानं न लभते।

**नित्याया: सत्त्वरजस्तमसां साम्यावस्थाया: प्रकृतेरुत्पन्नानां परमसूक्ष्माणां पृथक् पृथग्वर्त्तमानानां तत्त्वपरमाणूनां प्रथम: संयोगारम्भ: संयोगविशेषादवस्थान्तरस्य स्थूलाकारप्राप्ति: सृष्टिरुच्यते।**

य: खलु पदार्थ: प्रथमसंयोगे सम्मिलति सम्मेलयति वा, यश्च संयोगस्यादिर्वियोगस्य चान्तोऽर्थात् यस्य विभागो न सम्भवति तत् "कारणम्"। यश्च संयोगसमनन्तरं निष्पद्यते वियोगान्ते च तथाभूतन्नावतिष्ठते तत् "कार्यम्" उच्यते। य: कारणस्यापि कारणम्, कार्यस्यापि कार्यम्, कर्तु: कर्ता, साधनस्य साधनम्, साध्यस्य चापि साध्यं भवतीत्याचष्टे स पश्यन्नप्यन्ध:, शृण्वन्नपि वधिरो जानन्नपि च मूर्ख:। अपि चक्षुषोऽपि चक्षु:, दीपकस्यापि दीपकम्, सूर्यस्यापि सूर्य: कर्हिचित् सम्भवति? यस्मादुत्पद्यते तत् "कारणम्"। यदुत्पद्यते तत् "कार्यम्"। यश्च कारणात्कार्यं जनयति स "कर्ता" इत्यभिधीयते।

**नासतो विद्यते भावो नाभावो विद्यते सतः ।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥**

—भगवद्गी० अ० २ । श्लो० १६

असतोऽविद्यमानस्य वस्तुनः सद्भावः, सतश्चासद्भावो न जातु जायत इति तत्त्वदर्शिभिर्निर्णीतम् । अन्ये पक्षपातिनो दुराग्रहग्रहिणो मलिनचेतसोऽविद्वाँसः साकल्येनार्थमिमं बोद्धुं कथं शक्नुवन्ति । अनधीतविद्याः, अकृतसाधुजनसंसर्गाः सदसद्विचाररहिताः पुमांसो नित्यं भ्रमजालनिमग्ना भवन्तीति किमाश्चर्यम् । धन्यास्त एव मानवा ये हि विदन्ति सकलविद्यासिद्धान्तान् । ज्ञानाय श्रमं कुर्वते, ज्ञात्वा चान्यान् निश्छलं वेदयन्ति । अतो यः कारणमन्तरैव सृष्टिरियमुदभूनेति मन्यते न हि सः किमपि वेत्ति । सर्गनिर्माणावसरे परमेश्वरः सूक्ष्मपदार्थान् समाहरति । तत्र प्रथमावस्थायां यत् परमसूक्ष्मात् प्रकृतिरूपकारणात् किञ्चित्स्थूलं भवति तन्महत्तत्त्वम् । ततोऽपि किञ्चित् स्थूलोऽहङ्कारः । अहङ्कारात् विभिन्नानि पञ्चसूक्ष्मभूतानि श्रोत्रत्वग्नेत्रजिह्वाघ्राणाख्यानि पञ्च ज्ञानेन्द्रियाणि, वाग्हस्तपादोपस्थपायुनामानि पञ्च कर्मेन्द्रियाणि, एकादशञ्च मनः किंचित् स्थूलान्युत्पद्यन्ते । पञ्चतन्मात्रेभ्यश्चानेकस्थूलदशाः समनुभवदस्माभिर्दृग्गोचरीक्रियमाणं क्रमेण स्थूलभूतपञ्चकं प्रजायते । तेभ्यो विविधा ओषधिवृक्षादयः तेभ्योऽन्नमन्नाद् वीर्यं वीर्याच्च शरीरमिदमुत्पद्यते । परं प्राथमिका सृष्टिर्न भवति मैथुनी । परमात्मना हि स्त्रीपुरुषयोः शरीराणि निर्माय तेषु जीवानां संयोगानन्तरमेव मैथुन्याः सृष्टेः सम्भवात् ।

दृश्यताम्—देहेऽस्मिन् ज्ञानपूर्विका सृष्टिर्यामवलोकयन्तो विपश्चितोऽपि चित्रीयन्ते । अन्तरस्थिमयं पिञ्जरम्, नाडीनां बन्धनम्, मांसस्य विलेपनम्, त्वच आवरणम्, प्लीहायकृत्फुप्फुसजीवसंयोजनम्, शिरोरूपमूलनिर्माणम्, लोमनखादिस्थापनम्, नितान्ततनूनां जालवत् चक्षुषोऽतिसूक्ष्मशिराणां ग्रन्थनम्, इन्द्रियाणां वर्त्मनः प्रकाशः, जीवात्मनो जाग्रत्स्वप्नसुषुप्तीनां भोगाय स्थानविशेषनिर्माणम्, सर्वधातूनां विभागः, कलाकौशलस्थापनादिरूपा चाद्भुता सृष्टिरन्तरेण परमेश्वरं केन निर्मातुं शक्यते ? न केवलमिदमेवापि तु नानाविधै रत्नधातुभिरलङ्कृतेयं वसुन्धरा, नानाविधानां न्यग्रोधादितरूणां बीजेषु सूक्ष्मनिर्माणम् असंख्यैर्हरितश्वेतपीतकृष्णचित्रादिरूपैः संयुतानां पत्रपुष्पफलमूलानां संघटनम्, मिष्टक्षारकटुकषायतिक्ताम्लादिविविधरसानां गन्धवतां पत्रपुष्पफलान्नकन्दमूलादीनां विरचनम्, अनेकशतसहस्रभूमण्डलसूर्यचन्द्रलोकानां विरचनं धारणं भ्रामणं नियमनञ्च ऋते परमात्मनो न केनापि कर्तुं शक्यते । कमपि पदार्थमवलोक्य द्रष्टुश्चेतसि द्विविधं ज्ञानमुत्पद्यते । तत्पदार्थस्य, रचनादर्शनेन तन्निर्मातुश्चेति । यथा

कश्चित्पुमान् काननेऽलङ्कारमुत्तममलभत तद्दर्शनेन च तेनाधिगतम् "सौवर्णमिदं केनचिद् धीमता शिल्पिना च विरचितमिति। तथैव नानाविधेऽस्मिन् संसारे विविधा रचनेयं सूचयति निर्मातारं परमेश्वरम्।

प्र०—ननु प्रथमं मानवानां सृष्टिरभवत् पृथिव्यादीनां वा ?

उ०—पृथिव्यादीनाम्, नहि पृथिव्यादिसर्जनमन्तरेण प्राणिनामवस्थितिः पालनञ्चापि सम्भवति।

प्र०—ननु सर्गारम्भे एकमनेकान् वा मानवानुदपादयत् किंवाऽभवत् ?

उ०—अनेकान्। येषां हि जीवानां कर्माण्यैश्वरिसृष्टौ समुत्पत्तुमर्हाण्यासन् तेषां सृष्टयादौ समुत्पादनं ननु समुचितमेव परमात्मनः। तथा च यजुर्वेदे तद्ब्राह्मणे च समाम्नायते **"मनुष्या ऋषयश्च ये"** **"ततो मनुष्या अजायन्त"** इति। एवमादिभिः प्रमाणैः साधु सिद्धयति "यदादावनेके शतशो मानवा अजायन्त" इति। सृष्टौ दर्शनेनापि मानवा इमेऽनेकेषां मातापितॄणामपत्यानीति निश्चीयते।

प्र०—ननु सर्गारम्भे प्राणिनां सृष्टिः शैशवे, यौवने, वार्धके वाऽभवत् आहोस्वित्त्रिष्वपि ?

उ०—यौवने, बालाँश्चेदुदपादयत् तर्हि तत्परिपालनाय अन्ये जना अपेक्ष्येरन्, वार्धके च पुनर्मैथुनी सृष्टिर्नप्रवर्तेत तस्मात् युवान एव सर्वे निर्मिताः।

प्र०—सृष्टेः कदापि प्रारम्भोऽस्ति न वा ?

उ०—नहि, यथाहि प्राग् निशातो वासरो वासराच्च पूर्वं निशा, यथा वा रजनीसमनन्तरं दिवसो दिवसान्ते च रजनीति चक्रं प्रवर्तते तथैवेदं सृष्टिचक्रमपि—सर्गात् पूर्वं प्रलयः प्रलयाच्च पूर्वं सर्गः, सृष्टेः समनन्तरं प्रलयः प्रलयान्ते च सृष्टिरिति क्रमेणानादिकालात् प्रवर्तते। नास्यादिरन्तोवा विद्यते। परं यथा दिनपक्षयोराद्यन्तौ समीक्ष्येते तथैव सृष्टिप्रलययोरपि प्रारम्भावसानौ भवतः। यथाहि परमेश्वरो जीवो जगतः कारणञ्चैतत्त्रितयं स्वरूपतोऽनादि तथैवास्य जगत उत्पत्तिस्थितिसंहाराः प्रवाहेणानादयो विद्यन्ते। यथा वै सरितां प्रवाहः कर्हिचित् दृश्यते कदाचिच्च शुष्कतामुपगतो नावलोक्यते—प्रावृषि दृश्यते उष्णकाले च नावलोक्यते एतादृशव्यवहाराणां प्रवाहरूपत्वमधिगन्तव्यम्। परमात्मनो यथा गुणकर्मस्वभावा अनादयस्तथैव तस्य जगत उत्पत्तिस्थितिप्रलयकर्माण्यप्यनादीनि। परमात्मनो गुणकर्मस्वभावानामाद्यन्ताविव तत्कृतकर्मणामप्यादिरन्तो वा नास्ति।

प्र०—ननु परमात्मनैकेभ्यो जीवेभ्यो मानवं जन्मापरेभ्यर्स्सिहादीनामितरेभ्यो मृगगवादिपशूनामन्येभ्यो वृक्षादीनां कृमिकीटशलभादीनाञ्च जन्मानि यत् प्रादायिषत तेन तस्मिन् समुपैति पक्षपातः ?

उ०—पूर्वस्मिन् सर्गे जीवैस्तैरनुष्ठितकर्मणामानुरूप्येण व्यवस्था-सम्पादनान्नायाति पक्षपातदोषः। कर्मभिर्विनैव चेज्जन्मादास्यत् तर्हि पक्ष-पातोऽप्यभविष्यत्।

प्र०—मानवानामाद्या सृष्टिः क्वाभवत् ?

उ०—त्रिविष्टपे, यद्धि साम्प्रतं "तिब्बत" इत्याख्यायते।

प्र०—सर्गारम्भे एकैव जातिरासीदनेका वा ?

उ०—प्रथममेकैव मानवी जातिरासीदनन्तरं **विजानीह्यार्यान् ये च दस्यवः** । [ऋ० १।५१।८] श्रेष्ठानामार्या विद्वाँसो देवाश्चेति, दुष्टानाञ्च दस्यवो, मलिम्लुचा अविद्वाँसश्चेति समाख्याः समभवन्। तस्मादार्या दस्य-वश्चेति नामद्वयं प्रवृत्तम्। तत्र आर्येष्वपि पूर्ववर्णिता ब्राह्मणक्षत्रियवैश्यशूद्राः चत्वारो भेदाः प्रावर्तन्त। "**उत शूद्र उतार्ये**" इत्यथर्ववेदे पठ्यते। द्विजानां विदुषामार्य इति मूर्खाणाञ्च शूद्रोऽनार्य इति नामधेयं समवर्तत।

प्र०—कथं पुनरत्र ते समाययुः ?

उ०—यदा खल्वार्याणां दस्यूनाञ्चार्थाद् विदुषां देवानामविदुषामसु-राणाञ्च मिथः सततं कलहः सम्प्रवृत्तस्तदा सततकलहेनोद्विग्नचेतस आर्याः सकलेऽपि भूमण्डले भूभागमिमं सर्वतः प्रशस्यमवगम्यात्रैव समेत्य न्यवसन् तेनैवास्य देशस्य "आर्यावर्त" इति समाख्या समजनि।

प्र०—नन्वार्यावर्तस्य कियानवधिः ?

उ०— **आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात्।**
**तयोरेवान्तरं गिर्योरार्य्यावर्त्तं विदुर्बुधाः॥**
**सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।**
**तं देवनिर्मितं देशमार्यावर्त्तं प्रचक्षते॥**

—मनु० २।२२, १७

उत्तरस्यां दिशि हिमवान्, दक्षिणस्यां विन्ध्याचलः, पूर्वपश्चिम-योस्सागरः। किञ्च पश्चिमस्यां दिशि उदीचीनपर्वतेभ्यः समुद्गत्य प्रवहन्ती दक्षिणसागरस्योपसागरे सम्मिलिता सरस्वती सिन्धुर्वाहिनी, पूर्वस्यां नय-पालजनपदस्य प्राचीनपर्वतेभ्यः समुद्भूय बङ्गानां पूर्वेण पश्चिमेन च ब्रह्म-देशस्य प्रवहन्ती दक्षिणसागरसंगता दृषद्वती (या साम्प्रतं ब्रह्मपुत्रेत्युच्यते) सीमायमाना तिष्ठति। हिमवद्विन्ध्यपर्वतयोरन्तर्गताः दाक्षिणात्याः पार्वता रामेश्वरपर्यन्ताः सर्वे एव जनपदा देवैरार्यैर्विद्वद्भिर्वासितत्वात्, तेषामेव च निवासभूमितया आर्यावर्त-शब्देनाभिधीयन्ते।

प्र०—प्रथमं किमासीदस्य देशस्य नामधेयम्, के वात्र न्यवसन् ?

उ०—आर्याणामागमनात्पूर्वं नासीदस्य नामधेयं किमपि नापि ततः

प्राक् केऽप्यत्रावात्सुः। आर्या हि सर्गारम्भ एवाल्पीयसैव कालेन त्रिविष्टपादेवात्र समागत्यावसन्।

प्र०—ननु केचिदत्रैवमाहुः—"एते हि पारसदेशादत्रागतवन्तस्तेनैवैषामार्येति नामधेयमजनि। ततः पूर्वमत्रारण्यका न्यवसन्, यानसुरान् राक्षसाँश्चाभ्यधुः। आर्याश्चात्मानं देवताशब्देन ख्यापयन्ति स्म। तेषामेव संग्रामो देवासुरसंग्रामशब्देनाख्यायिकासु वर्णित इति।

उ०—सर्वथैवासत्येयं वार्ता। यतो हि—

**विजा॑नी॒ह्यार्या॒न्ये च॒ दस्य॑वो ब॒र्हिष्म॑ते रन्धया॒ शास॑दव्र॒तान्।**

—ऋ० मं० १। सू० ५१। मं० ८

**उ॒त शू॒द्र उ॒तार्यै॑॥**—अथर्व० कां० १६। व० ६२

धार्मिकाणां विदुषामाप्तपुरुषाणां "आर्यः" इति ततो भिन्नानाञ्च दस्युर्मलिम्लुचो दुष्टोऽधार्मिकोऽविद्वाँश्चेति नामधेयानि, तथा ब्राह्मणक्षत्रियवैश्यानां द्विजसंज्ञकानामार्य इति शूद्राणाञ्चानार्य इति नामधेयमस्तीति पूर्वमेवालिखाम। वेदेन खल्वेवमभिधीयमाने वैदेशिकानां मिथ्याकल्पनाप्रसूतं को हि नाम शक्नोति सम्मन्तुं धीमान्नरः। किञ्चार्यावर्तीयार्जुनदशरथप्रभृतयः सम्राजो हिमवति पर्वते आर्यदस्यूनां सञ्जातसंग्रामे देवानार्यान् संरक्षितुमसुराँश्च पराजेतुं देवानां साहाय्यमाचरन्। एतेनार्यावर्तं परितो हिमवतः पूर्वाग्नेयदक्षिणनैर्ऋत्यपश्चिमवायव्योत्तरेशानदिग्वास्तव्यानां मनुजामसुर इति नामेति सिद्ध्यति। यदा यदा हिमालयप्रदेशस्था आर्यानभिषेणयन्ति स्म तदा तदात्रत्या राजानः सम्राजश्चोत्तरादिदेशेषु आर्याणां साहाय्यमनुतिष्ठन्ति स्म। यत्तु दक्षिणस्यां दिशि श्रीरामचन्द्रेण सह रावणस्य जन्यमजनि तन्न देवासुरसंग्रामशब्देनाख्यायतेऽपि तु रामरावणयोरार्यरक्षसां वा युद्धमित्यभिधीयते। "ईरानतः समागतैरार्यैरत्रत्यान् वन्यानादिमान् विजित्य निष्कास्य च भारतमधिगतमिति" न क्वापि संस्कृतग्रन्थे, इतिहासे वा क्वचित् प्रतिपाद्यते। कथं पुनर्वैदेशिकानां लेखो मान्यतामर्हति। किञ्च—

**म्लेच्छवाचश्चार्यवाचः सर्वे ते दस्यवः स्मृताः।**

—मनु० १०।४५

**म्लेच्छदेशस्त्वतः परः।**—मनु० २।२३

आर्यावर्त्तादपरे जनपदा दस्युदेशा म्लेच्छदेशाश्चोच्यन्ते। एतेन इदमपि सिद्धं भवति यदार्यावर्तादितरेषु आपूर्वदेशादीशानोत्तरवायव्यपश्चिमदेशेषु कृतवसतीनां दस्युम्लेच्छासुरनामानि। नैर्ऋत्यदक्षिणाग्नेयदिक्षु चार्यावर्त्तापरदेशवासिनां नराणां राक्षस इति नामधेयमासीदिति। साम्प्रतमपि कृष्णाङ्गानां—(हबशी)—आकृतिर्यथा राक्षसानां वर्ण्यते तथैव भयावहा

दृश्यते। आर्यावर्तीयमानवानां चरणतले विद्यमानत्वात् तत्राधिवासिनाञ्च नागाह्वयपुरुषस्य वंशधरत्वादार्यावर्तादधः प्रदेशं पातालं तन्निवासिनश्च नागान्प्रचक्षते। तेषाञ्च नागवंशिनः—नागाह्वयपुरुषवंशजा नराधिपा भवन्ति स्म। तत्रत्यामेव राजदुहितरमुलूपीनामिकामर्जुनः पर्यणैषीत्। इक्ष्वाकुमारभ्य कौरवपाण्डवान् यावत् विश्वस्मिन्महीमण्डले आर्याणामाधिपत्यम्, आर्यावर्ताद्भिन्नदेशेष्वपि वेदानामल्पः प्रचारश्च समभवत्। ब्रह्मणः सूनुर्विराट्, विराजो मनुः मनोर्मरीच्यादयो दश, एषां स्वायम्भवादयः सप्त राजानस्तेषामपीक्ष्वाकुप्रमुखाः लोकपाला आर्यावर्तस्य प्रथमे नरपतयोऽभवन्। यैरयमार्यावर्तो वासितः खलु। साम्प्रतं दुर्विपाकादार्याणामालस्यप्रमादाभ्यां पारस्परिकविरोधाच्च कैव कथान्यदेशराज्यस्य नास्त्यार्यावर्तेऽपि साम्प्रतमार्याणामखण्डमकुतोभयं स्वतन्त्रं स्वाधीनं राज्यम्। यत्किञ्चिदस्ति तदपि वैदेशिकैः पद्भिराक्रम्यते। केवलमल्पीयांसो राजानः स्वतन्त्राः। समागच्छत्सु दुर्दिनेषु देशवासिभिर्नानाविधानि दुःखानि ननु भुज्यन्ते। वैदेशिकेषु नितराम्प्रजाः सुखयितुं यतमानेष्वपि स्वदेशोद्भवानामेव राज्यमनुत्तमं भवति सर्वतः। मतमतान्तराग्रहशून्यमात्मीयपरेषां पक्षपातविरहितं पितराविव सानुकम्पं प्रजासु न्यायदयासंयुतमपि वैदेशिकानां राज्यं नास्तिपूर्णसुखप्रदम्। परं पृथक् पृथक् भाषाणां शिक्षापद्धतीनां व्यवहारस्य चाग्रहपरित्यागः सर्वथैव दुष्करः। न चास्मादृते परस्परस्योपकृतिरभिप्रायो वा शक्यः साधयितुम्। तस्माद् वेदादिशास्त्रेषु वर्णितानां व्यवस्थेतिहासानां सम्मानम्भद्रपुरुषोचितमस्ति।

प्र०—ननु जगतस्समुत्पत्तौ कियन्ति वर्षाणि व्यतीतानि ?

उ०—एको वृन्दः षण्णवतिः कोटयः कतिचिल्लक्षाणि कतिपयसहस्राणि च वर्षाणि जगदुत्पत्तौ वेदानां प्रकाशे च व्यतीतानि। विशेषं द्रष्टुकामैरस्मन्निर्मितायां 'भूमिकायां' द्रष्टव्यम्। अतिसूक्ष्मं शकलं यद् भेत्तुं न शक्यते स परमाणुः। एकत्रिताः षष्टिपरमाणवोऽणुः। अणुद्वयमेकं द्व्यणुकं स्थूलवायुः। द्व्यणुकत्रयस्याग्निः, द्व्यणुकचतुष्टयस्यापः, द्व्यणुकपञ्चकस्येयं पृथिवी अर्थात् द्व्यणुकत्रयस्यैकस्त्रसरेणुः तस्यापि द्विरावृत्ततया पृथिव्यादयो दृश्यपदार्थाः सम्भवन्ति। एवमेव क्रमेण संयोज्य परमाण्वादीन् परमात्मना भूगोलादिकं निर्मितम्।

प्र०—कोन्विमां धारयति ? तत्र कश्चिच्छेषस्यार्थात् सहस्रफणावतः सर्पस्य मूर्ध्नि व्यवस्थितेयं महीति संचष्टे। वृषभस्य शृङ्ग इत्यपरः, निराधारा इत्यन्यः, पवनाधारेति तुरीयः, सूर्याकर्षणेनाकृष्टास्वस्थानस्थितेति पञ्चमः, गौरवादियं मही अधोऽध आकाशमाविशतीति षष्ठः खलु भाषते। तत्र कं वयं सत्यं विजानीमः ?

उ०–यः खलु महीमिमां शेषमूर्ध्नि वृषभशृङ्गे वा व्यवस्थितामभिधत्ते स तावदिदं प्रष्टव्यः "ननु सर्पवृषयोः पित्रोर्जन्मसमये कुत्रासीत् व्यवस्थिता ? किमाधाराश्च सर्पवृषभादयः ?" इति। वृषभवादिभिर्यवनैस्तु जोषमासिष्यते। सर्पवादिभिः—सर्पः कूर्मम्, कूर्मो वारि, जलमग्निम्, वह्निर्वायुम्, पवनश्चाकाशमधितिष्ठतीति समभिधास्यते। सर्वमिदं कमध्यास्त इत्यनुयुक्तैस्तैरसंशयं परमेश्वर इति प्रतिवक्ष्यते। शेषवृषभौ कस्य तनयाविति पुनः पृष्टैस्तैरित्थमभिधास्यते "कश्यपकद्र्वोः शेषः, गोश्च बलीवर्दः, कश्यपो मरीचेः, मरीचिर्मनोः, मनुर्विराजः, विराट् च ब्रह्मणस्तनयः, ब्रह्मा चाद्यसृष्टेरासीत्"। अत्रेदं विचारणीयम्, "शेषस्य जन्मनः प्रागेव पञ्च वंशश्रेण्यः समभवन् कस्तदानीं दधे महीमिमामर्थात् कश्यपस्य जन्मनि किमाधारासीद्" इति पृष्टे उत्तरं दातुमशक्नुवन्तः कलहायमानाः स्थास्यन्ति। अस्यायं वास्तविकोऽभिप्रायः—यः शिष्यते स शेषः। केनचित् कविना **"शेषाधारा पृथ्वीत्युक्तम्"** तत्रापरेणाबुद्ध्वा तदभिप्रायं मुधैव सर्पकल्पना प्राकल्पि। वस्तुतस्तूत्पत्तिप्रलयाभ्यामवशिष्यमाणतया पृथग्भावेन परमात्मैव शेषस्तदाधारैव चेयं पृथिवी।

**स॒त्येनोत्त॑भिता॒ भूमिः॑** ।—ऋ० २०।८५।१

सत्येन कालत्रयाबाधितेन कदाप्यविनश्यता परमात्मनैव आदित्यपृथिव्यौ सर्वे च लोका दधिरे।

**उ॒क्षा दा॑धार पृथि॒वीमु॒त द्याम्** ॥

—ऋग्वेदस्येदं वचनम्।

इममेवोक्षाशब्दं वीक्ष्य कश्चिद् वृषभमकल्पयत्। अस्ति हि वृषभस्यापि नामधेयमुक्षेति परं मूढधिया तेन नाधिगतमेतावदपि यदियतो महतो ब्रह्माण्डस्य धारणसामर्थ्यमनडुहि कुतः समेष्यतीति। तस्मादुक्षेति वर्षाभिर्निखिलजगतः सेचकतया सूर्यनाम। तेनात्मनः समाकर्षणेन विवृतेयं पृथिवी। परं सूर्यादीनामपि धारक ऋते परमात्मनो नान्यः कश्चिदस्तीति।

**प्र०**—इयन्महान्ति भूमण्डलानि परमेश्वरः कथं धारयितुं शक्नोति।

**उ०**—अनन्ताकाशस्य पुरस्तान्महान्तो लोकाः, सागरस्य सम्मुखे पानीयबिन्दव इव, अपरिमेयब्रह्मणः पुरतोऽसंख्याता इमे लोका एकस्यापि परमाणोः साम्यं नावहन्ति। स हि परमेश्वरो बहिरन्तः सर्वत्र व्यापकः। तथा च—**"वि॒भूः प्र॒जासु॑"** इति यजुषि समाम्नायते। सकलप्रजासु परिव्याप्तः परमेश्वरः सर्वान् धारयति। यदि हि नाम स ख्रीष्टीयमोहम्मदपौराणिकानां मतानुसारेण विभुर्नाभविष्यत्तर्हि सकलामिमां सृष्टिं

धारयितुं नाशक्ष्यत्। नहि प्राप्तिमन्तरेण कोऽपि कमपि धारयितुमीष्टे। "अन्योन्याकर्षणेन सर्वे इमे लोकाः संधारिताः कथं परमेश्वरस्य धारणमपेक्ष्यत इति चेदुच्येत" तत्रेदं प्रतिवक्तव्यं सृष्टिरियमनन्ता सान्ता वा? अनन्तत्वं तावन्न सम्भवति। नह्याकृतिमद्वस्त्वनन्तं भवति। सान्तत्वे तु लोकानां पर्यन्तसीम्नि यत्र नास्त्यपरो लोकस्तत्र कस्याकर्षणेन धारणमभ्युपेष्यते? कस्यचिद् वस्तुनस्समुदायेन परिगणनं समष्टिः, एकैकस्य पृथक्-पृथक् परिगणनं व्यष्टिरित्युच्यते। यथाऽनोकहनिवहानां समुदायस्य संख्यानं वनमिति समष्टिः। एकैकस्य तरोः परिसंख्यानं व्यष्टिरिति। सर्वे भूगोलाः समष्टिरूपेण जगदित्युच्यन्ते। समष्टिरूपस्याखिलब्रह्माण्डस्य जगतो धारयिता स्रष्टा च विना परमेश्वरमन्यः कोऽपि नास्ति। य एव निखिलं जगन्निर्माति स एव—

**स दाधार पृथिवीं द्यामुतेमाम्॥**—यजु० अ० १३। मं० ४

प्रकाशरहितपृथिव्यादिलोकलोकान्तरपदार्थानां सप्रकाशानाञ्च सूर्यादीनां विरचनं धारणं परमात्मैव कुरुते। सर्वत्र व्यापक एव सर्वस्य जगतः कर्ता धारयिता च।

**प्र०**—पृथिव्यादयो लोकाः परिभ्रमन्त्युत स्थिराः सन्ति?

**उ०**—परिभ्रमन्ति।

**प्र०**—अत्र केचित् "सूर्यः परिभ्रमति नत्वियं पृथिवी, अपरे पुनः पृथिवीयं परिभ्रमति न सूर्यः" इति संचक्षते तत्र कान् सत्यान् मन्यामहे?

**उ०**—उभावपीमौ किञ्चिदतथ्यं वदतः। वेदे ह्येवं पठचते—

**आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः। पितरं च प्रयन्त्स्वः।**

—यजु० अ० ३। मं० ६

अस्यायमभिप्रायः—अयं पृथिवीगोलः सहाद्भिः सूर्यं परितो भ्राम्यति। तस्माद् भूमिरियं परिभ्रमतीति सिद्धं भवति।

**आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यं च।**
**हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्॥**

—यजु० अ० ३३। मं० ४३

वर्षादीनां कर्ता प्रकाशस्वरूपस्तेजोमयः रमणीयस्वरूपः सविता सूर्यः सर्वेष्वप्राणिप्राणिष्वमृतरूपां वृष्टिमात्मनः किरणैरमृतं वा निवेशयन् सकल-मूर्तिमन्ति द्रव्याणि दर्शयन्नखिललोकैस्सहाकर्षणगुणेन स्वपरिधौ परिभ्रमति नतु कमपि लोकं परितो भ्रमति। यथा ह्यस्मिन् सौरमण्डले एक एव सूर्यः सर्वं प्रकाशयति तथैव प्रतिसौरमण्डलं सवितैकः प्रकाशको लोकान्तराणि च प्रकाश्यानि वर्तन्ते। तथा हि—

**दिवि सोमो अधि श्रितः॥**—अथ० कां० १४। अनु० १। मं० १

चन्द्रवत् पृथिव्यादयोऽपि लोकाः सूर्यप्रकाशेनैव प्रकाशिता भवन्ति। परं रात्रिरहश्च सर्वदा सर्वत्र वर्तमानं भवति। पृथिव्यादिलोकानां हि परिभ्रमणेन तेषां यावान् भागः सूर्यसम्मुखे समागच्छति तत्र दिनं, यावाँश्च तत्पृष्ठदेशे समेति तत्र रात्रिः, अर्थात् उदयास्तसन्ध्यामध्याह्नमध्यरात्रप्रभृतयः सर्वं एव कालावयवा देशदेशान्तरेष्वपि सर्वदा विद्यमाना भवन्ति। यदार्यावर्ते भानुरुज्जिहीते तदा पातालदेशे (अमरीकादेशे) अस्तमयते। यदा चार्यावर्ते अस्तं गच्छति तदा पातालदेशे समुदेति। यदा चार्यावर्ते दिनक्षपयोर्मध्यं भवति तदानीं पातालदेशे क्रमेण क्षपावासरयोर्मध्यं भवति। येत्वत्र सूर्यः परिभ्रमति नतु पृथिवीति वदन्ति न ते किमपि जानन्ति। एवं हि सति अनेकसहस्रवर्षाणां रात्रयो दिनानि च जायेरन्। यतो हि भानुरयम्-अस्याः पृथिव्या **लक्षशो गुणो** दीर्घतरोऽनेककोटिक्रोशेषु चापि वर्तते। अत एवायं "ब्रध्नः" इत्यभिधीयते। यथा हि राजिकासमक्षं गिरेः परिभ्रमणे व्यत्येति महान् कालः परं कृष्णिकाभ्रमणे न तावान् कालः समपेक्ष्यते तथैव महीभ्रमणेनैव यथावन्निशावासरौ भवतः, नतु सूर्यस्य परिभ्रमणेन। ये चापि भानुं स्थितिमन्तमाहुस्तेऽपि न सन्ति ज्योतिर्विद्याविदः। अभ्रमन् हि सूर्य एकस्याः राशेः स्थानादपरां राशिं न संक्रामेत्। अपि च भारवन्तः पदार्था भ्रमणिकामन्तरेण आकाशे नियतस्थाने स्थातुं न शक्नुवन्ति। यच्चाप्यत्र जिनधर्मावलम्बिनः "पृथिवीयं न परिभ्रमति अपित्वधोऽधोऽवतरति। केवले जम्बूद्वीप एव सूर्यद्वयं चन्द्रद्वयञ्च विद्यत इत्याहुः" ते तु भङ्गमदसम्मूढा इव लक्ष्यन्ते। अधोऽधः प्रवेशे हि पृथिव्याः समन्तात् पवनचक्रोत्पादासम्भवादियं जगती खल्ववश्यं सहस्रधा विदीर्येत। किञ्चोपरितनवासिभिर्निम्नप्रदेशवासिनामपेक्षयाऽऽधिक्येन वायुस्पर्शः समनुभूयेत। वायोर्गतिश्चापि सर्वदैकविधा स्यात्। सूर्यचन्द्रौ द्वौ द्वौ चेद् भवेतां तर्हि रात्रेः कृष्णपक्षस्य च विनाश एव स्यात् तस्मादेकस्या भुवः समीपे एकश्चन्द्रोऽनैकभुवां मध्ये च एक एव सूर्यस्तिष्ठति।

प्र०—सूर्यचन्द्रनक्षत्राणि किं वस्तु? तत्र मनुष्यादीनां सृष्टिर्विद्यते न वा?

उ०—इमे सर्वं एव लोकाः सन्ति तेषु च मनुष्यादिप्रजा अपि निवसति तथा च—

**एतेषु हीद ँ् सर्वं वसु हितमेते हीद ँ् सर्वं वासयन्ते तद्यदिद ँ् सर्वं वासयन्ते तस्माद्वसव इति।** —शत० का० १४। प्र० ६। ब्रा० ९। क० ४

पृथिव्यप्तेजोवाय्वाकाशचन्द्रनक्षत्रसूर्या वसव उच्यन्ते? अत्रैव सर्वे पदार्थाः प्रजाश्च संवसन्ति एते चैव सर्वान् वासयन्ति। सर्वेषां निवासभूमि-

त्वादेते वसवोऽभिधीयन्ते। सूर्यचन्द्रताराणां पृथिवीवद् वसुत्वात्तत्र प्रजा-सद्भावे कः संशयः ?

यदास्य परमात्मनोऽयमल्पतरो लोकः मनुष्यादिप्राणिभिः परिपूर्णस्तदा किमिमे लोकारिक्ता भविष्यन्ति। नहि परमेश्वरस्य किमपि कार्यं निष्प्रयोजनं भवति। अपरिसंख्येयेषु पुनरेषु लोकेषु मनुष्यादिसृष्टचभावे साफल्यमेषां दुःशकं वक्तुम्। तस्मात् सर्वत्र मानवादिसृष्टिर्विद्यत इत्यभ्युपेतव्यम्।

**प्र०**—ननु यथाऽस्मिन् देशे मानवादिप्राणिनामाकृतिरवयवसंस्थानञ्च वर्तते, तथैवापरेषु लोकेषु आहोस्विद् विपरीतम् ?

**उ०**—सम्भाव्य आकृतिषु कियानपि भेदः। यथाऽस्मिन् भूमण्डले चीनाफ्रीकार्यावर्तयोरोपादिदेशवासिनामङ्गेषु वर्णरूपादिष्वाकारेषु चाल्पीयान् भेदः सञ्जायते तथैव लोकान्तरेष्वपि भेदः सम्भवः। परं यस्या जातेर्यादृशी सृष्टिरत्र वर्तते तस्या जातेर्लोकान्तरेष्वपि तादृश्येवास्ति, किञ्चात्र शरीरस्य यत्प्रदेशे नेत्रादियदङ्गं वर्तते लोकान्तरेष्वपि तत्तत्प्रदेश एव तत्तदङ्गानि विद्यन्ते। यस्माद्धि—

सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्।
दिवं च पृथिवीं चान्तरिक्षमथो स्वः॥

—ऋ० मं० १०। सू० १९०। मं० ३

धात्रा परमेश्वरेण सूर्यचन्द्रद्युभूम्यन्तरिक्षाणि तत्रत्यसुखानि शेषसकल-भावाश्च पूर्वकल्पवदस्मिन्नपि कल्पे अस्यां सृष्टौ सर्वलोकान्तरेषु च निर्मिताः। नास्ति कियानपि भेदः।

**प्र०**—येषां वेदानामत्र प्रकाशस्तेष्वपि लोकेषु तेषामेव प्रकाश उतान्येषाम् ?

**उ०**—तेषामेव। यथैकस्य नराधिपस्य तदधिष्ठितसर्वदेशेषु समानैव राज्यव्यवस्था नीतिक्रमश्च भवति तथैव राज्ञामधिराजस्य परमात्मनो वेद-प्रतिपादिता नीतिर्विश्वस्मिन्नपि सृष्टिसाम्राज्ये समानैव।

**प्र०**—यदा खल्विमे जीवात्मानः प्रकृतिस्थतत्त्वानि चानादीनि परमेश्वरानिर्मितानि च तदा परमात्मनोऽधिकारोऽप्यत्र न भवेत्। सर्वे हि ते स्वतन्त्राः।

**उ०**—यथा भूमिपालास्तेषां प्रजाश्च समकाला भवन्ति, भवन्ति च प्रजा राज्ञ आयत्तास्तथैव जीवात्मानो जडपदार्थाश्च परमात्मनोऽधीनाः। यदा हि परमेश्वरो निर्माति निखिलं जगत् प्रयच्छति कर्मफलं जीवेभ्यः, रक्षति सर्वान् यथावत्, धत्ते चानन्तसामर्थ्यं तदा कथन्नाम स्वल्पसामर्थ्योऽयं जीवात्मा जडपदार्थाश्च तदधीना न भवेयुः। अतो जीवात्मा कर्मानुष्ठाने

स्वतन्त्रः, फलोपभोगे च परमात्मनो व्यवस्थया परतन्त्रः। तथैव सर्वशक्तिमान् परमेश्वरः सर्वविश्वस्य सर्जनं पालनं संहारञ्च कुरुते।

अतः परं नवमसमुल्लासे विद्या-अविद्या-बन्ध-मोक्षविषयानधिकृत्य व्याख्यास्यामः।

**इति श्रीमद्दयानन्दसरस्वतीस्वामिकृते सत्यार्थप्रकाशे शंकरदेवपाठकेन संस्कृतभाषयाऽनूदिते सृष्ट्युत्पत्तिस्थितिप्रलयविषये ऽष्टमस्समुल्लासः सम्पूर्णः ॥८॥**

# अथ नवमसमुल्लासारम्भः

## अथ विद्याऽविद्याबन्धमोक्षविषयान् व्याख्यास्यामः

**विद्यां चाऽविद्यां च यस्तद्वेदोभयं सह ।**
**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥**

—यजु० अ० ४० । मं० १४

यो मानवो विद्याविद्ययोः स्वरूपं सहैव वेत्ति सोऽविद्यया-कर्मोपासनया मृत्युं तीर्त्वा विद्यया यथार्थज्ञानेन मोक्षं लभते । अविद्याया लक्षणम्—

**अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ।**

—पात० द० साधनपादे सू० ५

संसारदेहादिष्वनित्येषु नित्यताख्यातिरर्थात् यदिदं कार्यं जगद्दृश्यते श्रूयते च तन्नित्यं स्थास्यति (अनादिकालात् प्रवृत्तं, प्रवर्तिष्यते च निरवधिम्) योगबलेन दिवौकसामेतदेव शरीरं सर्वदा तिष्ठतीति, सेयमनित्येषु नित्यस्वरूपा विपरीतबुद्धिरविद्यायाः प्रथमाङ्गम् । अशुचिषु मलमयस्त्र्यादेर्गुप्ताङ्गेषु, मिथ्याभाषणस्तेयादिषु चापवित्रेषु पावित्र्यबुद्धिर्द्वितीयम् । विषयोपभोगादिषु दुःखेषु सुखात्मिका बुद्धिस्तृतीयम् । अनात्मन्यात्मबुद्धिस्तुरीयम् । चतुर्विधमिदं विपरीतज्ञानमविद्येत्युच्यते, अतोऽन्यत्–अर्थादनित्येऽनित्यताज्ञानं, नित्ये नित्यताज्ञानं, अपवित्रेऽपवित्रज्ञानं, दुःखे दुःखज्ञानं, सुखे सुखज्ञानं, अनात्मन्यनात्मज्ञानम्, आत्मनि चात्मज्ञानं विद्येति अर्थात् **वेत्ति यथावत् तत्त्वपदार्थस्वरूपं यया सा 'विद्या', यया तत्स्वरूपं न जानति भ्रमादन्यस्मिन्नन्यन्निश्चिनोति यया सा 'अविद्या'** । एवञ्च कर्मोपासनयोरविद्यात्वमेव, तयोर्हि बाह्याभ्यन्तरव्यापारविशेषत्वाज्ज्ञानविशेषाभावात् । अतएवास्मिन् मन्त्रे "नहि कोऽपि ऋते पुण्यकर्मभ्यो परमात्मनः समुपासनायाश्च मृत्युदुःखमुत्तरति" इत्युक्तम् । एतेन हि "पुण्यकर्मभिः पवित्रोपासनया पवित्रज्ञानेनैव च कैवल्यं, तदितरैरलीकभाषणाद्यपुण्यकर्मभिः पाषाणमूर्त्यादेः समुपासनया मिथ्याज्ञानेन च बन्धः" इत्युक्तं भवति । कोऽपि मानवः क्षणमात्रमपि कर्मणा उपासनया, ज्ञानेन च विरहितो न भवति । तस्मात्सत्यभाषणादिधर्म्यकर्मणामनुष्ठानं मिथ्याभाषणाद्यधर्म्यकर्मणां परित्याग एव च मोक्षसाधनम् ।

**प्र०**—ननु केन मुक्तिर्न लभ्यते ?

उ०—बद्धेन।

प्र०—कः खलु बद्धः ?

उ०—अधर्माज्ञाननिरतो जीवात्मा।

प्र०—स्वाभाविकौ नैमित्तिकौ वा बन्धमोक्षौ ?

उ०—निमित्तजन्यौ हि तौ। यदि नाम बन्धमोक्षौ स्वभावतः स्यातां तर्हि कदापि तयोर्निवृत्तिर्न भवेत्।

**प्र०—न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।**
**न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥**

—गौडपादीयकारिका प्र० २। का० ३२

जीवात्मनो ब्रह्मसमत्वेन वस्तुतो जीवस्य नास्ति निरोधादिकम्—न जात्वावरणमुपैति, न जायते, न बद्धचते, न किञ्चिदपि साधयति, न मुमुक्षते, न चायं जातु मुच्यते, परमार्थतो ह्यबद्धस्य मुक्तिरेव का ?

उ०—असत्यं नव्यवेदान्तिनामिदं वचनम्। जीवो ह्यल्पस्वरूपतया समुपैत्यावरणम्। देहेन सह व्यक्तिरूपं परिगृह्णाति जन्म। पापकर्मणां फलोपभोगरूपबन्धेषु सज्जते। तस्य मोक्षोपायाननुतिष्ठति। दुःखान्मुमुक्षते। दुःखेभ्यश्च परिमुच्य सम्प्राप्य च परमानन्दं परमेश्वरं मोक्षमप्युपभुङ्क्ते।

प्र०—ननु देहान्तःकरणयोरेव सर्वे इमे धर्मा, नतु जीवात्मनः। जीवो हि पापपुण्यविवर्जितः साक्षिमात्रं, शीतोष्णादयः शरीरादेरेव धर्माः, आत्मा तु पुनर्निर्लेपः।

उ०—देहान्तःकरणे जडत्वात् शीतोष्णे नानुभवतः। यस्तु चेतनो मानवादिः स्पृशति शीतोष्णं तेनैव तदनुभूयते। प्राणा अप्यचेतनत्वान्न क्षुध्यन्ति नापि तृष्यन्ति किन्तु प्राणवन्तो जीवा एव क्षुत्तृड्भ्यां बाध्यन्ते। अचेतनत्वान्मनोऽपि न हृष्यति नापि शोचति। अपितु तेन जीव एव हर्ष-शोकौ सुखदुःखौ चानुभवति। यथा चायमात्मा बाह्यैः श्रोत्रादिकरणैः सदसच्छब्दादिविषयान् परिगृह्य सुखं दुःखं वा विभावयति। तथैवान्तः-करणेन-मनोबुद्धिचित्ताहङ्कारैः सङ्कल्पविकल्पाध्यवसायस्मृतिगर्वाणां कर्ता स एव दण्डभाङ्मान्यश्च जायते। यथा वासिना निहन्तैव दण्डचते न त्वसिः। एवं देहेन्द्रियान्तःकरणप्राणरूपसाधनैर्निर्वर्तयिता सदसतां कर्मणां जीवः सुख-दुःखमुपभुङ्क्ते। नास्ति जीवः कर्मणां साक्षी अपि तु कर्ता भोक्ता च। कर्मणां साक्षी तु एकोऽद्वितीयः परमात्मैव। कर्मणां सम्पादयिताऽऽत्मैव कर्मसु लिप्यते। स च जीवो नेश्वरो नापि साक्षी कर्हिचिद्भवति।

प्र०—ननु जीवो ब्रह्मणः प्रतिबिम्बं यथा च भग्ने दर्पणे बिम्बस्य न किमपि परिहीयते तथैवान्तःकरणे ब्रह्मणः प्रतिबिम्बरूपो जीवो यावदन्तः-करणोपाधिमवतिष्ठते, विनष्टे पुनरन्तःकरणे मुक्त एव जीवः।

उ०—बालप्रलपितमिदम्। प्रतिबिम्बं हि साकारस्य साकारे परिपतति दर्पणे मुखस्येव, तौ हि साकारावन्योऽन्यतः पृथक् चापि वर्तेते। अपृथग्भूतस्यापि प्रतिबिम्बं न सम्भवति। अतो ब्रह्मणो निराकारत्वात् सर्वव्यापकत्वाच्च प्रतिबिम्बं सुतरामसम्भवम्।

प्र०—गभीरे निर्मले पयसि निराकारस्य विभोर्नभसः प्रतिबिम्बमिव स्वच्छान्तःकरणे परमात्मनः आभासो दृश्यते, अतएवायं चिदाभास इत्युच्यत इति।

उ०—अहो बालबुद्धेरयं भवतोऽसत्प्रलापः। आकाशं ह्यदृश्यं न कोऽपि तत् चक्षुषा वीक्षितुं प्रभवेत्। आकाशात्स्थूलोऽपि वायुर्यदा न लोच्यते लोचनैस्तदा कुत एव विहायो द्रष्टुं शक्यते।

प्र०—ननु यदिदमुपरि नीलं धूलिधूसरं किमपि वीक्ष्यते तत्किं नास्त्याकाशम्।

उ०—नहि।

प्र०—तर्हि किन्तत्?

उ०—पृथिव्यप्तेजसां विभिन्नास्त्रसरेणवो दृश्यन्ते। यश्चापि तत्र नीलिमा विलोक्यते तदपां बाहुल्यं यद्धि वर्षति तदेव नीलम्। यत्तु तत्र पांशुलत्वं समवलोक्यते तत् पृथिवीतः समुड्डीय वायौ परिभ्रमन्तो रजःकणास्तेषामेव प्रतिबिम्बमम्भसि दर्पणे वा दृश्यते नतु तदाकाशस्य प्रतिबिम्बम्।

प्र०—ननु यथा घटाकाश-मठाकाश-मेघाकाश-महदाकाशप्रभृतयो भेदव्यवहारा भवन्ति तथैव ब्रह्मणो ब्रह्माण्डान्तःकरणोपाधिभेदेनेश्वरो जीव इति नामधेयं भवति। विनष्टेषु पुनर्घटादिषु केवलं महाकाश एवोच्यते।

उ०—एतदप्यविदुषां प्रलपितम्। नहि जात्वाकाशः क्षीयते दीर्यते वा। व्यवहारेऽपि 'घटमानय' इत्येव व्यवह्रियते। नहि कोऽपि 'घटाकाशमानय' इति अभिधत्ते। तस्मान्नेदं सत्यम्।

प्र०—नन्वेवमपि यथा सागरे मत्स्या अन्ये वा क्षुद्रजन्तवः, आकाशे पतत्त्रिणश्च परिभ्रमन्ति तथैव चिदाकाशब्रह्मणि सर्वान्तःकरणानि परिभ्रमन्ति। अचेतनान्यपि तानि सर्वव्यापकस्य परमात्मनः सत्तयाग्निसामीप्येन लौहवच्चैतन्यं प्रतिपद्यन्ते। तत्रान्तःकरणानि मत्स्यशकुन्यादय इवेतस्ततो गच्छन्ति, ब्रह्म तु व्योमवदचरमेवावतिष्ठते, 'अतो जीव एव ब्रह्म' नास्त्यस्यां मान्यतायां कोऽपि दोषः।

उ०—युष्माकमयं दृष्टान्तोऽप्ययुक्तः। यदि हि नाम सर्वव्यापि ब्रह्मान्तःकरणेषु प्रकाशमानं सञ्जीवत्वमापद्यते तर्हि तत्र सर्वज्ञत्वादयो गुणाः संवसन्ति नवेति वक्तव्यम्? सावरणत्वेन नास्ति तत्र सर्वज्ञतेति चेत्तर्हि तद् ब्रह्माऽवृतन्नश्यमनश्यं वा? अखण्डितं चेत्तन्मध्ये कोऽपि व्यवधानमापादयितुं

न शक्नोति। आवरणाभावे च कुतो न सर्वज्ञत्वम्? विस्मृत्यात्मनः स्वरूपमन्तःकरणेन सह चलतीव नतु स्वरूपेणैति (चलति) चेदुच्येत तदप्यसमञ्जसम्। यदा हि न स्वयं चलति ब्रह्म तदान्तःकरणं विहाय पूर्वमधिगतं प्रदेशं यत्र यत्राग्रे प्रस्थास्यते तत्रत्यं ब्रह्म भ्रान्तं ज्ञानशून्यञ्च भविष्यति, अन्तःकरणेन परित्यक्तप्रदेशस्थं ब्रह्म सर्वज्ञं पवित्रं मुक्तञ्च भविष्यति। एवमन्तःकरणानि सार्वत्रिकं ब्रह्म सन्दूषयिष्यन्ति। बन्धमोक्षौ च प्रतिक्षणं भविष्यतः। अपि च भवताम्मतानुसारेण दृष्टपूर्वं श्रुतचरं वा न स्मर्येत केनापि जीवेन। नहि साम्प्रतं तद्ब्रह्म वर्तते येन पूर्वं दृष्टं श्रुतं वा। तस्मान्न जातु ब्रह्म जीवो जीवश्चापि ब्रह्म सम्भवितुमर्हति, नापि तयोरैक्यं कर्हिचित् सम्भवति। किन्तु नित्यमन्योऽन्यतो भिन्नौ तिष्ठतः।

**प्र०**—सर्वमिदमध्यारोपमात्रम्। "अन्यवस्तुनि वस्त्वन्तरस्थापनम्" **अध्यारोपः**। अत्रापि ब्रह्म वस्तुनि सकलजगतस्तद्व्यवहारस्य चाध्यारोपेण जिज्ञासुरवबोध्यते। वस्तुतस्तु सर्वं ब्रह्मस्वरूपमेव।

**उ०**—को नु विदधात्यध्यारोपम्?

**प्र०**—जीवः।

**उ०**—जीवशब्देन किमभिप्रेयते?

**प्र०**—अन्तःकरणावच्छिन्नञ्चेतनम्।

**उ०**—नन्वन्तःकरणावच्छिन्नं चेतनं ब्रह्मव्यतिरिक्तं तदेव वा ब्रह्म?

**प्र०**—तदेव ब्रह्म।

**उ०**—तर्हि किं ब्रह्मणैव स्वात्मनि मुधैव कल्पितञ्जगत्?

**प्र०**—भवतु नाम, किमेतेन ब्रह्मणः परिहीयते?

**उ०**—मिथ्याकल्पकं ब्रह्म न भवति किमसत्यवादि?

**प्र०**—नहि। यत्किञ्चिद्धि मनसा कल्प्यते वचसा वाभिधीयते तत्सर्वमसत्यम्।

**उ०**—तर्हि मनोवचोभ्यां मिथ्याकल्पकं मृषाभिधायि च भवतां ब्रह्म, कल्पितं मिथ्यावादि च सञ्जातं न वा?

**प्र०**—भवतु, इष्टापत्तिरेवास्माकम्?

**उ०**—अहो! अलीकभाषिणो वेदान्तिनः! भवद्भिः सत्यस्वरूपः, सत्यकामः, सत्यसङ्कल्पः, परमेश्वरो मिथ्याचारः समकारि। अपि नेदं भवतां दुरवस्थाकारणम्? कस्यामुपनिषदि कस्मिन्वा सूत्रे वेदे वा "परमेश्वरो मिथ्याभिधत्ते मिथ्यासङ्कल्पश्च" इत्युपन्यस्तम्। "कृतापराधोऽपि चौर एव कोटपालं दण्डयतीति" लौकिकीं गाथामनुसरतीव भवताम्मतमिदम्। तत्र हि कोटपालेन दस्योर्दण्डनं न्याय्यमेव, परं तस्करेण कोटपालस्य दण्डनं सर्वथानुचितम्, एवं मिथ्यासङ्कल्पयितारोऽलीकभाषिणश्च भवन्तो मुधैवात्मनो

दोषेण दूषयन्ति परमेश्वरम् । अथ चेत् ब्रह्म एकदेशि, मिथ्याज्ञानि, मिथ्यावादि, मिथ्याकारि च भवेत्तर्हि सर्वमनन्तं ब्रह्म तादृशमेव सम्पद्येत । परं तदेकरसं, सत्स्वरूपं, सत्यमानि, सत्यवादि, सत्यकारि च वरीवर्ति । एते सर्वे एव दोषा युष्माकमेव न तु ब्रह्मणः । याञ्च भवन्तो विद्यामिति संगिरन्ते साप्यविद्यैव । युष्माकमध्यारोपोऽपि मिथ्यैव । अब्रह्मण आत्मनो ब्रह्मत्वकल्पनं ब्रह्मणश्चापि जीवत्वसम्मननं मिथ्याज्ञानव्यतिरिक्तं किं भवितुमर्हति ? यः खलु सर्वव्यापको न स जातु जायते परिच्छिन्नो ज्ञानशून्यश्च । न च कदापि परिपतति बन्धेषु । जीवात्मा हि ज्ञानशून्यः, परिच्छिन्नः, एकदेशी, अल्पस्वरूपोऽल्पज्ञश्च भवति नतु सर्वज्ञं सर्वव्यापि ब्रह्म ।

## अथ मुक्तिबन्धयोर्वर्णनम्

**प्र०**—ननु किन्नाम मुक्तिः ?

**उ०**—मुञ्चन्ति पृथग्भवन्ति जीवात्मानो यस्यां सा **मुक्तिः** ।

**प्र०**—कस्मान्मोक्षः ?

**उ०**—यस्मात्सर्व एव जीवात्मानो मुमुक्षन्ते ।

**प्र०**—कस्मान्मुमुक्षन्ते ?

**उ०**—यस्मान्मोक्तुमभिलषन्ति ।

**प्र०**—कस्मादिच्छन्ति ?

**उ०**—दुःखात् ।

**प्र०**—(दुःखेभ्यः) परिमुच्य कं प्राप्नुवते क्व च निवसन्ति ?

**उ०**—सुखं प्राप्नुवते ब्रह्मण्येव च तिष्ठन्ति ।

**प्र०**—मुक्तिबन्धयोः कानि कारणानि ?

**उ०**—परमात्मनो निदेशपरिपालनेन, अधर्माविद्याकुसङ्गकुसंस्कारादिदुर्व्यसनेभ्यः पृथग्भावेन, सत्यभाषणपरोपकारविद्यानां पक्षपातरहितयोर्न्यायधर्मयोश्च परिवर्धनेन, प्रागभिहितदिशा परमेश्वरस्तुतिप्रार्थनोपासनाभिरर्थाद्योगाभ्यासेन, अध्ययनाध्यापनेन, धर्मेण पुरुषार्थं विधाय ज्ञानोन्नतिसम्पादनेन, सकलोत्तमसाधनानामनुष्ठानेन, सपक्षपातराहित्यन्यायधर्मानुसारेण सकलकर्मणां विधानेन च मुक्तिस्तद्विपरीतैरीश्वराज्ञाभङ्गादिदुष्टकर्मभिर्बन्धश्च सञ्जायते ।

**प्र०**—ननु मुक्तौ लयमेत्ययमात्माऽऽहोस्विद्विद्यमानस्ततः पार्थक्येनावतिष्ठते ?

**उ०**—विद्यमानः ।

**प्र०**—क्व नु तदानीं प्रतिवसति ?

**उ०**—ब्रह्मणि ।

प्र०—क्वास्ति तद्ब्रह्म? स च मुक्तात्मा क्वचिदेकत्र तिष्ठति स्वेच्छया सर्वत्र वा विचरति?

उ०—सर्वत्र परिपूर्णं ब्रह्म। तस्मिन्नेव मुक्तात्मान अव्याहतगतयः सन्तः सविज्ञानं सानन्दञ्च स्वातन्त्र्येण विचरन्ति।

प्र०—प्राप्तमोक्षस्य जीवात्मनः स्थूलशरीरमवतिष्ठते न वा?

उ०—नहि।

प्र०—कथं तर्हि स सुखमानन्दं चोपभोक्तुं क्षमते?

उ०—तत्र तस्य सत्यसङ्कल्पादयः स्वाभाविका गुणाः सामर्थ्यञ्च भवत्येव, केवलं भूतसङ्गः परिहीयते। तथा च शतपथे समाम्नायते—

**शृण्वन् श्रोत्रं भवति, स्पर्शयन् त्वग्भवति, पश्यन् चक्षुर्भवति, रसयन् रसना भवति, जिघ्रन् घ्राणं भवति, मन्वानो मनो भवति, बोधयन् बुद्धिर्भवति। चेतयंश्चित्तम्भवत्यहङ्कुर्वाणोऽहङ्कारो भवति।**

—शतपथ० कां० १४ [४।२।१७]

मोक्षे भौतिकं शरीरमिन्द्रियाणां गोलकानि वा जीवात्मना सह नावतिष्ठन्ते, अपि तु तस्य स्वाभाविकाः शुद्धगुणा एव सन्तिष्ठन्ते। मुक्तौ ह्ययमात्माऽऽत्मीयशक्त्या श्रोतुकामः श्रोत्रम्, स्प्रष्टुकामस्त्वक्, निर्वर्णयँश्चक्षुः (दर्शनसङ्कल्पेन चक्षुः) आस्वादयन् रसना, गन्धग्रहणाय घ्राणम्, सङ्कल्पविकल्पौ समाचरन् मनः, निर्णेतुं बुद्धिः, स्मर्तुं चित्तम्, अहङ्कर्तुं चाहङ्कारो भवति। मुक्तौ जीवात्मनः सङ्कल्पमात्रं शरीरं भवति। यथा देही गोलकैरिन्द्रियाणां कार्यजातमनुतिष्ठति, एवं मुक्तावपि स्वीयसामर्थ्येनाशेषानन्दमुपभुङ्क्ते।

प्र०—कतिविधं कियच्च तस्य सामर्थ्यम्?

उ०—मुख्यतस्त्वेकविधमेव तत्सामर्थ्यं परं बल-पराक्रम-आकर्षण-प्रेरणा-गति-भीषण-विवेचन-क्रिया-उत्साह-स्मरण-अध्यवसाय - इच्छा-राग-द्वेष-संयोग - विभाग--संयोजक - विभाजक-श्रवण-स्पर्शन-दर्शन-स्वादन-घ्राण-ज्ञानैश्चतुर्विंशतिसामर्थ्ययुक्तोऽयं जीवः। तस्मान्मुक्तावप्यानन्दमुपभुङ्क्ते। यदि हि नामायमात्मा कैवल्ये लयमियात् को नु तर्हि मोक्षानन्दमुपभुञ्जीत? जीवस्य नाशमेव मुक्तिं मन्यमानास्तु महामूढाः। यतो हि "दुःखेभ्यः परिमुच्यानन्दस्वरूपे सर्वव्यापकानन्तब्रह्मणि जीवात्मन आनन्देन समवस्थानमेव मुक्तिरिति" मुक्तिविदः संगिरन्ते। तथा च वेदान्तशारीरकसूत्रेषु—

**अभावं वादरिराह ह्येवम्** ॥—वेदान्तद० ४।४।१०

वादरिः श्रीव्यासस्य जनको मुक्तौ जीवस्य तेन सह मनसश्च भावमभ्युपगच्छति। अर्थादात्ममनसोर्लयं पराशराचार्यो न मन्यते।

तथैव—

**भावं जैमिनिर्विकल्पामननात् ॥**

—वेदान्तद० ४।४।११

जैमिनिराचार्यः प्राप्तमोक्षस्य पुरुषस्य मनोवत्सूक्ष्मशरीरसद्भावमिन्द्रियाणि प्राणाँश्चापि विद्यमानानभ्युपैति, न त्वेषामभावं मनुते ।

**द्वादशाहवदुभयविधं बादरायणोऽतः ॥**

—वेदान्तद० ४।४।१२

व्यासमुनिर्मुक्तौ भावाभावावुभावपि सम्मनुते, अर्थात् मोक्षेऽप्ययमात्मा शुद्धसामर्थ्ययुक्तो भवति, अपवित्रतापापाचारदुःखाज्ञानादीनि च निवर्तन्त इति तन्मतम् ।

**यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।**
**बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम् ॥**

—कठो० अ० २ । व० ६ । मं० १०

यत्र शुद्धं मनो ज्ञानेन्द्रियपञ्चकञ्चात्मना सह तिष्ठति, बुद्धेश्चाध्यवसायः स्थैर्यमुपैति तां परमगतिं मोक्षपदमभिदधते ।

**य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ॥१॥**

—छान्दो० प्र० ८ । खं० ७ । मं० १

**स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते । य एते ब्रह्मलोके तं वा एतं देवा आत्मानमुपासते तस्मात्तेषाᳪ सर्वे च लोका आत्ताः सर्वे च कामाः स सर्वाᳪश्च लोकानाप्नोति सर्वाᳪश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ॥२॥**—छान्दो० प्र० ८ । खं० १२ । मं० ५-६

**मघवन्मर्त्यं वा इदᳪ शरीरमात्तं मृत्युना तदस्याऽमृतस्याऽशरीरस्यात्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ॥३॥**

—छान्दो० प्र० ८ । खं० १२ । मं० १

(१) अपहतपाप्मा—सर्वपापैर्जरामरणशोकक्षुत्तृषादिभिः विवर्जितः, सत्यकामः, सत्यसङ्कल्पः परमात्मैव मार्गयितव्यो विजिज्ञासितव्यश्च । ये परमात्मानं विज्ञाय मोक्षसाधनानि आत्मानञ्च परिशोधयितुं जानन्ति ते मुक्तात्मानो तस्य सम्बन्धेन सर्वान् लोकान् सर्वांश्च कामान् प्राप्नुवते ।

(२) सोऽयं मुक्तः खलु जीवात्मा शुद्धेन दिव्येन चक्षुषा सप्रसादेन चेतसा च कर्माणि पश्यन्ननुभवँश्च संक्रीडते । ये च प्राप्तमोक्षाः विद्वांसोऽधिष्ठाय ब्रह्मलोकं दर्शनीयपरमात्मानं मोक्षसुखमनुभवन्तः सर्वान्तर्यामिनं

परमेश्वरं समुपासते तत्समुपासनेन तेषां सर्वे लोकाः सर्वे च कामाः समुत्तिष्ठन्ति । यं यं लोकं यं यञ्च कामं सङ्कल्पयन्ति स स तैर्लभ्यते ।

(३) ते च मुक्तात्मानो विहाय स्थूलशरीरं सङ्कल्पमयेन देहेनाकाशे परमेश्वरे विचरन्ति । शरीरवन्तो हि सांसारिकदुःखेन न जातु परिमुच्यन्ते । तथा चाख्यायते—प्रजापतिः सुरेन्द्रं समुवाच—अयि परमपूजित ! धनसम्पन्न-पुरुष ! मरणधर्मार्थं स्थूलदेहोऽजेव च केसरीवदने शरीरमिदं मृत्यमुखान्तर्गतं वर्तते । तदिदं शरीरममरणधर्मणोऽशरीरस्य जीवात्मनो निवासस्थानम् । तस्मादयं जीवः सर्वदा सुखदुःखाभ्यां ग्रस्यते । देहिनं वाऽऽत्मानं न कर्हिचित् सांसारिकसुखदुःखे परित्यजतः । अशरीरः पुनरयमात्मा मुक्तस्सन् ब्रह्मणि रममाणः सांसारिकसुखदुःखाभ्यां कदाचिदपि न संस्पृश्यते। अपि तु नित्यमानन्दनिमग्नस्तिष्ठति ।

प्र०—मुक्ति प्राप्ता जीवात्मानः पुनरपि जन्ममरणात्मके दुःखे निपतन्ति न वा ? यतो हि—

**न च पुनरावर्त्तते न च पुनरावर्तत इति ।**

—छन्दो० प्र० ८ । खं० १५

**अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥**

—वेदान्तद० अ० ४ । पा० ४ । सू० ३३

**यद् गत्वा न निवर्तन्ते तद्धाम परमं मम ।**

—भगवद्गीता १५।६

एवमादिवचोभिः "यस्मात्प्रतिनिवृत्त्य न जातु पुनः समुपैति संसारं सैव मुक्तिरिति" प्रतीयते ।

उ०—नैतत्सत्यम्, वेदेषु हीदं निषिध्यते—(वेदा ह्यर्थमिमं प्रतिषेधयन्ति)

**कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम ।**
**को नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरं च ॥१॥**
**अग्नेर्वयं प्रथमस्यामृतानां मनामहे चारु देवस्य नाम ।**
**स नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरं च ॥२॥**

—ऋ० मं० १ । सू० २४ । मं० १, २

**इदानीमिव सर्वत्र नात्यन्तोच्छेदः ॥३॥**

—सांख्य० अ० १ । सू० १५९

**प्र०**—वयं कस्य नाम पवित्रं जानीमः ? कश्च विनाशशीलेष्वपि भावेषु वर्तमानः प्रकाशस्वरूपो देवः परिभोज्यास्मान् मुक्तिसुखं पुनरपि संसारेऽस्मिन्नवतारयति पितरौ च संदर्शयति ॥१॥

**उ०**—वयममुष्य स्वप्रकाशस्वरूपस्यानादेर्नित्यमुक्तस्य परमात्मनो नाम पवित्रं जानीयाम। यो ह्यस्मान् कैवल्ये ब्रह्मानन्दमुपभोज्य पुनरप्यस्यां क्षितौ पित्रोः सम्बन्धेन जननं प्रदाय, जनकयोर्दर्शनं कारयति स एव परमेश्वरो विदधाति कैवल्यव्यवस्थां स एव च सर्वेषामधिपतिः ॥२॥

यथेदानीं बद्धा मुक्ताश्च जीवात्मानस्सन्ति तथैव सर्वदा वर्तन्ते बन्धमोक्षयोरत्यन्तविच्छेदो न भवति कर्हिचिदपि, अर्थात् नित्यं नावतिष्ठेते बन्धमोक्षौ।

**प्र०**—**तदत्यन्तविमोक्षोऽपवर्गः।**—न्याय० अ० १। आ० १। सू० २२

**दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः।**

—न्यायद० अ० १। आ० १। सू० १

"दुःखानामत्यन्तविच्छेद एव कैवल्यमिति"। मिथ्याज्ञानरूपाया अविद्याया, लोभादिदोषस्य, विषयदुर्व्यसनेषु प्रवृत्तेर्जन्मनो दुःखस्य चोत्तरोत्तरस्य विच्छेदेन तत्तत्सन्निहितपूर्वपूर्वस्य विनाशादेव निःश्रेयसमधिगम्यते। यद्धि नित्यमेकरसं तिष्ठति।

**उ०**—अत्यन्तशब्दोऽत्यन्ताभावमेव बोधयेदिति नावश्यकम्। अत्यन्तं दुःखमत्यन्तं सुखं चास्य वर्तत इति लोकव्यवहारेषु "अस्य मानवस्य प्रभूतं दुःखं सुखं वा विद्यते" एतावदेवात्यन्तशब्देनाधिगम्यते। एवमत्राप्यत्यन्तशब्दः केवलमाधिक्यं बोधयति।

**प्र०**—यदि हि नाम मोक्षादपि जीवः परावर्तते तर्हि कियन्तं कालं मुक्तौ निवसति।

**उ०**—**ते ब्रह्मलोकेषु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे।**

—मुण्डक० ३। खं० २। मं० ६

निःश्रेयसमधिवसन्तस्ते मुक्तात्मानो महाकल्पपर्यन्तं ब्रह्मानन्दमुपभुज्य पुनः प्रविहाय मोक्षसुखं संसारमिममावर्तन्त इति।

इत्थं मुक्तिकालः परिसंख्यायते—

प्रथममयं कालश्चतुर्युगेषु विभज्यते–विंशतिसहस्राधिकत्रिचत्वारिंशल्लक्षवर्षाणामेका चतुर्युगी। तथा च—

| | | | |
|---|---|---|---|
| कृतयुगम् | ... | ... | १७२८००० वर्षाणाम् |
| त्रेतायुगम् | ... | ... | १२९६००० ,, |
| द्वापरयुगम् | ... | ... | ८६४००० ,, |
| कलियुगम् | ... | ... | ४३२००० ,, |
| योगः | ... | | ४३२०००० वर्षाः |

२००० चतुर्युगीनां–(८६४०००००० वर्षाणा)–मेकमहोरात्रम्

३० अहोरात्राणाम् ... ... एको मासः

| | | | |
|---|---|---|---|
| १२ मासानाम् | ... | ... | एको वर्षः |
| १०० वर्षाणाम् | ... | ... | परान्तकालः |

एवं १००×१२×३०×२०००×४३२०००० = ३११०४००-००००००००० वर्षाणि यावत् मुक्तिसुखमुपभुज्यते।

**प्र०**—"यस्मात्प्रतिनिवृत्य पुनः कदाचिदपि जन्ममरणात्मकं संसारं नाधिगच्छन्ति तदेव कैवल्यमिति" सकलोऽप्ययं संसारः निखिलाश्च ग्रन्थकाराः प्रतिपादयन्ति।

**उ०**—(१) नेदं जात्वपि सम्भवति। प्रथमं हि तावत् जीवात्मनां सामर्थ्यं देहादिभावरूपाणि तत्साधनानि च परिमितानि सन्ति कथं पुनस्तेषां फलैरनन्तैर्भवितुं शक्यम् ?

(२) न चापि जीवात्मस्वनन्तानन्दोपभोगायासीमसामर्थ्यं कर्म-साधनानि वा विद्यन्ते येनानन्तसुखमुपभोक्तुं क्षमेरन्।

(३) किञ्चानित्यसाधनैः सम्प्राप्ता मुक्तिर्न जातु नित्यं भवितुमर्हति।

(४) अपि च–मुक्तितः परावर्त्य कोऽपि जीवः संसारं नावर्त्तेत चेदस्य विश्वस्य समुच्छेदः प्रसज्येत। कैवल्यं प्रति गच्छन्तो जीवा निःशेषत्वमाप्नुयुः।

**प्र०**—यावन्तो जीवात्मानो मोक्षमधिगच्छन्ति तावत एवान्यानुत्पाद्य परमेश्वरः प्रहिणोति संसारं न तस्माज्जातु निःशेषा भवन्तीति ?

**उ०**—(१) एवमप्यात्मनामनित्यत्वमापादितं भवति, उत्पत्तिमतोऽवश्यं विनाशित्वात्। अनित्यत्वाच्च मुक्तिमधिगम्यापि विनश्येयुः। एवञ्चापवर्गस्य सुतरामनित्यत्वं साधितं भवद्भिः।

(२) मुक्तौ च केवलं प्रवेशसद्भावात् ततो निष्क्रमणाभावाच्च भूयान् मुक्तात्मनां सम्मर्दो जायेत।

(३) न च दुःखानुभवमन्तरेण सुखं किमपि ज्ञायते। नहि कटुकाभावे किमपि मधुरं मधुराभावे च किमपि कटुकं वक्तुं शक्यम्। रसस्यैकस्य ह्यपर-रसतो विप्रतिषिद्धतयैव सम्परीक्ष्येत उभावपि। नहि सर्वरसान् भोक्तुरिव केवलं मधुरं भुञ्जानस्य जायते सुखम्।

(४) अन्तवताञ्च कर्मणां फलमनन्तञ्चेत् प्रयच्छेदीश्वरस्तर्हि तस्य न्यायः परिहीयेत। यो हि यावन्तं भारमुत्थापयितुमीशः स्यात् तत्र तावानेव बुद्धिमद्भिः सन्निधीयते, न कर्हिचिदधिकः। अधिकं भारं वोढुमशक्तस्योपरि समधिकभारसन्निधानेन भारस्य निधापयितुरेव परीवादो जायते। एवमल्पज्ञ ईषच्छक्तिमति जीवात्मन्यनन्तसुखभारः ब्रह्मणो न जातु युज्यतेतमाम्।

(५) यदि परमेश्वरो नव्यान् जीवानुत्पादयतीति तदप्यसमञ्जसम्। जीवानां निर्माणेन तदुत्पादननिदानद्रव्यस्यान्ततः संक्षीयमाणत्वात्कथं सर्वदा जीवानुत्पादयितुमर्हेत्। यत्र हि केवलं व्यय एव वर्तते, नास्ति मनागप्या-

गमस्तादृशो महानपि धनकोषः परिक्षीयत एव ननु। तस्मान्मुक्तिमधिगम्य ततः पुनरावर्तनमेव न्याय्यम्।

(६) अपि नाम केऽपि प्राणिनोऽल्पीयसो बन्धनस्य (कारागारस्य) समपेक्षया यावज्जीवं कारावासमुद्बध्यव्यापादनं शूलारोहणं वा साधु मन्यन्ते? यदि हि मुक्तितः पुनरावृत्तिर्नाभ्युपेयते तदा तादृशे कैवल्ये आजन्मकारावासे चेयानेव विशेषो यत्तत्र मोक्षे श्रममयानि कर्माणि न क्रियन्ते। ब्रह्मणि लयस्तु सागरे निमज्जनमिव।

प्र०—ननु यथा परमेश्वरो नित्यमुक्तः पूर्णानन्दश्चास्ति तथैव जीवात्माप्येवं नित्यमुक्त आनन्दी च भविष्यति तर्हि नैवं स्प्रक्ष्यति कश्चिद्दोषः?

उ०—ब्रह्मणोऽनन्तस्वरूपसामर्थ्यगुणकर्मस्वभावा विद्यन्ते तस्मान्न जातु सज्जति अविद्यादुःखादिबन्धेषु। जीवस्तु पुनर्निःश्रेयसि समवस्थितोऽपि शुद्धस्वरूपोऽल्पज्ञः परिमितगुणकर्मस्वभावश्चैव भवति। न स कर्हिचित्परमात्मनः सादृश्यं लभते।

प्र०—यदि मुक्ति प्राप्तोऽपि पुरुषः पुनः संसारमावर्तेत, नूनमस्या जन्ममरणसदृशत्वात् नामुष्यै परिश्रमो विधेयः?

उ०—नायं मोक्षो जन्ममरणाभ्यामुपमातुं शक्यते। यतो हि षट्त्रिंशत्सहस्रकृत्वः सर्गप्रलययोर्यावान् कालो व्यत्येति तावत्कालपर्यन्तं जीवात्मनां दुःखेभ्यः पृथग्भूय परमानन्दोपभुक्तिः किमल्पीयसी वार्ता? अद्य भुक्त्वापि यदा श्वः क्षुधाकुला भविष्यथ किमिति तदुपायमाचरथ? यदा हि क्षुत्तृषादिभ्यो (प्रात्यहिककर्मभ्यः) धनराज्यभार्यापत्यादिसामान्येभ्यश्चोपायसमनुष्ठानमावश्यकं किमिति तर्हि मोक्षाय प्रयत्नो नानुष्ठेयः? यथा हि निश्चितेऽपि निधने प्राणधारणकृते विधीयन्त एव साधनानि एवं मुक्तितः परावर्त्य जन्मपरिग्रहणसम्भवेऽपि तदर्थमुपायसंविधानं नितरामावश्यकम्।

प्र०—ननु कानि मोक्षसाधनानि?

उ०—कानिचित्तु साधनानि पूर्वमलिखाम विशेषतस्त्विमानि—

मुमुक्षुभिर्दुःखफलालीकभाषणाद्यपुण्यकर्मभ्यो विमुखीभूय सुखफलप्रदानि सत्यभाषणादिधर्म्यकर्माण्यनुष्ठेयानि। दुःखं परिहातुकामैः सुखञ्चाप्तुकामैर्मानवैरवश्यं परित्यज्याधर्मं धर्मं आचरणीयः। पापं हि दुःखमुत्पादयति धर्माचारश्च सुखं जनयति। सङ्गेन सतां विवेकख्यातिरधिगन्तव्या—सत्यासत्ययोर्धर्माधर्मयोः कर्तव्याकर्तव्ययोश्च निर्धारणं समनुष्ठेयम्।

तदनु देहस्यात्मनः पञ्चकोषाणां विवेचनं कर्तव्यम्।

ते चेमे पञ्चकोषाः—

त्वचातोऽस्थिपर्यन्तानां समुदायः पृथिवीमयः **"अन्नमयः"** प्रथमः। **"प्राणमयः"** द्वितीयो यत्र हि प्राणादिभेदभिन्नो वायुः प्रतिवसति। तत्र

१२ मासानाम् ... ... एको वर्षः
१०० वर्षाणाम् ... ... परान्तकालः

एवं १००×१२×३०×२०००×४३२०००० = ३११०४००-००००००००० वर्षाणि यावत् मुक्तिसुखमुपभुज्यते।

प्र०—"यस्मात्प्रतिनिवृत्य पुनः कदाचिदपि जन्ममरणात्मकं संसारं नाधिगच्छन्ति तदेव कैवल्यमिति" सकलोऽप्ययं संसारः निखिलाश्च ग्रन्थकाराः प्रतिपादयन्ति।

उ०—(१) नेदं जात्वपि सम्भवति। प्रथमं हि तावत् जीवात्मनां सामर्थ्यं देहादिभावरूपाणि तत्साधनानि च परिमितानि सन्ति कथं पुनस्तेषां फलैरनन्तैर्भवितुं शक्यम्?

(२) न चापि जीवात्मस्वनन्तानन्दोपभोगायासीमसामर्थ्यं कर्मसाधनानि वा विद्यन्ते येनानन्तसुखमुपभोक्तुं क्षमेरन्।

(३) किञ्चानित्यसाधनैः सम्प्राप्ता मुक्तिर्न जातु नित्यं भवितुमर्हति।

(४) अपि च–मुक्तितः परावर्त्य कोऽपि जीवः संसारं नावर्त्तेत चेदस्य विश्वस्य समुच्छेदः प्रसज्येत। कैवल्यं प्रति गच्छन्तो जीवा निःशेषत्वमाप्नुयुः।

प्र०—यावन्तो जीवात्मानो मोक्षमधिगच्छन्ति तावत एवान्यानुत्पाद्य परमेश्वरः प्रहिणोति संसारं न तस्माज्जातु निःशेषा भवन्तीति?

उ०—(१) एवमप्यात्मनामनित्यत्वमापादितं भवति, उत्पत्तिमतोऽवश्यं विनाशित्वात्। अनित्यत्वाच्च मुक्तिमधिगम्यापि विनश्येयुः। एवञ्चापवर्गस्य सुतरामनित्यत्वं साधितं भवद्भिः।

(२) मुक्तौ च केवलं प्रवेशसद्भावात् ततो निष्क्रमणाभावाच्च भूयान् मुक्तात्मनां सम्मर्दो जायेत।

(३) न च दुःखानुभवमन्तरेण सुखं किमपि ज्ञायते। नहि कटुकाभावे किमपि मधुरं मधुराभावे च किमपि कटुकं वक्तुं शक्यम्। रसस्यैकस्य ह्यपररसतो विप्रतिषिद्धतयैव सम्परीक्ष्येत उभावपि। नहि सर्वरसान् भोक्तुरिव केवलं मधुरं भुञ्जानस्य जायते सुखम्।

(४) अन्तवताञ्च कर्मणां फलमनन्तञ्चेत् प्रयच्छेदीश्वरस्तर्हि तस्य न्यायः परिहीयेत। यो हि यावन्तं भारमुत्थापयितुमीशः स्यात् तत्र तावानेव बुद्धिमद्भिः सन्निधीयते, न कर्हिचिदधिकः। अधिकं भारं वोढुमशक्तस्योपरि समधिकभारसन्निधानेन भारस्य निधापयितुरेव परीवादो जायते। एवमल्पज्ञ ईषच्छक्तिमति जीवात्मन्यनन्तसुखभारः ब्रह्मणो न जातु युज्यतेतमाम्।

(५) यदि परमेश्वरो नव्यान् जीवानुत्पादयतीति तदप्यसमञ्जसम्। जीवानां निर्माणेन तदुत्पादननिदानद्रव्यस्यान्ततः संक्षीयमाणत्वात्कथं सर्वदा जीवानुत्पादयितुमर्हेत्। यत्र हि केवलं व्यय एव वर्तते, नास्ति मनागप्या-

गमस्तादृशो महानपि धनकोषः परिक्षीयत एव ननु। तस्मान्मुक्तिमधिगम्य ततः पुनरावर्तनमेव न्याय्यम्।

(६) अपि नाम केऽपि प्राणिनोऽल्पीयसो बन्धनस्य (कारागारस्य) समपेक्षया यावज्जीवं कारावासमुद्बध्यव्यापादनं शूलारोहणं वा साधु मन्यन्ते? यदि हि मुक्तितः पुनरावृत्तिर्नाभ्युपेयते तदा तादृशे कैवल्ये आजन्म-कारावासे चेयानेव विशेषो यत्तत्र मोक्षे श्रममयानि कर्माणि न क्रियन्ते। ब्रह्मणि लयस्तु सागरे निमज्जनमिव।

प्र०—ननु यथा परमेश्वरो नित्यमुक्तः पूर्णानन्दश्चास्ति तथैव जीवात्माप्येवं नित्यमुक्त आनन्दी च भविष्यति तर्हि नैवं स्प्रक्ष्यति कश्चिद्दोषः?

उ०—ब्रह्मणोऽनन्तस्वरूपसामर्थ्यगुणकर्मस्वभावा विद्यन्ते तस्मान्न जातु सज्जति अविद्यादुःखादिबन्धेषु। जीवस्तु पुनर्निःश्रेयसि समवस्थितोऽपि शुद्धस्वरूपोऽल्पज्ञः परिमितगुणकर्मस्वभावश्चैव भवति। न स कर्हिचित्पर-मात्मनः सादृश्यं लभते।

प्र०—यदि मुक्तिं प्राप्तोऽपि पुरुषः पुनः संसारमावर्तेत, नूनमस्या जन्ममरणसदृशत्वात् नामुष्यै परिश्रमो विधेयः?

उ०—नायं मोक्षो जन्ममरणाभ्यामुपमातुं शक्यते। यतो हि षट्-त्रिंशत्सहस्रकृत्वः सर्गप्रलययोर्यावान् कालो व्यत्येति तावत्कालपर्यन्तं जीवात्मनां दुःखेभ्यः पृथग्भूय परमानन्दोपभुक्तिः किमल्पीयसी वार्ता? अद्य भुक्त्वापि यदा श्वः क्षुधाकुला भविष्यथ किमिति तदुपायमाचरथ? यदा हि क्षुत्तृषादिभ्यो (प्रात्यहिककर्मभ्यः) धनराज्यभार्यापत्यादिसामान्येभ्यश्चो-पायसमनुष्ठानमावश्यकं किमिति तर्हि मोक्षाय प्रयत्नो नानुष्ठेयः? यथा हि निश्चितेऽपि निधने प्राणधारणकृते विधीयन्त एव साधनानि एवं मुक्तितः परावर्त्य जन्मपरिग्रहणसम्भवेऽपि तदर्थमुपायसंविधानं नितरामावश्यकम्।

प्र०—ननु कानि मोक्षसाधनानि?

उ०—कानिचित्तु साधनानि पूर्वमलिखाम विशेषतस्त्विमानि—

मुमुक्षुभिर्दुःखफलालीकभाषणाद्यपुण्यकर्मभ्यो विमुखीभूय सुखफल-प्रदानि सत्यभाषणादिधर्म्यकर्माण्यनुष्ठेयानि। दुःखं परिहातुकामैः सुखञ्चा-प्तुकामैर्मानवैरवश्यं परित्यज्याधर्मं धर्म आचरणीयः। पापं हि दुःखमुत्पाद-यति धर्माचारश्च सुखं जनयति। सङ्गेन सतां विवेकख्यातिरधिगन्तव्या—सत्यासत्ययोर्धर्माधर्मयोः कर्तव्याकर्तव्ययोश्च निर्धारणं समनुष्ठेयम्।

तदनु देहस्यात्मनः पञ्चकोषाणां विवेचनं कर्तव्यम्।

ते चेमे पञ्चकोषाः—

त्वचातोऽस्थिपर्यन्तानां समुदायः पृथिवीमयः **"अन्नमयः"** प्रथमः। **"प्राणमयः"** द्वितीयो यत्र हि प्राणादिभेदभिन्नो वायुः प्रतिवसति। तत्र

**"प्राणः"** यो ह्यन्तःप्रदेशाद्बहिर्निष्क्रामति। **"अपानः"** बहिःप्रदेशादन्तरागतो वायुः। **"समानः"**—यो नाभिस्थस्सन् सर्वत्र देहे रसं प्रापयति। **"उदानः"** येन कण्ठस्थमन्नादिकमाकृष्येत बलपराक्रमौ च विधीयेते। **"व्यानः"**—येन जीवात्मा सकलकाये चेष्टादिकं विधत्ते। **मनोमयस्तृतीयः**। यत्र मनसा अहङ्कारो वाक् पाणिपादं पायूपस्थञ्चेति पञ्च कर्मेन्द्रियाणि विद्यन्ते। **विज्ञानमयश्चतुर्थः**। यत्रात्मनो ज्ञानादिसाधनानि बुद्धिश्चित्तं, श्रोत्रं, त्वक्चक्षुः जिह्वानासिका चेति पञ्च ज्ञानेन्द्रियाणि सन्ति। **आनन्दमयः** पञ्चमः। यत्र प्रीतिप्रसादावानन्दः समधिको न्यूनो वा समनुभूयते। यत्र चाधारः कारणरूपा प्रकृतिः। एते पञ्चकोषाः समाख्यायन्ते। एतैरेवायमात्मा सर्वविधं कर्मजातमुपासनाज्ञानादिव्यवहारांश्च निष्पादयति।

जाग्रत्स्वप्नसुषुप्तिभेदेनात्मनोऽवस्थात्रयं वरीवर्तीति विज्ञेयम्। एतद् व्यतिरिक्ता चतुर्थी अपि शरीरस्य 'तुरीया' नामावस्था। यत्र हि जीवात्मानः समाधिद्वारेणानन्दमये ब्रह्मणः स्वरूपे निमग्ना भवन्ति। अयमेव समाधिसंस्कारसमुद्भूतः शुद्धदेहः कैवल्येऽपि साहाय्यमाचरति।

त्रीणि शरीराणि—

चक्षुषोर्विषयभूतः **"स्थूलदेहः"** प्रथमः। पञ्च प्राणाः, पञ्च ज्ञानेन्द्रियाणि, पञ्च सूक्ष्मभूतानि, मनो बुद्धिरित्येतानि समुदितानि सप्तदशतत्त्वानि **"सूक्ष्मशरीरम्"** द्वितीयम्। एतदेव सूक्ष्मशरीरं जन्ममरणादिष्वप्यात्मना सह सन्तिष्ठते। सूक्ष्मशरीरस्यापि भौतिकस्वाभाविकभेदेन द्वैविध्यं वर्तते।

तत्र सूक्ष्मभूतानामंशैर्निष्पन्नं **"भौतिकम्"**।

जीवात्मनः शुद्धगुणस्वरूपं **"स्वाभाविकम्"**। इदं सूक्ष्मशरीरमभौतिकं मुक्तावपि विद्यमानं भवति। एतेनैवायमात्मा कैवल्यमुपभुङ्क्ते।

तृतीयं **"कारणशरीरम्"** यत्र सुषुप्तिः—प्रगाढनिद्रा भवति। तच्च प्रकृतिरूपत्वात् सर्वत्र व्यापकं सर्वजीवात्मभ्यश्चैकमेव भवति।

जीवात्मा चायमेतैस्समस्तैः कोषैर्निखिलाभिश्चावस्थाभिः पृथगवतिष्ठते। अवस्थाभिरात्मनः पृथक्त्वं सर्व एव विदन्ति ननु। अन्त्यां दशामुपगते ह्यात्मनि "आत्मा वै निरक्रमीत्" इति सर्वैः प्रतिभाष्यते। अयमेव जीवः सर्वेषां प्रेरको धारकः साक्षी कर्ता भोक्तेति व्यपदिश्यते। जीवात्मनः कर्तृत्वं भोक्तृत्वञ्चामन्यमानो नितरां ज्ञानशून्योऽविवेकीति धीमद्भिर्विभावनीयम्। न ह्यात्मानमन्तरेण देहाद्यचेतनभावानां सुखदुःखोपभोगः पापपुण्ययोश्च कर्तृत्वं कर्हिचित् सम्भवति। एतेषां सम्बन्धेन केवलं जीवः पापपुण्ये विदधाति सुख-दुखे चाश्नाति।

यदा हीन्द्रियाण्यर्थैर्मन इन्द्रियैरात्मा च मनसा संयुज्य प्राणान् सम्प्रेर्य

शुभाशुभकर्मसु नियोजयति तदैव स बहिर्मुखः सम्पद्यते। तदानीमेवान्तःकरणात् शुभकर्मस्वानन्दोत्साहनिर्भयत्वादिकं, भयशङ्कालज्जादिकञ्च पापकर्मसु समुत्पन्नं भवति, तदेतदन्तर्यामिपरमेश्वरः शिक्षयति। यः खलु शिक्षामेतामनुवर्तमानः समाचरति स्वीयकर्माणि तेनैव मुक्तिलभ्यानि सुखान्यधिगम्यन्ते, अतो विपरीतमाचरता तु जनेन बन्धजन्यं दुःखमुपभुज्यते।

(अथ शाखान्तरप्रसिद्धं साधनचतुष्टयम्)—

प्रथमं साधनं **विवेकः**–सत्यासत्ययोः स्वरूपं परिज्ञाय तयोर्हानोपादाने पृथिव्यादिपरमेश्वरपर्यन्तानां भावानां गुणकर्मस्वभावान् विदित्वा ब्रह्मणो निदेशपरिपालनं तदुपासने तात्पर्यम् ततोऽविरुद्धाचारः सर्गादस्मात् स्वात्मनो लाभानुष्ठानञ्च **विवेक** उच्यते।

द्वितीयं साधनं [1]**वैराग्यम्**।

तदनु **षट्कसम्पत्तिरूपं** 'तृतीयं साधनम्', शमादिषट्कर्मणामनुष्ठानमिति यावत्। तत्रात्ममनसोरधर्मात् संहृत्य धर्म्ये पथि प्रवर्तनं **"शमः"**। व्यभिचारादिकुत्सितनिषिद्धव्यापारेभ्यश्चक्षुरादिकरणानां देहस्य च प्रतिनिवृत्तिः, जितेन्द्रियत्वादिपुण्यकर्मसु प्रवृत्तिश्च **"दमः"** पापपुरुषैः सहावस्थानपरित्यागः **"उपरतिः"**। सुतरां सञ्जातेष्वपि निन्दास्तुतिलाभादिषु प्रविहाय हर्षशोकौ कैवल्यसाधनेष्वभिनिवेशः **"तितिक्षा"** वेदादिसच्छास्त्रेषु तद्विज्ञानेन परिपूतधियामाप्तानां विदुषां वचनेषु च विश्वासः **"श्रद्धा"**। चित्तैकाग्रचम् **"समाधानम्"**। शमादिषट्कं तृतीयं साधनं भवति।

चतुर्थं साधनं **"मुमुक्षुत्वम्"** यथा हि तृषाक्षुत्पीडिताय वार्यन्धसोर्व्यतिरिक्तं नान्यत् किमपि रोचते एवमपवर्गतत्साधनेभ्योऽन्यत्रासंसक्तिर्मुमुक्षा। उक्तमेतत्साधनचतुष्टयं साधनानन्तरमनुबन्धचतुष्टयमनुष्ठेयम्।

तत्रैतेन साधनचतुष्टयेन युक्तः पुमान् **"अधिकारी"** प्रथमः। स हि मोक्षमधिकुरुते। ब्रह्मोपसम्पत्तिरूपा मुक्तिः प्रतिपाद्या, वेदादिशास्त्रञ्च प्रतिपादकं, तयोर्याथार्थ्यं विज्ञायान्वयः **"सम्बन्धो"** द्वितीयः।

निखिलशास्त्राणां प्रतिपादनविषयभूतस्य ब्रह्मणः प्राप्तिविषयवान् पुरुषः **"विषयी"** तृतीयः।

सर्वदुःखानां निवृत्तिः, परमानन्दमुपसद्य निःश्रेयससुखोपभोगश्च **"प्रयोजनम्"** तुरीयः। अधिकार्यादिप्रयोजनान्तमनुबन्धचतुष्टयमुच्यते। तदनन्तरं श्रवणचतुष्टयमनुष्ठेयम्—

समुपदिशति किञ्चित् कस्मिँश्चिद्विपश्चिति शान्तेनावहितेन चेतसा श्रवणम् **"श्रवणम्"** तत्रापि सर्वविद्यासु सूक्ष्मत्वाद्ब्रह्मविद्यायां विशेषतोऽवधातव्यम्।

---

१. अस्य व्याख्यानं लेखकप्रमादात् त्रुटितं भवेत्—"अनुवादकः"

समास्थाय क्वचिद्विजने प्रदेशे श्रुतचरस्य मीमांसनम् "**मननम्**"। संशयितस्य शङ्कापनोदार्थं पुनः प्रश्नः। श्रवणवेलायामपि वक्तृश्रोत्रोर्द्वयोरप्यनुज्ञया प्रश्नसमाधाने विधेये।

श्रवणमननाभ्यां विगतसंशयार्थस्य समाधिस्थेन चेतसा पुनः पर्यवेक्षणं यदहमश्रौषमन्वैक्षिषि तत्तथैव विद्यते नवेति ध्यानयोगेन पर्यालोचनम् "**निदिध्यासनम्**" तृतीयम्।

पदार्थानां याथातथ्यतः स्वरूपगुणस्वभावानां ज्ञानम् "**साक्षात्कारः**"। एतच्छ्रवणचतुष्टयमिति व्यपदिश्यते।

कोप-मालिन्य-आलस्य-प्रमादादितामसैरीर्ष्या-द्वेष-काम-अहङ्कार-विक्षेपादिराजसैर्गुणैः, पृथग्भूय शान्तत्व-पूतत्व-विद्या-विचारादिसात्त्विकगुणानां धारणं विधेयम्।

अपि च मैत्र्यादिचतुष्टयमपि मुमुक्षुभिः परिपालनीयम्—तत्र सुखिजनेषु प्रीतिः-"**मैत्री**"। दुःखिषु दया "**करुणा**"। पुण्यवद्भ्यः प्रहर्षः "**मुदिता**" दुर्जनेभ्य उपरतिः "**उपेक्षा**"।

प्रत्यहं न्यूनातिन्यूनं होराद्वयं यावत् मुमुक्षुर्ध्यायेद्येनान्तराणि मनःप्रभृतीनि वस्तूनि प्रत्यक्षतो दृश्येरन्। पश्यत—स्मः खलु वयं चैतन्यवन्तस्तेनास्मकं ज्ञानरूपत्वं मनसो द्रष्टत्वञ्च सुतरां विद्यते। अस्माभिर्हि शान्तं चञ्चलं प्रमुदितमहृष्टं सर्वावस्थापन्नं मनो यथावदनुभूयते, एवमिन्द्रियप्राणादिकं जानीमः, दृष्टपूर्वं स्मरामः, एकस्मिन्नेव काले विद्मः प्रभूतानर्थान्। धारणाकर्षणे विदध्महे। सर्वेभ्यश्चैतेभ्यो व्यतिरिक्ताः स्मः। इतरथा हि स्वातन्त्र्येण कर्माणि कर्तुं न प्रभवेम, नापि चेतःप्रमुखानां प्रेरकत्वमधिष्ठातृत्वञ्चास्मासु सम्भवति।

**अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः।**

—योगशास्त्रे पादे २। सू० ३

एषामविद्यास्वरूपं पूर्वमवोचाम। आत्मबुद्ध्योः पृथग्वर्तमानयोरेकस्वरूपताज्ञानम् "**अस्मिता**"। सुखेषु प्रीतिः "**रागः**"। दुःखेष्वप्रीतिः "**द्वेषः**"। निधनदुःखात् त्रासः "**अभिनिवेशः**"। नित्यमहं देहस्थो भवेयं न जातु म्रियेयेति सर्व एव प्राणिनः समीहन्ते। योगाभ्यासविज्ञानाभ्याञ्च पञ्च क्लेशानिमान् दूरीकृत्य ब्रह्मोपसत्त्या मोक्षानन्दः समुपभोक्तव्यः।

**प्र०**—ननु यादृशीं मुक्तिं भवन्तो मन्यन्ते न तादृशीमन्यः कोऽपि सम्मनुते। पश्यत-मोक्षशिलायां शिवपुरे गत्वा तूष्णींभावेनावस्थानमेव मोक्ष इत्याहुर्ताः। चतुर्थे स्वर्गस्थानविशेषे वनितोपभोगेन मिथः कलिना सुमनोहरैर्वादित्रवसनादिधारणेनानन्दोपभोग एव 'मोक्ष' इति क्रिश्चियनमतावलम्बिनः। तथैव सप्तमे स्वः (स्वर्गे) सुखोपभोगो 'मोक्षः' इति यवनाः।

श्रीपुरे वाममार्गिणः, कैलासे शैवाः, वैकुण्ठे वैष्णवाः, गोलोके च गोकुलवासिनो गोस्वामिनः, वनितान्नपानाद्यनुत्तमोपभोगसाधनैरानन्दविहार एव मुक्तिरिति मन्यन्ते। पौराणिकास्तु ब्रह्मलोकेषु निवासः "सालोक्यम्", कनीयान् बन्धुरिव ब्रह्मणा सह निवसनम् "सानुज्यम्"। उपास्य देवस्य ब्रह्मण आकारधारणम् "सारूप्यम्"। परिचारक इव ब्रह्मणः समीपेऽवस्थानं "सामीप्यम्"। ब्रह्मणः संसर्गेण ब्रह्मात्मनोरैक्यम् "सायुज्यम्" इति चतुर्विधां [1]मुक्ति स्वीकुर्वते। ब्रह्मण्यात्मनो लय एव मोक्ष इति "शाङ्कराः" मन्यन्ते।

उ०—जैनानां मुक्त्यादिविषये द्वादश-समुल्लासे, क्रिश्चियनमतावलम्बिनां त्रयोदशे; यवनानाञ्च चतुर्दशे समुल्लासे विशेषतो लेखिष्यामः। यत्तु वाममार्गिणः श्रीपुरमासाद्य श्रीसन्निभानां योषितामुपभोगेन मद्यमांसादिसेवनेन, सङ्गीतकाद्यनुष्ठानेन चानन्दोपभोगमङ्गीकुर्वते, तन्नेतः किमपि विशिष्यते। तथैव कैलासादिषु शङ्करविष्णुभूमिकामादधानैर्मानवैः पार्वतीलक्ष्मीतुल्याभिरङ्गनाभिः सह रममाणैः सुखमुपभुज्यत इति शैवादीनां वर्णनेऽत्रत्यधनिकेभ्यो भूमिपालेभ्य एतावानेव विशेषः प्रदर्श्यते, यत्तत्र व्याधयो न सङ्क्रामन्ति, नित्यञ्च यौवनं सन्तिष्ठते। परन्त्वेतत्तेषां भ्रमविलसितम्। यत्र हि भोगस्तत्र रोगः। यत्र च रोगस्तत्र वार्द्धक्यमवश्यं भवति (भोगरोगौ, रोगवार्द्धक्ये चान्योऽन्यानुविद्धे इव हि तिष्ठतः) पौराणिकास्त्वेवं वाच्याः यद्–भवदभिमतश्चतुर्विधोऽपि मोक्षः कृमिकीटपतङ्गपश्वादिभिरपि स्वत एव लभ्यते। तथा हि ब्रह्माण्डस्था इमे सर्वे एव लोकाः परमेश्वरस्यैव विद्यन्ते तेष्वेव च सर्वे आत्मानो निवसन्ति तस्मात् "सालोक्य-"रूपा मुक्तिरनायासलभ्या। परमात्मनः सर्वत्र परिपूर्णत्वात् तत्सामीप्यस्य स्वयं सिद्धत्वात् "सामीप्य-"रूपापि मुक्तिर्न कञ्चित् प्रयत्नमपेक्षते। जीवात्मनां परमात्मनः समपेक्षया लघीयस्वाच्चेतनत्वाच्च बन्धुत्वस्य स्वयं सिद्धत्वात् "सानुज्य-" लक्षणापि मुक्तिः प्रयत्नमन्तरेणैव लब्धुं शक्यते। निखिलात्मनां व्यापके परमात्मनि व्याप्यत्वेन संयुक्तत्वात् "सायुज्य-"रूपापि मुक्तिः प्रयासं विना सर्वैर्लभ्यत एव। यच्चान्ये नास्तिका मरणानन्तरं तत्त्वानां तत्त्वेषु सम्मेलनेन निःश्रेयसं मन्यन्ते, तत्तेषां तादृशं निःश्रेयसं सारमेयरासभादिभ्योऽपि स्वतः सिद्धमेव। नैषां मोक्षत्वं सम्भवति, अपि त्वन्यादृशं बन्धनमेव। एते शिवपुरं, मोक्षशिलां, चतुर्थीं दिवं सप्तमं त्रिदिवम्, श्रीपुरं, कैलासं, वैकुण्ठं, गोलोकञ्चैकदेशे स्थानविशेषमभ्युपगच्छन्ति तथा च मुक्तात्मनां तत्तत्स्थानेभ्यः प्रच्युतानां मुक्तिर्नश्येत। "अव्याहतगत्या यत्र तत्र यथेच्छं विहरणमेव"

---

१. सारूप्यं, सायुज्यं चैकं मत्वा प्रधानसंख्याश्चतस्र एवावशिष्यन्तेऽग्रे सारूप्यस्य पृथगुल्लेखोऽपि न विद्यते। (सम्पादकः)

'मुक्तिः' नहि तत्र भयशङ्कादुःखादिकं समुत्पद्यते। आत्मनो देहप्रवेश एव (जन्म) तदुत्पत्तिः देहान्निष्क्रमणमेव च (मृत्युः) तत्प्रलय उच्यते। मुक्तात्मानश्च यथाकालं जन्मादिकमाददते।

प्र०—ननु जन्मैकमनेकानि वा ?

उ०—अनेकानि।

प्र०—जन्मनामनेकत्वे पूर्वजन्मवृत्तवार्ताः कथन्न स्मर्यन्ते ?

उ०—आत्मनामल्पज्ञत्वेन त्रिकालदर्शित्वाभावात् पूर्वजन्मवृत्तस्य स्मरणं नावशिष्यते। किञ्च ज्ञानसाधनं मनोऽपि युगपज्ज्ञानद्वयं सम्पादयितुं नार्हति। आस्तां तावत्पूर्वजन्मवृत्तान्तः, अस्मिन्नेव देहे पूर्वं गर्भस्थस्यास्य शरीरं समभवत् तदनु जननम्। जन्मतः पञ्चमवर्षपर्यन्तं यद्यत्सुखंदुःखादिकं समभवत् तस्यापि स्मरणं कथन्न कर्तुं पार्यते ? अपि चायं जाग्रत्स्वप्नयो-रनुभूतमुच्चावचं व्यवहारं सुषुप्तौ (प्रगाढनिद्रायां) कथन्न स्मर्तुमीष्टे ? भवानेवात्र पृष्टे आचष्टामितः "पूर्वं त्रयोदशाब्दस्य पञ्चममासस्य नवमे वासरे दशवादनानन्तरं प्रथमविपले किमकारि भवता ? तावकानि मुखा-द्यङ्गानि कस्यां दिशि समभवन् ? शरीरञ्च कीदृशमासीत् ? चेतसि च किमचिन्तय" इति। यदा ह्यस्मिन्नेव देहे पूर्ववृत्तं न स्मर्यते तदा पूर्वजन्म-वर्तिनां व्यवहाराणां स्मरणे संशयापादनं केवलं बालविलसितम्। स्मरणा-भावेन चैवायमात्मा सानन्दो वर्तते। अन्यथा हि सर्वजन्मनां दुःखान्यनुस्मृत्य दुःखितः सन् म्रियेत। पूर्वापरजन्मवृत्तान्तो जिज्ञासमानेनापि केनचिज्ज्ञातुं न शक्यते, आत्मनो ज्ञानस्वरूपयोरल्पत्वात्, केवलं ब्रह्मणैवायमर्थो वेत्तुं शक्यते न तु जीवात्मना।

प्र०—नन्वात्मना पूर्ववृत्तं न स्मर्यते दण्ड्यते च परमात्मना तर्हि कथङ्कारमात्मनः सुधारसम्भवः। "इदमहमकार्षं तस्यैवेदं मया फल-मलम्भीति" ज्ञानेनैव तस्य पापेभ्यो विरतिः सम्भवा ?

उ०—कतिविधं ज्ञानमभ्युपेयते भवद्भिः ?

प्र०—प्रत्यक्षादिप्रमाणैरष्टविधम्।

उ०—तर्ह्यस्मिन् जगति जन्मनःप्रभृतिराज्यधनबुद्धिविद्यादारिद्र्यादि-सुखदुःखादिकं नानाविधं संवीक्ष्यापि प्राग् जन्मनः ज्ञानं कथन्नानुमीयते ? यथा हि कश्चिदामयो भिषजाभिषजयोरुभयोरपि जायेत, तत्र यद्यप्यधी-तायुर्वेदत्वादगदङ्कारो वेत्ति तन्निदानं नेतरः। परमवैद्येनापि ज्वरादिरोग-सद्भावे "किमपि मया कुपथ्यमाचरितं येनोदपादि रुजेयमिति" ज्ञायत एव तथैव अस्मिन् जगति सुखदुःखादीनामपचयोपचयौ परिवीक्ष्य कथन्नानुमीयते पूर्वं जनुः ? अपि च पूर्वजन्मानभ्युपगच्छद्भिर्ब्रह्मणः पक्षपातित्वं सुतरां साध्यते– कथं हि जगदीश्वरः पूर्वसञ्चितं पापमन्तरेण दारिद्र्यादिदुःखं पुण्यञ्च विना

राज्यं धनाढ्यत्वं बुद्धिमत्ता च प्रादादात्मने ? पूर्वजन्मवादिनां नये तु पूर्वजन्मनः पापपुण्यानुसारेण सुखदुःखप्रदानात् परमेश्वरस्य न्यायकारित्वमतिष्ठति।

प्र०—नन्वेकजन्मसद्भावेऽपि परमात्मनो न्यायकारित्वं न परिहीयते। सर्वे ह्यात्मानो वस्तुषु प्रभवन्ति यथेष्टमाचरितुम्। मालाकारः स्वीयारामेषु क्वचिद्ध्रस्वकान् क्वचिन्महतस्तरूनारोपयति। एकत्र कंचित्कर्तयति, अपरत्रान्यमुत्पाटयति, इतरत्रापरं परिरक्षति। न च परमेश्वरस्योपरि कश्चिदन्यो न्यायकारी वर्तते यस्तं दण्डयितुं प्रभवेत्, यतो वा परमेश्वरो बिभीयात् ?

उ०—परमात्मनो न्यायकारित्वेनैव पूज्यत्वं महत्त्वञ्च वरीवर्ति। यदि हि नाम सोऽपि न्यायविरुद्धमाचरेत् न स जात्वीश्वरः सम्भवेत्। मालाकारोऽपि युक्ति विना मार्गेऽस्थाने वा वृक्षाणामारोपेण, अकर्तनीयस्य कर्तनेन, अतद्योग्यस्य परिवृंहणेन, योग्यस्य चापरिवर्द्धनेन सुतरां विगीयते। एवं कारणमन्तरेण कार्योत्पादात्परमेश्वरोऽपि दोषभाग्भवेत्। ब्रह्म खलु निसर्गादेव पवित्रं न्यायकारि च विद्यत अतस्तेनावश्यं न्याय आचरितव्यः। उन्मत्तवद्धि कर्माणि कुर्वाणो लोकस्य न्यायाधीशादपि हीनोऽप्रतिष्ठश्च प्रभुर्जायेत। अपि नामास्मिन्नपि जगति ऋते योग्यतोत्तमकर्मानुष्ठानाद्गौरवप्रदाता, अन्तरेण च पापानि दण्डयिता सद्भिर्विगर्ह्यते ? तस्मान्न जातु परमेश्वरोऽन्यायमनुतिष्ठति, नापि कुतश्चिद् विभेति।

प्र०—ननु जगदीश्वरः प्रथमत एव यस्मै यावद् विश्राणयितुं निरचैषीत् तस्मै तावदेव प्रयच्छति यथाचिन्तितञ्च कर्माण्यनुतिष्ठति ?

उ०—परमात्मनो विचारः खल्वात्मनां कर्मानुसारेणैव भवति, इतरथा हि स अपराधी अन्यायी च सम्पद्येत।

प्र०—प्राकृता महान्तो वा सर्वं एव समैः सुखदुःखैः परिभूयन्ते—महतां चिन्तापि महती, सामान्यजनानाञ्च साधारणी। यथा हि लक्षरूप्याभियोगिनं निदाघकाले शिविकामधिष्ठाय स्वीयसद्मनः पण्यवीथिकया न्यायालयं प्रति गच्छन्तं कञ्चिच्छ्रेष्ठिनं वीक्ष्य मूढचेतसः संचक्षते "अहो पश्यत पापपुण्ययोः फलम्" एकः शिविकायां सानन्दं सन्तिष्ठते। अपरे नग्नचरणा अधस्तादुपरिष्टादुभयतोऽपि सन्तप्यमानाः शिविकां वहमाना व्रजन्तीति। परं कृतधियोऽत्र वस्तुतत्त्वं विदन्त्येव यद्—यथा यथा न्यायालयः सन्निहितो भवति तथा तथा श्रेष्ठिनः शोकसन्देहौ भृतिभुजाञ्चानन्दः परिवर्द्धते। न्यायालयमासाद्य श्रेष्ठीतस्ततो गन्तुमिच्छति प्राड्विवाकस्य समीपे गच्छेयमुताऽस्थानीलेखकमुपयामि ? अद्य पराजेष्ये विजेष्ये वा न जाने किं भावीत्यादिचिन्तासन्तापनैर्व्याकुलः सम्पद्यते। वाहकास्तमालमास्वादयन्तो मिथः संलपन्तश्च सप्रमोदं शेरते। श्रेष्ठी आत्मनो जयेऽल्पीयः

सुखमधिगच्छति पराजये पुनर्दुःखाम्बुधौ निमज्जति। कर्मकारास्तु यथापूर्वमवतिष्ठन्ते। एवं मृदुकमनीयेष्वप्यास्तरणेषु प्रतिशयितो विशाम्पतिर्नाञ्जसा समुपैति निद्राम्, भृतकास्तु प्रस्तरादिषूद्घातिनीषु च भूमिषु संशेरते द्रागेव च निद्रया परिव्रियन्ते। एवं सर्वत्र महतां चिन्तापि महती साधारणानान्तु साधारणीति विभावनीयम्।

उ०—मूढधियामेषा मतिर्न हि जातु "कैवर्त्तो भव" इत्युक्तोऽपि सार्थवाह आत्मानं कैवर्तमिच्छति, परं कैवर्तास्तु वणिक्त्वमभिलषन्तो दृश्यन्ते। उभयोरपि सुखदुःखयोः साम्यं चेद्भवेन्न कर्हिचिद्वाणिजः कैवर्तपदं परिजिहासेन्नापि कैवर्तो जातु सार्थिकास्पदमभिलषेत्। जीवात्मनां कश्चिदेको विदुषः पुण्यात्मनः श्रीमतो राज्ञो महिषीगर्भमपरो दीनहीनाया वराक्या घासकर्तितुर्जायाया गर्भं समुपैति। एको गर्भादेव सर्वविधं सुखमपरश्च सर्वथा दुःखं लभते। प्रसूतस्यैवैकस्य सुगन्धिना वारिणा स्नानं कार्यते। सुनिपुणं नाडीच्छेदो विधीयते। यथायोग्यञ्च दुग्धादिकं पाय्यते। क्षीरं पिपासते तस्मै सितासम्मिश्रं यथेष्टं तद् प्रदीयते। तस्य रक्षायै कर्मकराः, क्रीडनाय क्रीडनकानि, पर्यटनाय यानानि नित्यं सन्निहितानि भवन्ति। रम्येषु हर्म्यादिषु सप्रेम परिपोष्यते। अपरश्च कानने समुत्पद्यते, यत्र स्नानाय पानीयमपि नाप्यते, दुग्धं पातुकामश्च दुग्धस्थाने मुष्टिचपेटादिभिराहन्यते। अत्यन्तार्त्तस्वरेण रोरुद्यमानोऽपि न केनाप्यवधीयते (पर्युपस्थीयते)। एवं प्रत्यहं जीवानामुच्चावचं सुखदुःखमालोकामहे। यदि ह्यन्तरेण पापपुण्याभ्यां सुखदुःखे ब्रह्मणा दीयेतां तर्हि तदेव वचनीयं सम्पद्यते। अपि च यदा विनैव कर्मानुष्ठानेन सुखदुःखानि लभ्यन्ते तथैव मरणानन्तरं नरकस्वर्गावपि न लभ्येताम्। यथा हि परमेश्वरः साम्प्रतमन्तरेण कर्माणि व्यश्राणयत् सुखदुःखे, तथैव मरणानन्तरमपि स्वेच्छया कञ्चित् स्वर्गमपरञ्च नरकं प्रहेष्यति। सर्वे च जीवात्मानोऽधर्ममाचरेयुः। विद्यते हि धर्मानुष्ठानेऽपि तत्फलं लप्स्यते न वेति सन्देहः। प्रभवति च परमेश्वरो यथेष्टं संविधातुम्। एवञ्च तत्तत्कर्मफलप्राप्तौ सन्देहस्य विद्यमानत्वेन पापाचारेभ्यो भयाभावाज्जगति पापं वृद्धिमुपैष्यति धर्मश्च परिक्षेष्यति। तस्मात्पूर्वजन्मनि समाचरितपुण्यपापानुसारेण वर्तमानं जन्म, पूर्ववर्तमानजन्मनोश्च कर्मानुरूपेण भविष्यन्ति जन्मानि भवन्ति।

प्र०—ननु मानवानां पश्वादीनाञ्च शरीरेषु वर्त्तमानानामात्मनां मिथः साम्यं वैसादृश्यं वा वर्त्तते?

उ०—उभयत्रापि समाना एव जीवात्मानः परं पापपुण्ययोर्योगेन मलिनाः शुद्धाश्च भवन्ति।

प्र०—मानवानां जीवः पश्वादिषु, पश्वादीनाञ्च मनुजशरीरेषु,

योषितां जीवः पुंसां देहेषु, पुंसां वा जीवो योषितां देहेषु गतागतं कुरुते न वा ?

उ०—आम्, यात्यायाति। पुण्यतो दुरितबाहुल्ये मानुषाणामात्मानः पश्वादिनिकृष्टशरीराणि, अधर्मापेक्षया धर्मपरिवृद्धौ च देवानां विदुषाञ्च शरीरं लभन्ते। पापपुण्ययोः पुनः समत्वे साधारणं मानवं जन्म प्रतिपद्यन्ते। अत्रापि पापपुण्यानामुत्तमाधममध्यमतया मानवादिष्वप्युत्तमादिभेदेन त्रिविधदेहवन्तो भवन्ति। किञ्च पश्वादियोनिषु पापजं फलमुपभुज्य पुनः पापपुण्ययोः समतया मानवं जन्म प्रतिपद्यन्ते। एवं देवादिदेहेषु पुण्यफलमुपभुज्य पुनरपि साधारणं मानुषं जन्म लभन्ते। अस्माद्देहादात्मनो निष्क्रमणमेव "मृत्युः" देहेन सह संयोग एव च "जन्मेति" व्यपदिश्यते। देहान्निष्क्रान्तः जीवात्मा यमालये (अन्तरिक्षे) पवने सन्तिष्ठते। तथा च—**"यमेन वायुना इति"** वचोभिर्वेदेषु वायुरेव यमत्वेन व्यपदिश्यते, न तु गरुडपुराणकल्पितो यमः। अस्य विशेषतः खण्डनमण्डने एकादशे समुल्लासे विधास्यामः। तदनन्तरं धर्मराजः परमेश्वरो जीवमिमं तत्पापपुण्यानुसारेण जनयति। स ह्यात्मान्नजलाभ्यां देहरन्ध्रेण वा ब्रह्मणः प्रेरणया परशरीरमाविशति, प्रविश्य च क्रमेण प्रथमं रेतसि तदनु गर्भे समवस्थितः सन् देहेन सह बहिर्निष्क्रामति। योषितां देहप्राप्तिसमुचितेष्वात्मनः कर्मसु योषिताम्, पुंसां देहप्रापकेषु पुनः कर्मसु पौरुषं शरीरं प्रतिपद्यते। गर्भाधानसमये शुक्रशोणितयोः साम्येन नपुंसकः सञ्जायते। एवमयमात्मा यावद्धर्म्यकर्मोपासने ज्ञानञ्च सम्पाद्य मोक्षं न लभते तावदुच्चावचेषु जन्ममरणेषु गतागतं कुरुते। उत्तमकर्माद्यनुष्ठानेनैव हि मानवेष्वनुत्तमं जन्म मोक्षे च महाकल्पपर्य्यन्तमसम्परिष्वक्तो जन्ममरणदुःखैरानन्दमुपभुङ्क्ते।

**प्र०**—मुक्तिरियमेकस्मिन्नेव जन्मन्याहोस्विदनेकजन्मसु सम्प्राप्यते ?

**उ०**—अनेकजन्मसु तथा च—

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे पराऽवरे॥**

—मुण्डक २। खं २। मं० ८

यदा ह्यस्य प्रत्यगात्मनो हृदयस्याविद्याज्ञानरूपा ग्रन्थिर्विमुच्यते, सर्वे संशयाः प्रतिनिवर्तन्ते, पापकर्माणि च क्षीयन्ते, तदा स्वस्यान्तर्बहिः सर्वत्र परिपूर्णे ब्रह्मणि निवसति।

**प्र०**—नन्वयं जीवो मुक्तौ ब्रह्मणि लीयते, उत ततः पृथगवतिष्ठते ?

**उ०**—पृथगवतिष्ठते। संयुज्येत चेत् कः खलु मुक्तिसुखमुपभुञ्जीत ? कैवल्यसाधनानि च नैष्फल्यमापद्येरन्। ब्रह्मणा संयोगो हि नात्मनो मोक्षोऽपि तु प्रलयः समधिगन्तव्यः यदा हि जीवः परमात्मनो निदेशपरिपालनं

धर्म्यकर्मानुष्ठानं सत्सङ्कल्पयोगाभ्यासेन च पूर्वोक्तानि साधनानि चानुतिष्ठति तदैव निःश्रेयसमधिगच्छति ।

**सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् ।**
**सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति ॥**

—तैत्तिरी० । आनन्दवल्ली । अनु० १ ॥

यः खलु जीवात्मा स्वस्य बुद्धचात्मनोः समवस्थितं सत्यस्वरूपं ज्ञानस्वरूपमनन्तानन्दस्वरूपञ्च परमात्मानं जानीते स तत्र व्यापके परमात्मनि स्थितस्सँस्तेनैव विपश्चिता सर्वविद्यायुक्तेन ब्रह्मणा सार्द्धं सर्वान् कामानश्नुते, अर्थाद् यं यमानन्दं कामयते तं तं लभते । परमात्मन आनन्दसमवाप्तिरेव मुक्तिरिति ।

**प्र०**—ननु यथा शरीरमन्तरेण सांसारिकसुखानि भोक्तुं न क्षमते तथैव कैवल्येऽपि देहमन्तरा कथमानन्दं भोक्तुं शक्ष्यति ?

**उ०**—समाहितमेतत् पुरस्तात्, अत्राप्येतद्विज्ञेयम्—शरीराधारेण सांसारिकसुखमिव परमेश्वराधारेणापवर्गसुखं जीवः समश्नाति । प्राप्तमोक्षोऽन्तरात्मानन्तव्यापके ब्रह्मणि परिभ्रमति स्वैरम्, शुद्धज्ञानेन समीक्षते जगत्, संगच्छते मुक्तान्तरैः सार्द्धम्, क्रमेण सृष्टिविद्यां सम्पश्यन् दृश्यमानेष्वदृश्यमानेषु च सर्वेषु लोकलोकान्तरेषु भ्राम्यति । स हि स्वज्ञानपथवर्तिनः सकलभावान् समीक्षते । ज्ञानबाहुल्येनानन्दबाहुल्यं संलभते । कैवल्ये च जीवात्मनो निर्मलतया पूर्णज्ञानित्वेन सर्वे सन्निहिताः पदार्थाः यथावत्प्रतीयन्ते । अयमेव सुखविशेषः स्वर्गः । विषयतृष्णासु च प्रलिप्य दुःखोपभोग एव नरकः समाख्यायते । स्वरिति सुखनाम । स्वः सुखं गच्छति यस्मिन् स स्वर्गः । अतो विपरीतो दुःखोपभोगो नरक इति तत्राप्यभ्युदयप्राप्तिः सामान्यस्वर्गः, परमात्मनः समवाप्त्या चानन्दविशेषो मोक्षरूपः स्वर्गविशेष उच्यते । सर्वे जीवात्मानो निसर्गादेव सौख्यमभीप्सन्ति दुःखञ्च परिजिहासन्ति, परं यावद् विहाय पापानि नाचरिष्यन्ति पुण्यं न तावत्सुखं लप्स्यते, नापि दुःखं हास्यते, नहि विद्यमानकारणं कार्यं कदापि नश्यति । उक्तञ्च—

**छिन्ने मूले वृक्षो नश्यति तथा पापे क्षीणे दुःखं नश्यति ।**

यथा हि मूलच्छेदेन तरुर्विनश्यति तथैव पापपरित्यागेन दुःखं नश्यतीति । मानवधर्मशास्त्रे पापपुण्यानां बहुविधा गतिः प्रतिपादिता ।

तथा च—

**मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम् ।**
**वाचा वाचा कृतं कर्म कायेनैव च कायिकम् ॥१॥**
**शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ।**
**वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥२॥**

यो यदैषां गुणो देहे साकल्येनातिरिच्यते ।
स तदा तद्गुणप्रायं तं करोति शरीरिणम् ॥३॥
सत्त्वं ज्ञानं तमोऽज्ञानं रागद्वेषौ रजः स्मृतम् ।
एतद्व्याप्तिमदेतेषां सर्वभूताश्रितं वपुः ॥४॥
तत्र यत्प्रीतिसंयुक्तं किञ्चिदात्मनि लक्षयेत् ।
प्रशान्तमिव शुद्धाभं सत्त्वं तदुपधारयेत् ॥५॥
यत्तु दुःखसमायुक्तमप्रीतिकरमात्मनः ।
तद्रजोऽप्रतिपं विद्यात्सततं हारि देहिनाम् ॥६॥
यत्तु स्यान्मोहसंयुक्तमव्यक्तं विषयात्मकम् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥७॥
त्रयाणामपि चैतेषां गुणानां यः फलोदयः ।
अग्र्यो मध्यो जघन्यश्च तं प्रवक्ष्याम्यशेषतः ॥८॥
वेदाभ्यासस्तपो ज्ञानं शौचमिन्द्रियनिग्रहः ।
धर्मक्रियात्मचिन्ता च सात्त्विकं गुणलक्षणम् ॥९॥
आरम्भरुचिताऽधैर्य्यमसत्कार्यपरिग्रहः ।
विषयोपसेवा चाजस्रं राजसं गुणलक्षणम् ॥१०॥
लोभः स्वप्नो धृतः क्रौर्यं नास्तिक्यं भिन्नवृत्तिता ।
याचिष्णुता प्रमादश्च तामसं गुणलक्षणम् ॥११॥
यत्कर्म कृत्वा कुर्वंश्च करिष्यंश्चैव लज्जति ।
तज्ज्ञेयं विदुषा सर्वं तामसं गुणलक्षणम् ॥१२॥
येनास्मिन्कर्मणा लोके ख्यातिमिच्छति पुष्कलाम् ।
न च शोचत्यसम्पत्तौ तद्विज्ञेयं तु राजसम् ॥१३॥
यत्सर्वेणेच्छति ज्ञातुं यन्न लज्जति चाचरन् ।
येन तुष्यति चात्मास्य तत्सत्त्वगुणलक्षणम् ॥१४॥
तमसो लक्षणं कामो रजसस्त्वर्थ उच्यते ।
सत्त्वस्य लक्षणं धर्मः श्रैष्ठ्यमेषां यथोत्तरम् ॥१५॥

—मनु० अ० १२ । श्लोक० ८,९।२५-३३,३५-३८

अयं जीवो मनसा यत्सुकृतं दुष्कृतं वा कर्म कुरुते तत्फलं सुखदुःखमिह मनसैवायमुपभुङ्क्ते । एवं वाचा कृतं शुभाऽशुभं वाग्द्वारेण, शारीरञ्च शरीरद्वारेणोपभुङ्क्ते ॥१॥

यः पुमान् देहेन चौर्यपरस्त्रीगमनसाधुजनाभिघातादिकं दुष्कर्माचरति स स्थावरत्वम्, वाक्कृतैर्दुष्कृतैः पक्षित्वं मृगत्वं वा, एवं मनसा कृतैः पापकर्मभिश्चाण्डालादित्वं प्राप्नोति ॥२॥

यत्र देहे येषां गुणानां मध्ये यो गुणः साकल्येनाधिको भवति, स गुणस्तं देहिनं तद्गुणलक्षणबहुलं कुरुते ।।३।।

यदाऽऽत्मनि ज्ञानं तदा सत्त्वं तद्विपरीताऽज्ञाने तमः, रागद्वेषादिषु प्रसज्यमान आत्मनि रजो जानीयात् । सत्त्वादयः प्रकृतेर्गुणाः सकलसंसारस्थ-भावान् परिव्याप्य तिष्ठन्ति ।।४।।

तेषां विवेक इत्थमधिगन्तव्यः । यत्—यदात्मानं सप्रसादं चेतश्च प्रसन्नं प्रशान्तमिव प्रकाशरूपमनुभवेत्तदा सत्त्वं प्रधानमितरे चाप्रधाने इति विजानीयात् ।।५।।

यदात्ममनसी दुःखसंयुक्ते निष्प्रसादे विषयेष्वितस्ततः परिभ्रमेतां तदा रजसः प्राधान्यमितरयोश्चाप्राधान्यं विद्यात् ।।६।।

यदा च मोहः प्रबलो भवेदर्थादात्ममनसी सांसारिकविषयेषु प्रसक्ते सदसद्विवेकशून्येऽतर्कणीयस्वरूपे च स्यातां तदा तमः प्रधानमितरे चान्तर्हिते इति विज्ञेयम् ।।७।।

एतेषां सत्त्वादीनां त्रयाणामपि गुणानां यथाक्रममुत्तममध्यमाधमरूपो यः फलोदयस्तमशेषेण वक्ष्ये ।।८।।

वेदाभ्यासो, धर्मानुष्ठानं, ज्ञानविवृद्धिः, पूतत्वाभिलाषः, इन्द्रिय-संयमो, धर्म्यक्रियाऽऽत्मध्यानपरता एतत् सत्त्वाख्यस्य गुणस्य लक्षणम् ।।९।।

रजस्समुदयेऽन्तर्हितयोश्च सत्त्वतमसोः कर्मारम्भे रुचिता, धैर्यपरि-त्यागो, निषिद्धकर्माचरणमजस्रं विषयोपभोगेषु प्रीतिर्जायते तदैव मयि रजसः प्राधान्यमिति विभावयेत् ।।१०।।

एवं तमसि प्रधाने सर्वपापानां मूलभूतस्य लोभस्य प्राचुर्यमालस्यनिद्रे, धैर्यनाशः, क्रौर्यम्, नास्तिक्यमर्थाद् वेदेश्वरयोः श्रद्धाऽभावः, अन्तःकरणस्य वृत्तिपार्थक्यमैकाग्र्याभावो यस्मात्कस्मादपि याचनं, प्रमादोऽर्थात् मद्यपानादि दृष्टेषु व्यसनेषु प्रसक्तिश्च जायते तदात्मनि तमःप्रवृद्धमिति विदुषा विभावनीयम् ।।११।।

तथा यदात्मा यत्कर्म कृत्वा कुर्वन् करिष्यँश्च लज्जाशङ्काभयादिभिः परिक्लिश्यते तदा शास्त्रविदा मयि तमः प्रवृद्धमिति विज्ञेयम् ।।१२।।

येन कर्मणाऽस्मिँल्लोके प्रभूतां ख्यातिमिच्छति, दारिद्र्येऽपि सति चारणादिभ्यो दानप्रदानं न परित्यजति तदा रजसः प्राबल्यं विज्ञेयम् ।।१३।।

यदा च पुरुषान्तरात्मा सर्वेभ्यः किञ्चिज्ज्ञातुमभिलषेत्—अर्थात्सर्वतो गुणान् सम्पादयितुकामः स्यात्, सुकृतकर्मानुष्ठानेषु न लज्जेत् येन कर्मणा स्वात्मतुष्टिर्जायेत—अर्थाद् धर्माचार एव रुचिर्भवेत् तदा सत्त्वं मयि प्रबल-मिति धीमता वेद्यम् ।।१४।।

कामप्रधानता तमसो लक्षणम्, अर्थसङ्ग्रहेच्छा रजसः, धर्मपरिसेवनं

सत्त्वस्य लक्षणम्, एषाञ्चोत्तरोत्तरस्य श्रेष्ठत्वं—तमसा रजः, रजसा च सत्त्वं श्रेष्ठमिति ॥१५॥

इदानीं येन येन गुणेन यां यां गतिं जीवात्मा प्राप्नोति, तां तामग्रे लेखिष्यामः।

देवत्वं सात्त्विका यान्ति मनुष्यत्वञ्च राजसाः।
तिर्यक्त्वं तामसा नित्यमित्येषा त्रिविधा गतिः ॥१॥
स्थावराः कृमिकीटाश्च मत्स्याः सर्पाश्च कच्छपाः।
पशवश्च मृगाश्चैव जघन्या तामसी गतिः ॥२॥
हस्तिनश्च तुरङ्गाश्च शूद्रा म्लेच्छाश्च गर्हिताः।
सिंहा व्याघ्रा वराहाश्च मध्यमा तामसी गतिः ॥३॥
चारणाश्च सुपर्णाश्च पुरुषाश्चैव दाम्भिकाः।
रक्षांसि च पिशाचाश्च तामसीषूत्तमा गतिः ॥४॥
झल्ला मल्ला नटाश्चैव पुरुषाः शस्त्रवृत्तयः।
द्यूतपानप्रसक्ताश्च जघन्या राजसी गतिः ॥५॥
राजानः क्षत्रियाश्चैव राज्ञां चैव पुरोहिताः।
वादयुद्धप्रधानाश्च मध्यमा राजसी गतिः ॥६॥
गन्धर्वा गुह्यका यक्षा विबुधानुचराश्च ये।
तथैवाप्सरसः सर्वा राजसीषूत्तमा गतिः ॥७॥
तापसा यतयो विप्रा ये च वैमानिका गणाः।
नक्षत्राणि च दैत्याश्च प्रथमा सात्त्विकी गतिः ॥८॥
यज्वान ऋषयो देवा वेदा ज्योतींषि वत्सराः।
पितरश्चैव साध्याश्च द्वितीया सात्त्विकी गतिः ॥९॥
ब्रह्मा विश्वसृजो धर्म्मो महानव्यक्तमेव च।
उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः ॥१०॥
इन्द्रियाणां प्रसंगेन धर्मस्यासेवनेन च।
पापान्संयान्ति संसारानविद्वांसो नराधमाः ॥११॥

—मनु० अ० १२। श्लो० ४०, ४२-५०, ५२

सत्त्ववृत्तावस्थिता देवत्वं—विद्वत्त्वं प्रतियन्ति, रजोवृत्त्यवस्थिता मध्यमं पृथग्जनत्वम्, तमोवृत्तिस्थास्तु निकृष्टां (अधमां) गतिं गच्छन्ति ॥१॥

अत्यन्ततामसैः स्थावराणां वृक्षादीनाम्, मत्स्यसर्पकूर्मपशुमृगादीनाञ्च योनिर्लभ्यते ॥२॥

मध्यमैस्तामसैर्हस्त्यश्वशूद्रम्लेच्छनिषिद्धकर्मकर्त्तृसिंहव्याघ्रवराहादीनां जन्म प्रतिपद्यते ॥३॥

उत्तमतमोगुणयुक्तैश्चारणानां (ये हि पद्यादिनिर्माणेन जनानुप-

श्लोकयन्ति) पक्षिणां, स्वसुखाय कथ्यमानानां दाम्भिकानाम्, परहिंसारतानां रक्षसाम्, मद्यादिसेविनां मलीमसानां पिशाचानां जन्म सम्प्राप्यते ॥४॥

येऽधमरजोगुणयुक्तास्ते झल्लाः (खड्गादिप्रहरणाः कुदारादिभिर्भुवः खन्तारो वा) मल्लाः (नावादिजीविनः) नटाः (वंशादिषु कलाकारिणः) शस्त्रजीविनः, मद्यपानप्रसक्ताश्च भवन्ति ॥५॥

ये मध्यमा राजसास्ते राजानः, क्षत्रियाः, राज्ञां पुरोहिताः, वादविवादविधायिनो दूताः, प्राड्विवाकादयः, युद्धविभागस्याध्यक्षाश्च भवन्ति ॥६॥

उत्तमा राजसा गन्धर्वाणां (गायकानाम्) गुह्यकानां (आतोद्यवादिनाम्) यक्षाणां (धनवताम्) विद्वत्परिचारकाणाम्। अप्सरसामर्थाद् रूपवतीनां योषितां जन्म लभन्ते ॥७॥

तपस्विनः, यतयः, संन्यासिनः, वेदपाठिनः, विमानचारिणः, दैवज्ञाः, दैत्याः, देहपोषका मानवा, एषा सत्त्वनिमित्ता अधमा गतिः ॥८॥

यागशीलाः, वेदार्थविदः, विद्वांसः, वेदानां विद्युतां कालविद्यानाञ्च ज्ञातारः, रक्षकाः, ज्ञानिनः, साध्याः (कार्यसिद्धये सेवनीया अध्यापकाः) इत्येषा सत्त्वनिमित्ता मध्यमा गतिः ॥९॥

अखिलवेदविदो ब्रह्मापदवाच्याः, विश्वसृजः—निखिलां सृष्टिविद्यामधिगम्य विविधविमानादियाननिर्मातारः, धार्मिका मेधाविनः प्रकृतिमपि स्वात्मवशेऽवस्थापयितारः, इत्येषा सत्त्वनिमित्तोत्तमा गतिः ॥१०॥

इन्द्रियाणां विषयेषु प्रसङ्गेन धर्मपरित्यागेन, निषिद्धाचारवन्तोऽविद्वांसो मानवेषु कुत्सितादुःखमयीर्गतीः प्राप्नुवन्ति ॥११॥

एवं सत्त्वरजस्तमसां वेगैः संयुक्तोऽयमन्तरात्मा यादृशं कर्मारभते तेन तादृगेव फलं लभते। मुमुक्षवः पुनरन्तरात्मानोऽतीत्य प्रकृतेर्गुणान् महायोगिनस्सन्तो मुक्तिसाधनान्यनुतिष्ठेयुस्तथा च पातञ्जलेऽधीयते—

**योगश्चित्तवृत्तिनिरोधः ॥१॥—पा० १।२**

**तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥२॥—पा० १।३**

मानवः खलु रजस्तमःसंस्पृष्टकर्मभ्यो मानसं निरुध्य सात्त्विकेभ्योऽपि कर्मजातेभ्यः पृथक्कृत्य मनः सत्त्वस्थः सन् केवले परमात्मनि धर्मयुक्तकर्मणि च संलग्नः सन् नाभ्यां, हृदये, कण्ठे, नेत्रे, नासिकाया अग्रभागे च चेतः संस्थाप्य सर्वतो मनोवृत्तीर्निरुन्ध्यात्। अयमेव चित्तवृत्तीनां निरोधो योग इत्युच्यते।

चेतस ऐकाग्र्यनिरोधाभ्यामयं प्रत्यगात्मा सकलद्रष्टुः परमात्मनः स्वरूपे सन्तिष्ठते। एवमादिसाधनजातमनुतिष्ठेद् मुक्त्यर्थम्।

**अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः।**

—सांख्ये अ० १। सू० १

दैहिकः क्लेश आध्यात्मिकं दुःखम्, प्राण्यन्तरेभ्यः समुद्भूतं दुःखमाधिभौतिकम्, अतिवृष्टयनावृष्टयतितापादिभ्यो मनस इन्द्रियाणाञ्चाञ्चल्येन च समुपस्थितं दुःखमाधिदैविकम्, एतत्त्रिविधदुःखनिवृत्तिपूर्वकं कैवल्यप्राप्तिरत्यन्तपुरुषार्थः ।

इतः परमाचारानाचारभक्ष्याभक्ष्यविषयेषु लेखिष्यामः ।

**इति श्रीमद्दयानन्दसरस्वतीस्वामिकृते सत्यार्थप्रकाशे शङ्करदेवपाठकेन संस्कृतभाषयाऽनूदिते विद्याऽविद्याबन्धमोक्षविषये नवमः समुल्लासः सम्पूर्णः ॥९॥**

# अथ दशमसमुल्लासारम्भः

## अथाऽऽचाराऽनाचारभक्ष्याऽभक्ष्यविषयान् व्याख्यास्यामः

अथेदानीं यो धर्मयुक्तकर्मानुष्ठानरूपः सुशीलतासत्पुरुषसङ्गसद्विद्याग्रहणाभिरुचिमुख आचारस्तद्विपरीतोऽनाचारश्चाभिधीयते तं प्रतिपादयिष्यामः—

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः ।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तन्निबोधत ।।१।।
कामात्मता न प्रशस्ता न चैवेहास्त्यकामता ।
काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः ।।२।।
सङ्कल्पमूलः कामो वै यज्ञाः सङ्कल्पसंभवाः ।
व्रतानि यमधर्माश्च सर्वे सङ्कल्पजाः स्मृताः ।।३।।
अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित् ।
यद्यद्धि कुरुते किञ्चित् तत् तत्कामस्य चेष्टितम् ।।४।।
वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ।।५।।
सर्वन्तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा ।
श्रुतिप्रामाण्यतो विद्वान् स्वधर्मे निविशेत वै ।।६।।
श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः ।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ।।७।।
श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ।।८।।
योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः ।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ।।९।।
वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ।।१०।।
अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते ।
धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ।।११।।
वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।
कार्य्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ।।१२।।

**केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते।**
**राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्वयधिके ततः ॥१३॥**

—मनु० अ० २। श्लो० १—४, ६, ८—१३, २६, ६५

रागद्वेषावमुक्तैर्धार्मिकैर्विद्वद्भिर्यः सततं सेव्यते यञ्च हृदयमात्मा सत्यकर्त्तव्यतयाऽभिजानीयात्स एव धर्मो मन्तव्योऽनुष्ठेयश्चेति नित्यमस्मिन् विषये जना दत्तचित्ता भवेयुः ॥१॥

संसारेऽस्मिन्नतीवकामात्मताऽतिनिष्कामता च न प्रशंसनीया वर्त्तते यतो वेदार्थज्ञानं वैदिकानि कर्माणि चेत्यखिलमिदं कामनयैव सिद्धयति ॥२॥

निरिच्छो निष्कामोऽहमस्मि भवेयं वेति चेद् यः कश्चिद् वदेत्तदा स कदापि तथा भवितुं न शक्तः। यतः सर्वाणि यज्ञसत्यभाषणादिव्रतयमनियम-रूपधर्मकर्माणि संकल्पादेव जायन्ते ॥३॥

यतो यानि यानि हस्तपादनेत्रमन आदीनि जनेनेन्द्रियाणि चाल्यन्ते तानि सकलानीच्छयैव संचाल्यन्ते। अनिच्छतस्तु नेत्रनिमीलनोन्मीलनक्रिया-ऽपि न सम्भवति ॥४॥

अतः सकला वेदा मनुस्मृतिर्ऋषिप्रणीतानि शास्त्राणि सत्पुरुषाणा-माचारा येन येन कर्मणा निज आत्मा प्रसीदति यत्र यत्र च लज्जाभय-शङ्काराहित्यं वर्त्तते तत्तत्कर्मसम्भवा चात्मनः प्रसन्नता यं धर्मं कथयेयुः स सेवनीयः। पश्यत—यदा कश्चिदसत्यभाषणचौर्यादिकर्म कर्त्तुमभिलषति तदानीमेव तस्यात्मनि नियतं लज्जाभयशङ्काविर्भावो भवति तस्मादकर्त्त-व्यानि तानि कर्माणि ॥५॥

मनुजः सकलं शास्त्रजातं वेदं सत्पुरुषाणामाचारं स्वात्मनोऽप्रति-कूलताञ्च विवेकचक्षुषा सम्यगालोच्य वेदप्रामाण्येन स्वात्मानुकूलं धर्ममनु-तिष्ठेत् ॥६॥

यतो यो मनुष्यो वेदैस्तदनुकूलस्मृतिभिश्चोक्तं धर्ममनुतिष्ठति स इह लोके कीर्त्ति परलोके च सर्वोत्तमं सुखमवाप्नोति ॥७॥

श्रुतिर्वेदः, स्मृतिर्धर्मशास्त्रम्, आभ्यां सर्वं कर्त्तव्यमकर्त्तव्यञ्च निर्णेयम् ॥८॥

यः कश्चिन्मनुजो वेदं तदनुकूलानाप्तग्रन्थाँश्चावमन्येत तं सज्जना ज्ञातिबहिष्कृतं कुर्युः। यतो यो वेदं निन्दति स नास्तिक उच्यते ॥९॥

तस्माद् वेदः स्मृतिः शिष्टाचारः स्वस्य चात्मनः प्रियमित्येतानि चत्वारि धर्मलक्षणानि सन्ति। एभिर्धर्मो लक्ष्यत इति भावः ॥१०॥

किन्तु ये धनलुब्धा विषयासक्ताश्च न भवन्ति त एव धर्ममव-गच्छन्ति। ये च धर्मजिज्ञासवस्तेषां कृते वेद एव परमं प्रमाणं वर्त्तते ॥११॥

अतः सर्वे मनुष्या ब्राह्मणक्षत्रियवैश्यादयो वैदिकैः पुण्यैः कर्मभिः स्वपुत्राणां निषेकादिशरीरसंस्कारं कुर्युः। संस्कार इह जन्मनि परजन्मनि च पावनः पापनाशहेतुरस्ति ॥१२॥

ब्राह्मणस्य षोडशे वर्षे, क्षत्रियस्य द्वाविंशे, वैश्यस्य च चतुर्विंशे केशान्तः केशच्छेदनाख्यः संस्कारः करणीयः। तदनन्तरं केवलां शिखां संरक्ष्य श्मश्रुकूर्चादयश्शिरसः केशास्सदा क्षुरया छेदनीया न पुनः कदापि रक्षणीयाः। शीतप्रधानदेशे वा केनापि हेतुना वा केशरक्षणावश्यकता चेद् यथेष्टं केशान् रक्षेत्। अत्युष्णदेशे तु शिखासहितान् सर्वकेशान् छिद्यात्। यतः केशवशात् शीर्षेऽधिकमौष्ण्यं भवति तेन च बुद्धिः क्षीयते। श्मश्रुकूर्चरक्षणाद् भोजनपाने सम्यङ् कर्त्तुं न पार्येते केशेषु चोच्छिष्टमपि तिष्ठति ॥१३॥

इन्द्रियाणां विचरतां विषयेष्वपहारिषु।
संयमे यत्नमातिष्ठेद्विद्वान् यन्तेव वाजिनाम् ॥१॥
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम्।
सन्नियम्य तु तान्येव ततः सिद्धिं नियच्छति ॥२॥
न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥३॥
वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च।
न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित् ॥४॥
वशे कृत्वेन्द्रियग्रामं संयम्य च मनस्तथा।
सर्वान् संसाधयेदर्थानक्षिण्वन् योगतस्तनुम् ॥५॥
श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः।
न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥६॥
नापृष्टः कस्यचिद् ब्रूयान्न चान्यायेन पृच्छतः।
जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥७॥
वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥८॥
अज्ञो भवति वै बालः पिता भवति मन्त्रदः।
अज्ञं हि बालमित्याहुः पितेत्येव तु मन्त्रदम् ॥९॥
न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥१०॥
विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणान्तु वीर्यतः।
वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः ॥११॥
न तेन वृद्धो भवति येनास्य पलितं शिरः।
यो वै युवाप्यधीयानस्तं देवाः स्थविरं विदुः ॥१२॥

**यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ।**
**यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति ॥१३॥**
**अहिंसयैव भूतानां कार्यं श्रेयोऽनुशासनम् ।**
**वाक् चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छता ॥१४॥**

—मनु० अ० २ । श्लो० ८८, ९३, ९४, ९७, १००, ९८, ११०, १३६, १५३—१५७, १५९

मनुजानामिदमेव प्रधानं कर्त्तव्यं यत्तेऽपहरणशीलेषु विषयेषु चित्तं प्रवर्त्तयन्तीन्द्रियाणि निरोद्धुं प्रयतेरन् । यथाऽश्वान् नियम्य सारथिः शुद्धमार्गे चालयति तथैव ते तानि इन्द्रियाणि नियम्याधर्मवर्त्मनोऽपसार्य धर्म्ये वर्त्मनि सततं प्रवर्तयेयुः ॥१॥

इन्द्रियाणां हि विषयेषु प्रसक्त्याऽधर्मे प्रवृत्त्या च मनुष्यो नियतं दोषं प्राप्नोति । यदा तान्येव पुनरिन्द्रियाणि विजित्य धर्मे संचारयति तदाऽभीष्ट-सिद्धिं लभते ॥२॥

निश्चितं खल्विदं यद् यथाऽग्निरिन्धननिक्षेपेण घृतप्रक्षेपेण चाधिक-तममेव वर्धते तथैव विषयोपभोगेन कामः कदाचिदपि न शाम्यति प्रत्युत वर्धतेतरामेव । अतो मनुष्यैर्न कदापि विषयप्रसक्तैर्भाव्यम् ॥३॥

अजितेन्द्रियः पुरुषो विप्रदुष्ट उच्यते यतस्तस्य भोगासक्तस्य वेदाध्ययनयज्ञनियमधर्माचरणानि फलावाप्तये न प्रभवन्ति । धार्मिकस्य जितेन्द्रियस्य तु पुनरेतानि फलदायकानि भवन्ति ॥४॥

ततः पञ्च कर्मेन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि मनश्चैकादशं स्ववशे विधाय योग्याहारविहारैर्योगेन च देहं संरक्षन्नखिलानर्थान् सम्यक् साधयेत् ॥५॥

स्तुतिवचनं निन्दावचनञ्च निशम्य, सुखस्पर्शं दुःखस्पर्शञ्च वस्तु संस्पृश्य, मनोहरं निन्दितञ्च रूपं निरूप्य, उत्तममनुत्तमञ्च भोजनं विधाय, सुरभिमसुरभिञ्चाघ्राय यस्यानन्दविषादौ न भवतः स जितेन्द्रियो विज्ञेयः ॥६॥

कदाचिदप्यपृष्टोऽन्यायेन कपटेन वापि पृच्छतो जनस्य प्रतिवचनं न प्रयच्छेत् । तस्य सम्मुखं जानन्नपि हि प्राज्ञो मूक इव व्यवहरेत् । आम् ! यस्तु निष्कपटो जिज्ञासुर्भवेत्तमपृष्टोऽपि समुपदिशेत् ॥७॥

धनं धर्मार्जितं, बन्धुः पितृव्यादिः, वयोऽधिकवयस्कता, कर्म वैदिकं, विद्या वेदार्थतत्त्वज्ञानमेतानि पञ्च मान्यस्थानानि । किन्तु धनाद्बन्धुः श्रेष्ठः, बन्धोरधिकवयस्कता श्रेष्ठा, वयसः पवित्रं कर्म श्रेष्ठं, कर्मणो विद्यावान् श्रेष्ठः, एवमुत्तरोत्तरं विशेषं मान्यास्सन्ति ॥८॥

यतः शतवर्षीयोऽपि जनो विद्याविज्ञानशून्यश्चेत्स बालकोऽस्ति। अल्पवया अपि विद्याविज्ञानदायकश्चेत्स वृद्धो मन्तव्यः। यस्मादखिलानि शास्त्राणि, विद्वांसः, आप्ताश्चाज्ञं बालं प्राज्ञञ्च पितरं वदन्ति ॥९॥

न बहुभिर्वर्षैः, न शुक्लैः केशैः, नाधिकेन धनेन न श्रेष्ठैर्बान्धवैर्महत्त्वं प्रपद्यते किन्तु योऽस्माकं मध्ये प्रशस्तो विद्याविज्ञानविज्ञः स एव महान् पुरुष इत्येव महात्मनामृषीणां सिद्धान्तः ॥१०॥

ब्राह्मणो ज्ञानेन, क्षत्रियो बलेन, वैश्यो धनधान्येन शूद्रश्च जन्मनार्थादायुषा वृद्धो भवति ॥११॥

न तेन वृद्धो भवति येनास्य शुक्लकेशं शिरः किन्तु युवापि सन्यो विद्वानस्ति तं विद्वज्जना वृद्धं विदन्ति ॥१२॥

यश्च ब्राह्मणोऽनधीतविद्यः स काष्ठरचितगज इव चर्मनिर्मितमृग इव च जगति नाममात्रं बिभर्ति, किमपि कर्त्तव्यं कर्तुं न क्षमते ॥१३॥

तस्माद् विद्यामधिगम्य धार्मिको विद्वान् भूत्वा निर्वैरशीलः सकलप्राणिजनस्य कल्याणमुपदिशेत्। उपदेशे च मधुरां कोमलाञ्च वाणीं वदेत्। यः सत्योपदेशेन धर्मस्य वृद्धिमधर्मस्य च विनाशं विदध्यात्स पुरुषः श्लाघनीयो विद्यते ॥१४॥

नित्यं स्नानक्षालनादिना देहवस्त्रान्नस्थानादिकं शोधयेत्। यतस्तच्छोधनेन चित्तशुद्धिरारोग्यप्राप्तिश्च निष्पद्यते, येन पुरुषार्थः समेधते, तावती शुद्धिर्विधेया यावत्या मलदुर्गन्धो विनश्येत्।

**आचारः प्रथमो धर्मः श्रुत्युक्तः स्मार्त्त एव च ॥**

—मनु० अ० १।१०८

यत्सत्यभाषणादिकर्मणामाचरणमस्ति तदेव वेदेषु स्मृतौ चाभिहितं कर्त्तव्यं वर्त्तते।

**मा नो॑ वधीः पि॒तर॒ं मो॒त मा॒तर॑म् ॥**

—यजु० अ० १६। मं० १५

**आचार्य्यो उपनयमानो ब्रह्मचारिणमिच्छते ॥**

**मातृदेवो भव। पितृदेवो भव। आचार्य्यदेवो भव। अतिथिदेवो भव।**

—तैत्तिरीयारण्यके ॥ प्र० ७। अनु० ११

मातृपित्राचार्यातिथिसेवैव देवपूजोच्यते। येन येन कर्मणा च जगदुपकारो भवति तत्तत्कर्म करणीयं हानिकरञ्च कर्म परिहेयम्। इदमेव मनुजानां परमं कर्त्तव्यमस्ति। कदापि नास्तिकैर्लुब्धैर्विश्वासघातिभिरनृतवादिभिः स्वार्थिभिः कपटिभिर्दुष्टैर्जनैः समं सङ्गतिं न कुर्यात्। सत्यवादिभिर्धर्मात्मभिः परोपकारप्रियैराप्तैश्च जनैः समं सदा समागमं विदध्यादित्येव श्रेष्ठाचारोऽभिधीयते।

प्र०—आर्यावर्त्तदेशवासिनां जनानां विविधदेशान्तरगमनेनाचारो नश्यति न वा ?

उ०—न नश्यति। यतो बाह्याभ्यन्तरशुद्धिः सत्यभाषणादिसदाचरणञ्च यत्रैव क्रियते स आचार एव। न कदापि स नष्टो भवेत्। यश्चार्यावर्त्ते स्थित्वाऽपि दुराचारं करिष्यति स धर्मभ्रष्ट उच्येत।

यद्येवं नाभविष्यत्तदा कथमयम्—

**मेरोर्हरेश्च द्वे वर्षे वर्षं हैमवतं ततः।**
**क्रमेणैव समागम्य भारतं वर्षमासदत्॥**
**स देशान् विविधान् पश्यंश्चीनहूणनिषेवितान्।**

—महाभारत० शान्ति० मोक्षध०। अ० ३२५।१४-१५

एष श्लोको महाभारतस्य शान्तिपर्वणि मोक्षधर्मविषयके व्यासशुकयोः संवादे संवर्तते। अथैकदा व्यासमुनिः स्वपुत्रेण शुकेन शिष्यैश्च सह साम्प्रतममेरीकेत्युच्यमाने पातालदेशे न्यवसत्। कदाचन शुकाचार्यः—"इयत्येवात्मविद्याऽतोऽधिका वा विद्यते"? इति पितरमपृच्छत्। जानन्नपि व्यासमुनिः किमप्यस्मिन् विषये तस्मै प्रतिवचनं नायच्छत्। यत एनं विषयं प्रागुपादिशदसौ। अन्यसाक्ष्यर्थं स्वपुत्रं शुकमवदत्—"वत्स ! मिथिलापुरीमुपगम्यैनमेव प्रश्नं जनकं नाम राजानं पृच्छ। सोऽस्य यथायथमुत्तरं दास्यतीति"। पितुर्वचनं निशम्य शुकः पातालान् मिथिलापुरीं प्रतस्थे। पुरा किल मेरोर्हिमालयादीशानोत्तरवायव्यकोणेषु यो देशोऽभवत्तस्य "हरिवर्षम्" इति नामासीत्। हरयो वानरा उच्यन्ते। अधुनापि तद्देशवासिनो जना बलीमुखा इव रक्तमुखा भवन्ति। यो देशः सम्प्रति "यूरुप" इत्यभिधीयते स एव देवगिरिः "हरिवर्षम्" इति कथ्यते स्म। तं तं देशं पश्यन् हूणाख्यं देशं विलोक्य चीनदेशमाययौ। चीनदेशादसौ हिमगिरिं हिमगिरेश्च मिथिलानगरीमाजगाम। अन्यच्च श्रीकृष्णार्जुनावश्वतरीमग्निनौकामारुह्य पातालं गत्वा महाराजयुधिष्ठिरस्य यज्ञे भगवन्तमुद्दालकमृषिमानिन्यतुः।

धृतराष्ट्रः सम्प्रति "कंधारः कंदहारो" वेत्यभिधीयमानस्य गान्धारदेशस्य राजपुत्रीमुपयेमे। पाण्डोः स्त्री माद्री "ईरान" इत्याख्यस्य देशस्याधिपतेर्दुहिता बभूव। अर्जुनश्चामेरीकाभिधस्य पातालदेशस्य नृपकन्यामुलूपीं परिणिनाय। यदि जना देशाद्देशान्तरं द्वीपाद् द्वीपान्तरञ्च नागमिष्यँस्तदा किमेतदखिलं वृत्तं समभविष्यत्? मनुस्मृतौ यत्सागरगामिनीनां नौकानां करग्रहणं लिखितं तल्लेखनमप्यार्यावर्त्ताद् द्वीपान्तरगमनं सूचयति। महाराजो युधिष्ठिरो यदा राजसूयनामानं यज्ञं वितेने तदा तस्मिन् निखिलभूमण्डलवासिनो नृपान्निमन्त्रयितुं भीमार्जुननकुलसहदेवाश्चत्वारो भ्रातरश्चतसृषु दिक्षु प्रययुः।

यदि देशान्तरगमने दोषममंस्यन्त तदा कदापि ते नागमिष्यन् । अतः पुराऽऽर्यावर्त्तदेशीया जना व्यापारराजकार्यभ्रमणादिनिमित्तेन सर्वत्र भूवलये विचेरुः । अद्यत्वे च यद्—अपवित्रभावस्य धर्मभ्रष्टतायाश्च भयं विद्यते तत्केवलं मूर्खाणां प्रतारणेनाज्ञानवर्द्धनेन च सञ्जातमस्ति । ये मनुजा देशाद्देशान्तरेषु द्वीपाद् द्वीपान्तरेषु यातायातं विधातुं न शङ्कन्ते ते नैकविध-देशवासिभिर्विविधैर्मनुष्यैस्सह समागममुपगम्य तेषां व्यवहाररीतिमवलोक्य निजराज्यव्यवहारयोर्वर्द्धनेन विक्रमशालिनो भवन्ति, सद्व्यवहारानङ्गी-कर्त्तुमसद्व्यवहारांश्च परिहर्तुं प्रयतमाना महदैश्वर्यं च प्राप्नुवन्ति । भवतु ! ये महाभ्रष्टैर्म्लेच्छकुलोत्पन्नैर्वेश्यादिजनैः सङ्गम्याचारहीना अपि आत्मनो धर्मभ्रष्टान्न मन्यते किन्तु विविधदेशीयोत्तमजनसङ्गेनापवित्रीभूतान्दूषि-तांश्च मन्यन्ते तेषां केवलमियं मूर्खतैव न चेत्किमन्यत् ? आम् ! एतावत्का-रणं तु विद्यते,यद् ये मांसमश्नन्ति मदिराञ्च पिबन्ति तेषां शरीरं वीर्यादि-धातवश्च दुर्गन्धादिना दूषिता भवन्ति तस्मात्तेषां सङ्गत्या कदाचिदार्यानपि न खलु कुलक्षणमिदं स्पृशेदिति तु सत्यम्, किन्तु तैः सह व्यवहर्तुं गुणानङ्गी-कर्तुञ्च कोऽपि दोषः पापं वा किमपि न विद्यते । तेषां मद्यपानादिदोषान् परिहाय गुणानङ्गीकुर्याच्चेन्न कापि हानिः । यदा केवलं तेषां सम्पर्केण दर्शनेन चापि मूढाः पापं गणयन्ति तदा कदापि तैः साकं युद्धं कर्तुं न पारयन्ति यतो युद्धकाले तेषां दर्शनं स्पर्शनञ्चावश्यकं वर्तते ।

सज्जनानां रागद्वेषान्यायमिथ्याभाषणादिदोषापहारेण निर्वैरप्रीति-परोपकारसौजन्यादिगुणावलम्बनमेवोत्तम आचारः । धर्मः स्वीयमात्मानं कर्त्तव्यञ्च सम्बध्नातीति तैरवगन्तव्यम् । यदा वयं सुकृतानि कर्माणि कुर्महे तदाऽस्माकं देशाद्देशान्तरगमने द्वीपाद् द्वीपान्तरगमने च न कोऽपि दोषः सम्भवति । दोषस्तु दुरिताचरणे सम्भाव्यते । आम् !! इदं तु सुतरामाव-श्यकं यद्वेदोक्तधर्मसिद्धान्तमण्डनं पाखण्डिमतखण्डनञ्चास्माभिरवश्यं विधेयं येन कश्चिदस्मानसत्यनिश्चयान् कारयितुं न प्रभवेत् । किं देशाद् देशान्तरं द्वीपाच्च द्वीपान्तरं गत्वा राजकार्यव्यापारकरणं विना कदापि स्वदेशोन्नतिर्भवितुं शक्या ? यदि स्वदेश एव स्वदेशीया जना व्यवहरेयु-र्विदेशीयास्तु स्वदेशमागम्य व्यवहरेयू राज्यं वा कुर्युस्तदा दारिद्र्यं दुःखञ्चापहाय किमप्यन्यन् न लब्धुं शक्यते ! पाखण्डिनो जना मन्यन्ते यद् यदि वयमेतान् विद्यां पाठयिष्यामो विदेशगमनाय चादेक्ष्यामस्तदैते बुद्धिमन्तः संवृत्यास्माकं पाखण्डजाले न निपतिष्यन्ति येन चास्माकं प्रतिष्ठा जीविका च विनंक्ष्यति । अतएव कश्चिदपि देशान्तरं गन्तुं न शक्नुयादिति भोजनादि कार्येषु विवदन्ते विघ्नमाचरन्ति च । आम्, मांसमदिराग्रहणं प्रमादतोऽपि न कुर्यादितित्वावश्यकम् । राजपुरुषाणां युद्धसमयेऽपि गोमयलेपनपूर्विका

पाकाशनक्रिया नियतं पराजयकारणमिति न निर्णीतं किं निखिलविबुधैः ? युद्धकाले तु करेणैकेन रोटिकाभक्षणं जलपानञ्चापरेण करेण च रिपुबलस्य गजरथतुरङ्गारूढेन पदातिना वा विदलनं स्वविजयसम्पादनञ्चैव क्षत्रियाणामाचारः पराजयश्चामीषामनाचारोऽस्ति।

ईदृश्या मूर्खतया जना इमे गोमयलेपनं कुर्वाणा विरोधं कुर्वन्तः कारयन्तश्च स्वातन्त्र्यानन्दधनराज्यविद्यापुरुषार्थादिसकलपदार्थेषु गोमयं विलिप्य हस्ते हस्तं निधाय तिष्ठन्ति वाञ्छन्ति च 'कश्चित्पदार्थोऽनायासेन लभ्येत चेद् विपच्य तमश्नीम इति''। परमीदृगाचरणेन सकल आर्यावर्तदेशो गोमयं विलिप्य सर्वप्रकारेण विनाशित इति विज्ञेयम्। आम्, यत्र भोजनं कुर्यात्तत्र शोधनलेपनमार्ज्जनोच्छिष्टापनयनेऽवश्यं यतनीयं यवनाङ्गल-जनानां पाकगृहमिव भ्रष्टं न विधेयम्।

प्र०—[1]स्पृश्यमस्पृश्यं वा पक्वं किमेतत् ?

उ०—यज्जलादिषु पाच्यतेऽन्नं तदपवित्रं यच्च घृतदुग्धादिषु पाच्यते तत् पवित्रम्। इयमपि धूर्त्तजनप्रवर्तिता पाखण्डलीला, यतो यस्मिन् घृत-दुग्धयोराधिक्यं भवेत्तद् भक्ष्येत स्वादवशादुदरे च चिक्कणः पदार्थः प्राचुर्येण गच्छेदित्येवायं कपटप्रपञ्चो व्यरचि। अन्यथा योऽग्निना कालेन वाऽपाचि स पक्वः। यश्च नापाचि सोऽपक्वः। पक्वो भक्षणीयो नापक्व इत्यपि सर्वत्र नोपपद्यते। यतश्चणकादयोऽपक्वा अपि भक्ष्यन्ते।

प्र०—द्विजो निजहस्तेन पाकं कृत्वा भुञ्जीताथवा शूद्रहस्तेन ?

उ०—शूद्रहस्तसंसिद्धमन्नमश्नीयात्। यतो ब्राह्मणक्षत्रियवैश्यवर्णस्थाः स्त्रीपुरुषा यथाक्रमं विद्यापाठनराज्यपालनकृषिपशुसंरक्षणव्यापारकर्मसु व्यापृता भवन्ति। परं शूद्राणां पात्रेषु तद्गृहसंसिद्धमन्नमापत्कालं विना कदापि नाद्यात्।

**आर्याधिष्ठिता वा शूद्राः संस्कर्त्तारः स्युः॥**

—आपस्तम्बधर्मसूत्रम्। प्रपा० २। पटलः २। खण्डः २। सू० ४

आर्याणां गृहेषु शूद्रा मूर्खस्त्रीपुरुषाः पाकादिकार्यं कुर्युः किन्तु ते देहवस्त्रादिना पवित्राः स्युः। आर्यगृहेषु यदा पाकक्रियां वितनुयुस्ते तदा वस्त्रेण मुखं बद्ध्वा विदध्युर्येन तन्मुखोच्छिष्टं तन्मुखनिर्गतश्वासोऽपि चान्ने न निपतेत्। अष्टमे दिवसे क्षुरया शिरोमुण्डनं नखकर्त्तनं च ते कारयेयुः। सदा स्नात्वैव पचेयुः। आर्यान् भोजयित्वैव स्वयं भुञ्जीरन्।

प्र०—शूद्रस्पृष्टस्य सिद्धान्नस्य भक्षणेऽपि यदा दोषं मन्वते जनास्तदा तत्करनिर्मितमन्नं कथं भक्ष्येत ?

---

१. 'सखरी' 'निखरी' इति लोकभाषायाम्।—(सम्पादकः)

उ०—मिथ्याकल्पितेयं वार्ता। यतो यैर्गुडसिताशर्कराघृतदुग्धमिष्ट-शाकमूलफलानि भक्षितानि तैः सकललोकहस्तनिर्मितमुच्छिष्टञ्च भुक्तमिति मन्यताम्। यदा हि शूद्रचर्मकारमहत्तरयवनाङ्गलजनादयः क्षेत्रेभ्य इक्षून् छिन्दन्ति, तक्ष्णुवन्ति, समृद्य रसं निस्सारयन्ति च तदा खलु ते कृतमल-मूत्रोत्सर्गा अक्षालितहस्ता एवेक्षून् स्पृशन्ति, गृह्णन्ति स्थापयन्ति, तदर्धंदण्डं चूषित्वा, रसं पीत्वार्द्धं तस्मिन्नेव निक्षिपन्ति रसपाचनावसरे च तस्मिन् रसे रोटिकामपि पक्त्वा भक्षयन्ति। शर्करानिर्माणवेलायां चरणयोः परिहिताभ्यां मलमूत्रगोमयधूलिलिप्ताभ्यामेवोपानद्भ्यां तं रसपाकं विमर्दयन्ति। दुग्धे निजगृहोच्छिष्टपात्रभृतमेव जलं निक्षपन्ति तस्मिन्नेव पात्रे घृतादिपदार्थान् निदधति। धान्यपेषणकालेऽपि तथैवोच्छिष्टहस्तेन गृह्णन्ति पिष्टम्। गात्राणां स्वेदजलबिन्दवोऽपि तस्मिन् पतन्ति च। फलमूलकन्देष्वपि चेदृश्येव लीला भवति यदेमे पदार्था भक्षितास्तदा सर्वहस्तकृतं भुक्तमिति विज्ञेयम्।

प्र०—फलमूलकन्दरसाद्यदृष्टवस्तुनि नास्ति दोषः।

उ०—अहो धन्यधन्या अमी! सत्यं खलु! यदैते उत्तरमीदृशं नादास्यँस्तदा किं धूलिं भस्मालिं वाऽभक्षयिष्यन्? गुडशर्करादीनि मधुराणि रोचन्ते, दुग्धघृते च पुष्टिदायके ननु! तत्कथं नेमं स्वार्थसिन्धुं विरचयेयुः? वरं सुष्ठु, यदि न दोषोऽदृष्टवस्तुनि तर्हि मलहरो महत्तरो वा यवनो वा स्वहस्तेनान्यत्र स्थले निर्माय भवत्समीपमानीय भवद्भ्यो दद्याच्चेत्खादिष्यते न वा? यदि न खादिष्यते तदाऽदृष्टेऽपि दोषोऽस्तीति सिद्धम्। आम्! मांसमदिराशिनां यवनांगलादिजनानां हस्तसिद्धान्नभक्षणे आर्यानपि मांसाशनमदिरापानादिदोषः पश्चात्स्पृशत्येव। परं परस्परमार्याणां सह भोजने कोऽपि दोषो न दृश्यते। यावन्मतसाम्यं हानिलाभयोश्चैक्यं मिथो न मन्येत तावदुन्नतिरतिदुष्करा वर्तते। तथापि केवलं भोजनपानयोरैक्येनैव समुन्नतिर्न सम्भवति किन्तु यावद् दुर्वृत्तानि न परिहरेयुः सद्वृत्तानि च नोररीकुर्युस्तावत्तेषामभ्युदयस्थाने हानिरेव जायते। मिथो वैमनस्यमत-भिन्नत्वब्रह्मचर्यपालनराहित्यविद्यापठनपाठनशून्यत्वकालकृतास्वयंवरविवाह-विषयासक्तिमिथ्याभाषणादिकुलक्षणवेदविद्याप्रचारहीनत्वादीनि दुष्कृतान्ये-वार्यावर्त्ते विदेशीयराज्यसत्तायाः कारणानि सन्ति। यदाऽन्योन्यं भ्रातरो युध्यन्ते तदानीमेव तृतीयो विदेशीयजन आगत्य मध्यस्थो भवति। किं भवन्तः पञ्चसहस्रवर्षपूर्वसंवृत्तां महाभारतयुद्धवार्तामपि विस्मृतवन्तः? पश्यत—महाभारतयुद्धे सर्वे जना यानारूढा अदन्ति स्म, तदानीं स्पृश्या-स्पृश्यत्वदोषो नासीत्। किन्तु तदनन्तरमीदृशेन परस्परकलहेन कौरव-पाण्डवानां यादवानाञ्च सर्वस्वनाशः संवृत्तः। स तु संवृत्त एव परमद्यापि स एव रोगोऽनुवर्त्तत एव। न जाने खलु कदाऽयं भयंकरो निशाचरोऽस्मान्

परिहास्यति ? अथवा सकलानार्यंजनान् निखिलसुखेभ्यो विमोच्य दुःखार्णवे निपात्य व्यापादयिष्यति किमु ? तस्यैव कुलहन्तुः स्वदेशविनाशकस्य दुष्टस्य दुर्योधनस्य दुष्टवर्त्मनि साम्प्रतमप्यार्याश्चरित्वा दुःखं वर्द्धयन्ति । इदानी-मनुगृह्णातु परमेश्वरः, राजरोगश्चायमार्येषु विपद्येत ।

भक्ष्याभक्ष्ये द्विविधे । धर्मशास्त्रोक्ते वैद्यकशास्त्रोक्ते च । धर्मशास्त्रे यथा—

**अभक्ष्याणि द्विजातीनाममेध्यप्रभवाणि च ॥**—मनु० ५।५

द्विजा ब्राह्मणाः क्षत्रिया वैश्याश्चापवित्राणि मलमूत्रादिसंसर्गजानि शाकमूलफलानि नाश्नीयुः ।

**वर्जयेन्मधु मांसं च ॥**—मनु० २।१७७

मांसमदिरादिविविधमादकद्रव्याणि च वर्जयेयुः ।

**बुद्धिं लुम्पति यद् द्रव्यं मदकारि तदुच्यते ।**

—शाङ्‌र्गधर अ० ४ । श्लो० २१

यो यो बुद्धिनाशकः पदार्थो वर्त्तते स स कदापि न सेवनीयः । यच्चान्नं विकृतं दुर्गन्धादिदूषितमसंस्कृतञ्च भवेत्तन्न भक्षणीयम् । यच्च पापिनां मांसाशिनां म्लेच्छानां येषां शरीरं मद्यमांसपरमाणुभिरेव पूरित-मस्ति तेषां हस्तैः सिद्धं स्पृष्टं वान्नं नाद्यम् । तदपि न भक्ष्यं यत्रोपकारिणां हिंसा भवति यथैकस्या धेनोः शरीराद् दुग्धघृतबलीवर्दधेनूनामुत्पत्त्यास्या एकस्मिन्नेव वंशे चत्वारि लक्षाणि, पञ्चसप्ततिसहस्राणि षट्शतानि च मनुष्याणां सुखं विन्दन्ते तादृशान् पशून् न हिंस्यात्स्वयमन्यानपि हिंसया वारयेत् ।

यथा कस्याश्चिद् धेनोर्विंशतिसेटक[1] कस्याश्चिच्च द्विसेटकं पयः प्रतिदिनं प्राप्येत चेत्तत्संयुज्य प्रतिधेनु विभज्य च समानमेकादशसेटकप्रमाणं पयः सम्पद्यते । अथ च काचिद् धेनुरष्टादशमासपर्यन्तं काचिच्च षण्मासान् यावद् दुग्धं ददाति; ते मासाः संयुज्य प्रतिधेनु समानं विभज्य च द्वादश भवन्ति । इत्थं प्रत्येकपयस्विन्याः पयसा २४९६० [चतुर्विंशतिसहस्राणि नवशतानि षष्टिश्च] मनुजाः सकृत् तृप्यन्ति । तस्याश्च षड् वत्सतराः षट् च वत्सतर्यः संजायन्ते तेषु द्वौ मृतौ चेदथापि दशावशिष्यन्ते । तेषां मध्यात् पञ्च वत्सतरीणां दुग्धं यदि सम्मेलयामस्तदा १,२४,८०० [एकलक्षं चतुर्विंशतिसहस्राणि —अष्टशतानि च] जनानां तृप्यन्ति । इदानीमवशिष्टाः

---

१. 'सेर' इति लोकभाषायाम् । इदानीं धान्यादितोलनाय 'किलोग्राम', तरलपदार्थाय, 'लीटर' इति प्रयुज्यते । (सम्पादकः)

पञ्च बलीवर्दाः। ते यावज्जीवं ५००० पञ्चसहस्रमण[२] परिमाणं धान्यं न्यूनान्न्यूनमुत्पादयितुं प्रभवन्ति। तदन्नात् प्रत्येकजनः त्रिपादसेटकं भक्षयेच्चेत्सार्द्धद्विलक्षजनानां तृप्तिर्भवति। एवं संयुक्तेन दुग्धान्नेन ३,७४,८०० अष्टशतोत्तरचतुःसप्ततिसहस्राधिकलक्षत्रयजनाः संतृप्ता भवन्ति। अनयोः संख्ययोर्योगेनैकस्याः पयस्विन्या एकस्मिन् वंशे ४,७५,६०० षट्शताधिकपञ्चसप्ततिसहस्रोत्तरचतुर्लक्षसंख्याकानां मनुजानामेकवारं पालनं जायते। अनयैव रीत्या यदि वंशवर्द्धनेन गणना विधीयते तदाऽसंख्येया जनाः पाल्यन्ते धेन्वा। एतदतिरिक्तं वृषभाः शकटरथहलादिषु युक्ता भारवहनकर्मभिर्मनुष्याणामतीवोपकारिणः सम्पद्यन्ते। तथैव गौरपि दुग्धेनाधिकोपकारिणी भवति। गौरिव महिष्यपि विद्यत उपकारिणी परं गोघृतपयोभ्यां यावान् बुद्धिवृद्धिलाभो जायते न तावान् महषीक्षीरेण। तस्मादार्याः पयस्विनीं धेनुं प्रधानोपकारिणीं गणयन्ति। येऽन्ये विद्वांसस्तेऽपीत्थमेवावगमिष्यन्ति।

अजायाः क्षीरेण २५,९२० विंशत्यधिकनवशतोत्तरपञ्चविंशतिसहस्रजनानां पालनं भवति। तथैव गजतुरङ्गमक्रमेलकमेढ्रगर्दभादिभिरपि महानुपकारः सञ्जायते। [३]एतत्पशुहन्ता निखिलजनघातको बोध्यः।

पश्यत—यदाऽऽर्याणां साम्राज्यमभूत् तदानीमेते महोपकारिणो गवादिपशवो नावद्धयन्त। तस्मिन् काले—आर्यावर्त्तीया भूमण्डलान्तर्गताश्चान्यदेशवासिनो जनाः प्राणिनश्चान्ये सुखिनो बभूवुः। यतो गवादिपशुबाहुल्येन पयोघृतान्नरसफलादीनि वैपुल्येन लभ्यन्ते स्म। यतः प्रभृति देशेऽस्मिन् मांसाशिनो मद्यपायिनो गवादिपशुहन्तारो वैदेशिका जना राज्याधिकारिणोऽभवँस्तत आरभ्य क्रमश आर्याणां दुःखं वर्द्धमानमेवास्ति। यतः—

**नष्टे मूले नैव फलं न पुष्पम्।**—वृद्धचाणक्य अ० १०।१३

वृक्षस्य मूलमेव छिद्येत चेत्कुतः पुष्पफलानि समुत्पद्येरन्?

**प्र०**—यदि सर्वेऽहिंस्रा भवेयुस्तदा व्याघ्रादिपशव इयन्तो वर्द्धेरन् यत्ते सकलान् गवादिप्राणिनो व्यापाद्य खादेयुर्येन भवतां पुरुषार्थ एव निरर्थः सञ्जायेत।

**उ०**—इदं राजपुरुषाणां कर्त्तव्यं यत्ते हानिकारकान् पशून् मनुष्यान् वा दण्डयेयुः प्राणैश्चापि वियोजयेयुः।

---

२. "मन" इति धान्यपरिमाणवाचकः शब्दो लोके प्रसिद्धः। पूर्वं किल द्रोणीखारीप्रभृतयो धान्यपरिमाणे व्यवह्रियन्ते स्म। सम्प्रति एकस्मिन् 'मन' प्रमाणे ३७½ 'किलोग्रामाः' भवन्ति।

३. एतद् विशेषव्याख्यानं 'गोकरुणानिधि' पुस्तके महर्षिनिर्मिते द्रष्टव्यम्। (सम्पादकः)

प्र०—ततः किं तेषां मांसं क्षिप्येत खलु ?

उ०—कामं खलु क्षिप्येत तत् कुक्कुरादिमांसाशिनः प्राणिनो वा खादयेत् दहेद्वा। अथवा तत् कश्चन मांसाहारी भक्षयेच्चेत्तदपि जगतो न कापि हानिर्भवति किन्तु तस्य मनुजस्य स्वभावो मांसाहारी संवृत्य हिंसको भवेत्।

हिंसास्तेयविश्वासघातकपटादिभिः पदार्थान् सम्प्राप्य यस्तेषामुपभोगः क्रियते तदभक्ष्यम्। यच्चाहिंसादिधर्म्यकर्मभिस्तानर्थानासाद्य भोजनादिकं विधीयते तद् भक्ष्यं विद्यते। यैः पदार्थैः स्वास्थ्यमारोग्यं बुद्धिर्बलं पराक्रम आयुश्च समेधते तादृशास्तण्डुलगोधूमफलमूलकन्ददुग्धघृतादयो मिष्टादयश्च पदार्था यथायोग्यमिश्रणेन पाकं कृत्वा यथासमयं यथोचितं मिताहारेण सेव्यमाना भक्ष्यमुच्यन्ते। यावन्तः पदार्थाः स्वप्रकृतिप्रतिकूला विकारिणः स्युस्ते सर्वे सर्वथा परिहेयाः। ये ये च यस्य यस्य कृते विहितास्ते ते पदार्था ग्राह्या एतदपि भक्ष्यमस्ति।

प्र०—एकपात्रभोजने कश्चिद् दोषो विद्यते न वा ?

उ०—दोषो विद्यते। यत एकेन सहान्यस्य स्वभावः प्रकृतिश्च न संवदतः। यथा कुष्ठिप्रभृतिना सह भोजनेन नीरोगस्यापि जनस्य रुधिरं दुष्यति तथैवान्येन सह भोजनेनापि किञ्चिद् रुधिरं स्वास्थ्यं वा कदाचिदपि विक्रियते खलु न तु सम्यग् वर्द्धते।

**नोच्छिष्टं कस्यचिद्दद्यान्नाद्याच्चैव तथान्तरा।**
**न चैवात्यशनं कुर्यान्नचोच्छिष्टः क्वचिद् व्रजेत्॥**

—मनु० २। ५६

कस्मैचित् स्वोच्छिष्टं पदार्थं न दद्यात्। न च कस्यचन भोजनान्तर्गतं पदार्थं स्वयमश्नीयात्। अतिभोजनं न कुर्यात्। भोजनानन्तरञ्च हस्तमुखप्रक्षालनं विना नेतस्ततो गच्छेत्।

प्र०—"**गुरोरुच्छिष्टभोजनम्**" इति वचनस्य कोऽर्थो भविष्यति ?

उ०—अस्यायमर्थो विद्यते—गुरोर्भोजनानन्तरं यत्पृथक् स्थितं शुद्धमन्नं भवेत्तदश्नीयादिति। शिष्या गुरुं प्रथमं भोजयित्वा पश्चाद् भुञ्जीरन्निति भावः।

प्र०—उच्छिष्टमात्रं निषिध्यते चेन्मधुमक्षिकानामुच्छिष्टं मधु वत्सतराणामुच्छिष्टं दुग्धमेकग्रासभक्षणानन्तरं स्वस्याप्युच्छिष्टञ्चान्नं भवति तदा तु तदपि न भक्षणीयम्।

उ०—नाममात्रमेवोच्छिष्टं भवति मधु परं तदनेकौषधीनां सारभूतत्वाद् ग्राह्यमस्ति। वत्सतरास्तु निजमातुः स्तनाद्बहिरागतं पयो पिबन्ति। अन्तर्गतं पयस्ते पातुं न प्रभवन्ति। ततस्तदुच्छिष्टं न भवति तथापि वत्स-

पानानन्तरं जलेन तज्जनन्याः स्तनान् प्रक्षाल्य विशुद्धपात्रे दुग्धं दुह्याज्जनः। निजोच्छिष्टञ्चान्नं स्वस्य विकाराय न कल्पते। पश्यत विमृशत च— स्वभावतः सिद्धेयं वार्ता यत् कस्यचनोच्छिष्टं न कोऽपि खादेत्। स्वमुखकर्ण-नासिकानेत्रोपस्थगुह्येन्द्रियाणां मलमूत्रस्पर्शने न तथा तिरस्कारो भवति यथाऽन्यस्य कस्यचन मलमूत्रस्पर्शने जायते। तस्मादयं व्यवहारः सृष्टिक्रम-विरुद्धो नास्तीति सिध्यति। अतो मनुजमात्राणामुचितमेतद् यत्ते कस्य-चिदुच्छिष्टं नाश्नीयुः ?

**प्र०**—वरम्! स्त्रीपुरुषा अपि परस्परस्योच्छिष्टं नाश्नीयुः ?

**उ०**—नैवाश्नीयुः। यतस्तेषामपि शारीरिकप्रकृतिर्विभिन्ना वर्तते।

**प्र०**—कथ्यतां तदा सकलमनुजहस्तसिद्धान्नभक्षणे को दोष इति ? यतो ब्राह्मणादारभ्य चाण्डालपर्यन्तानां सर्वेषां जनानामस्थिमांसचर्ममयानि शरीराणि सन्ति। यादृशञ्च रुधिरं ब्राह्मणशरीरे तादृशमेव चाण्डालादि-शरीरे वर्तते। तदा खलु सर्वमनुजहस्तनिर्मितपाकभक्षणे को दोषो विद्यते ?

**उ०**—दोषो विद्यते। उत्तमपदार्थभक्षणेन ब्राह्मणस्य ब्राह्मण्याश्च वपुषि यादृशं दुर्गन्धादिदोषरहितं रजोवीर्यञ्चोत्पद्यते तादृशं चाण्डालस्य तत्पत्न्याश्च देहे नोत्पद्यते। चाण्डालस्य शरीरं खलु दुर्गन्धपरमाणुभिः परिपूर्णं भवति न तादृशं ब्राह्मणादिवर्णानां शरीरं भवति। तस्माद् ब्राह्मणा-द्युत्तमवर्णानां हस्तसिद्धमन्नं भक्षयेच्चाण्डालादिनीचमलहरचर्मकारादिहस्त-निर्मितं नाद्यात्। भवतु, युक्तिवादमवलम्ब्य यदि कोऽपि भवन्तं प्रक्ष्यति— "यादृशं जननीश्वश्रूभगिनीपुत्रीस्नुषाणां चर्ममयं शरीरं वर्तते तादृशमेव वपुर्निजधर्मपत्न्या अपि तदा किं नु खलु जनन्यादिस्त्रीभिः साकं स्वभार्या-सदृशं व्यवह्रियेत ? तदानीं तु भवता सङ्कोचमालम्ब्य तूष्णीमेव स्थास्यते। यथा नु खलु हस्तमुखसाधनेनोत्तममन्नं गृह्यते भक्ष्यते च तथा दुर्गन्धयुतपदार्थो-ऽपि भोक्तुं शक्यते ततः कोऽपि मलादिकमपि भोक्ष्यते किम् ? किमीदृशोऽपि कश्चन भवेत् ?

**प्र०**—धेनोर्गोमयेन भवता लिप्यते चेन्निजमलेन कथं न लिप्यते ? गोमयलिप्तभोजनस्थाने गमनेन च तदशुद्धं कथं न भवति ?

**उ०**—धेनोर्मलेन तादृशो दुर्गन्धो न जायते यादृशो मनुजस्य मलेनो-द्भवति। चिक्कणत्वाद् गोमयस्य तत्सत्वरं नोत्खातं भवति। तेन च वासांसि विकृतानि मलिनानि च न भवन्ति। यादृशी मृदा मलिनताऽऽलिङ्गति न तादृशी शुष्केण गोमयेन। मृत्तिकामिश्रगोमयेन लिप्तं स्थलं दर्शनीयं सुन्दरञ्च सम्पद्यते। यत्र च पाकः क्रियते तत्र भोजनादिकरणेन घृतं मिष्ट-मुच्छिष्टञ्चापि पतति तेन मक्षिकापिपीलिकादयो बहवो जीवा मलिनस्थान-त्वादागच्छन्ति। यदि तत्र मार्जनलेपनादिना प्रतिदिनं न पवित्रीक्रियेत तदा

तत्स्थानं मलोत्सर्जनस्थलमिव सञ्जायेत। एतदर्थं प्रतिवासरं मार्जनेन मृत्तिकाञ्चितगोमयलेपनेन च सर्वथा भोजनस्थानं शोधयेत्। यदि तत्रत्या इष्टकचिता भूमिः स्यात्तदा जलेन प्रक्षाल्य मार्जयेत्। तेन पूर्वोदिता दोषा निवर्तन्ते। यवनमहोदयानां पाकस्थाने कुत्रचित् प्रशान्ता अङ्गाराः कुत्रचित् भस्मचयः क्वचित् काष्ठानि कुत्रचन भग्नो घटः दुत्रचनोच्छिष्टा पात्रिका क्वचनास्थीनि भग्नचरणञ्चेत्यादिपदार्थाः पतिता भवन्ति। कथमिव वर्ण्यन्तां खलु तत्रत्या मक्षिकाः ? तत्स्थानमीदृशमसुन्दरं प्रतिभाति यत्कोपि सज्जनस्तत्रोपगम्योपविशेच्चेत्स उद्वमेदेव खलु। दुर्गन्धिस्थानमिवैव विलोक्येत तन्नु। भवतु ! यदि कश्चनैतं पृच्छेद् यद्—यदि गोमयलेपने दोषं मन्यते भवाँस्तर्हि चुल्हौ करीषं निक्षिप्य तस्यांगारे ताम्रपर्णीवीटिका-पानेन गृहभित्तिलेपनादिना कार्येण च यवनमहोदयस्यापि भोजनस्थानं भ्रष्टं भवेदेवात्र कः सन्देहः ?

प्र०—गोमयलिप्तस्थाने समुपविश्य भोजनमुत्तममुत बहिरुपविश्य ?

उ०—यत्र सुन्दरं पवित्रमुत्तमञ्च स्थानं विलोकयेत्तत्रैव भोजनं विदध्यात् परमनिवार्ययुद्धादिप्रसङ्गे तु तुरङ्गमादिवाहनमारूढस्योत्थि-तस्यापि वा जनस्य भोजनपानादिकृत्यमत्यन्तमुचितं वर्तते।

प्र०—किं स्वहस्तेनैव निर्मितमन्नं भक्षणीयमन्यहस्तनिर्मितञ्च न भक्षणीयम्।

उ०—यद्यार्येषु पवित्ररीत्या सर्वे पाकं कुर्युस्तदा तु नियतं सर्वार्यजनैः सह भोजने न काचिदपि हानिरस्ति यतो यदि ब्राह्मणादिवर्णस्थाः स्त्रीपुरुषाः स्वयंपाककरणगोमयलेपनपात्रमार्जनादिकृत्येषु व्यापृता भवेयुस्तदा कदापि खलु विद्यादिशुभगुणानां वृद्धिर्न सम्भाव्यते। पश्यत—महाराजयुधिष्ठिरानु-ष्ठिते राजसूययज्ञे सकलभूवलयान्तर्गता भूपतय ऋषयो महर्षयश्चाययुः। सकलास्ते भोजनमेकस्यामेव पाकशालायां चक्रिरे किन्तु यदारभ्य यवनांग्ल-जनादीनां मतमतान्तराणि प्रवृत्तानि, परस्परं विरोधः संवृत्तः, तैर्मद्यपानं गोमांसादिभक्षणञ्चाङ्गीकृतम्, तदारभ्यैव भोजनादिषु कलहः प्रविष्टः। दृश्यताम्—काबुलकंदहारेराणमेरीकादि योरूपदेशीयराजकन्याभिर्गान्धार्यु-लोपीप्रमुखाभिस्साकमार्यावर्तदेशीयनरेन्द्राः पाणिग्रहणमङ्गलादिकृत्यं विदधिरे। शकुनिप्रभृतयः कौरवपाण्डवैः समं बुभुजिरे। किञ्चिदपि ते न विरुरुधिरे यतस्तस्मिन् समये सकलमहीमण्डले केवलो वेदोदितो धर्मः प्रववृते। तस्मिन्नेकनिष्ठा बभूवुरखिलाः। अन्योन्यसुखदुःखहानिलाभानात्मन इव मिथः सर्वे बुबुधिरे तदैव भूवलये सुखं विरेजे। इदानीन्तु मतबाहुल्येन नैकानि दुःखानि विरोधाश्चावर्द्धन्त तेषां निवारणं बुद्धिमतामेव कर्त्तव्यं वर्तते। परमेश्वरस्सर्वेषां हृदयस्थले हीदृशं सत्यधर्मबीजारोपणं कुर्याद् येनासत्य-

मतमतान्तराणि तूर्णमेव विलीयेरन् । अस्मिन् विषये निखिलविबुधा विमृश्य विरोधमपहायानन्दं संवर्द्धयेयुः ।

आचारानाचारभक्ष्याभक्ष्यविषयमुद्दिश्याल्पमिदमलेखि । ग्रन्थस्यास्य पूर्वार्द्धोऽनेन दशमसमुल्लासेन समं समाप्तः । एषु समुल्लासेषु विशेषतः खण्डनमण्डने न विहिते । यावन्मनुजाः सत्यासत्यविचारे किञ्चिदपि सामर्थ्यं न वर्द्धयन्ति तावत्ते स्थूलसूक्ष्मखण्डनानामभिप्रायमवगन्तुं न प्रभवन्तीति पूर्वं सर्वेभ्यः सत्यशिक्षामुपदिश्याधुनोत्तरार्द्धे चतुर्षु समुल्लासेषु विशेषतः खण्डन-मण्डने विधास्यामः । चतुर्णामेषां समुल्लासानां प्रथमे खल्वार्यावर्त्तीय-जनानां द्वितीये जैनानां तृतीये हरिवर्षीयाणां तुरीये च यवनानां मतानां खण्डनमण्डनविषयं वर्णयिष्यामः । तदनु चतुर्दशसमुल्लासान्ते स्वमतमपि प्रदर्शयिष्यते । यदि कश्चन विशेषखण्डनमण्डने द्रष्टुमभिलषेत्तर्हि स एषु चतुर्षु समुल्लासेषु पश्येत् । परं सामान्यतस्तु क्वचिद् क्वचिद् दशसमुल्लासे-ष्वपि किञ्चिदल्पे खण्डनमण्डने विहिते स्तः । चतुर्दशसमुल्लासानेतान् यः पक्षपातं विहाय न्यायदृष्ट्या विलोकयेत् तस्यात्मनि सत्यार्थस्य प्रकाशः संवृत्यानन्दो भविष्यति । यश्च दुराग्रहेणेर्ष्यया च विलोकयिष्यति श्रोष्यति च तस्य यथार्थाभिप्रायावगतिर्दुर्भाव्यैव । तस्माद् यः कश्चनैतान् यथावन्न विचारयिष्यति सोऽस्य भावमनुपलभ्य भ्रमजालजले निपतिष्यति । सत्या-सत्ये निर्णीय सत्यग्रहणमसत्यपरिहरणमेव विदुषां कर्त्तव्यं वर्तते । तेन ते नितरामानन्दिता भवन्ति । त एव गुणग्राहिणो मनुजा विद्वांसो भूत्वा धर्मार्थकाममोक्षरूपफलान्युपलभ्य प्रसन्ना अवतिष्ठन्ते ।

**इति श्रीमद्दयानन्दसरस्वतीस्वामिकृते सत्यार्थप्रकाशे मेधाव्रतेन देवगिरालङ्कृते आचारानाचारभक्ष्याभक्ष्यविषये दशमः समुल्लासः सम्पूणः ॥१०॥**

◈ उत्तरार्द्धः ◈

# अनुभूमिका

## ( १ )

नासीत्पञ्चसहस्रवर्षेभ्यः प्राग् वेदमतादन्यत्किमपि मतमिति सिद्धमिदं खलु !! यतो वेदोदिता निखिला वार्ता विद्याया अविरुद्धा वर्त्तन्ते। महाभारतयुद्धमेव वेदानामप्रवृत्तेर्निदानम्। वेदानामप्रवृत्त्या भूमण्डलेऽविद्यान्धकारप्रसरणान्मनुजानां मतिर्भ्रान्ता येन यथेष्टं स्वमतानि प्रवर्तितानि जनैः। एषु सर्वेषु मतेषु वेदविरुद्धानि पुराणजैनकृश्चीनयवनाख्यानि चत्वारि सकलमतमूलभूतानि सन्ति मतानि। क्रमशस्तान्येकस्मादनन्तरं द्वितीयं ततस्तृतीयमथ तुरीयमिति प्रवृत्तानि। एकसहस्रादन्यूनास्सन्ति खल्विदानीमेषां चतुर्णां शाखाः। सर्वेषामेषां मतवादिनां तच्छिष्याणामन्येषाञ्च जनानां मिथः सत्यासत्यविनिर्णये भूयान् परिश्रमो न जायेतेत्ययं ग्रन्थो व्यरचि। यद्यदत्र सत्यमतमण्डनमसत्यमतखण्डनञ्च विहितं तत्सकलजनेभ्यो विज्ञापनमेत्र प्रयोजनं निरधारि। अत्र यादृशी मे बुद्धिर्यावती वा विद्या यावाँश्चामीषां चतुर्णां मतानां मूलग्रन्थावलोकनेन बोधः समजनि तस्याखिलस्य सकलजनसमक्षं निवेदनमेवोत्तमं मया व्यज्ञायि। विलुप्तस्य हि विज्ञानस्य पुनर्योगः सुलभो नास्ति। पक्षपातं विहायास्य ग्रन्थस्यावलोकनेन सत्यमसत्यञ्च समं विज्ञास्यते सकलैः। ततः सर्वेषां स्वस्वबुद्धियोगानुसारेण सत्यमतग्रहणेऽसत्यमतपरिहरणे च सौकर्यं सम्पत्स्यते। एतेषां मध्याद्यानि पुराणप्रमुखग्रन्थेभ्यः शाखारूपाणि विविधानि मतान्यार्यावर्त्ते प्रवृत्तानि सन्ति तेषां संक्षेपतो गुणदोषा अस्मिन्नेकादशे समुल्लासे प्रदर्श्यन्ते। अनेन मम कर्मणोपकारश्चेन्न मन्येत विरोधोऽपि तदा न वितन्येत यतो न खलु कस्यापि विरोधो हानिर्वा ममाभिप्रेता परं सत्यासत्ययोर्निर्णयं कर्तुं कारयितुञ्चाभिप्रेयते मया। अनेनैव प्रकारेण सकलनृणां न्यायदृशा वर्तनं सुतरां समुचितं वर्तते। सत्यासत्ययोर्निर्णयं कर्तुं कारयितुञ्चेदं जन्म। एषां मतमतान्तराणां विवादेन महीमण्डले यानि यान्यनिष्टफलानि सञ्जातानि सञ्जायन्ते सञ्जनिष्यन्ते च तानि पक्षपातविहीना विद्वज्जना विज्ञातुं प्रभवन्ति। यावदस्यां मनुष्यजातौ मिथो मिथ्यामतमतान्तराणां विरुद्धवादः प्रलयं न प्रयास्यति न तावदन्योन्यस्यानन्दो भविष्यति। यदि वयं सकलजना विशेषतो विपश्चिद्वरा ईर्ष्याद्वेषादिकं विहाय सत्यासत्ये निर्णीय सत्यमङ्गीकर्त्तुमसत्यञ्च परिहर्त्तुं हारयितुञ्चाभिलषेमस्तदा नास्त्यसाध्यमिदमस्माकम्। नियतमनेन विदुषां विरोधेनैव सर्वे जना विरोधजाले निपातितास्तिष्ठन्ति। यदीमे निजप्रयोजनमसाधयित्वा सर्वेषां प्रयोजनं साधयितुं वाञ्छेयुस्तदा सद्य एवैकमत्यं सम्पद्येत। तत्सम्पादनोपायोऽस्य ग्रन्थस्य पूर्तौ प्रतिपादयिष्यते। सर्वशक्तिमान् परमेश्वर एकमतप्रवर्त्तनोत्साहं सकलमनुजानामात्मसु प्रकाशयेत्।

**अलमतिविस्तरेण विपश्चिद्वरशिरोमणिषु ॥**

उत्तरार्द्धः

# अथैकादशसमुल्लासारम्भः

## अथाऽऽर्य्यावर्त्तीयमतखण्डनमण्डने विधास्यामः

अथाऽऽर्यावर्त्तदेशवासिनामार्यजनानां मतस्य खण्डनं मण्डनञ्च करिष्यामः। ईदृशोऽयमार्यावर्त्तदेशोऽस्ति यदस्मिन्महीमण्डले नान्यः कोऽपि देशस्तत्सदृशः। अत एवेयं भूमिः सुवर्णभूमिरभिधीयते यत इयमेव सुवर्णादि-रत्नानि प्रसूते। अत एव सर्गारम्भे खल्वेनमेव देशमुपेत्यार्य्या ऊषुः। तस्मा-देवास्माभिरभ्यधायि सृष्टिप्रकरणे—"उत्तमजना आर्यास्तदितरे जना दस्यव इत्यभिधीयन्ते" इति। यावन्तो देशा भूवलये सन्ति सकलास्त एनमेव देशं प्रशंसन्ति आशासते चास्य देशस्य संस्कृत्यैवास्माकं कल्याणं भविष्यति। स्पर्शमणिप्रस्तर इति यदाकर्ण्यते तत्त्वनृतं परमार्य्यावर्त्तदेश एव सत्यः स्पर्श-मणिर्वर्त्तते यदस्य स्पर्शसमकालमेवायसरूपा दरिद्रा विदेशाः सुवर्णमया अर्थात्संपत्तिशालिनः संजायन्त इति।

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥**

—मनु० २।२०

आसृष्टेरापञ्चसहस्रवर्षपूर्वसमयमार्याणां सार्वभौमं चक्रवर्त्तिपद-मण्डितमवनिमण्डले विरराज साम्राज्यम्। अन्येषु देशेषु माण्डलिका अर्थात् सामन्ता महीपतयो न्यवसन्। यतः कौरवपाण्डवपर्यन्तमत्रत्ये राज्ये राजशासने चाखिलमहीवलयवर्त्तिनो निखिला राजानः प्रजाश्चानुववृतिरे। यतोऽत्र सृष्टयारम्भसृष्टाया मनुस्मृतेरस्या प्रमाणमिदम्। "अस्मिन्नेवार्यावर्त्तदेशे समुत्पन्नेभ्यो ब्राह्मणेभ्यो विद्वज्जनेभ्यो भूमण्डलगता मानवा ब्राह्मणक्षत्रिय-वैश्यशूद्रदस्युम्लेच्छादयः सकलाः स्वस्वयोग्यं चरित्रं विद्याञ्च शिक्षेरन्निति।" महाराजयुधिष्ठिरकृतराजसूययज्ञं महाभारतयुद्धञ्च यावदत्रत्यराष्ट्राधीनानि बभूवुरखिलराज्यानि। श्रूयताम्—चीनदेशीयो भगदत्तः, पातालवासी बभ्रूवाहनो, हरिवर्षीयो मार्जारलोचनो विडालाक्षो, यूनान इत्यभिहितो यवन ईराणवास्तव्यः शल्यश्चेत्यादयोऽखिलनृपतयो राजसूययज्ञे महाभारत-

युद्धे च निदेशानुसारमाजग्मुः। रघुकुलराजगणे शासति सति रावणोऽप्यत्रत्य-नृपायत्तो बभूव किन्तु यदाऽसौ रामचन्द्रराज्यकाले प्रतिकूलः संवृत्तस्तदा रामचन्द्रोऽमुं दण्डयित्वा तदीयानुजाय विभीषणाय राज्यं ददौ। स्वायम्भव-नृपतिमारभ्य पाण्डवपर्यन्तमार्याणां चक्रवर्तिराज्यमवर्तत। तदनु मिथो विरोधेनैव विगृह्य व्यनश्यन्। यतोऽस्यां परमात्मसृष्टौ दर्पशालिनामन्याय-कारिणामविदुषां जनानां शासनं न चिरं तिष्ठति। संसारस्येयं स्वाभाविकी प्रवृत्तिर्यद् यदा विपुलधनमसंख्यप्रयोजनाधिकं भवति तदाऽऽलस्यपुरुषार्थ-राहित्येर्ष्याद्वेषविषयासक्तिप्रमादा वर्धन्ते येन देशे सुशिक्षणं विनश्य दुर्गुणा दुर्व्यसनानि च समेधन्ते। यथा खलु मद्यमांससेवनबाल्यकालीनविवाहस्वेच्छा-चारादिदोषा बहुलीभवन्ति। यदा च युद्धविभागे युद्धविद्याकौशलं बलञ्चै-तावत् प्रबलं भवेद् यदमुष्य साम्मुख्यं विधातुं धरणितले नान्यः कोऽपि प्रभवेत्तदा तेषु पक्षपाताभिमानवर्द्धनेन वर्धते खल्वन्यायः। यदेमे दोषाः सञ्जायन्ते तदाऽन्योन्यस्मिन् विरोधः संवृत्येतरनीचकुलात्तदधिकः कश्चिदी-दृशः समर्थपुरुष उत्तिष्ठते यस्तेषां पराजयं कर्तुं पारयति। यथा हि खलु यवनाधिपसाम्राज्यविरुद्धं शिवराजगोविन्दसिंहौ प्रत्युत्थाय यवनानां राज्यं विदलयाञ्चक्रतुः।

**अथ किमेतैर्वा परेऽन्ये महाधनुर्धराश्चक्रवर्तिनः केचित् सुद्युम्नभूरि-द्युम्नेन्द्रद्युम्नकुवलयाश्वयौवनाश्ववद्ध्र्यश्वाश्वपतिशशविन्दुहरिश्चन्द्राऽम्बरीष-ननक्तुसर्यातिययात्यनरण्याक्षसेनादयः। अथ मरुत्तभरतप्रभृतयो राजानः।**

—मैत्र्युपनि० प्र० १। खं० ४

इत्यादिप्रमाणैः सिद्धं यत्सृष्टित आरभ्य महाभारतयुद्धपर्यन्तमार्य-कुलेष्वेव चक्रवर्तिनः सार्वभौमा नरपतयो बभूवुः। इदानीममीषां सन्तती-नामभाग्योदयेनैते राज्यभ्रष्टा भूत्वा विदेशीयनृपपादाक्रान्ता भवन्ति। यथाऽत्र सुद्युम्नप्रभृतीनां सर्वभूमिविश्रुतानां सार्वभौमानां चक्रवर्तिनृपाणां नामानि लिखितानि सन्ति तथैव मनुस्मृतिमहाभारतादिग्रन्थेष्वपि स्वायम्भ-वादिचक्रवर्तिनरेन्द्राणां नामधेयानि स्पष्टमुल्लिखितानि वर्तन्ते। एतानि मिथ्या सन्तीति कथनमज्ञानिनां पक्षपातिनाञ्च कार्यं वर्तते।

**प्र०**—या आग्नेयास्त्रादिविद्या लिखितास्तास्सत्यास्सन्ति न वा? तोपबन्दूकाभिधान्यायुधानि च तदानीमभवन्न वा?

**उ०**—सत्या इमा विद्याः खलु। इमान्यायुधान्यपि समभवन्। पदार्थ-विद्यया हि सम्भव एतेषाम्।

**प्र०**—किमिमानि देवतानां मन्त्रैरसिध्यन्?

**उ०**—नैव, इमानि सर्वाणि साधनानि यैरस्त्रशस्त्राणि जनास्साध-याञ्चक्रस्ते "मन्त्राः" अर्थाद् विचारा आसन्। तैर्विचारैस्ते जनास्तान्यसाधयन

प्रायुञ्जन्त च। शब्दमयोऽयं मन्त्रस्तस्मान्नोत्पद्यते किमपि द्रव्यम्। यदि "मन्त्रादग्निरुत्पद्यत" इति कश्चन वदेत्तदा सोग्निर्मन्त्रजपकर्तुर्हृदयं रसनाञ्च भस्मसात् कुर्यात्। अरातिं निहन्तुमभिलषन् स स्वयमेव म्रियेत खलु ? अतो मन्त्र इति विचारनाम। यथा "राजमन्त्री" राजकार्याणां विचारयिता समुदीर्यते तथा "मन्त्रेण" अर्थाद्विचारेण सकलसृष्टिगतपदार्थानां प्रथमं ज्ञानं सम्पद्यते पश्चात् क्रियया नैकविधाः पदार्थाः क्रियाकौशलानि चोत्पद्यन्ते। यथा कश्चन लोहमयं बाणं गोलं वा निर्माय तत्रेदृशान् पदार्थान् निदध्याद् यद्येऽनलसंयोजिता वायुमण्डले धूमप्रसारणेन रविकिरणानां वायोर्वा सम्पर्केण चाग्निं प्रकटयेयुस्तदेवाऽऽग्नेयास्त्रमभिधीयते। यदाऽन्यो जन एतन्निवारयितुमभिलषेत्तदा स एतस्योपरि वारुणास्त्रं परिमुञ्चेत्, अर्थाद् यथा प्रत्यर्थी रिपोर्बले परिमुच्याग्नेयास्त्रं तन्निहन्तुं वाञ्छेत् तथैव निजसैन्यसंरक्षणाय सेनापतिर्वारुणास्त्रेण परस्याग्नेयास्त्रं निवारयेत्। तदेतादृशां द्रव्याणां संयोगात् निष्पद्यते येषां धूमपटली वायुस्पर्शसमकालमेव मेघमण्डली सम्भूय झटिति वर्षेदनलञ्च निर्वापयेत्। इत्थमेव नागपाशो यो रिपुबले प्रक्षेपणेन तद्गात्राणि दृढं बध्नाति। तथैव मोहनास्त्रमन्यद् यस्मिन् मादकद्रव्यनिक्षेपणात्तदीयधूमसंसर्गात् निखिलमरिबलं निद्राकुलं विचेतनं वा सम्पद्येत। अनेनैव प्रकारेण सकलानि शस्त्रास्त्राणि समजायन्त। लोहतन्तोः काचाद्वाऽन्यस्मात्कस्माच्चित्पदार्थाद्वा विद्युतमुत्पाद्य रिपुदलं व्यापादयन् येन तदप्याग्नेयास्त्रं पाशुपतास्त्रञ्चाख्यायते। तोपबन्दूकेति नामानि परदेशभाषाया नतु संस्कृतभाषाया नाप्यार्यावर्त्तीयभाषाणां सन्ति परं विदेशीयजननास्तोपेति यन्निगदन्ति सा देवभाषायामार्य्यभाषायाञ्च शतघ्नीति निगद्यते। बन्दूकेति च यद् वदन्ति सा देवार्यगिरोर्भुशुण्डीति कथ्यते। नापठन् ये संस्कृतविद्यां ते भ्रान्ता भूत्वा किमप्येव लिखन्ति किमप्येव जल्पन्ति च। तन्न प्रमाणयन्ति बुद्धिमन्तो जनाः। यावत्यो विद्या भूमण्डले प्रसृतास्तावत्यः सकला आर्य्यावर्त्तदेशान्मिश्रदेशे तस्माद् यूनानदेशे तयो रोमदेशे तस्माद् यूरोपदेशे यूरोपाच्चामेरीकादिदेशेषु प्रसृतास्सन्ति। अद्ययावद् यावान् प्रचारः संस्कृतविद्याया आर्यावर्त्तदेशे वर्तते नास्ति तावान् प्रचारः कस्मिन्नप्यन्यदेशे। "शार्मण्यदेशे संस्कृतविद्यायाः प्रचुरः प्रचारः। यावच्च संस्कृतं मोक्षमूलरमहोदयोऽपठत्तावन्न कोऽप्यपठदिति" ये जना वदन्ति तेषां कथनमेव केवलमिदम्। यथा "निरस्तपादपे देशे एरण्डोऽपि द्रुमायते" अर्थाद् यत्र देशे कोऽपि महीरुहो न प्ररोहति तत्रैरण्डमेव महावृक्षं मन्यन्ते जनाः। तथैव यूरोपदेशे संस्कृतविद्यायाः प्रचाराभावात् शार्मण्यदेशीयैर्जनैर्मोक्षमूलरमहाशयेन च यत्किञ्चिदधीतं तदेव तद्देशकृतेऽधिकमस्ति। परमार्यावर्तदेशमभिलक्ष्य तु तेषामतिन्यूना विद्यते गणना। यतो मया शार्मण्यदेशवासिन-

आचार्यस्य पत्रेण—"शार्मण्यदेशे संस्कृतपत्रिकाया अर्थावगन्तारोऽपि जना अतिन्यूनास्सन्तीति" व्यज्ञायि। मोक्षमूलरमहोदयस्य संस्कृतसाहित्यमल्पीयसीं वेदव्याख्याञ्चावलोक्य मयाऽवेदि—"मोक्षमूलरेणेतस्ततस्त्यामार्यावर्त्तीय-जनकृतविवृतिं विलोक्य किञ्चित् यथा तथाऽलेखि" इति। यथा—

**युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः। रोचन्ते रोचना दिवि॥**

इति मन्त्रेऽश्वो वर्णितस्तेन। अस्मात्तु सायणाचार्येण यः सूर्योऽर्थो वर्णितस्स समीचीनः परमस्य सत्योऽर्थः परमात्मा विद्यते। अर्थोऽसौ मत्प्रणीतायामृग्वेदादिभाष्यभूमिकायां द्रष्टव्यः। तस्यां मन्त्रस्यास्य यथार्थो-ऽर्थः कृतः। एतावतैव—"शार्मण्यदेशे मोक्षमूलरमहोदये च संस्कृतविद्यायाः कियत्पाण्डित्यमस्तीति" विज्ञेयम्।

निश्चितमिदं खलु—"यावत्यो विद्या यावन्ति च मतानि महीतले वितानि तानि निखिलान्यार्य्यावर्त्तदेशादेव प्रचलितानीति।" दृश्यताम्—कश्चित् फ्रान्सदेशान्तर्गतपैरसनगरनिवासी जैकालयटाभिधमहोदयः स्वीये 'बायविल इन इण्डिया' नामके ग्रन्थे लिखति—"सर्वासां विद्यानां सौजन्यानां कल्याणानां वा निधिरयमार्यावर्त्तदेशो वर्त्तते। सकला विद्या मतानि चैतस्मादेव देशात् प्रचलितानि सन्तीति।" परमात्मानञ्चासौ प्रार्थयते—"अयि परमेश्वर! यादृशी पुराऽऽर्यावर्त्तदेशस्य समुन्नतिरासीत्ता-दृश्येवास्मद्देशस्य समुन्नतिर्विधीयतां भगवानिति।" तत्तस्मिन् ग्रन्थेऽवलोक-नीयम्। तथैव दाराशिकोहाख्ययवनराजपुत्रोऽपि खल्वित्थमेव निरचैषीद्—"यादृशी पूर्णविद्या संस्कृते वर्त्तते नास्ति तादृशी कस्यामपि भाषायामिति" लिखति चायमुपनिषदामनुवादे—"अर्बीप्रमुखा विविधा भाषा अहमपठं किन्तु मनसो मे सन्देहो दूरीभूयाऽऽनन्दो नाभवत्। यदा खलु संस्कृतमवा-लोकयमाकर्णयञ्च तदा निस्सन्देहीभूय भूयानानन्दो मेऽभून्मनसीति।" अवलोक्यतां काश्या मानमन्दिरान्तर्निर्मितं शिशुमारचक्रम्। पूर्णरक्षाया अभावेऽपि यत्कियन्मनोहरं प्रतीयते। यस्मिन्नद्य यावदपि खगोलस्य भूयान् वृत्तान्तो विज्ञायते। यदि सवाईजयपुराधीशस्तत् संरक्षेद् भग्नञ्च पुनर्निर्मिमीत तदा त्वतीवोत्तमं भवेत्? परमेतादृशः शिरोमणिरूपो देशो महाभारतयुद्धेनैतावदहन्यत यदद्यावध्यपि निजां पूर्वदशां न प्रपद्यते, यदा हि भ्राता भ्रातरं हन्यात्तदा को नु खलु सन्देहो विनाशे?

**विनाशकाले विपरीतबुद्धिः॥**—वृद्धचाणक्यनीतौ। अ० १६।१७

आसीदति यदा विनाशसमयस्तदा विपरीतबुद्धयो भूत्वा विपरीत-कर्माणि कुर्वते मनुजाः। कश्चिदेताननुकूलं बोधयेच्चेद् विरुद्धं मन्येरन्नमी। विरुद्धञ्च चेदवबोधयेत्तदाऽनुकूलं बुध्येरन्निमे। यदा महान्तो विद्वांसो

राजानो महाराजा ऋषयो महर्षयश्च महाभारतसंग्रामे भूयांसोऽहन्यन्त बाहुल्येन चाम्रियन्त खलु तदा विद्याया वेदोदितधर्मस्य च प्रचारो नष्टोऽभवत्। ईर्ष्याद्वेषाभिमाना अन्योन्यं प्रति प्रवृत्ताः। यः प्रबलो भूतस्स देशमाक्रम्य नृपतिः सञ्जातः। अनयैव रीत्या सर्वत्र आर्यावर्ते खण्डशः सम्भूतानि राज्यानि। को नु खलु पुनस्तन्त्रयेत द्वीपद्वीपान्तराज्यतन्त्राणि !! यदा ब्राह्मणा एव विद्याविहीनास्संवृत्तास्तदा किमिव वर्ण्यतां खलु क्षत्रियवैश्यशूद्राणामविद्वत्वम्। पारम्पर्यतो याऽऽसीद् वेदादिशास्त्राणां सार्थपठनशैली सापि विलीनैव। केवलं जीविकायै पाठमात्रमपठन् ब्राह्मणास्तदपि क्षत्रियादीन्नापाठयन्। यदा ह्यविद्वाँसो गुरवो जातास्तदा कपटदम्भाधर्मा अपि तेषु वृद्धिं गताः। ब्राह्मणा व्यचिन्तयन्—"निजजीविकायाः कश्चन प्रबन्धो विधेय इति।" अथ सम्मतिं विधायेदमेव निश्चित्य क्षत्रियादीनुपादिशन्नमी—"वयमेव युष्माकं पूजनीयास्स्मो देवाः। अस्मत्परिचर्यां विना यूयं स्वर्गं मुक्तिं वा न लप्स्यध्वे। परं यदि यूयमस्मत्सेवां न करिष्यथ तर्हि भयङ्करे नरके निपतिष्यथेति।"

येषां येषां पूर्णविदुषां धार्मिकाणां ब्राह्मणपूजनीयादिनामानि वेदेष्वृषिमुनिकृतशास्त्रेषु च लिखितान्यासँस्तेषां तानि नामानि मूर्खा विषयिणः कपटिनो लम्पटा अधार्मिका इमे स्वेषु योजयितुं प्रावर्त्तन्त कथमिव खलु तेषामाप्तविदुषां लक्षणानि मूढेष्वमीषु संघटेरन्। परं यदा क्षत्रियादयो यजमानाः संस्कृतविद्ययाऽतीवशून्यास्सञ्जातास्तदा तेषां समक्षं यद् यद् विकत्थितमेभिस्तत्तत्सकलं वराकास्सत्यममन्यन्तेति साधितं खलु केवलनामधारिभिरमीभिर्ब्राह्मणैः। निखिलान्निजवचनजाले निबध्य वशंवदतामनयन्नवदंश्चामी—**ब्रह्म वाक्यं जनार्दनः**—[पाण्डवगीता] अर्थाद् यत् किञ्चिदपि ब्राह्मणानां वदनारविन्दाद् वचनं निस्सरति तत्साक्षाद् भगवतो मुखान्निसृतमिति बोध्यं भवद्भिरिति यदा क्षत्रियादयो वर्णा अक्षभिरन्धा ग्रन्थितः पूर्णा अर्थाद् येषामान्तरं विद्यानेत्रं स्फुटितमस्ति येषाञ्चान्तिके विपुलं धनं विद्यत एतादृशाः शिष्याः सम्प्राप्तास्तदाऽमीभिः वृथा ब्राह्मणनामधारिभिरुपलब्धं विषयानन्दोपसेवनम्। एतैरिदमपि प्राकाशि "ये केचन वसुन्धरायामुत्तमाः पदार्थास्सन्ति ते सर्वे ब्राह्मणानामेवेति।" या खलु गुणकर्मस्वभावतो ब्राह्मणादीनां वर्णव्यवस्थाऽऽसीत्सा विनाश्य जन्मतः कृता। मृतकपर्यन्तानामपि दानं यजमानेभ्य आदातुमारभन्तामी। स्वच्छन्दमाचरन्निमे। वयं भूदेवाः। अस्मत्परिचर्यां विना कश्चिदपि देवलोकमधिगन्तुं न प्रभुरित्येतावत्पर्यन्तमेते व्याहरन्। परं प्रष्टव्या अमी—"कं लोकमलङ्करिष्यन्ति भवन्तः? अत्र भवतां कर्माणि तु भयङ्करनरकभोगसम्पादकानि सन्ति। भवन्तः खलु कृमिकीटपतङ्गादयो

भविष्यन्तीति ।" तदा तु प्रवृद्धमन्यवो वदन्त्यमी—"वयं शापं दास्यामश्चेन्नंक्ष्यथैव यूयम्। लिखितं हि किल—"**ब्रह्मद्रोही विनश्यतीति।**" यो ब्राह्मणाय द्रुह्यति स विनश्यतीति। आम्। इदं तु सत्यं यद्—"यः पूर्णवेदविदः परमात्मविज्ञातॄन् धर्मात्मनः सकलजगदुपकारकान् पुरुषान् द्वेक्ष्यति स असंशयं विनङ्क्ष्यतीति।" परं ये ब्राह्मणा न स्युर्नास्ति तेषां ब्राह्मणनामधेयं नापि ते सेवनीयाः सन्ति।

**प्र०**—के तदा वयम्?

**उ०**—पोपास्स्थ यूयम्।

**प्र०**—पोपः क उच्यते?

**उ०**—रोमनभाषायां तु महतः पितुश्च पोप इति नामधेयमस्तीति सूच्यते परं सम्प्रति कपटप्रपञ्चेन परं प्रतार्य निजप्रयोजनं यः साधयति स पोप उच्यते।

**प्र०**—वयं तु ब्राह्मणाः साधवश्च स्मो यतोऽस्माकं पिता ब्राह्मणो माता च ब्राह्मणी वयञ्च कस्यचन साधोः शिष्याः स्मः।

**उ०**—इदं तु सत्यं किन्तु निशम्यतां भ्रातरः? मातापित्रोर्ब्राह्मणत्वात् कस्यचित् साधोः शिष्यत्वाच्च ब्राह्मणाः साधवो वा न भवितुं प्रभवन्ति जनाः किन्तु निजोत्तमगुणकर्मस्वभावतो ब्राह्मणास्साधवश्च भवन्ति ये खलु परोपकारिणः स्युः। श्रुतं किल यथा रोमदेशीयाः पोपाः स्वशिष्यान् कथयन्ति स्म—"यूयं निजपापानि कथयिष्यथास्मत्पुरश्चेत् क्षंस्यामहे वयम्। अस्माकं सेवां निदेशञ्च विना कोऽपि स्वर्गं गन्तुं न पारयति। यदि यूयं स्वर्गं जिगमिषवस्तदास्मदन्तिके यावतो रूप्यकान् निधास्यथ तावतामेव सामग्रीं स्वर्गे प्राप्स्यथेति।" एवं निशम्य यदा कश्चन ज्ञाननेत्रविहीनो धनाढ्यो जनः स्वर्गगमनाभिलाषं कुर्वाणः पोपमहोदयाय यथेष्टं धनं ददाति स्म तदा स पोपमहोदय ईसाख्यदेवस्य मरियमाभिधदेव्याश्च मूर्तिसम्मुखे स्थित्वा प्रतिज्ञापत्रमित्थं विलिख्य प्रयच्छति स्म—'हे पूजनीयदेव ईसामसीह! जनोऽसौ तव नाम्ना लक्षं रूप्यकान् स्वर्गागमनाय ममान्तिके न्यदधात्। यदाऽसौ स्वर्गं समागच्छेत्तदा त्वं निजपितुः स्वर्गराज्येऽमुष्मै पञ्चविंशति सहस्ररूप्यकैरुद्यानानि गृहाणि च, पञ्चविंशतिसहस्ररूप्यकैस्तुरङ्गमादिवाहनमृगयुकिंकरादीन्, पञ्चविंशतिसहस्ररूप्यैर्भोजनपानवसनाच्छादनानि, शिष्टान् रूप्यांश्चेष्टमित्रभ्रातृबान्धवादीनां भोजनसमारम्भाय दापयेरिति।" अथ तस्याभिवचनपत्रस्याधोभागे पोपः स्वहस्ताक्षरं विधाय प्रतिज्ञापत्रं तस्य जनस्य हस्ते प्रदाय तं कथयति स्म—"यदा त्वमासन्नमरणो भवेस्तदेदं प्रतिज्ञापत्रं प्रेतनिक्षेपभूमौ निजशिरस्तले स्थापयितुं स्वकीयकुटुम्बिजनं पूर्वत एव कथयेः। पश्चात्त्वां नेतुं देवदूता यदा समेष्यन्ति तदा त्वां तव हुण्डि-

काञ्च स्वर्गे नीत्वा लेखानुसारं सकलां सामग्रीं तुभ्यं दापयिष्यन्ति ते" इति। आलोक्यतामिदानीम्—'स्वर्गस्य प्रातिनिध्यं (कार्यभारः) पोपमहोदये-नैव खलु गृहीतमिति मन्ये।' यावत्कालं यूरोपदेशे मूर्खता व्यराजत तावत्कालमेव तत्र पोपलीला विलासं व्यतनुत परं साम्प्रतं विद्याया विलासात् पोपस्यासत्या लीला नाधिकं तनुते लीलां किन्तु निःशेषं विलयमपि न गतैषा। तथैवार्यावर्त्तदेशेऽपि पोपो लक्षावतारान् गृहीत्वेव लीलां विततवानिति मन्ये। अर्थात्स नृपतीन् प्रजाश्च विद्याध्ययनात्सत्पुरुषसङ्गाच्च निवारयति नक्तंदिनञ्च तेषां प्रतारणं विनाऽन्यत् किमपि कार्यं न कुरुते। परं ये ये कपटादिकुत्सितव्यवहारान् कुर्वते त एव पोपाः कथ्यन्ते इति नियतं स्मरणीयम्। ये केऽपि तेष्वपि धार्मिका विद्वांसः परोपकारिणस्सन्ति ते सत्या ब्राह्मणास्साधवश्चेति विज्ञेयम्। अधुना तेषामेव कपटिनां स्वार्थिनां (मनुजान् प्रतार्य स्वकार्यसाधकानाम्) जनानां ग्रहणं पोपशब्देन कार्यम्। ब्राह्मणसाधुनामभिश्चोत्तमपुरुषाणां ग्रहणं विधेयम्। दृश्यताम्—यदि कोऽप्युत्तमो ब्राह्मणः साधुर्वा नाभविष्यत्तदा वेदादिसत्यशास्त्रग्रन्थानां वेदानाञ्च सस्वरं पठनपाठनं जैनयवनकृश्चीनादीनां मतजालात् संरक्ष्यार्याणां वेदादिसत्यशास्त्रप्रेमरतेषु वर्णाश्रमेषु च स्थापनमित्यादिकार्यं ब्राह्मणसाधु-जनादृते को नामाकरिष्यत्। **"विषादप्यमृतं ग्राह्यम्"**॥ [मनु० २।२३९] विषादप्यमृतग्रहणमिव पोपलीलायाः प्रतारणादप्यार्याणां जैनादिमतेभ्यो यत्संरक्षणं तन्मन्ये विषेऽमृतमिव गुणो बोध्यः।

यदा यजमाना विद्याविहीनास्सञ्जातास्तदा पोपाः स्वयं किञ्चित्पूजापाठं पठित्वा दर्पमुपेत्य मिथः सम्मतिं विधाय नृपादीनब्रुवन्—"ब्राह्मणाः साधवश्चादण्डचास्सन्तीति।" अवलोक्यताम्—**"ब्राह्मणो न हन्तव्यः"**। **"साधुर्न हन्तव्यः"** इति। एतादृशानि वचनानि यानि सत्य-ब्राह्मणसाधुविषयकान्यासँस्तानि पोपैरात्मसु संघटितानि। अन्याँश्चाप्यसत्य-वचनयुक्तान् ग्रन्थान् प्रणीय तेषु महर्षिमुनिवर्यनामानि सन्धाय तेषामेवाभि-धानैरश्रावयन्। तेषां प्रतिष्ठितर्षिमहर्षीणां नामभिरात्मनो दण्डव्यवस्थामपा-सारयन् स्वैरञ्चाचरन्। ईदृशान् कठिनान् नियमानचालयन्नमी पोपा यत्तेषामादेशं विना शयनोत्थानोपवेशनगमनागमनाशनपानादिकार्याण्यपि कर्त्तुं नाशक्नुवञ्जनाः। भूपतीनीदृशं निश्चयमकारयन् यत्पोपसंज्ञका नामधारिणो ब्राह्मणास्साधवो वा यथाकामञ्चेदाचरेयुस्तदपि ते कदापि न दण्डनीयाः। मनस्यपि तेषां दण्डदानाभिलाषो न करणीयः। यदेदृशी मूर्खता समजनि तदा पोपाः स्वच्छन्दमाचरन्नाचारयँश्चापरान्। दुराचाराणाममीषां मूलानि महाभारतयुद्धादेकसहस्रवर्षपूर्वतः एवाङ्कुरितानि बभूवुः। यद्यपि तत्काले महर्षिमुनिवरा अप्यासँस्तथापि किञ्चिदालस्यप्रमादेर्ष्याद्वेषाङ्कुराः

प्रादुरासन्। ते शनैः शनैः प्रवृद्धाः। यदा सदुपदेशोऽस्तंगतस्तदानीमार्य्यावर्त्तेऽविद्याविकासेन परस्परं जना विग्रहीतुमुपक्रान्ताः।

यतः—

**उपदेश्योपदेष्टृत्वात् तत्सिद्धिः॥ इतरथान्धपरम्परा॥**

—सांख्य० अ० ३। सू० ७९,८१

यदोत्तमोत्तमा उपदेशका भवन्ति तदा धर्मार्थकाममोक्षास्सम्यक् सिध्यन्ति। यदा चोत्तमा उपदेशकाः श्रोतारश्च न भवन्ति तदान्धपरम्परा प्रचलति। पुनरपि यदा सत्पुरुषा जनिमुपेत्य सत्यमुपदिशन्ति तदैवान्धपरम्परा विलीय प्रकाशपरम्परा प्रादुर्भवति। पुनरनन्तरं ते पोपाः स्वस्य स्वचरणयोश्च सपर्यां कारयन्ति कथयन्ति स्म चाज्ञजनान्—"अस्मच्चरणपरिचर्यायामेव युष्मत्कल्याणं विद्यत इति।" एवं यदैतेऽमीषां वशंवदास्समवर्त्तन्त तदा प्रमादविषयासक्तिनिमग्ना मेषपरम्परावत्तस्मिन् प्रवाहेऽनृताचारा गुरवः शिष्याश्च न्यपतन्। येन विद्याबलबुद्धिपराक्रमशौर्यवीर्यादिशुभगुणास्सकला व्यलीयन्त। तदनु विषये निलीना जनाः प्रच्छन्नं मांसमदिरासेवनं व्यतन्वन्। ततस्तेभ्य एवैको वाममार्गः प्रवृत्तः। "शिव उवाच"। "पार्वत्युवाच"। "भैरव उवाच"। इत्यादिनामानि लिखित्वा तद्ग्रन्थस्य तन्त्रमिति नाम विधाय तत्रैवं विचित्रा लीला अवर्णयन्। यथा—

**मद्यं मांसं च मीनं च मुद्रा मैथुनमेव च।**
**एते पञ्च मकाराः स्युर्मोक्षदा हि युगे युगे॥**

—कालीतन्त्रादौ

**प्रवृत्ते भैरवीचक्रे सर्वे वर्णा द्विजातयः।**
**निवृत्ते भैरवी चक्रे सर्वे वर्णाः पृथक् पृथक्॥**

—कुलार्णवतन्त्रम्

**पीत्वा पीत्वा पुनः पीत्वा यावत्पतति भूतले।**
**पुनरुत्थाय वै पीत्वा पुनर्जन्म न विद्यते॥**

—महानिर्माणतन्त्रम्

**मातृयोनिं परित्यज्य विहरेत् सर्वयोनिषु।**
**वेदशास्त्रपुराणानि सामान्यगणिका इव॥**
**एकैव शाम्भवी मुद्रा गुप्ता कुलवधूरिव।**

—ज्ञानसंकलनीतन्त्रम्

आलोक्यतामियमेषां गवर्गण्डपोपानां लीला! यानि वेदविरुद्धान्यतीवाधर्मयुतानि कर्माणि तान्येव श्रेष्ठानि वाममार्गिभिरमन्यन्त। तथा हि—मद्यं मासं मीनं (मत्स्यमितियावत्) मुद्राः (पौलिकचौरीमहारोटिकाचर्वणं योनिपात्राधारां मुद्रां च) पञ्चमञ्च मैथुनमर्थात्सर्वे पुरुषाः शिव इव स्त्रियश्च

पार्वती इवेति मत्वा—**"अहं भैरवस्त्वं भैरवी ह्यावयोरस्तु सङ्गमः"**। इति अनर्गलं वचनमुच्चार्य कस्यापि पुरुषस्य कयापि योषया समं सङ्गमे दोषं न मन्यन्ते वाममार्गिणस्ते। अस्पृश्या नीचा या स्त्रियस्ता अप्यतिपवित्रा अमन्यन्त खल्वमी शास्त्रेषु हि रजस्वलादिस्त्रीणां स्पर्शनिषेधो विद्यते ता अपि वाममार्गिभिरतिपवित्रा अमन्यन्त। आकर्ण्यतामयं तेषामनर्गलश्लोकः—

**रजस्वला पुष्करं तीर्थं चांडाली तु स्वयं काशी।**
**चर्मकारी प्रयागः स्याद्रजकी मथुरा मता।**
**अयोध्या पुक्कसी प्रोक्ता॥** —रुद्रयामलतन्त्रम्

रजस्वलासमागमेन पुष्करस्नानं, चाण्डाल्या समं लीलया काशीयात्रा, चर्मकारीसङ्गेन प्रयागस्नानं, रजकीसङ्गमेन मथुरायात्रा पुक्कसीसङ्गमनेन चायोध्यातीर्थं फलितमिति मन्यन्ते। इतरे मनुजा अवगन्तुं न प्रभवेयुरिति तैर्मद्यस्य तीर्थं, मांसस्य शुद्धिः, पुष्पञ्च मीनस्य, तृतीया जलतुम्बिका च, मुद्रायाश्चतुर्थी, मैथुनस्य च पञ्चमीति नामानि विहितानि। स्वेषाञ्च कौलार्द्रवीरशाम्भवगणादिनामधेयानि कृतानि। ये च वाममार्गे न सन्ति तेषां कण्टकविमुखशुष्कपशुप्रमुखानि नामानि कलितानि। वदन्ति च—"भैरवीचक्रे प्रवृत्त ब्राह्मणादिचाण्डालपर्यन्ताः सकला द्विजास्सञ्जायन्ते तस्मिँश्च निवृत्ते सति सर्वे स्वस्ववर्णस्था भवेयुरिति।" प्रवर्तमाने भैरवीचक्रे वाममार्गीया जना भूमौ पट्टिकायां वा बिन्दुमेकं त्रिकोणं चतुष्कोणं वर्त्तुलाकारं निर्माय-तदुपरि मद्यकलशं निधाय तं पूजयन्ति। मन्त्रञ्च पठन्ति—"ब्रह्मशापं विमोचय" इति। हे मद्य! त्वं ब्रह्मादिशापविमुक्तो भव। एकत्र गुप्तस्थले यत्र वाममार्गीयजनं विना कमप्यन्यमागन्तुं नादिशन्ति तत्र स्त्रीपुरुषाः सङ्गच्छन्ते। तत्र नारीमेकां नग्नां विधाय नराः, पुरुषमेकं दिगम्बरं विरच्य योषितश्चार्चन्ति। तदनु काचन कस्यापि स्वस्य वा पत्नी कापि परस्य निजा वा कन्या काचिदन्यस्य स्वस्य वा जननी भगिनी पुत्रवधूप्रभृतय आगच्छन्ति। तत एकस्मिन् पात्रे मदिरां प्रपूर्य मांसं चणकचूर्णबटकादि च स्थालिकायां निदधति। तन्मदिराचषकं यस्तेषामाचार्यस्स स्वहस्ते समादाय—**"भैरवोऽहम्, शिवोऽहम्"** इत्यभिधाय पिबति। अनन्तरं तेनैवोच्छिष्टचषकेन सर्वे पिबन्ति। अथ कस्यचन भार्यां वाराङ्गनां वा निरम्बरां विधायाथवा पुरुषं कमपि दिगम्बरं विरच्य करे करवालं वितीर्य तां देवीं तं च महादेवं वदन्ति ते। तयोरुपस्थेन्द्रियं पूजयन्ति। पश्चाद् देवीं शिवं वा मद्यं पाययित्वा तेनैवोच्छिष्टपात्रेण सर्वे जना एकैकं चषकं पिबन्ति। अथामुनैव प्रकारेण क्रमशो निपीय मदिरामुन्मत्तीभूय कयापि कस्यापि भगिन्या जनन्या कन्यया वा समं यथाकामं सलीलं कामकेलिं कलयन्ति कौलाः। कदाचिन्मदाति-शयवेगादुपानद्भिः पादप्रहारेण हस्ताहस्ति मुष्टीमुष्टि केशाकेशि च परस्परं

विगृह्णन्त्यमी । तत्रैव केचिद् वमन्ति । तेषु परां कोटिं प्रपन्नो यः कश्चन घोरकर्मा सर्वेष्वग्रगण्यः सिद्धो गण्यते स उद्वमितं तं पदार्थमपि भक्षयति । अमीषां सर्वोत्तमस्य सिद्धस्येमा वार्ताः प्रसिद्धास्सन्ति—

**"हालां पिबति दीक्षितस्य मन्दिरे सुप्तो निशायां गणिकागृहेषु । विराजते कौलवचक्रवर्त्ती ॥"** इति

यो दीक्षितस्य शौण्डिकस्य गृहमुपगम्य चषकमनुचषकं पिबेद् गणिकागृहेषु चोपेत्य ताभिः कमकेलिं कलयित्वा शयीतेत्येवमादिकुकर्माणि निर्लज्जो निःशङ्कश्च सम्भूय यो वितन्यात्स एव वाममार्गिषु सर्वोत्तमो मुख्यचक्रवर्त्तिनृप इव मन्यते । यः खलु नितरां कुकर्मा स एव तेषु महीयान् यश्च सुकृतानि कुर्याद् दुष्कृतेभ्यश्च बिभीयात्स एव लघीयान् । यतः—

**पाशबद्धो भवेज्जीवः पाशमुक्तः सदा शिवः ।**

—ज्ञानसङ्कलनीतन्त्रम् । श्लोकः ४३

तन्त्रे त एवं वर्णयन्ति—"यो लोकलज्जाशास्त्रकुललज्जादेशलज्जादिपाशैर्बद्धोऽस्ति स जीवो यश्चापलज्जो दुष्कर्माणि कुर्वीत स एव सदा शिवः" इति ।

उड्डीसतन्त्रादौ प्रयोग एको वर्णितो यथा—एकस्मिन् गृहे सर्वत आलयास्स्युस्तेषु मद्यपूर्णकुतुपानि स्थापयेत् । एकस्मादालयादेकं काचकुतुपं निपीय द्वितीयालयं गत्वा तस्मात्तन्निपीय तृतीयालयं ततश्च पीत्वा चतुर्थालयं यायात् । उत्थित एव तावत्कालं मदिरां पिबेद् यावत् दण्डवत् पृथिव्यां न निपतेत् । पुनर्यदा मदो मन्दीभवेत्तदा तथैव पीत्वा निपतेत् । पुनस्तृतीयवारं तथैव निपीय निपत्य चोत्तिष्ठेच्चेत्तस्य पुनर्जन्म न जायते । सत्यं त्विदमेव खलु यदेतादृशां मनुजानां पुनर्दुर्लभं मानवजन्मैव । नीचयोनिषु निपत्यामी चिरकालं परिभ्रमेयुः । वाममार्गीयाणां तन्त्रग्रन्थेष्वयं नियमः—"केवलां जननीं परिमुच्य कामपि वनितां न मुञ्चेत् । कामं सा कन्या स्यादुत वा भगिन्यादयोऽपि किं न खलु भवेयुस्सकलाभिस्साकं सङ्गमः करणीय इति । एषां वाममार्गिणां दश महाविद्याः प्रख्यातास्सन्ति तासां मध्ये मातङ्गीविद्यायां कुशलः—"मातरमपि न त्यजेत्" इति कथयति । स्त्रीपुरुषयोः सङ्गमसमये—"सिद्धयो नः प्राप्नुयुः" इति जपन्ति ते । ईदृशो विक्षिप्तमनसो महामूढा मनुजा अपि महीमण्डलेऽल्पीयांसः स्युः । असत्यं यः प्रवर्त्तयितुं वाञ्छति नियतमेव स सत्यं निन्दति । निशम्यताम्—किं नु निगदन्ति वाममार्गिणः ? वेदशास्त्रपुराणानि निखिलानि सामान्यगणिकातुल्यानि सन्ति याचेयं शाम्भवीं वाममार्गस्य मुद्रां, सा गुप्तकुलस्य स्त्रीतुल्यास्ति । एवममीभिः केवलं वेदविरुद्धं मतं प्रवर्तितं वर्त्तते । पश्चादेषां मतं प्राचुर्येण यदा

प्रावर्तंत तदा वञ्चकतामाकलय्य वेदानामपि नाम्ना वाममार्गस्य काञ्चिल्लीलां सञ्चालितवन्त एते। तथा हि—

**सौत्रामण्यां सुरां पिबेत्।**—शतपथ० १२।६।३।७

**प्रोक्षितं भक्षयेन्मांसम्।**—मनु० ५।२७

**वैदिकी हिंसा हिंसा न भवति।**

**न मांसभक्षणे दोषो न मद्ये न च मैथुने।**

**प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला॥**

—मनु० अ० ५।५६

सौत्रामण्यां मद्यं पिबेदित्यस्यायमर्थः—सौत्रामणियज्ञे सोमरसं=सोमवल्या रसं पिबेत्। प्रोक्षिते—यज्ञे—मांसभक्षणे नास्ति दोष इति पामरत्वकथा वाममार्गिभिः प्रवर्तिताः। प्रष्टव्या अमी "ननु वैदिकी हिंसा हिंसा न भवेच्चेत्त्वां तव परिवारञ्च निहत्य जुहुयाम यदि तदा कास्ति चिन्तेति ?" मांसभक्षणे, मद्यपाने, परस्त्रीगमनादौ च दोषो नास्तीति कथनं बालिशत्वमेव। न खलु प्राणिनां पीडनं विना लभ्यते मांसम्। न चापराधं विना पीडनं धर्मकार्यम्। मद्यपानं तु सर्वथा निषिद्धमेव। नाद्यावधि कस्मिन्नपि ग्रन्थे लिखितमिदं वाममार्गीयग्रन्थादृते। अपि तु निषिद्धमेव सर्वत्र। उद्वाहमन्तरेण मैथुनेऽपि दोषः। एतन्निर्दोषमिति वर्णयितारस्सदोषास्सन्ति। एतादृंशि वचांस्यपि महर्षीणां ग्रन्थेषु निक्षिप्य कियतामेवर्षिमुनीनां नामभिर्ग्रन्थान् प्रणीय गोमेधाश्वमेधाभिधानयज्ञानपि कारयाञ्चक्रुः। एतान् पशून् हत्वा मखे हवनेन यजमानः पशुश्च स्वर्गमधिगच्छत इति बोधयामासुश्च। एतादृश्याः प्रसिद्धेरिदमेव कारणं यद् ये ब्राह्मणग्रन्थेषु—अश्वमेधगोमेधनरमेधादिशब्दास्सन्ति तेषां यथार्थोऽर्थ एभिर्न व्यज्ञायि। यदि सत्यमर्थं व्यज्ञास्यँस्तदा कथमीदृशमनर्थमकरिष्यन्।

प्र०—अश्वमेधादिशब्दानां कोऽर्थः ?

उ०—एषामर्थस्त्वयमस्ति—

**राष्ट्रं वा अश्वमेधः।**—शत० १३।१।६।३

**अन्नँ हि गौः।**—शत० ४।३।१।२५

**अग्निर्वा अश्वः।**—शत० ३।६।२।५

**आज्यं मेधः।**—शतपथ १३।३।६।२

अश्वगवादिपशून् मनुष्यांश्च विशस्य हवनक्रिया कुत्रापि नार्वाणि ? केवलं वाममार्गीयग्रन्थेष्वेतादृशोऽनर्थोऽलेखि। परमिदमपि वृत्तं वाममार्गिभिः प्रवर्त्तितं यत्र तत्र चायमुल्लेखस्तत्र तत्र तैरेव प्रक्षिप्तः। आलोक्यताम्-यस्मिन् नृपो न्यायधर्मेण प्रजाः पालयति यजमानोऽयं विद्यादिदानं वितरति पावके च घृतादिहव्यं जुहोति **सोऽश्वमेधः**। येनान्नेन्द्रियकिरणपृथिव्यादीनां शोधनं

जायते स **गोमेधः**। पञ्चत्वमितस्य जनस्य यथाविधि देहदाहक्रिया **नरमेध** उच्यते।

**प्र०**—यज्ञकर्त्तारः कथयन्ति यद् यज्ञक्रियया यजमानः पशुश्च स्वर्गं प्राप्नुतः। हुत्वा च पुनस्ते पशुं सञ्जीवयन्तिस्मेति कथा सत्याऽसत्या वा?

**उ०**—असत्या। स्वर्गञ्चेद्गच्छेयुस्तदैतत्कथनकथयिता निहत्य हुत्वा च स्वर्गं प्रापणीयः। अथवाऽमी निजप्रियमातृपितृपुत्रप्रमुखान् हत्वा हुत्वा च स्वर्गं कथं न प्रापयन्ति? वेद्याश्च वा कथं न पुनः सञ्जीवयन्ति?

**प्र०**—यदा यज्ञं वितन्वन्ति तदा वेदमन्त्रान् पठन्ति। वेदेषु चेन्नाभविष्यत्तर्हि कुतोन्वपठिष्यन्?

**उ०**—मन्त्राः कमपि कुत्रापि पठनान्न निवारयन्ति। शब्दमया हि केवलमिमे। परं पशुं हत्वा जुहुयादिति नार्थस्तेषाम्। यथा—**"अग्नये स्वाहा"** इत्यादिमन्त्राणां—"अग्नौ हविषां पुष्टयादिकारकाणां घृताद्युत्तमपदार्थानां हवनेन वायुवृष्टिजलानि विशुध्य जगदानन्दकराणि भवन्तीति सत्योऽर्थः।

परमिमान् सत्यानर्थानमी मूढा नावागच्छन् स्वार्थबुद्धयो हि केवलं स्वार्थादन्यत् किमपि न जानन्ति नापि वा मन्यन्ते। यदामीषां पोपानामीदृगनाचारो निरवर्णि मृतस्य तर्पणश्राद्धादिकृत्यञ्चान्यदालोकि तदैको महाभयङ्करो वेदादिशास्त्राणां निन्दको बौद्धो जैनो वा सम्प्रदायः प्रचलितोऽजनि। आकर्ण्यते खलु-अस्मिन्नेव देशे गोरखपुरनामकस्य नगरस्य कश्चन नृपतिर्बभूव। पोपास्तेन यज्ञं कारयाञ्चक्रुः। तस्य प्रियमहिष्यामश्वसमागमसम्पादनेन दिवं गतायामसौ नृपो वैराग्यवान् भूत्वा निजपुत्राय राज्यं प्रदाय साधुः संवृत्य पोपानां छिद्राणि प्रकाशयामास। अस्यैव शाखारूपे चारवाकाभाणकमतेऽपि प्रचलिते ताभ्यामित्थं प्रणीताः श्लोकाः—

**पशुश्चेन्निहतः स्वर्गं ज्योतिष्टोमे गमिष्यति।**
**स्वपिता यजमानेन तत्र कस्मान्न हिंस्यते॥**
**मृतानामिह जन्तूनां श्राद्धं चेत्तृप्तिकारणम्।**
**गच्छतामिह जन्तूनां व्यर्थं पाथेयकल्पनम्॥**

यदि निहतः पशुरनले हुतः स्वर्गं प्रयाति तदा यजमानः स्वजनकादीन् निहत्य स्वर्गं कथं न प्रहिणोति॥१॥ यदि मृतानां जनानां तृप्त्यै श्राद्धं तर्पणञ्च कल्प्यते तदा देशान्तरं प्रवसतां जनानां मार्गव्ययदानं भोजनादिवस्तुवितरणञ्च वृथा सम्पद्यते। यदा खलु श्राद्धतर्पणद्वारा मृतको जनोऽन्नजले लभते तर्हि जीवन्तो देशान्तरे निवसन्तः पथि वा गच्छन्तो जनास्तन्नाम्ना तदीयगृहे सिद्धं पत्रावल्याञ्च परिवेश्य तेभ्यो निवेदितं जलपूर्णपात्रयुतमन्नं कथं न लभन्ते? दूरदेशे दशहस्तदूरं वा समासीनस्य जनस्य दत्तमन्नं नोपसीदति यदा तदा मृतस्य सकाशं तु कथमपि प्राप्तुं न प्रभवति। तेषामीदृश-

युक्तिसिद्धानुपदेशानन्वमन्वत जनाः। तदीयं मतञ्चोपचेतुमुपक्रान्तम्। यदा बहवो नरेन्द्रा भूमिपतयश्च तन्मते समागतास्तदा पोपदेवा अपि तेषु सम्मिलिताः। यत एते यत्रैव वित्तजातं लभ्येत तत्रैव गच्छेयुः। झटिति जैना भवितुं प्रारभन्त। जैनेष्वप्यन्यविधाः पोपलीलाः पुष्कलाः सन्ति ता द्वादशे समुल्लासे वर्णयिष्यामः। बहुभिरेतेषां मतमङ्गीकृतम्। परं ये कतिपये पार्वत-काशीकान्यकुब्जपश्चिमदक्षिणदेशवासिन आसँस्ते जैनानां मतं नाङ्गीचक्रिरे। जैना अमी वेदार्थमविज्ञाय बाह्यां पोपलीलां भ्रान्त्या वेदोदितां मत्वा वेदानपि निनिन्दुः। तत्पठनपाठनयज्ञोपवीतादिब्रह्मचर्यादिनियमानपि नाशयामासुः। यत्र यावन्तो वेदादिग्रन्था उपलब्धा विनाशिता एतैः। चिरकालमार्याणामुपरि राज्याधिकारमचालयन्नपीडयँश्चामून्। यदैते निर्भयनिःशङ्काश्च संववृतिरे तदा स्वमतस्थान् गृहस्थान् साधूँश्च सच्चक्रिरे वेदमार्गगामिनो जनाँश्चाप-मेनिरे पक्षपातेन च दण्डितानपि विदधिरे। स्वयञ्चामी सुखैश्वर्यभोगाभि-मानेन प्रफुल्लीभूय विचेरुः। ऋषभदेवमारभ्य महावीरपर्यन्तानां निज-तीर्थङ्कराणां महतीर्मूर्त्तीर्निमाय पूजयामासुः। एवं पाषाणादिमूर्तिपूजाया मूलं जैनेभ्यः प्रचचाल। परमेश्वरसम्माननं न्यूनं जज्ञे। सकलाः पाषाणादि-मूर्तिपूजायां निलिल्यिरे। इत्थं त्रीणि शतानि वर्षाण्यार्यावर्ते जैनानां राज्यं ववृते। प्रायो जना वेदार्थज्ञानविहीना जज्ञिरे। वृत्तस्यास्य संवृत्तस्यानुमानतः पञ्चविंशतिशतानि २५०० वर्षाणि व्यतीतानि भवेयुः।

द्वाविंशतिशतवर्षेभ्यः पूर्वं द्रविडदेशोत्पन्न एकः शङ्कराचार्यो नाम ब्रह्मचर्येण व्याकरणादिसकलशास्त्रजातमधीत्य चिन्तयामास—"अहह! सत्यस्यास्तिकस्य वेदमतस्य विसर्जनं नास्तिकस्य जैनमतस्य च प्रवर्त्तनं सुतरां हानिकरमिदम्। अदः कयापि रीत्या वारणीयम्" इति। शङ्करा-चार्येण शास्त्राणि तु पठितान्येवासन् किन्तु जैनमतस्यापि पुस्तकान्यधीतान्य-भवन्। आसन्नतिप्रबलास्तदीया युक्तयोऽपि। कथममी निराकरणीया इति सोऽचिन्तयत्। निरचैषीच्च—"उपदेशैः शास्त्रार्थकरणेन चेमे निवारयिष्यन्ते मयेति।" एवं सम्प्रधार्यासौ "उज्जयिनीं" नाम नगरीमागच्छत्। तस्यां तदानीं सुधन्वा नाम नरपतिरवर्तत। यो जैनग्रन्थान् किञ्चिच्च संस्कृतमप्य-पठत्। तत्र गत्वा वेदोपदेशं कर्त्तुमारभत। यथावसरं नृपतिं साक्षात्कृत्य चावदत्—"अत्र भवान् संस्कृतं जैनग्रन्थाँश्चापि पठितवानस्ति जैनमतञ्च मनुत इत्यहं भवन्तं निवेदयामि—"जैनपण्डितैः समं मम शास्त्रार्थचर्चां कारयतु। सानया प्रतिज्ञया—यः पराजीयेत स विजेतुर्मतमङ्गीकुर्यात्। भवानपि विजेतुर्मतमङ्गीकुर्वीतेति।" यद्यपि सुन्धवा नृपतिर्जैनमतेऽवर्तत तथापि संस्कृतग्रन्थपठनेनामुष्य बुद्धौ विद्याया अल्पः प्रकाश आसीदिति तस्य मनसि नाभद् वितताऽतिपशुता। यो हि खलु विद्वान् भवति स सत्यासत्य-

परीक्षां विधाय सत्यमङ्गीकुरुतेऽसत्यञ्च परिजहाति। यावत् सुधन्वनृपतिना महान् विद्वानुपदेशको नालभ्यत तावदमुना – "एषु किं सत्यं किमसत्यं चेति" सन्देहे न्यलीयत। यदा शङ्कराचार्यस्येदं कथनमश्रौषीत्तदाऽतीवप्रसन्नतया न्यगादीदसौ—"शास्त्रार्थं कारयित्वाऽहं सत्यमसत्यञ्चावश्यं निर्णययिष्यामीति।" विदूराज्जैनपण्डितानाकार्य सभां कारितवान्। तत्र शङ्कराचार्यस्य वेदमतं जैनानाञ्च वेदविरुद्धं मतमासीदर्थाच्छङ्कराचार्यस्य पक्षो वेदमतस्थापनं जैनमतखण्डनञ्चेति जैनानाञ्च पक्षः स्वमतस्थापनं वेदमतखण्डनञ्चेत्यासीत्। कियन्त्येव दिनानि शास्त्रार्थचर्चा प्रवर्तमानाऽऽसीत्। "नास्ति कोऽपि सृष्टेः कर्त्ताऽनादिरीश्वरः। जगदिदं जीवश्चानादी स्तः। अनयोः कदाप्युत्पत्तिप्रलयौ न भवतः" इति जैनानां मतम्। "अनादिसिद्धः परमात्मैव जगतः कर्त्ता वर्तते। जगदिदं जीवश्चोभौ मिथ्या स्तः। यतस्तेनैव परमेश्वरेण स्वमायया जगत्सृष्टं स एव बिभर्ति संहरति च। जीवोऽयं प्रपञ्चश्च स्वप्नवद्भवतः। परमेश्वरः स्वयमेव सकलजगन्मयः संवृत्य लीलां वितनुते" इति शङ्कराचार्यस्य मतम्। चिरकालमवर्तत शास्त्रार्थः परमन्ततो युक्तिप्रमाणाभ्यां जैनानां मतं खण्डितं शङ्कराचार्यस्य च मतमखण्डितं जातम्। तदा तैर्जैनपण्डितैः सुधन्वाधिपतिना च वेदमतं स्वीकृतं जैनमतञ्च त्यक्तम्। पुनर्यदा महान् कोलाहलव्यतिकरस्संजातस्तदा सुधन्वा नृपोऽन्यान् निजेष्टमित्रभूतान्नृपान् विलिख्य शङ्कराचार्येण समं शास्त्रार्थचर्चां कारितवान्। परं जैनानां पराजयेन ते पराजिता अभवन् तदनु सर्वत्रार्यावर्त्तदेशे शङ्कराचार्यस्य भ्रमणप्रबन्धं व्यदधुः सुधन्वादिनृपतयः। तत्संरक्षणाय तेन समं सैनिकाः सेवकाश्चापि नियुक्ताः। ततः समयादेव सर्वेषां यज्ञोपवीतसंस्काराः प्रारब्धा भवितुम्। वेदानां पठनपाठनमपि समुपक्रान्तम्। दशवर्षान्तरे सर्वत्रार्यावर्त्तदेशे परिभ्रम्य जैनानां खण्डनं वेदानाञ्च मण्डनं विहितम्। परं जैनविध्वंसोऽर्थाज्जैनानां यावत्यो मूर्त्तयो भग्ना उपलभ्यन्ते ताः सकलाः शङ्कराचार्यसमये भग्ना बभूवुः। याश्चाभग्नाः प्राप्यन्ते ताः खलु जैनैर्भग्ना न भवेयुरिति भूमौ निखाता अभूवन्। ता अद्यापि क्वचिद् क्वचिद् भूमावुपलभ्यन्ते। शङ्कराचार्यतः प्राक्काले शैवमतमपि लेशतः प्रचलितमभवत्। तस्यापि तेन खण्डनं व्यधायि। वाममार्गमतमप्यकारि प्रत्याख्यातम्। तदानीन्तने समयेऽस्मिन् देशे पुष्कलं धनमभवत्। स्वदेशभक्तिरप्यासीत्। जैनानां मन्दिराणि शङ्कराचार्येण सुधन्वना नृपेण च न न्यपातिषन् यतस्तेषु वेदादिपाठशाला रचयितुमभ्यलष्यन्त। यावद् वेदमतप्रतिष्ठापनं विधाय विद्याप्रचारं कर्त्तुमेव शङ्कराचार्यो व्यचिन्तयत्तावदेव बहिः केवलं नामतो वेदमतमन्तारौ मनसि च दृढजैनमतपक्षपातिनौ कपटमुनिवेषौ सम्प्राप्तशङ्कराचार्यातिप्रसादौ द्वौ जैनौ प्राप्यावसरं शङ्कराचार्यमीदृशं विषयुतं

पदार्थमाशयतां येन तदीया क्षुधा मन्दी बभूव। अथ शरीरे स्फोटस्फुटिकाविर्भावेन षण्मासाभ्यन्तर एव शरीरं शङ्करस्य पञ्चतां प्रपन्नम्। तदानीं सकलाः निरुत्साहाः समजायन्त। यश्च विद्याप्रचारः सम्भावित आसीत्सोऽपि नाभूत्। यद् यत्तेन शङ्कराचार्येण शारीरकभाष्यादिव्यरचि तत्तत्तदीयशिष्याः प्राचारयन्। अर्थाज्जैनमतखण्डनाय—"ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः" इत्यद्वैतं यदवर्णि शङ्करेण तत्ते समुपादिशन्। दक्षिणप्रान्ते शृङ्गेरीनामकं पूर्वप्रदेशे भूगोवर्धनाभिधमुत्तरभागे ज्योतिराख्यं द्वारिकायाञ्च शारदाभिधानमठं निर्माय शङ्कराचार्यशिष्या महान्तः श्रीमन्तश्च संवृत्यानन्दं वितेनिरे यतः शङ्कराचार्यानन्तरं तदीयशिष्याणां महती प्रतिष्ठा सञ्जज्ञे।

अथात्र चिन्तनीयम्—"जीवब्रह्मणोरैक्यं जगन्मिथ्येति" शङ्कराचार्य्यस्य यन्निजमतमासीत्तन्न समीचीनं मतं विद्यते। जैनमतनिराकरणाय चेदिदमुररीकृतं स्यात्तदा तु किञ्चित् सुष्ठु खलु। इदमस्ति नवीनवेदान्तिनां मतम्—

**नवीनः**—रज्ज्वां सर्प इव शुक्तौ रजतमिव मृगतृष्णिकायां जलमिव गन्धर्वनगरमिवेन्द्रजालमिव च जगदिदमसत्यं स्वप्नवत्। केवलं ब्रह्मैव वर्त्तते।

**सिद्धान्ती**—कमसत्यं वदति भवान्?

**न०**—यः पदार्थस्तु न भवेत् परं प्रतीतः स्यात्।

**सि०**—यः पदार्थ एव नास्ति तस्य प्रतीतिर्नु कथं स्यात्?

**न०**—अध्यारोपेण।

**सि०**—अध्यारोपशब्देन किमुच्यते।

**न०**—"वस्तुन्यवस्त्वारोपणमध्यासः।" "अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते।" पदार्थः कश्चनान्यः स्यात्तस्मिन्नन्यपदार्थस्यारोपणमेवाध्यासोऽध्यारोपो वाभिधीयते। तन्निराकरणमपवाद उच्यते। आभ्यां प्रपञ्चरहितब्रह्मणि प्रपञ्चरूपं जगद् वितन्यते।

**सि०**—भवान् रज्जुं पदार्थं सर्पञ्चापदार्थं मत्वाऽस्मिन् भ्रमजाले न्यपतत्। किं सर्पः पदार्थो नास्ति? रज्ज्वां नास्तीति चेत्कथयति तदा देशान्तरे वर्त्तते तस्य च संस्कारः केवलं हृदि विद्यते ततस्त्वयं सर्वोऽप्यपदार्थो न संवृत्तः। तथैव स्थाणुशुक्त्यादौ पुरुषरजतादेर्व्यवस्थाऽवगन्तव्या। स्वप्नेऽपि च येषां प्रतीतिर्भवति ते देशान्तरे वर्त्तन्ते तेषां संस्काराश्चात्मन्यपि विद्यन्ते। तस्मादयं स्वप्नोऽपि वस्तुन्यवस्त्वारोपणवन्नास्ति।

**न०**—यत्कदापि न दृष्टं नापि श्रुतं किल यथा—छिन्नमस्ति निजशिरः स्वयञ्च रोदिति। उपरि जलधारा गच्छतीति यत्कदापि न भूतं तदालोक्यते। तत्सत्यं कथङ्कारं भवितुं प्रभवेत्?

सि०—अयमपि दृष्टान्तो न पुष्णाति युष्मत्पक्षम्। यतो दर्शनं श्रवणञ्च विना संस्कारो न भवति। संस्कारं विना स्मृतिः स्मृतिञ्च विना साक्षादनुभवो न भवति। यदा कस्माच्चन श्रुतमालोकितं वा कस्यचन शिर उच्छिन्नं विलोकिताश्च तदीयभ्रातृजनकादयो युद्धे प्रत्यक्षं विलपन्त आकर्णिता नेत्रातिथीकृता वा जलयन्त्रधारा चोपरि समुत्पतन्ती तदीयः संस्कारस्तस्यैवात्मनि सञ्जायते। यदाऽसौ जाग्रदवस्थास्थितपदार्थेभ्यः पृथग्भूय पश्यति तदा स्वात्मनि तानेव दृष्टानुपश्रुतान् पदार्थान् पश्यति। यदा स्वात्मन्येवालोकयति तदा स स्वशिरश्छिन्नमात्मानं रुदन्तं जलधाराञ्चोपरिगच्छन्तीमालोकयतीति विज्ञायताम्। इदमपि वस्तुन्यवस्त्वारोपणतुल्यं नास्ति किन्तु यथा भूगोलचित्रकारो दृष्टचरं श्रुतपूर्वं पूर्वकृतं वा वस्तुचित्रमात्मना विचिन्त्य कर्गल आलिखति प्रतिबिम्बालेखको वा यथा बिम्बमवलोक्य दृष्टिं निधायाऽऽकृतिं यथावदालिखति तद्वदिदं विद्यते। आम्! एतावत्तु विद्यते यत्कदापि कदापि स्वप्ने–"निजमध्यापकमालोकयतीति" स्मरणयुता प्रतीतिर्जायते। कदाचिच्च चिरकालं दर्शनेन श्रवणेन चातीतज्ञानं साक्षात्कुरुते। तत्काले यदहमपश्यमशृणवमकरवं वा तदेव पश्यामि शृणोमि करोमि वेति तदा न स्मर्यते। यथा जाग्रद्दशायां स्मरणं भवति न तथा नियमपूर्वकं स्वप्ने। दृश्यताम्—जन्मान्धः स्वप्ने रूपं न पश्यति खल्विति भवतोऽध्यासस्याध्यारोपस्य च लक्षणमयथार्थमस्ति। यश्च वेदान्तिभिर्विवर्त्तवादस्यार्थाद् रज्ज्वां सर्पादिप्रतीतेर्दृष्टान्तो ब्रह्मणि जगत्प्रतीतौ दीयते सोऽप्ययुक्तः।

न०—अधिष्ठानमन्तरेणाध्यस्तो न प्रतीयते यथा रज्ज्वभावे सर्पोऽपि न प्रतीयेत यथा रज्जौ कालत्रयेऽपि सर्पो नास्ति किन्तु मन्दप्रकाशमिश्रान्धकारेऽकस्माज्जनो रज्जुं विलोक्य सर्पभ्रमेण भिया कम्पते। यदा तं दीपादिनाऽऽलोकते तदानीमेव तस्य भ्रमभये निवर्तेते। तथैव ब्रह्मणि जगतो या मिथ्याप्रतीतिर्जाताऽस्ति सा ब्रह्मणः साक्षात्कारेण निवर्तते ब्रह्मप्रतीतिश्च जायते। यथा हि सर्पस्य निवृत्तिर्दाम्नश्च प्रतीतिर्जायते।

सि०—ब्रह्मणि जगत्प्रत्ययः कस्य जातः?

न०—जीवस्य।

सि०—जीवः कुतो जातः?

न०—अज्ञानतः।

सि०—अज्ञानं कस्माज्जातं कुत्र च तिष्ठति?

न०—अज्ञानमनादि ब्रह्मणि च तिष्ठति।

सि०—ब्रह्मणि ब्रह्मणोऽज्ञानमुत कस्याप्यन्यस्य? तदज्ञानञ्च कस्य जातम्?

न०—चिदाभासस्य।

**सि०**—चिदाभासस्य किं रूपम् ?

**न०**—ब्रह्म ! ब्रह्मणोऽज्ञानमर्थात्स्वं स्वरूपं स्वयमेव विस्मरति ।

**सि०**—तस्य विस्मरणे किं निमित्तम् ?

**न०**—अविद्या ।

**सि०**—अविद्या सर्वव्यापिनः सर्वज्ञस्य गुणोऽल्पज्ञस्य वा ?

**न०**—अल्पज्ञस्य ।

**सि०**—तद् युष्मन्मत एकमनन्तं सर्वज्ञं चेतनं विनाऽन्यः कश्चन चेतनो विद्यते न वा ? अल्पज्ञश्च कुत आगतः ? आम् ! अल्पज्ञश्चेतनश्चेद् ब्रह्मणः पृथङ् मन्येत तदा समीचीनम्। यदैकभागे ब्रह्मणो निजस्वरूपस्याज्ञानं भवेत्तदा सर्वत्र तदज्ञानं प्रसरेत् । यथा शरीरैकभागे जायमाना स्फोटपीडा सकलशरीरावयवान् निरुपयोगान् करोति तथैवैकदेशेऽज्ञानक्लेशयुतं ब्रह्मापि यदि भवेत्तदा सकलं ब्रह्माप्यज्ञानक्लेशानुभवयुक्तं सम्पद्येत ।

**न०**—सकलोऽयमुपाधेर्धर्मो न तु ब्रह्मणः ।

**सि०**—उपाधिर्जडश्चेतनो वा ? सत्यश्चासत्यो वा ?

**न०**—अनिर्वचनीयोऽस्ति । जडश्चेतनो वा सत्योऽसत्यो वा वक्तुं न शक्यते ।

**सि०**—युष्मत्कथनमिदं वदतो व्याघात इव विद्यते । यतः कथयति भवान्—"अविद्यास्तीति" । या जडा चेतना सत्याऽसत्या वा वक्तुं न शक्यते । इदमीदृशं कथनं यद् यथाऽऽरकूटयुतं सुवर्णं सुवर्णविक्रेतुरन्तिकं नीत्वा कश्चन—"इदं सुवर्णमारकूटं वा विद्यते" इति तमनुयुज्य तस्य परीक्षां कारयेत् । तदेदमेव कथयिष्यति—"एतत्काञ्चनमारकूटं वेति" वक्तुं न शक्नुमः परमेतस्मिन् द्वावपि धातू सङ्गतौ स्त इति" ।

**न०**—आलोक्यताम्—यथा घटाकाशो मठाकाशो मेघाकाशो महदाकाशोपाधिश्च घटमठमेघसद्भावाद् भिन्नाः प्रतीयन्ते वस्तुतस्तु महाकाश एवास्ति तथैव मायाऽविद्यासमष्टिव्यष्टयन्तःकरणोपाधिभिर्ब्रह्म पृथक् पृथगज्ञानिनां प्रतिभाति वस्तुत एकमेवास्ति ।

वीक्ष्यतां किं प्रत्यपादि वक्ष्यमाणप्रमाणे—

**अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।**
**एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ।।**

—कठोपनिषत् वल्ली ५ मं० ९

यथाऽनलो लम्बदीर्घवर्त्तुलाल्पमहत्सु सकलाकृतिमत्सु पदार्थेषु व्याप्य तदाकारोऽवलोक्यते तेभ्यश्च पृथगस्ति तथैव सर्वव्यापी परमात्माऽन्तःकरणाकारस्संवृत्तोऽस्ति परं तेभ्यः पृथग् वर्त्तते ।

**सि०**—एतदपि भवत्कथनं व्यर्थमस्ति। यतो यथा घटो मठो मेघ

आकाशश्चेत्येते पृथङ् मन्यन्ते भवता तथा कारणकार्यरूपं जगज्जीवञ्च ब्रह्मणो ब्रह्म चैताभ्यां भिन्नं मन्यताम्।

**न०**—यथाऽग्निः सर्वेषु प्रविश्य तदाकारो दृश्यते तथैव परमात्मा जडेषु जीवेषु च व्यापको भूत्वाऽऽकारवानज्ञानिनां प्रत्यवभासते। वस्तुतो ब्रह्म न जडं न चापि जीवोऽस्ति। यथा पृथङ् निहितेषु जलकुण्डसहस्रेषु सहस्राणि मार्तण्डप्रतिविम्बानि दृश्यन्ते, परमेक एव रविर्वस्तुतः, जलकुण्डानां विलयेन जलस्य च सञ्चलनेन प्रसरणेन वा न विलीयते न च सञ्चलति नापि वा प्रसरति प्रभाकरः। इत्थमेवान्तःकरणेषु चिदाभासाख्यो ब्रह्मण आभासः पतितोऽस्ति ! यावदन्तःकरणं विद्यते तावदेव जीवो यदाऽन्तःकरणं ज्ञानेन विनश्यति तदा जीवो ब्रह्मस्वरूपो भवति। चिदाभासमेनं निजब्रह्मस्वरूपस्याज्ञानकर्त्तारं भोक्तारं सुखिनं दुःखिनं पापिनं पुण्यात्मानं जन्ममरणशीलं स्वस्मिन् यावत्कालं जीव आरोपयति तावदवधि संसारबन्धनेभ्यो नायं विमुच्यते।

**सि०**—निरर्थोऽयं भवतां दृष्टान्तः। आकारवान् हि रविर्जलकुण्डान्यप्याकृतिमन्ति। सूर्यो जलकुण्डेभ्यो भिन्नो जलकुण्डानि च सूर्याद् भिन्नानि। अत एव निपतति प्रतिबिम्वम्। यदि सूर्यो निराकारोऽभविष्यत्तदा तस्य प्रतिविम्वं नापतिष्यत्कदापि। परमेश्वरस्य निराकारत्वात्सर्वत आकाशवद् व्यापकत्वाच्च ब्रह्मणः केऽपि पदार्थाः पदार्थेभ्यो वा ब्रह्म पृथङ् नालं भवितुम्, व्याप्यव्यापकसम्बन्धेन चैकमपि नालं ब्रह्म भवितुम्। अन्वयव्यतिरेकभावतो दर्शनेन व्याप्यव्यापकाः संयुक्ता वियुक्ताश्चानिशं तिष्ठन्ति। एकत्वे हि स्वस्मिन् व्याप्यव्यापकभावसम्बन्धः कदापि न संघटेतेति बृहदारण्यकस्यान्तर्यामिब्राह्मणे विशदं प्रत्यपादि। ननु ब्रह्मण आभासोऽपि न शक्यते पतितुम्। आकारं विना ह्याभासस्यासम्भवोऽस्ति। यदन्तःकरणोपाधिना ब्रह्म जीवं मन्यते भवाँस्तन्नूनं बालकस्येव भवतः कथनम्। चलं खण्डशीलञ्चान्तःकरणं खलु ब्रह्म चाचलमखण्डञ्चास्ति। यदि भवान् ब्रह्म जीवञ्च पृथक् पृथङ् न मन्येत तदा दीयतामस्योत्तरम्—"यत्र यत्रान्तःकरणं गमिष्यतीति तत्तद्देशीयं ब्रह्म ज्ञानरहितं यं यञ्च देशं परिहास्यतीति तत्तद्देशगतं च ब्रह्म ज्ञानसहितं करिष्यति न वा ? यथा छत्रं प्रकाशमध्ये यत्र यत्र गच्छति तत्रत्यं प्रकाशं सावरणं यतो यतश्चापसरति ततस्ततस्त्यं प्रकाशं निरावरणं कुरुते तथैवान्तःकरणं क्षणे क्षणे ब्रह्म ज्ञानाज्ञानयुतं बन्धमोक्षयुक्तञ्च कुर्वद् गमिष्यति। अखण्डस्य ब्रह्मण एकदेशावरणप्रभावस्य सर्वदेशभावित्वाद् ब्रह्म सकलाज्ञानयुतं भविष्यति चेतनत्वात्। अन्यच्च मथुरायां यदन्तःकरणगतेन ब्रह्मणा यः पदार्थ आलोकितस्तस्य स्मरणं काश्यां तदन्तःकरणगतेनैवापरेण ब्रह्मणा न कर्त्तुं पार्यते। "अन्यदृष्टमन्यो न स्मरतीति

न्यायात्'' अन्यदृष्टस्य स्मरणमन्यस्य न भवति येन चिदाभासेन मथुराया-मालोकि स चिदाभासः काश्यां न वर्त्तते। परं यन्मथुरागतान्तःकरणस्य प्रकाशकमस्ति तत्काशीस्थं ब्रह्म न भवति। ब्रह्मैव जीवो न तु पृथगन्यः कश्चिदिति चेज्जीवेन सर्वज्ञेन भाव्यम्। ब्रह्मणः प्रतिबिम्बञ्चेदन्यदस्ति तदा तु प्रत्यभिज्ञा (पूर्वं दृष्टस्य श्रुतस्य च ज्ञानम्) कस्यापि न सञ्जायेत। ननु कथयेद् भवान् "ब्रह्मण एकत्वात् स्मरणं जायते'' इति चेत्तदैकत्राज्ञानाद् दुःखसद्भावाद्वा सकलेन ब्रह्मणा अज्ञानिना दुःखिना वा भाव्यम्। ईदृशैश्च दृष्टान्तैर्भवता नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्माशुद्धाबुद्धबद्धादिदोषयुतं विहि-तम्, अखण्डञ्च खण्डितं व्यधायि।

**न०**—निराकारस्याप्याभासो जायते। यथा खलु दर्पणे जलादौ वा गगनमाभासते। तन्नीलं किमप्यन्यविधगम्भीरवर्णं वा विलोक्येत। तद्वद् ब्रह्मणोऽपि सकलान्तःकरणेष्वाभासः संक्रामति।

**सि०**—यदाऽऽकाशे रूपमेव न विद्यते तदा कश्चिदपि तं नेत्रेण द्रष्टुं न प्रभवति। यः पदार्थ एव नालोक्यते स दर्पणे जलादौ वा कथमिवाव-लोक्येत ? गम्भीरागम्भीरवर्णः साकारः पदार्थो दृश्यते न तु निराकारः।

**न०**—तदा पुनर्यदुपरि नीलमिव दृश्यते तदेवाऽऽदर्शे प्रतीयमानं किमस्ति वस्तु ?

**सि०**—इमे पृथिव्या उद्गता जलमयाः पार्थिवास्तैजसाश्च त्रसरेण-वस्सन्ति यतो वृष्टिर्भवति। तत्र जलं न भवेच्चेद् वृष्टिः कुतः स्यात् ? अतो विदूरे पटमण्डपसदृशं यद् दृश्यते तज्जलस्य मण्डलं राजते। यथा नीहारोऽति-दूरात् घनाकारो निकटाच्च विरलो वर्त्तुलभवनाकारोऽपि प्रतीयते तथाऽऽ-काशे सलिलं विलोक्यते।

**न०**—किमस्माकं रज्जुसर्पस्वप्नादिदृष्टान्ता मिथ्या सन्ति ?

**सि०**—नैव, युष्माकं मतिर्मिथ्याऽस्तीति वयं पूर्वमकथयाम। भवतु, इदं तु वदन्तु भवन्तः कस्याज्ञानं प्रथमं भवतीति ?

**न०**—ब्रह्मणः।

**सि०**—ब्रह्माऽल्पज्ञं सर्वज्ञं वा ?

**न०**—न सर्वज्ञं नाप्यल्पज्ञम्। सर्वज्ञताऽल्पज्ञताह्युपाधिसहिते भवति।

**सि०**—कोऽस्त्युपाधिसहितः ?

**न०**—ब्रह्म।

**सि०**—तदा ब्रह्मैव सर्वज्ञमल्पज्ञञ्चाभूत्। ततः सर्वज्ञत्वमल्पज्ञत्वञ्च तस्य किमिति न्यषेधि भवता ? ननु भवान्—"उपाधिः कल्पितो मिथ्या-ऽस्तीति'' व्याहरेच्चेत् कल्पकः कल्पयिता वा कः ?

**न०**—जीवो ब्रह्मास्त्यन्यो वा ?

**सि०**—अन्योऽस्ति। यतो यदि जीवो ब्रह्मस्वरूपोऽस्ति तदा येन मिथ्या कल्पना कृता स ब्रह्म वै भवितुं शक्नोति नेश्वरः। यस्य कल्पना मिथ्याऽस्ति स सत्यः कदापि भवितुं न प्रभुः ?

**न०**—वयं सत्यमसत्यञ्चानृतं मन्यामहे गिरा सम्भाषणमप्यनृतं विद्यते।

**सि०**—यदा भवन्तोऽनृतस्य वक्तारो मन्तारश्च सन्ति तदा कथं न मिथ्याचारा भवन्ति भवन्तः ?

**न०**—भवतु, असत्यं सत्यञ्चास्मास्वेव कल्पितमस्ति। वयञ्च द्वयोरेव साक्षिभूता अधिष्ठानानि स्मः।

**सि०**—यदा भवन्तः सत्यासत्ययोराधारभूतास्तदा श्रेष्ठिनस्तस्करा इव च भवन्त एव सञ्जाता इति। भवन्तः प्रामाणिका अपि न स्थिताः। त एव खलु प्रामाणिका भवन्ति येऽजस्रं सत्यं मन्येरन्, भाषेरन्, कुर्वीरँश्च, असत्यं न मन्येरन् न भाषेरन् नापि कुर्वीरन् कदापि। यदा भवन्तः स्वकथनं स्वयमेवासत्यं विदधति तदा स्वयमेव भवन्तो मिथ्यावादिनः सन्ति।

**न०**—याऽनादिर्माया ब्रह्माऽऽश्रयति ब्रह्मणश्चैवावरणं करोति सा मन्यते न वा भवता ?

**सि०**—न मन्यते। भवता हि—"यः पदार्थो न स्याद् भासते चेति", एवमर्थो विधीयते मायायाः। तदेतत्कथनं स एव मंस्यते यस्य हृदयनेत्रं स्फुटितं स्यात्। अविद्यमानस्य वस्तुनो हि भासमानत्वमसम्भवं सर्वथा ! यथा वन्ध्यायाः पुत्रप्रतिबिम्बं कदापि न सम्भाव्यते **"सन्मूलाः सोम्येमाः प्रजाः।'** इत्यादिछान्दोग्याद्युपनिषदां वचनेभ्यश्चेदं विरुद्धं व्याहरति भवान् ?

**न०**—भवतोऽधिकपण्डितैर्वसिष्ठशङ्कराचार्यादिनिश्चलदास प्रभृतिभिः यदलेखि तत् किं नु निराकरोति भवान् ? अस्माभिस्तु वसिष्ठशङ्कराचार्य-निश्चलदासादयोऽधिकाः प्रतीयन्ते।

**सि०**—विद्वानविद्वान् वा भवान् ?

**न०**—वयमपि किञ्चित् विद्वाँसः स्मः।

**सि०**—वरम्। तदा तु वसिष्ठशङ्कराचार्यनिश्चलदासादीनां पक्षमस्मत्सम्मुखं स्थापयतु भवान्। ते निराकुर्मो वयम्। यस्य पक्षः सिध्येत् स एव महानस्ति। यदि तेषां भवताञ्च कथनमखण्डनीयमभविष्यत्तर्हि भवन्तस्तेषां युक्तीरवलम्ब्यास्मत्कथनं निराकर्त्तुं कथं न प्राभविष्यन् ? तदा भवतां तेषाञ्च कथनं माननीयं भवेत्। शङ्कराचार्यप्रमुखैस्तु जैनमतनिराकरणायैव केवलं मतमिदमङ्गीकृतं स्यादित्यनुमीयते। ततो देशकालानुकूलं निजपक्ष-साधनाय बहवः स्वार्थपरा विद्वाँसस्स्वात्मनो ज्ञानप्रतिकूलमपि समाचरन्ति। यदि च जीवेश्वरैक्यजगन्मिथ्येत्यादिव्यवहारममी सत्यं नामंस्यन्त तदा तेषां

कथनं सत्यं नाभविष्यत्। विलोक्यताञ्च कीदृशं निश्चलदासस्य पाण्डित्यमिति! तद्यथा—"जीवो ब्रह्माऽभिन्नश्चेतनत्वात्।" वृत्तिप्रभाकरे तेन जीवब्रह्मणोरेकतायै लिखितमनुमानं यथा—"चेतनत्वाज्जीवो ब्रह्मणोऽभिन्नो विद्यते"। इदमत्यल्पमतेः पुरुषस्य कथनमिव कथनमस्ति। यतः साधर्म्यमात्रेण परस्परस्यैक्यं न सम्पद्यते वैधर्म्यं तत्र भेदकं भवति। यथा कस्यचित्—"पृथिवीजलाऽभिन्ना जडत्वात्। जडत्वात् पृथिवी जलादभिन्नाऽस्तीति" कथनं कदापि सङ्गतं न भवितुमलं तथैव निश्चलदासस्यापि लक्षणं निरर्थं वर्त्तते। यतो येऽल्पत्वाल्पज्ञत्वभ्रान्तिमत्त्वादिधर्मा जीवे ब्रह्मणः सर्वगतत्वसर्वज्ञत्वनिर्भ्रान्तित्वादिधर्माश्च ब्रह्मणि जीवाद् विरुद्धास्सन्ति तेन वैधर्म्येण ब्रह्मजीवौ भिन्नौ स्तः। यथा गन्धवत्त्वकठिनत्वादीनां भूमेर्धर्माणां रसवत्त्वद्रवत्वादिभ्यो जलस्य धर्मेभ्यो विरुद्धत्वात् पृथिवीजलयोरेकत्वं नास्ति। तथैव जीवब्रह्मणो वैधर्म्याज्जीवब्रह्मणी कदाप्येके नासातां न स्तो नापि च कर्हिचिद्भविष्यतः। एतावतैवावगन्तव्यं भवता—"निश्चलदासादिषु कियत्पाण्डित्यमासीदिति।" येन च योगवासिष्ठं व्यरचि स तु कश्चिदाधुनिको वेदान्ती समभूत्। न चायं ग्रन्थः खलु वाल्मीकिना, वसिष्ठेन, रामचन्द्रेण च प्रणीतो वर्णितो वाऽऽकर्णितो वाप्यस्ति। यतस्ते सकला वेदानुयायिनः समभवन् वेदविरुद्धं ते नासन् प्रभवः खलु प्रणेतुं वर्णयितुमाकर्णयितुमपि वा।

प्र०—व्यासमुनिना यानि शारीरकसूत्राणि प्रणीतानि तेष्वपि जीवब्रह्मणोरेकत्वं वर्णितं दृश्यते। दृश्यताम्—

**सम्पद्याऽऽविर्भावः स्वेन शब्दात्॥१॥**
**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः॥२॥**
**चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः॥३॥**
**एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः॥४॥**
**अत एव चानन्याधिपतिः॥५॥**

—वेदान्तद० अ० ४। पा० ४। सू० १,५-७,९॥

जीवः स्वं स्वरूपं प्रपद्याऽऽविर्भवति। यः पूर्वं ब्रह्मस्वरूप आसीत्। यतः स्वशब्देन निजब्रह्मस्वरूपस्य ग्रहणं भवति॥१॥

**"अयमात्मा अपहतपाप्मा०"**—इत्याद्युपन्यासादैश्वर्यप्राप्तिपर्यन्तैर्हेतुभिर्ब्रह्मस्वरूपेण जीवस्तिष्ठतीति जैमिन्याचार्यस्य मतमस्ति॥२॥

तदात्मकस्वरूपनिरूपणादिभिर्बृहदारण्यकस्य हेतुरूपवचनैश्चैतन्यमात्रस्वरूपेण जीवो मुक्तिदशायां तिष्ठतीत्यौडुलोम्याचार्यस्य मतम्॥३॥

व्यासमुनिरमीभिः पूर्वोदितैरुपन्यासाद्यैश्वर्यप्राप्तिरूपहेतुभिर्जीवस्य ब्रह्मस्वरूपत्वेऽविरोधं मन्यते॥४॥

योगिजन ऐश्वर्यसहितो निजब्रह्मस्वरूपं समुपलभ्यान्याधिपतिरहितो

(स्वयमात्मनः सकलस्य चाधिपतिरूपः संवृत्येति यावत्)। ब्रह्मस्वरूपेण मुक्तौ तिष्ठति ॥५॥

उ०—नेदृगर्थोऽमीषां सूत्राणां परमयमर्थ एषां यथार्थः श्रूयताम्—

यावज्जीवो निजं शुद्धं स्वरूपं प्राप्य सकलमलरहितः संवृत्य पवित्रो न भवति न तावदयं योगेनैश्वर्यमवाप्य निजान्तर्यामिब्रह्मोपलभ्यानन्दे स्थातुं प्रभवति ॥१॥

इत्थमेव यदा पापादिरहित ऐश्वर्ययुतो योगी भवति तदानीमेव ब्रह्मणा समं मुक्तिगतमानन्दमुपभोक्तुमसावलमिति जैमिनिमुनिमतं विद्यते ॥२॥

अविद्यादिदोषेभ्यो विमुच्य यदा शुद्धचैतन्यमात्रस्वरूपेण जीवः स्थिरीभवति तदैव—"तदात्मकत्वम्" अर्थाद् ब्रह्मस्वरूपेण समं सम्बन्धमवाप्नोति ॥३॥

यदा ब्रह्मणा सहैश्वर्यं शुद्धविज्ञानञ्चावाप्य जीवितदशायामेव जीवन्मुक्तो भवति तदा स्वीयं निर्मलं पूर्वस्वरूपमुपलभ्याऽऽनन्दितो जायत इति व्यासमुनेर्मतमस्ति ॥४॥

यदा योगिनः सत्यः सङ्कल्पो जायते तदासौ स्वयं परमेश्वरं प्रपद्य मुक्तिसुखमुपलभते तत्र स्वाधीनः स्वतन्त्रस्तिष्ठति। यथा संसृतौ प्रधान एकोऽन्यश्चाप्रधानो भवति न तथा भवति मुक्तौ परं सर्वे मुक्ता जीवाः समानास्तिष्ठन्ति ॥५॥

यद्येवं न भवेत्तदा कथमिमानि—

**नेतरोऽनुपपत्तेः ॥१॥**—१।१।१६

**भेदव्यपदेशाच्च ॥२॥** —१।१।१७

**विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥३॥**—१।२।२२

**अस्मिन्नस्य च तद्योगं शास्ति ॥४॥**—१।१।१९

**अन्तस्तद्धर्मोपदेशात् ॥५॥**—१।१।२०

**भेदव्यपदेशाच्चान्यः ॥६॥**—१।१।२१

**गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥७॥**—१।२।११

**अनुपपत्तेस्तु न शारीरः ॥८॥**—१।२।३

**अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥९॥**—१।२।१८

**शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥१०॥**—१।२।२०

व्यासमुनिकृतवेदान्तसूत्राणीत्थं प्रतिपादयान्ति—"ब्रह्मण इतरो जीवः सृष्टिकर्त्ता नास्ति यतोऽस्मिन्नल्पज्ञेऽल्पसामर्थ्यवति जीवे सृष्टिकर्तृत्वं नोपपद्येत, अतः जीवो ब्रह्म न वर्तते ॥१॥ **"रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति"**, इत्युपनिषदो वचनम्। जीवब्रह्मणोर्भिन्नत्वमनयोर्भेदप्रतिपादनात्। यदि

भेदो नाभविष्यत्तदा—"रसमानन्दस्वरूपं ब्रह्म लब्ध्वा जीव आनन्दस्वरूपो भवतीत्यस्य प्राप्तिविषयस्य ब्रह्मणः प्राप्तुर्जीवस्य च निरूपणं नोपपद्येतेति, अतः जीवो ब्रह्म चैकं नास्ति ॥२॥

**दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।**
**अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥**

—मुण्डकोपनिषदि मु० २ । खं० १ । मं० २

दिव्यः शुद्धो मूर्त्तिमत्त्वरहितः सर्वत्र पूर्णो निरन्तरं बाह्याभ्यन्तर-व्यापकोऽजो जन्ममरणदेहधारणादिविहीनः श्वासप्रश्वासशरीरमनःसम्बन्ध-शून्यः प्रकाशस्वरूप इत्यादिविशेषणैर्ब्रह्मनामा परमात्मा परमेश्वरोऽक्षराया नाशरहितायाः प्रकृतेः परात्सूक्ष्माज्जीवादपि परः सूक्ष्मो वर्तते प्रकृतेर्जीवेभ्यश्च ब्रह्मणो भेदप्रतिपादनरूपहेतुभिरेभ्यो ब्रह्म भिन्नं विद्यते ॥३॥ अस्मिन् सर्व-व्यापके ब्रह्मणि जीवस्य, जीवे च ब्रह्मणो योगवर्णनेन जीवो ब्रह्म च भिन्ने स्तः । योगो हि भिन्नपदार्थानां भवति ॥४॥ अस्य ब्रह्मणोऽन्तर्यामित्वादिधर्म-वर्णनाज्जीवान्तर्व्यापकत्वाच्च व्याप्या जीवा व्यापकाद् ब्रह्मणो भिन्नास्सन्ति व्याप्यव्यापकसम्बन्धोऽपि हि भेदे संघटते ॥५॥ यथा परमात्मा जीवाद् भिन्नस्वरूपस्तथैवेन्द्रियान्तःकरणपृथिव्यादिभूतदिग्वायुसूर्यादिदिव्यगुणभोगेन देवताभिधेयविद्वज्जनेभ्योऽपि परमात्मा भिन्नोऽस्ति ॥६॥ **"गुहां प्रविष्टौ सुकृतस्य लोके"**—इत्याद्युपनिषदां वचनैर्जीवः परमात्मा च भिन्नौ विद्येते । तथैवोपनिषत्सु बहुषु स्थलेषु प्रत्यपादि ॥७॥ **"शरीरे भवः शारीरः"** शरीर-धारी जीवो ब्रह्म न विद्यते । ब्रह्मणो हि गुणकर्मस्वभावा जीवे न संघटन्ते ॥८॥ (अधिदैवं) सकलेषु दिव्येषु मन आदीन्द्रियादिपदार्थेषु (अधिभूतम्) पृथिव्यादि-भूतेषु (अध्यात्मम्) सर्वेषु जीवेषु च परमात्माऽन्तर्यामिरूपेण विराजते। तस्यैव हि परमात्मनो व्यापकत्त्वादिधर्माः सर्वत्रोपनिषत्सु व्याख्यातास्सन्ति ॥९॥ शरीरधारी जीवो ब्रह्म नैवास्ति । स्वरूपसिद्धो हि जीवब्रह्मणोर्भेदः ॥१०॥ इत्यादिभिः शारीरकसूत्रैरपि स्वरूपेणैव ब्रह्मजीवयोर्भेदः सिद्धः । तथैव वेदान्तिनामुपक्रमोपसंहारावपि न संघटेयाताम् । यत उपक्रम आरम्भो वा ब्रह्मण उपसंहारः प्रलयो वाऽपि च ब्रह्मण्येव विधीयते । यदान्यत्किमपि वस्तु न मन्यते तदोत्पत्तिप्रलयावपि ब्रह्मणो धर्मौ भवतः । उत्पत्तिविनाशरहितस्य ब्रह्मणश्च प्रतिपादनं वेदादिसत्यशास्त्रेषु कृतमस्ति खलु, तन्नवीनवेदान्तिभ्यः प्रकुप्येत् । यतो निर्विकारपरिणामशून्यशुद्धसनातननिर्भ्रान्तादिविशेषणयुक्ते ब्रह्मणि विकारोत्पत्त्यज्ञानादिसम्भवः कथमपि न सम्भाव्यते । उपसंहारे (प्रलये) सत्यपि ब्रह्म कारणात्मिका जडा प्रकृतिर्जीवाश्च तथैवाविनाशि-रूपास्तिष्ठन्ति । अतो वेदान्तिनाममीषामियमुपक्रमोपसंहारयोरपि कल्पना

मिथ्याऽस्ति। एतादृशि बहून्यन्यान्यशुद्धानि कथनानि सन्ति यानि शास्त्रतः प्रत्यक्षादिप्रमाणतश्च विरुद्धानि विद्यन्ते।

एतदनन्तरं केषाञ्चिज्जैनानां शङ्कराचार्यानुयायिजनानाञ्चोपदेशस्य संस्कारा आर्यावर्त्ते व्यानशिरे। परस्परं खण्डनमण्डने अपि प्रचेलतुः। शंकराचार्यतः शतत्रयवर्षानन्तरमुज्जयिन्यां पुरि विक्रमादित्यनामाप्रतापी नृपो जज्ञे यः सकलराजसु प्रवृत्तं युद्धं शमयित्वा शान्ति स्थापयामास। तदनु भर्तृहरिनृपतिः काव्यादिशास्त्रेषु निष्णातोऽन्यविषयेष्वपि विद्वान् बभूव विरक्तः संवृत्यासौ राज्यं जहौ। विक्रमादित्यनृपात् पञ्चशतसंवत्सरानन्तरं भोजो नाम भूपतिरभूत्। किञ्चिद् व्याकरणं काव्यालङ्कारादिचैतावदयं प्राचारयद् यदमुष्य राज्येऽजापालकोऽपि कालिदासो रघुवंशकाव्यप्रणेताऽभवत्। यः कोऽपि जनः सरसं श्लोकं विरच्य भोजराजसकाशेऽनयत्तस्मै स विपुलं वित्तं वितीर्य तं सत्कुरुते स्म। तदनन्तरं नरपतिभिः श्रीमद्भिर्जैनैश्च पठनमेव परित्यक्तम्। यद्यपि शङ्कराचार्यात् पूर्वं वाममार्गिणाञ्च पश्चात् किल शैवादिसम्प्रदायस्था मतवादिनोऽपि समजायन्त तदपि तेषां नाजनि प्राबल्यम्। महाराजविक्रमादित्यसमयादवर्द्धत शैवानां वलम्। शैवेषु पाशुपतादयो बह्वयः शाखा अभूवन्। यथा वाममार्गिषु महाविद्यादयो दश शाखास्सन्ति। जनैः शङ्कराचार्यः शिवस्यावतारः कल्पितः। तदनुयायिनः संन्यासिनोऽपि शैवमते प्रविश्य वाममार्गीयानपि प्रावेशयन्। वाममार्गीयाः शिवस्य पत्न्या देव्या उपासकाः शैवाश्च महादेवस्योपासका अभवन्। उभावप्येतावद्यावधि भस्मरुद्राक्षान् धारयतः। परं वाममार्गिणो यावद् वेदविरोधिनस्सन्ति न तावच्छैवास्सन्ति।

**धिग्धिक् कपालं भस्मरुद्राक्षविहीनम् ॥१॥**

**रुद्राक्षान् कण्ठदेशे दशनपरिमितान्मस्तके विंशती द्वे,**
**षट्षट् कर्णप्रदेशे करयुगलगतान् द्वादशान् द्वादशैव।**
**बाह्वोरिन्दोः कलाभिः पृथगिति गदितानेकमेवं शिखायां,**
**वक्षस्यष्टाऽधिकं यः कलयति शतकं स स्वयं नीलकण्ठः ॥२॥**

इत्यादीन् विविधान् श्लोकानमी व्यरचयन्। अकथयँश्च—"यस्य ललाटे भस्म कण्ठे च रुद्राक्षमाला नास्ति तं धिग्धिगिति।" **"तं त्यजेदन्त्यजं यथा।"** चाण्डाल इवासौ त्याज्यः॥१॥

यः कण्ठे द्वात्रिंशतं सिरसि चत्वारिंशतं कर्णयोः षट् षट् करयोर्द्वादश द्वादश भुजयोः षोडश षोडश शिखायामेकं वक्षसि चाष्टाधिकं शतं रुद्राक्षान् परिदधाति स साक्षान्महादेव इवास्ति॥२॥

इत्थमेव शाक्ता अपि मन्यन्ते। अथैभिर्वाममार्गिभिः शैवैश्च सम्मतिं विधाय भगलिङ्गं प्रतिष्ठापितं यज्जलाधारि लिङ्गञ्चाभिधीयते। तच्चार्च-

यितुमारभ्यत। "कथमिदं पामरत्वकार्यं वयं कुर्मः ?" इति विमृश्य लेशतोऽपि निर्लज्जा अमी नालज्जन्त। उदीरितं केनापि कविना—"**स्वार्थी दोषं न पश्यतीति।**" स्वार्थिजना निजस्वार्थसाधनाय दुष्कृतान्यपि श्रेष्ठानि मत्वा दोषं न पश्यन्ति। तस्यामेव पाषाणादिमूर्त्तेर्भगलिङ्गस्य च पूजायां सकला धर्मार्थकाममोक्षादिसिद्धीरमन्वत। भोजराजानन्तरं यदा जैना निजमन्दिरेषु मूर्त्तीः स्थापयितुं दर्शनाय स्पर्शनाय च यातायातं कर्त्तुमुपाक्रमन्त तदा तु पोपानाममीषां शिष्या अपि जैनमन्दिरे गतागतं विधातुमारभन्त। ततश्च पश्चिमप्रदेशे कियन्ति परेषां मतानि प्रवृत्तानि यवनजनाश्चाप्यार्यावर्त्ते गमनागमनं प्राक्रमन्त विधातुम्। तदा पोपैरयं श्लोको व्यरचि—

**न वदेद्यावनीं भाषां प्राणैः कण्ठगतैरपि।**
**हस्तिना ताड्यमानोऽपि न गच्छेज्जैनमन्दिरम्॥**

अपि कियदपि दुःखं प्राप्नुयात्। अपि निकामं प्राणः कण्ठगताः किं न स्युरर्थान्मृत्युसमयोऽपि कथं नोपसीदेत्तथापि यावनीं भाषां (म्लेच्छभाषाम्) मुखेन न वदेज्जनः। अप्युन्मत्तो मतङ्गजः किं नु खलु नाभिद्रवेज्जैनमन्दिरप्रवेशेन गजः प्राणाश्चेद्रक्षितास्स्युस्तदपि न प्रविशेज्जैनमन्दिरम्। वरं मतं गजमभिगम्य मरणं न तु जैनमन्दिरं प्रविश्यात्मरक्षणम्। एवममी निजशिष्यानुपादिशन्। यदा कोऽप्यमून्—"भवतां मते कस्यचन माननीयग्रन्थस्यापि प्रमाणं विद्यते किमु ? इति प्रमाणमन्वयुङ्क्त। तदामी—"आम्! अस्ति" इति न्यगदन्। "दर्शयन्तु भवन्तः ?" इति यदासावपृच्छत्तदा मार्कण्डेयपुराणादेर्वचनान्यपठन्नश्रावयँश्च यथा खलु दुर्गापाठे देव्या वर्णनं व्यधायि। भोजराजराज्ये व्यासदेवस्य नाम्ना मार्कण्डेयं शिवपुराणञ्च केचन व्यरचयन्। तदीयवृत्तान्तमुपलभ्य भोजनरेन्द्रस्तान् पण्डितान् हस्तच्छेदनादिनाऽदण्डयत्। आदिशच्च —"यः कश्चित् काव्यादिग्रन्थान् विरचयेत्स निजनाम्नैव रचयेन्नतु महर्षिमुनिनामभिरिति"। वृत्तमिदं भोजराजविरचिते संजीवनीनामके इतिहासेऽवर्णि। यो ग्रन्थो ग्वालियरराज्यस्य भिण्डनामकनगरमधिवसतां त्रिवेदिब्राह्मणानां गृहेषु विद्यते। यच्च लखुनापत्तनश्रेष्ठिमहोदयस्तदीयः कार्यलेखको रामदयालुचतुर्वेदिनामा गृहस्थश्चालोकयन्निजनयनाभ्याम्। तत्र स्पष्टमलेखि यद्—"व्यासदेवश्चत्वारि सहस्राणि चत्वारि शतानि च महाभारते श्लोकान् प्रणिनाय। तदीयशिष्याश्च पञ्चसहस्राणि षट् शतानि च श्लोकान्। एवं सकला मिलित्वा दशसहस्रसंख्याकाः श्लोका महाभारते विरचिता आसन्। तन्महाभारतं महाराजविक्रमादित्यसमये विंशतिसहस्रश्लोकयुतं महाराजभोजः कथयति यन्मम पितुः समये पञ्चविंशतिसहस्रश्लोकयुतं सम्प्रति च ममार्द्धायुषि त्रिंशत्सहस्रश्लोकयुतं महाभारतपुस्तकमुपलभ्यते। यदीदृश्यैव गत्या वर्द्धेत तदैकक्रमेलकवाह्यभारं भविष्यति महाभारतपुस्तकम्।

ऋषिमुनिनामभिर्यदि पुराणादिग्रन्थाः प्रणेष्यन्ते तदाऽऽर्यावर्त्तीयजना भ्रमजाले निपत्य वैदिकधर्मविहीनाः संवृत्य भ्रष्टा भविष्यन्ति।" अनेन—"भोजराजे मनाग् वैदिकसंस्कार आसीदिति" विज्ञायते।

अस्य भोजप्रबन्धे लिखितमस्ति यथा—

**घट्यैकया क्रोशदशैकमश्वः सुकृत्रिमो गच्छति चारुगत्या।**

**वायुं ददाति व्यजनं सुपुष्कलं विना मनुष्येण चलत्यजस्रम्॥**

भोजराजस्य राज्ये तदुपकण्ठे चैतादृशाः शिल्पिवरा अविद्यन्त यैरश्वाकारं यन्त्रकलायुतं यानमेकं निरमीयत यदेकया घटिकयेकादशक्रोशान् होरयैकया च सार्द्धसप्तविंशति क्रोशानगच्छत्। तदवनितले गगनेऽपि चाचलत्। व्यजनञ्चैकमीदृशमरच्यत यन्मनुष्य चालनं विना कलायन्त्रबलेन निरन्तरं समचलत् पुष्कलञ्चानिलं प्रादात्। यदीदं पदार्थद्वयमस्थास्यदद्यावधि तर्हि हरिवर्षीया नाकरिष्यन्नेतावन्तमभिमानम्।

निवारयतामपि पोपानां शिष्या यदा जैनमन्दिरमगमन्, जैनानां कथास्वपि ते गन्तुमुपाक्रमन्त। जैनपोपाश्चेमान् पौराणिकपोपशिष्यान् भ्रमयितुमारभन्त तदा व्यचिन्तयन् पौराणिकाः—"अस्य कोऽप्युपायो विधेयो ऽन्यथा निजशिष्या जैना भविष्यन्तीति। अथ पोपैः सम्मतिरियं व्यधायि—जैनानामिव स्वकीया अपि देवावतारा मन्दिराणि मूर्त्तयः कथाग्रन्थाश्च विरचनीया इति"। एभिर्जैनानां चतुर्विंशतितीर्थङ्करा इव चतुर्विंशतिदेवावतारा देवालया मूर्त्तयश्चप्रकल्पिताः। जैनानामाद्युत्तरपुराणादिग्रन्था इवाष्टादशपुराणग्रन्थाश्च विरचयितुमारभ्यन्त। भोजराजात् पञ्चाशदुत्तरैकशतसंवत्सरानन्तरं वैष्णवमतं प्रारभत। शूर्पकारज्ञातिसमुत्पन्नेन शठकोपनामकेनैकेन पुरुषेण मतमिदं किञ्चित् प्रवर्तितम्। तदनु महत्तरकुलोत्पन्नेन मुनिवाहनेन ततस्तृतीयेन यवनकुलजातेन यावनाचार्येणाथ चतुर्थेन ब्राह्मणकुलजेन रामानुजेन निजमतं प्रथितम्। शैवाः शिवपुराणादीन्, शाक्ता देवीभागवतादीन्, वैष्णवाश्च विष्णुपुराणादिग्रन्थान् व्यरचयन्। तेषु निजनामधेयमेतदर्थं न विन्यस्तं यद् यदि स्वनाम्ना प्रणेष्यन्ते तदा कैरपि प्रमाणतयेमे नाङ्गीकरिष्यन्त इति। व्यासादिमुनिवरमहर्षिजनानां नामानि विन्यस्य पुराणानि व्यरीरचन्निमे नामान्यप्यमीषां वस्तुतो नूतनानि विधेयान्यभवन् किन्तु यथा कश्चन दरिद्रो निजात्मजस्य महाराजाधिराज इति नाम कोऽप्याधुनिकस्य पदार्थस्य च सनातन इति नामधेयं विदध्यात्तदा किमाश्चर्यमस्ति। अधुना मिथोऽमीषां यथा कलहास्सन्ति। दृश्यताम्—

देवीभागवते श्रीपुरस्वामिनीति लिखिता—श्रीनामिकैका देवी स्त्री सकलं विश्वं ससर्ज। सैव ब्रह्माणं विष्णुं महादेवमपि निर्ममे। इयेष यदा सा स्वहस्तं जघर्ष तेन स्फुटिकैका पुस्फोट। तस्या ब्रह्मण उत्पत्तिर्जज्ञे। तं

देवी—"त्वं मामुद्वहेति" जगाद। ब्रह्माऽभिदधौ—"त्वं मम जननीत्यहं त्वां परिणेतुं न प्रभुरिति", एवं निशम्य माता चुकोप पुत्रञ्च भस्मीचकार। पुनश्चासौ हस्तं संघृष्य तथैवापरं पुत्रमुत्पादयामास। नाम्ना तं विष्णुं विदधे। तमपि तथैव निजगाद। यदा स अपि न मेने तदा तमपि भस्मसाच्चक्रे। पुनस्तथैव सा तृतीयं तनयं जनयाञ्चकार। महादेवाभिधानं तं विदधौ। अभिदधौ चामुं 'त्वं मां परिणयेति'। महादेव उवाच—"न परिवृढोऽहं त्वामुद्वोढुम्। बिभृहि त्वमन्यस्त्रीशरीरमिति"। तथैव देवी विदधे। तदा व्याजहार महादेवः—"किमिदं स्थलद्वये भस्मेव निपतितमस्तीति"। देव्या जगदे—"तव भ्रातरावेतौ। आभ्यां ममादेशो मस्तके न निहित इतीमौ भस्मीकृताविति"। "अहमेकाकी किन्नु करिष्यामि ? एतावपि सञ्जीवय। अन्यत् स्त्रीद्वयं चोत्पादय। त्रयाणां पाणिग्रहणं तिसृभिः समं सम्पत्स्यत" इति महादेवो बभाषे। तथैव देव्या विदधे। ततस्तिसृभिः स्त्रीभिः साकं त्रयाणां पुरुषाणां पाणिग्रहणमङ्गलं सम्पन्नम्।

धन्यास्सन्त्यमी। जननीं न परिणिन्युर्भगिनीञ्चोपयेमिरे। किमिदमुचितमवगन्तव्यम् ? अथेन्द्रादीञ्जनयामास। ब्रह्माविष्णुरुद्रेन्द्राः शिविकावाहिनः किङ्कराश्चक्रिरेऽनयेत्यादिमिथ्यावार्ताः सविस्तरं यथेष्टञ्च वर्णिताः सन्ति। कश्चिदेतान् पृच्छेत्—"तस्या देव्या शरीरस्य तस्य श्रीपुरस्य च निर्माता देव्याश्च मातापितरौ कावभूतामिति" ? "अनादिर्देवी विद्यत" इति कथ्येत यदि तदा यत् संयोगजन्यं वस्तु भवति तत्कदाप्यनादि भवितुं न शक्यम्। यदि जननीतनययोः परिणये बिभीयात्तदा भ्रातृभगिनीविवाहे कतम उत्तम उदर्कः प्रभवति ?

यथाऽस्मिन् देवीभागवते महादेवविष्णुब्रह्मादीनां क्षुद्रता देव्याश्च महत्ता वर्णितास्ति तथैव शिवपुराणे देव्यादीनामतिक्षुद्रता लिखितास्ति। यथा—एते सकला महादेवस्य भृत्या महादेवश्च सर्वेषामीश्वरोऽस्ति। यदि रुद्राक्षस्य—कस्यचन तरोः फलबीजस्य धारणेन भस्मनो लेपनेन वा मुक्ति मन्यन्ते तदा खलु भस्मनि शयितारो गर्दभादिपशवो गुञ्जादिपरिधातारो भिल्लपुलिन्दशबरादयो मुक्तिं कथं न लभेरन् ? भस्मनि लुंठितॄणां सूकरसारमेयरासभादीनाञ्च मुक्तिः कथं न भवति ?

**प्र०**— कालाग्निरुद्रोपनिषदि भस्मलेपनस्य विधानमस्ति तत्किमनृतं वर्त्तते ? अथ च—"**त्र्यायुषं जमदग्नेः०**—" इत्यादियजुर्वेदमन्त्रैरपि भस्मधारणविधानमस्ति पुराणेषु च रुद्रनेत्राश्रुपातेन यस्तरुर्जातस्तस्यैव रुद्राक्ष इत्यभिधानं विद्यते। अत एव तस्य धारणेन पुण्यं जायत इत्यलेखि। एकस्यापि रुद्राक्षस्य धारणेन सकलपापेभ्यः परिमुच्य स्वर्गं व्रजेत्। यमराजस्य नरकस्य चापि भयं न विद्येत।

उ०—कालाग्निरुद्रोपनिषत् केनापि भस्मलेपिना जनेन निर्मिताऽस्ति यतो—"यास्य प्रथमा रेखा सा भूर्लोकः"। इत्यादिवचनानि तस्यां निरर्थकानि सन्ति। या प्रतिदिवसं हस्तेन निर्मिता रेखाऽस्ति सा भूर्लोकस्तस्य वाचिका वा कथं स्यात्? ये च—"**त्र्यायुषं जमदग्ने**" इत्यादिमन्त्रास्सन्ति, न ते भस्मत्रिपुण्ड्रधारणवाचिनः किन्तु तेषामयमर्थः—"**चक्षुर्वै जमदग्निः**" इति शतपथे। हे परमेश्वर! मम नेत्रज्योतिः [**त्र्यायुषं**] त्रिगुणमर्थाच्छतत्रयवर्षपर्यन्तं तिष्ठेदहमपि चेदृशानि धर्मकृत्यानि कुर्वीय येन दृष्टिर्न नश्येत्। नेत्राश्रुपातेनापि वृक्षोत्पत्तिः सम्भवतीति कियतीयं महामूर्खताया वार्ता वर्त्तते खलु! किं कोऽपि परमेश्वरस्य सृष्टिक्रमनियममन्यथयितुं प्रभवति? यादृशं यस्य तरोर्बीजं परमात्मना व्यरचि तेनैव स तरुः प्ररोढुं परिवृढो नान्यथा। अतो यद् रुद्राक्षभस्मतुलसीकमलाक्षतृणचन्दनादीनां कण्ठे धारणं तदखिलं वन्यस्य पशोरिव मनुष्यस्य कार्यमस्ति। एवं वाममार्गीयाः शैवाश्चातीवानृताचारा विरोधिनः कर्त्तव्यकर्मत्यागिनश्च भवन्ति तेषु यः कश्चन श्रेष्ठः पुरुषोऽस्ति स एतेषु कथनेषु विश्वासमविधाय सत्कर्माणि कुरुते। यदि रुद्राक्षभस्मधारणेन यमराजदूता बिभ्यति तदा राजसैनिका अपि बिभीयुः। यदि रुद्राक्षभस्मधारिभ्यः सिंहाः सारमेयाः सर्पा वृश्चिका मक्षिका मशकादयश्चापि न त्रस्यन्ति तर्हि न्यायाधीशस्य गणाः किमिव त्रस्येयुः?

**प्र०**—वाममार्गीयाः शैवाश्च तु न साधवः परं वैष्णवास्तु साधवो नु खलु सन्ति?

**उ०**—एतेऽपि वेदविरोधित्वात्तेभ्योऽप्यधिका असाधवः सन्ति।

**प्र०—"नमस्ते रुद्र मन्यवे" "वैष्णवमसि।" "वामनाय च।" "गणानां त्वा गणपति ँ् हवामहे।" "भगवती भूयाः।" "सूर्य आत्मा जगतस्तस्थुषश्च०—"**

इत्यादिवेदप्रमाणैः शैवादिमतानि सिद्ध्यन्ति। पुनर्भवान् किमिति खण्डयति?

**उ०**—एभिर्वचनैर्न सिध्यन्ति शैवादिसम्प्रदायाः। यतो रुद्रशब्दः परमेश्वरप्राणादिवायुजीवाग्निप्रभृतीनां वाचकोऽस्ति। यः क्रोधकर्ता दुष्टजनानां रोदयिता स रुद्रस्तस्मै परमात्मने नमः। प्राणेभ्यो जाठराग्नये च नमोऽन्नदानम्। [**नम इति अन्ननाम**।—निघण्टु २।७] यो मङ्गलकारी सकलस्य जगतोऽतीव कल्याणकर्ताऽस्ति स परमात्मा प्रणम्यः। "शिवस्य परमेश्वरस्यायं भक्तः शैवः।" "विष्णोः परमात्मनोऽयं भक्तो वैष्णवः।" "गणपतेः सकलजगत्स्वामिनोऽयं सेवको गाणपतः।" भगवत्या वाण्या अयं सेवको भागवतः।" सूर्यस्य चराचरात्मनोऽयं सेवकः सौरः।" एते रुद्रशिव-

विष्णुगणपतिसूर्यादयः सर्वे, परमेश्वरवाचकाः शब्दाः, सत्यभाषणयुक्ताया वाण्याश्च भगवतीति नामधेयं विद्यते। अत्राज्ञानेनैवं कलहमाचरन्, यथा—

कस्यचन विरागिणो द्वौ शिष्यावास्ताम्। प्रतिदिनं तौ गुरोश्चरणौ समवाहयताम्। एकेन दक्षिणचरणोऽपरेण च वामचरणः संवाहनेन सेवनीय इति तयोर्विभागनियमः। एकदेत्थमापतितं यदेकः शिष्य आपणमगादन्यश्च निजसेव्यचरणस्य सेवामकार्षीत्। अत्रान्तरे गुरुणा पार्श्वपरिवर्त्तनं कृतं तेन तस्य सेव्यचरणोपर्यन्यस्य सतीर्थ्यस्य सेव्यचरणो न्यपतत्। स तु दण्डमादाय चरणोपरि प्राहरत्। "अरे रे दुष्ट! किं त्वमिदमकरोरिति" गुरुरवादीत्। "मम सेव्यचरणोपरि कथमयं चरणः समारूढवानिति" शिष्योऽब्रवीत्। एतस्मिन्नन्तरे द्वितीयः शिष्यो य आपणं गतोऽभवत् स उपस्थितः। सोऽपि स्वसेव्यचरणं परिचरितुं यावत् प्रावर्त्तत तावच्चरणं शोथयुतमद्राक्षीत्। अप्राक्षीच्च—"भगवन्! किन्नु समजायतास्मिन्मम सेव्यचरणे"? इति। अखिलमुदन्तमश्रावयद् गुरुः। सोऽपि मूढः किमप्यवदन्नेव तूष्णीमेव दण्डमुपादाय महता बलेन गुरोरन्यचरणे प्राहरत्। ततो गुरुस्तारस्वरेण यदा समाक्रन्दत्तदा द्वावपि शिष्यौ दण्डमादाय गुरुचरणयोः प्रहर्तुं प्रारभेताम्। तदा तु महान् कोलाहलः संवृत्तः, तं निशम्य समागता जना गुरुमपृच्छन्—"साधुवर्य! किं सञ्जातमिति"? तेषु कश्चन बुद्धिमान् पुरुषः साधुं विमोच्य तान् मूर्खविनेयानुपादिशत्—"अये! पश्यतं युवाम्। इमौ द्वावपि चरणौ भवद्गुरोरेव स्तः। तयोर्द्वयोः सेवया स एव सुखं लभते पीडनेन चापि स एक एव पीड्यत इति"।

यथैकगुरुसेवायां शिष्यौ लीलामकुरुतां तथैवैकस्याखण्डस्य सच्चिदानन्दानन्तस्वरूपस्य परमात्मनो विष्णुरुद्रादीन्यनेकानि यानि नामानि सन्ति तेषां नाम्नां सत्या अर्था यथाऽस्माभिः प्रथमसमुल्लासे प्राकाशिषत तानविज्ञाय शैवशाक्तवैष्णवादिसम्प्रदायिजनाः परस्परमऽन्योन्यस्य नामानि निन्दन्ति। मन्दमतयो मनागपि स्वबुद्धिं वितत्य न विमृशन्ति यदिमानि सकलानि विष्णुरुद्रशिवादिनामान्येकस्याद्वितीयस्य सर्वनियन्तुः सर्वान्तर्यामिनो जगदीश्वरस्यानेकगुणकर्मस्वभावयुक्तत्वात्तस्यैव वाचकानि विद्यन्ते। किं नु खलु नाकोपिष्यदीश्वर ईदृशेभ्यो जनेभ्यः?

निर्वर्ण्यतामिदानीं चक्राङ्कितवैष्णवानामद्भुतमाया—

**तापः पुण्ड्रं तथा नाम माला मन्त्रस्तथैव च।**
**अमी हि पञ्च संस्काराः परमैकान्तहेतवः॥**
**'अतप्ततनूर्न तदामो अश्नुते' इति श्रुतेः॥**

—रामानुजपटलपद्धतौ

(तापः) शङ्खचक्रगदापद्मचिह्नान्यग्नौ सन्ताप्य बाहुमले च तैश्चिह्न-

यित्वा दुग्धपूर्णपात्रे तानि निर्वापयन्ति। केचन तत् पयः पिबन्त्यपि। आलोक्यतां सम्प्रति प्रत्यक्षमेव मनुष्यमांसस्यापि स्वादस्तस्मिन् गृहीतस्स्यात्, ईदृशैः कर्मभिः परमेश्वरस्य प्राप्तेराशां कुर्वन्ति कथयन्ति विना शंखचक्रादिना शरीरं तप्त्वा जीवः परमेश्वरं न प्रपद्यते यतः स आमोऽपक्वो विद्यते। यथा च राजनामाङ्कितराज्यसेवकाद्यभिज्ञापकचिह्नत्वाद् राजपुरुषमभिज्ञाय तस्मात्सर्वे जना बिभ्यतीति तथैव विष्णोः शंखचक्रादिरायुधानां चिह्नानि दृष्ट्वा यमराजस्तस्य गणाश्च बिभ्यन्ति वदन्ति चामी—

**दोहा—बाना बड़ा दयाल का, तिलक छाप और माल।**
**यम डरपै कालू कहे, भय माने भूपाल॥**

भगवन्नेपथ्यभूततिलकमुद्रास्रग्धारणमुत्तमं वर्त्तते। यस्माद् यमराजो राजाऽपि च बिभेति! **(पुण्ड्रम्)** त्रिशूलाकारं ललाटे चित्रालेखनम्। **(नाम)** नारायणदासविष्णुदासेति दासपदान्ताभिधानम् **(माला)** कमलगट्टकृतमाला धारणम्। पञ्चमश्च **(मन्त्रः)** यथा **ओ३म् नमो नारायणाय**॥ इत्ययं साधारणजनकृते कृतो मन्त्र एभिः। अथ च—**श्रीमन्नारायण चरणं शरणं प्रपद्ये ॥१॥ श्रीमते नारायणाय नमः ॥२॥ श्रीमते रामानुजाय नमः"** ॥ इत्यादयो मन्त्रा धनाढ्यानां मान्यानाञ्च कृते निर्मितास्सन्ति। दृश्यताम्—अयमप्यापणः संवृत्तः। यादृशं मुखं तादृशं तिलकम्। इमान् पञ्चसंस्काराँश्चक्राङ्किता मुक्तिहेतून् मन्यन्ते। एषां मन्त्राणामयमर्थः—नारायणमहं नमस्करोमि ॥१॥ लक्ष्मीयुतस्य नारायणस्य चरणकमलमाश्रयामि ॥२॥ श्रीयुक्तं शोभासम्पन्नं वा नारायणं प्रणमामि ॥३॥ यथा वाममार्गिणः पञ्चमकारान् मन्वते तथैव चक्राङ्किताः पञ्चसंस्कारान् मन्यन्ते। तप्ताभ्यां शङ्खचक्राभ्यां स्वगात्राङ्कनविषये यो वेदमन्त्रः प्रमाणत्वेनाङ्गीकृत एभिस्तस्येदृशः पाठोऽर्थश्चास्ति—

**पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः।**
**अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत्समाशत ॥१॥**
**तपोष्पवित्रं विततं दिवस्पदे ॥२॥**

—ऋ० मं० ९। सू० ८३। मन्त्र १, २

अयि ब्रह्माण्डस्य वेदानाञ्च पालयितः सर्वसामर्थ्ययुक्त सर्वशक्तिमन् प्रभो! भगवता भवता निजव्याप्त्या संसारस्य सकला अवयवा व्याप्तास्सन्ति तस्य भवतो व्यापकं तत् पवित्रस्वरूपं ब्रह्मचर्य्यसत्यसम्भाषणशमदमयोगाभ्यास-जितेन्द्रियत्व-सत्सङ्गादि-तपश्चर्यारहितोऽपरिपक्वान्तःकरणयुक्त आत्मा नोपलभते। ये च पूर्वोदितेन तपसा शुद्धास्सन्ति त एवेदं तप आचरन्तस्तत्तव शुद्धस्वरूपं सम्यगाप्नुवन्ति ॥१॥

ये प्रकाशस्वरूपपरमेश्वरस्य सृष्टौ विस्तृतं पवित्राचरणरूपं तप आचरन्ति त एव परमात्मानमुपलब्धुमर्हन्ति ॥२॥

विमृश्यतामिदानीम्—"रामानुजीयादिजना अनेन मन्त्रेण "चक्राङ्कितत्वं कथमिव साधयन्तीति"। ननु कथ्यतामेते विद्वाँसोऽविद्वाँसो वाऽभवन्निति ? यदि विद्वाँसोऽभवन्निति कथ्येत तदेदृशमसम्भाव्यमर्थमस्य मन्त्रस्य किमित्यकरिष्यन् ? अस्मिन् मन्त्रे हि खलु—"अतप्ततनूरिति" पदं विद्यते न तु "अतप्तभुजैकदेश इति" पदम्। अथ चेदमतप्ततनूरिति पदं नखशिखाग्रपर्यन्तसमुदायार्थकं वर्तते प्रमाणेनामुनाऽनलेनैव यदि तापनं चक्राङ्किता जना अङ्गीकुर्युस्तदा स्वस्वशरीराणि निक्षिप्याम्बरीषे सकलं शरीरं प्रज्वालयेयुः, तथाप्यस्य मन्त्रस्यार्थाद्विरुद्धं वर्त्तते यतोऽत्र मन्त्रे सत्यभाषणादिपवित्राचरणमेव तपो गृहीतं विद्यते।

**ऋतं तपः सत्यं तपः श्रुतं तपः शान्तं तपो दमस्तपः ॥**

—तैत्तिरी० प्र० १०। अ० ८

यथार्थशुद्धभावः सत्यमननं सत्यभाषणं सत्यकरणं मनसोऽधर्मान्निवारणं बाह्येन्द्रियाणामन्यायाचरणान्निरोधनमर्थाद् वपुरिन्द्रियमनोभिः शुभकर्माचरणं वेदादिसत्यविद्याध्ययनाध्यापनं वेदानुगुणमाचरणमित्याद्युत्तमधर्म्यकर्मणां तप इत्यभिधानमस्ति। धातुं सन्तप्य त्वचो दाहनं नोच्यते तपः। आलोक्यताम्—चक्राङ्किता आत्मानं श्रेष्ठं वैष्णवं मन्यन्ते परं निजपरम्परां कुकर्माणि चात्मनो न निध्यायन्ति यत् प्रथमममीषामादिपुरुषः "षठकोपनामा" अभूदिति। चक्राङ्कितानामेव ग्रन्थेषु "नाभाडूम"—कृतभक्तमालग्रन्थेऽपि च—

**विक्रीय शूर्पं विचचार योगी ॥**

इत्यादिवचनानि चक्राङ्कितानां ग्रन्थेषु लिखितानि सन्ति। शठकोपाभिधानो योगी शूर्पाणि विक्रीय व्यचरत्। शूर्पकारजातौ समजायतासौ। यदामुना ब्राह्मणेभ्यः पठितुं शास्त्राणि श्रोतुं वा वाञ्छितं स्यात्तदायं ब्राह्मणैर्निकृतोऽभवदिति तेन ब्राह्मणेभ्यः प्रतिकूलः सम्प्रदायस्तिलकचक्राङ्किताद्याः शास्त्रविरुद्धाश्च वार्ताः स्वच्छन्दं प्रवर्तिताः स्युः। तस्य शिष्यश्चाण्डालकुलजातो "मुनिवाहनः" तस्याथ शिष्यो यवनकुलसम्भूतो "यावनाचार्यः" यो नामपरिवर्तनं विधाय कैश्चिद् "यामुनाचार्यः" इत्यप्यभिधीयते। तद्-अनन्तरं द्विजराजकुलजो "रामानुजः" चक्राङ्कितोऽभवत्। तस्मात्पूर्वं केचन भाषाग्रन्था विरचिता आसन्। रामानुजः किञ्चित् संस्कृतमधीत्य संस्कृतेश्लोकबद्धं ग्रन्थं शारीरकसूत्राणामुपनिषदाञ्च व्याख्यां शङ्कराचार्यकृतविवृतिविरुद्धां निर्माय शङ्कराचार्यं सुतरामनिन्दत्। यथा शङ्कराचार्यस्य—"अभिन्नावेव ब्रह्मजीवौ, नास्त्यन्यत् किमपि वस्तुतो वस्तु। अनित्यं माया-

प्रपञ्चरूपमखिलं जगन्मिथ्या" इत्यद्वैतमतं विद्यते, ततो विरुद्धं "जीवो ब्रह्म माया चेति त्रयं नित्यमस्तीति" रामानुजस्य मतम्। ब्रह्मणोऽतिरिक्तस्य जीवस्य कारणपदार्थस्य चानङ्गीकरणेनात्र न साधु शाङ्करं मतम्। रामानुजस्यापि चास्मिन्नंशे यद् जीवो मायासहितञ्च ब्रह्मैकमेवास्तीति विशिष्टाद्वैतं न समीचीनम्। पदार्थत्रयस्य स्वीकरणमद्वैतस्य च कथनं सर्वथा व्यर्थं वर्तते। एवं सर्वथा परमेश्वराधीनस्य परतन्त्रस्य जीवस्य मननं कण्ठिकातिलकमालामूर्तिपूजनादिपाखण्डयुतमतप्रवर्तनादिदुष्टकथनं च चक्राङ्कितादिसम्प्रदाये वर्तते यावन्मात्रं चक्राङ्कितादयो वेदविरोधिनः सन्ति न तावन्मात्रं शङ्कराचार्यमतवादिनः।

प्र०—मूर्तिपूजा कुतः प्रवृत्ता ?

उ०—जैनेभ्यः।

प्र०—जैनैः कुतः प्रवर्तिता ?

उ०—स्वमूर्खतया।

प्र०—"शान्तां ध्यानावस्थितां मूर्तिमवलोक्य निजात्मनोऽपि तथैव शुभः परिणामो भवतीति" जैना वदन्ति।

उ०—जीवश्चेतनो मूर्तिश्च जडाऽस्ति। किन्तु मूर्तिरिव जीवोऽपि जडो भविष्यति ? केवलं पाखण्डमतमियं मूर्तिपूजा। जैनैरियं प्रचलितेति तन्मतखण्डनं द्वादशसमुल्लासे विधास्यामः।

प्र०—शाक्तादिभिर्मूर्तिषु जैनमूर्तीनामनुकरणं न व्यधायि किल। यतो जैनानां मूर्त्तय इव न सन्ति मूर्तयो वैष्णवादीनाम्।

उ०—आम् ! युज्यत इदम् !! जैनानां मूर्तितुल्या निरमास्यन्त यदि तर्हि जैनमते समगंस्यन्त ते। अतो जैनमूर्त्तिविरुद्धा निरमिमतामी। जैनैः साकं विरोध एषां कृत्यमेभिस्समं विरोधश्च तेषां प्रधानं कर्माभूत्। तथाहि —जैनैर्मूर्त्तयो नग्ना ध्यानावस्थिता विरक्ता जना इव निरमीयन्त तद्विपरीतं वैष्णवादिभिर्यथेष्टशृङ्गारितरमणीजनसहिता रङ्गरागभोगविषयासक्ता जना इवोत्थिता निषण्णाश्च विनिर्मिताः। जैना बहुशः शङ्खघण्टाडिण्डिमपटहादिवाद्यानि न वादयन्ति। एते च महानिनादं वितन्वन्ति। ईदृशलीलाविरचनेनैव तु वैष्णवादिसम्प्रदायिपोपानां शिष्या जैनानां जालाद् विमुच्यामीषां लीलाजालेषु निपतिताः। बहवो व्यासादिमहर्षीणां नामभिर्मनोऽभिलषिता असम्भवगाथाञ्चिता ग्रन्थाश्च विरचिताः तेषां "पुराणानीति" नामधेयानि विधाय कथामपि श्रावयितुमारभन्त। ततश्चेदृशीर्विचित्रा माया व्यरीरचन्नमी यत् पाषाणमूर्तीर्निर्माय प्रच्छन्नं कुत्रचित्पर्वते महारण्यादौ वा निधाय भूमौ वा निखाय निजशिष्येषु प्राकाशयन्—"निशायां स्वप्ने मां महादेवः पार्वती राधा कृष्णः सीता रामो लक्ष्मीर्नारायणो वा हनूमदादयो वाऽकथयन्

—"वयं तत्र तत्र तिष्ठामः। ततोऽत्र आनीयास्मान् मन्दिरे प्रतिष्ठापय। त्वमेव चास्माकं पूजको भवेच्चेद् वयं मनोवाञ्छितं फलं प्रदास्यामः" इति। यदा विवेकनेत्रविहीना धनाढ्या जनाः पोपदेवस्य कपटलीलामाकर्णयँस्तदा तु सत्यामेव तामवागच्छन्नपृच्छँश्च—"क्व विद्यत एतादृशी सा मूर्त्तिरिति ?" तदा तु पोपदेवोऽवदत्—"तस्मिन् गिरौ वने वा विद्यते। आयान्तु मया सह भवन्तः, दर्शयाम्यहमिति।" तदा तु तेऽन्धास्तेन धूर्त्तेन साकं प्रगम्य तत्स्थलमासाद्य विलोक्य च विस्मयान्वितास्तस्य पोपस्य चरणयोः पतित्वा कथयन्ति स्म—"भवदुपरि देवस्यास्य बलवती कृपा वर्त्तते। अधुना भवानेतं देवमादाय आगच्छतु। वयं मन्दिरं विरचयिष्यामस्तस्मिन् देवमेनं प्रतिष्ठाप्य भवानेव पूजयतु। वयमपि चास्य महामहिमशालिनो देवस्य दर्शनस्पर्शनाभ्यां मनोवाञ्छितं फलं लप्स्यामहे" इति। इत्थमेको यदा लीलां व्यरचयत्तदैतं विलोक्याखिला पोपदेवा निजजीविकायै कपटलीलया मूर्त्तीरस्थापयन्।

प्र०—निराकारः खलु परमेश्वरः। स ध्यातुं न शक्यतेऽतोऽवश्यं मूर्त्त्या भाव्यम्। वरम्, किमप्यकरणापेक्षया मूर्त्तिसम्मुखमुपगम्य निबद्धाञ्जलयः परमेश्वरं स्मरन्ति तन्नाम च गृह्णन्ति तत्र का हानिः ?

उ०—यदा परमेश्वरो निराकारः सर्वव्यापकश्चास्ति तदा तस्य मूर्त्तिरेव निर्मातुं न शक्या। यदि मूर्त्त्या दर्शनमात्रेण परमेश्वरस्य स्मरणं स्यात्तदा परमेश्वररचितानां पृथिवीजलाग्निवायुवनस्पतिप्रभृतीनां दर्शिताद्भुतरचनाचातुरीकाणां मानवरचितमूर्त्त्युपादानकारणभूतानां भूमिपर्वतादिमहामूर्त्तीनां विविधभव्यरुचिरपदार्थानामवलोकनेन च किं परमेश्वरस्य स्मरणं भवितुं न शक्यते ? मूर्त्तिदर्शनेन परमेश्वरस्मरणाभावेन मनुज एकान्तस्थलमुपलभ्य चौर्यव्यभिचारप्रभृतिदुष्कृत्यकरणे प्रवृत्तोऽपि स्यात्। यतोऽसौ विजानीते—"साम्प्रतमत्र मां न कोऽपि पश्यतीति", अतः सोऽनर्थमविधाय न निवर्तते। इत्याद्यनेकदोषाः पाषाणादिमूर्त्तिपूजनान्निष्पद्यन्ते। आलोक्यतामधुना यः पाषाणादिमूर्त्तीर्न मत्वा सदा सर्वव्यापकं सर्वान्तर्यामिनं न्यायकारिणं परमात्मानं सर्वतः स्थितं जानीते मनुते च स पुरुषः सर्वत्र सर्वदा सर्वेश्वरं सर्वेषां पापपुण्यकर्मणां द्रष्टारं विज्ञाय क्षणमपि परमात्मनः स्वं पृथङ् न मत्वा दुरिताचरणं तु दूरमास्तां परं मनस्यपि कुसङ्कल्पं कर्तुं न समर्थो यतोऽयं जानाति—"यद्यहं मनोवाक्कर्मभिरपि किमपि दुष्कृतं करिष्यामि तदास्यान्तर्यामिनो न्यायेनावश्यं दण्डित एव भविष्यामीति।" नामस्मरणमात्रेण किञ्चिदपि फलं न जायते। यथा केवलं शर्कराशब्दोच्चारणेन निम्बनामग्रहणेन चाननं न मधुरं नापि कटु भवति परं रसनया रसनेनैव मधुरता कटुता वा विज्ञायते।

प्र०—किं नामग्रहणं सर्वथा मिथ्या वर्त्तते ? पुराणेषु तु सर्वत्र नामस्मरणस्यातीव माहात्म्यमवर्णि ?

उ०—नोत्तमा रीतिर्भवतो नामग्रहणस्य। यथा भवान् नामस्मरणं कुरुते सा मिथ्या रीतिः।

प्र०—अस्माकं कीदृशी रीतिर्वर्तते ?

उ०—वेदविरुद्धा।

प्र०—वरम्, भवानिदानीमस्मान् वेदोदितां नामस्मरणरीतिं प्रदर्शयतु ?

उ०—इत्थं नामस्मरणं विधेयं यथा—"न्यायकारीति" परमेश्वरस्यैकं नाम विद्यते। अस्य नाम्नो योऽर्थो भवति यत् परमेश्वरः पक्षपातरहितो भूत्वा सर्वेषां यथाविधिन्यायं कुरुते तथैव तमर्थमनुस्मृत्य जनो न्याययुक्तं व्यवहारमनिशं विदध्यादन्यायं कदापि न वितन्यात्। एवमेकेन नाम्नाऽपि मनुजस्य कल्याणं भवितुं शक्यते।

प्र०—परमेश्वरो निराकार इति वयमपि विद्मः परमसौ शिवविष्णुगणेशसूर्यदेव्यादीनां शरीराणि परिगृह्य रामकृष्णादिरूपेणावातरत्। तेनामुष्य मूर्त्तिर्विरच्यते। किमिदमपि कथनमनृतं खलु ?

उ०—आम्! आम्!! अनृतम्। यतः—**"अज एकपात्।" "अकायम्"**। इत्यादिविशेषणैः परमेश्वरो जन्ममरणदेहधारणरहितो वेदेषु वर्णितो विद्यते युक्त्याऽपि च परमेश्वरस्यावतारः कदापि न सम्भाव्यते। यो ह्याकाश इव सर्वत्र व्यापकोऽनन्तः सुखदुःखविहीनः दृश्यादिगुणरहितश्चास्ति स कथमिवैकस्मिन्नल्पतरे वीर्ये गर्भाशये शरीरे च समाविशेदीश्वरः। स एव गतागतं कुरुते य एकदेशी भवति यश्चाचलोऽदृश्यो यमन्तरेण चैकः परमाणुरपि नास्ति रिक्तस्तस्यावतारवर्णनं खलु वन्ध्यायास्तनयं विवाह्य तदीयपौत्रदर्शनकथाकथनमिवेदं विद्यते।

प्र०—यदा परमेश्वरो व्यापकोऽस्ति मूर्त्तावपि तदा विद्यते। तेन खलु कस्मिन्नपि पदार्थे तस्य भावनां विधाय पूजनं किमिति नोत्तमम् ? दृश्यताम्—

**न काष्ठे विद्यते देवो न पाषाणे न मृण्मये।**
**भावे हि विद्यते देवस्तस्माद् भावो हि कारणम्॥**

न काष्ठे न पाषाणे नापि मृत्तिकारचिते पदार्थे परमेश्वरो विद्यते परमेश्वरस्तु भावे विद्यते। यत्रैव भावं कुर्यात्तत्रैव देवः सिध्यति।

उ०—यदा खलु परमेश्वरः सर्वत्र व्यापकोऽस्ति तदा कस्मिंश्चिदेकस्मिन् वस्तुनि परमेश्वरस्य भावनमन्यत्र चाभावनमितीदृशं कथनमस्ति यथा चक्रवर्त्तिनो नरेन्द्रस्य सकलराज्यसत्तायास्तं पृथग्विधाय कस्यचिदल्पतरस्य कुटीरस्य स्वामित्वेन स्वीकरणं, कियानयं महानपमानः खलु। तथैव

भवान् परमेश्वरमप्यवमन्यते। व्यापकं मनुते चेद् वाटिकायाः पुष्पाणि पर्णानि चावचित्य तदुपरि कथङ्कारमारोपयति भवान् ? चन्दनं संघृष्य किमिति लेपयति ? धूपं प्रज्वाल्य कथं प्रयच्छति ? घण्टाघनपटहान् दण्डेन किन्नु ताडयति ? भवतः करयोरसौ वर्त्तते तत्किमिव हस्तौ सम्पुटयति ? शिरसि स विद्यते तत्कथं मस्तकं नमयति ? अन्नजलादिषु वर्त्तते तत् किमित्यन्नजलं निवेदयति ? जलेऽस्ति तत्स्नानं कथं नु कारयति ? सकलेषु हि तेषु पदार्थेषु परमात्मा व्याप्तोऽस्ति। तद् भवान् व्यापकं व्याप्यं वा पूजयति ? व्यापकमर्चयति चेत्पाषाणकाष्ठादिषु चन्दनपुष्पादीनि किमिति समारोपयति अथ च व्याप्यमर्चयति यदि तर्हि—"वयं परमेश्वरमर्चयामः" इत्यनृतं किन्नु वदति; वयं पाषाणादिपूजका इति सत्यं कथं नोदीर्यते ?

ननु कथ्यतां भावः सत्योऽसत्यो वा ! सत्यमिति चेत्तदा परमेश्वरो भवद्भावाधीनो भूत्वा बद्धो भविष्यतीति। भवाँश्च मृत्तिकायां सुवर्णरजतादि, पाषाणे हीरकपद्मरागादि, समुद्रफेने मौक्तिकानि, जले घृतदुग्धदध्यादि, धूल्याञ्च गोधूमपिष्टशर्करादि, भावयित्वा तदखिलं तादृशमेव किमिति न विदधाति ! दुःखं कदापि न विभावयति भवाँस्तत्कथं नु जायेते ! सुखञ्च निरन्तरं चिन्तयति तत् किमिति नावाप्यते ! अन्धो जनो नेत्रं भावयित्वा कथं न पश्यति ! भवन्तो मरणं न भावयन्ति किमिव म्रियन्ते ! तस्माद् भवतो भावना नास्ति सत्या। यादृशो हि यः पदार्थस्तस्य तादृशमेव भावनं भावनमुच्यते। यथाऽग्नावग्निरिति जले जलमिति बोधनं भावनोच्यते। जलेऽनलोऽनले जलमिति मतिरभावना निगद्यते। यतो यो यादृशस्तस्य तादृशावबोधो ज्ञानमन्यथाववोधोऽज्ञानमस्ति। अतो भवानभावनां भावनेति भावनाञ्चाभावनेति कथयति।

प्र०—अये ! यावद् वेदमन्त्रैरावाहनं न क्रियते न तावदायाति देवता परमावाहनेन द्रुतमागच्छति विसर्जनेन च प्रयाति।

उ०—यदि मन्त्रवाचनपुरस्सरमावाहनेन देवताऽऽयाति तदा मूर्त्तिश्चेतना किं न भवति ? विसर्जनेन च किं न प्रयाति ? असौ कुत आयाति क्व च प्रयाति ? शृणु भ्रातः ! पूर्णः परमात्मा न तु समायाति नापि च प्रयाति। यदि भवान् मन्त्रबलेन परमेश्वरमाह्वयति तदा तैरेव मन्त्रैर्निजस्य मृतस्य तनयस्य वपुषि जीवं कथं नाऽऽकारयति ? शत्रोः शरीरात् जीवस्य विसर्जनं विधाय तं हन्तुं कथं न शक्तो भवान् ? शृणुत, अयि निर्दोषा अज्ञानिनो भ्रातृजनाः ! शृणुत, इमे पोपा युष्मान् वञ्चयित्वा निजप्रयोजनं साधयन्ति। वेदेषु पाषाणादिमूर्त्तिपूजायाः परमेश्वरस्यावाहनविसर्जनयोश्च विधानस्यैकमप्यक्षरं न विद्यते।

प्र०—प्राणा इहागच्छन्तु सुखं चिरं तिष्ठन्तु स्वाहा ।
आत्मेहागच्छतु सुखं चिरं तिष्ठतु स्वाहा ।
इन्द्रियाणीहागच्छन्तु सुखं चिरं तिष्ठन्तु स्वाहा ।

इत्यादयो वेदमन्त्रास्सन्ति तत्कथं "न सन्तीति" वदति भवान् ?

उ०—अयि भ्रातः ! बुद्धिं मनागपि तु स्वकर्मणि नियुङ्क्ष्व । सकलानीमानि वाममार्गीयवेदविरुद्धतन्त्रग्रन्थानां पोपरचितानि कपोलकल्पितानि वचनानि सन्ति न तु वेदवचनानि ।

प्र०—किं तन्त्रमनृतम् ?

उ०—आम् ! सर्वथाऽनृतं वर्त्तते । यथाऽऽवाहनप्राणप्रतिष्ठादिमूर्त्तिविषयको वेदेष्वेकोऽपि मन्त्रो नास्ति तथा—**"स्नानं समर्पयामि"** इत्यादिवचनान्यपि न सन्ति । अर्थादेतावदपि नास्ति—"पाषाणादिमूर्तिं रचयित्वा मन्दिरेषु संस्थाप्य गन्धादिभिरर्चयेद्" इति ।

प्र०—वेदेषु विधिश्चेन्नास्ति खण्डनमपि नास्ति । खण्डनञ्चेदस्ति तदा—"प्राप्तौ सत्यां निषेधः" । मूर्तेरस्तित्वादेव खण्डनं भवितुं शक्यम् ।

उ०—विधिस्तु नास्ति परं परमेश्वरस्थाने कोऽप्यन्यः पदार्थः पूजनीयो न मन्तव्य इति सर्वथा निषेधः कृतोऽस्ति । किमपूर्वविधिर्निषेधो न भवति ? श्रूयताम्, अयमस्ति—

अन्धन्तमः प्रविशन्ति येऽसम्भूतिमुपासते ।
ततो भूयऽइव ते तमो यऽउ सम्भूत्याᳬ रताः ॥
—यजु० अ० ४० । मं० ९

न तस्य प्रतिमाऽअस्ति ॥२॥—यजु० अ० ३२ । मं० ३

यद्वाचानभ्युदितं येन वागभ्युद्यते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥३॥
यन्मनसा न मनुते येनाहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥४॥
यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यन्ति ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥५॥
यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदँ श्रुतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥६॥
यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥७॥
—केनोपनि०

येऽसम्भूतिमनुत्पन्नामनादिं कारणरूपां प्रकृतिं ब्रह्मणः स्थाने समुपासते

तेऽन्धकारेऽज्ञाने दुःखसागरे च निमज्जन्ति। अथ च सम्भूतिम्—कारणादुत्पन्नानि कार्यरूपाणि पृथिव्यादिभूतानि पाषाणवृक्षाद्यवयवान् मनुष्यादिशरीरञ्च-ये ब्रह्मणः स्थाने समुपासते ते महामूर्खास्तस्मादन्धकारादप्यधिकभयङ्करे दुःखरूपे नरके निपत्य चिरकालं महाक्लेशमुपभुञ्जते ॥१॥

यः सकलजगति व्याप्तोऽस्ति तस्य निराकारस्य परमात्मनः प्रतिमा परिमाणं सादृश्यं मूर्त्तिर्वा न विद्यते ॥२॥

यद् वाण्या इयत्ताया अर्थादिदं जलमस्ति गृह्यतामिति विषय इव विषयो न विद्यते यस्य च धारणेन सत्तया च वाणी प्रवर्त्तते तदेव ब्रह्म जानीहि तदेव चोपास्व। ततो यद् भिन्नं तन्नोपासनीयम् ॥३॥

यन्मनसेयत्तया मनसि नागच्छति यच्च मनो जानीते तदेव त्वं ब्रह्म जानीहि तदेव चोपास्व ततो भिन्ने ये जीवान्तःकरणे स्तस्तयोरुपासनां ब्रह्मस्थाने न विधेहि ॥४॥

यन्नेत्रेण न दृश्यते येन च नेत्राणि सर्वाणि पश्यन्ति तदेव ब्रह्म त्वं जानीहि तस्यैवोपासनां कुरु। तस्माद् भिन्ना ये सूर्यविद्युदग्निप्रमुखा जडाः पदार्थास्सन्ति तान्नोपास्व ॥५॥

यत्कर्णेन नाकर्ण्यते येन च कर्णावाकर्णयतस्तदेव ब्रह्म जानीहि तदेव सेवस्व। तस्य स्थाने ततो भिन्नान् शब्दादीन्मा भज ॥६॥

यत्प्राणैर्न चलति येन च प्राणाः प्रचलन्ति तदेव ब्रह्मोपास्व विद्धि च। ततो भिन्नं वायुं मा भज ॥७॥

इत्यादयो बहवो निषेधाः सन्ति। प्राप्तस्याप्राप्तस्यापि निषेधो भवति। "प्राप्तस्य" यथा कश्चित् क्वचिन्निषण्णो भवेत्तस्य तत उत्थापनम्। "अप्राप्तस्य" यथा—"अयि पुत्र ! त्वं कदापि चौर्यं मा कुरु। कूपे मा पत। दुष्टसंगतिं न विधेहि। विद्याहीनो न तिष्ठ।" इत्यादिनिषेधो भवति। तथैव मनुजस्य बुद्धावप्राप्तस्य परमेश्वरस्य ज्ञाने प्राप्तस्य निषेधो व्यधायि। तेन पाषाणादिमूर्तिपूजाऽतीव निषिद्धा वर्त्तते।

**प्र०**—मूर्तिपूजायां पुण्यं नास्ति चेत्पापमपि नास्ति।

**उ०**—कर्माणि द्विविधान्येव भवन्ति। तत्र यानि कर्त्तव्यतया वेदे सत्यभाषणादीनि प्रतिपादितानि तानि विहितानि कर्माणि। यानि चाकर्त्तव्यतया मिथ्याभाषणादीनि वेदेषु प्रत्याख्यातानि तानि निषिद्धानि कर्माणि। यथा विहितस्यानुष्ठानं धर्मस्तस्याननुष्ठानमधर्मः, तथैव निषिद्धस्य कर्मणोऽनुष्ठानमधर्मस्तस्याननुष्ठानं धर्मः। यदा खलु वेदैः प्रत्याख्यातानि मूर्त्तिपूजादिकर्माणि भवाननुतिष्ठति तदा कथं न पापीयान् भवान् ?

**प्र०**—पश्यतु, वेदा अनादयस्सन्ति तदानीं मूर्त्तेः किं प्रयोजनमासीत्,

यतः प्राक्काले तु देवताः प्रत्यक्षमालोकनीया अभवन्। पद्धतिरियं तु पश्चादेव तन्त्रैः पुराणैश्च प्रचालिता। यदा मनुजानां ज्ञानं सामर्थ्यञ्च न्यूनमभूत्तदा ते परमेश्वरं ध्यातुं ना शक्नुवन् मूर्तिञ्च चिन्तयितुं तु प्राभवन्नतोऽज्ञानिनां कृते मूर्तिपूजा वर्तते। यतः सोपानपरम्परयैवारोहेच्चेत्तदैव भवनोपरितलमुपगन्तुं प्रभवेज्जनः। प्रथमं सोपानं विहायोपरिगन्तुमभिलषेच्चेन्न गन्तुं पारयेत्। अतो मूर्त्तिः प्रथमं सोपानं वर्त्तते। एनां पूजयतो जनस्य शनैः शनैर्यदा ज्ञानं समुद्भविष्यत्यन्तःकरणञ्च पवित्रं भविष्यति तदा स परमात्मनो ध्यानं कर्त्तुं प्रभविष्यति। यथा लक्ष्यभेदी जनः प्रथमं स्थूललक्ष्ये बाणं गोलिकां गोलं वा सन्धाय प्रहरति तदनु शनैः शनैः सूक्ष्मे लक्ष्येऽपि प्रहर्तुं प्रभवति तथैव स्थूलमूर्तिमर्चयञ्जनः पुनः सूक्ष्मं ब्रह्मापि प्रपद्यते यथा खलु तावत्कालमेव बालिकाः पुत्रिकाखेलं खेलन्ति यावत्ताः सत्पतिं न लभन्ते इत्यादिप्रकारेण मूर्तिपूजनं खलु न दुष्टं कर्म।

उ०—यदा वेदविहिताचरणं धर्मस्तद्विरुद्धाचरणमधर्मोऽस्ति तदा पुनर्भवत्कथनेन मूर्तिपूजनमधर्मः सिद्धः। ये ये ग्रन्था वेदविरुद्धा वर्त्तन्ते तेषां प्रमाणनं मन्ये नास्तिकत्वसम्पादनम्। शृणुत यथाह मनुर्भगवान्—

**नास्तिको वेदनिन्दकः ॥१॥**—मनु० २।११

**या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः।**
**सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥२॥**
**उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित्।**
**तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च ॥३॥**

—मनु० अ० १२।९५, ९६

यो वेदान् निन्दत्यवमन्यते त्यजति तद् विरुद्धमाचरति स नास्तिक उच्यते ॥१॥

ये ग्रन्था वेदबाह्याः कुत्सितजनप्रणीता जगतो दुःखार्णवे निपातकास्ते निखिला असत्या अन्धकाररूपा निष्फला इहलोके परलोके च दुःखदायकास्सन्ति ॥२॥

एभ्यो वेदेभ्यो विरुद्धा ये ग्रन्था निर्मीयन्ते त आधुनिकत्वात्तूर्णं विलीयन्ते तेषां मननं निष्फलमनृतञ्चास्ति ॥३॥

इत्थमेव ब्रह्मादिजैमिनिमहर्षिपर्यन्तानां वेदविरुद्धानङ्गीकरणं वेदानुकूलानामेवाचरणञ्च धर्म इति मतं विद्यते। वेदा हि सत्यार्थस्य प्रतिपादकास्सन्ति। एभ्यो विरुद्धानि यावन्ति तन्त्राणि पुराणानि च सन्ति तावन्ति वेदविरुद्धत्वादनृतानि सन्ति। यानि च वेदविरुद्धानि पुस्तकानि तेषु कथिता मूर्तिपूजाऽपि खल्वधर्मरूपाऽस्ति। मनुजानां ज्ञानं जडपूजया न समेधितुं शक्यते प्रत्युत यत्किञ्चिज्ज्ञानमस्ति तदपि विनश्यति। अतो

ज्ञानिनां सेवया सङ्गेन च ज्ञानं वर्द्धते न तु पाषाणादिसेवया। किं पाषाणादिमूर्तिपूजया कदापि परमेश्वरं चिन्तयितुं शक्नोति जनः? नैव नैव खलु। मूर्तिपूजा सोपानं नास्ति किन्तु बृहत्येका परिखा विद्यते यस्यां संनिपत्य संचूर्णीभवति जनः, पुनस्तस्याः परिखायाः निर्गन्तुं न समर्थः परं तत्रैव म्रियते। आम्! अल्पधार्मिकविद्यावद्भ्य आरभ्य परमविद्वद्वरयोगिजनपर्यन्तानां समागमेन सद्विद्याग्रहणसत्यभाषणादिकृत्यानि परमेश्वरप्राप्तेः सोपानानि सन्ति यथोपरिगृहगमनाय सोपानं भवति। मूर्तिपूजां कुर्वाणो ज्ञानवाँस्तु कोऽपि नाजायत प्रत्युत सकला मूर्त्तिपूजका अज्ञानिनः स्थित्वा मानवं जन्म वृथा विनाश्य बहवोऽम्रियन्त। ये चाधुना सन्ति भविष्यन्ति वा तेऽपिमनुजजन्मनो धर्मार्थकाममोक्षप्राप्तिरूपफलेभ्यः पराङ्मुखीभूय मुधा विलयं गमिष्यन्तीति। ब्रह्मप्राप्तौ स्थूललक्ष्यवन्नास्ति मूर्तिपूजा स्थूललक्ष्यवत्तु धार्मिकविद्वन्मणिसेवा सृष्टिविद्या च। एतदुभयं समुपचिन्वानो जनो ब्रह्मापि प्रपद्यते। नेयं पुत्तलिकाकेलिवन्मूर्त्तिः पुत्तलिकाखेलवत्तु प्रथममक्षराभ्यासः सुशिक्षणञ्च ब्रह्मप्राप्तिसाधनम्। निशम्यताम्—यदा सुशिक्षणं विद्याञ्चाधिगमिष्यति तदा सत्स्वामिनं परमात्मानमपि लप्स्यते।

**प्र०**—साकारे मनः स्थिरं भवति निराकारे च कठिनं स्थिरीभवनम्, अतो मूर्तिपूजयाऽवस्थातव्यम्।

**उ०**—साकारे मनः कदापि स्थिरीभवितुं न प्रभवति यतस्तं मनः झटिति गृहीत्वा तस्यैवैकैकस्मिन्नवयवे परिभ्रमति परस्मिंश्च धावति निराकारस्य च परमात्मनो ग्रहणे यावद्बलं मनो धावतितमां तथाप्यन्तं न प्राप्नोति निरवयवत्वाच्च चञ्चलमपि न तिष्ठति परं तस्यैव गुणकर्मस्वभावान् विचिन्तयदन्तत आनन्दे विलीय स्थिरं भवति। यदि च साकारे स्थिरमभविष्यत्तदा सकलस्य जगतो मनांसि स्थिराण्यभविष्यन् यतो जगति जनः स्त्रीपुत्रधनमित्रादिसाकारवस्तुषु निमग्नस्तिष्ठति परं कस्यापि मनः स्थिरं न भवति यावन्निराकारे न नियुञ्जीत। यतो निरवयवत्वात्तस्मिन् मनः स्थिरं भवति तस्मान्मूर्त्तिपूजनमधर्मः।

**द्वितीयो दोषः**—तदर्थं कोटिशो रूप्यकाणां मन्दिरेषु व्यर्थं विधाय दरिद्रा भवन्ति तत्र च प्रमादः सञ्जायते।

**तृतीयः**—मन्दिरेषु स्त्रीपुरुषसम्मेलनेन व्यभिचारकलहकलिरोगादयः उत्पद्यन्ते।

**चतुर्थः**—मूर्त्तिपूजामेव धर्मार्थकाममोक्षसाधनं मत्वा पुरुषार्थरहिताः संवृत्य मनुष्यजन्म वृथा गमयन्ति।

**पञ्चमः**—नैकविधविरुद्धस्वरूपनामचरित्रयुतानां मूर्त्तीनां पूजका

ऐकमत्यं विनाश्य विरुद्धमते प्रवृत्य मिथो वैमनस्यं समुपचित्य देशं विनाशयन्ति ।

**षष्ठः**—मूर्तेरेव विश्वासेन शत्रोः पराजयं स्वस्य च विजयं मत्वा स्वस्थास्तिष्ठन्ति । परं तेन तेषां पराजयो भूत्वा राज्यस्वातन्त्र्यं धन-सौख्यञ्च तदरीणामधीनं भवति स्वयञ्च पराधीना भ्राष्ट्रकारस्याश्वा इव कुम्भकारस्य च गर्दभा इव रिपोर्वशंवदाः सम्भूय विविधं दुःखमश्नुवते ।

**सप्तमः**—यदि कोऽपि कमपि व्याहरेत् यद्—"वयं तवोपवेशनस्यासने नामनि वा पाषाणं स्थापयामस्तदा यथासौ तं प्रतिक्रुद्धः संस्ताडयति दुर्वचनं वा तस्मै कथयति तथैव ये परमेश्वरस्योपासनास्थाने हृदये नामनि च पाषाणादिमूर्त्तीः प्रतिष्ठापयन्ति तान् दुर्बुद्धीन् परमेश्वरः कथं न विनाशयेत् ।

**अष्टमः**—भ्रान्ता भूत्वा मन्दिरान्मन्दिरं देशाद् देशान्तरं परिभ्रमन्तो दुःखं लभमाना धर्मस्य संसारस्य परमार्थस्य च कृत्यं विनाशयन्तस्तस्करादि-पीडिताः सन्तः शठैः प्रतार्यन्ते ।

**नवमः**—दुष्टपूजकेभ्यो धनं दीयते ते तु तद् द्रव्यं वेश्यापरस्त्रीगमन-मदिरामांसाहारकलिकलहेषु व्ययन्ति येन दातुः सुखस्य मूलं विनश्य दुःखं सञ्जायते ।

**दशमः**—जननीजनकादिमाननीयजनाँस्तिरस्कृत्य पाषाणादिमूर्त्तीः सत्कृत्य कृतघ्ना भवन्ति जनाः ।

**एकादशः**—यदि कश्चनेमा मूर्त्तीः शकलयति चौरो वा चोरयति तदा हाहाकारं कृत्वा रुदन्ति ।

**द्वादशः**—पूजकाः परनारीसङ्गेन पूजिकाश्च परपुरुषसमागमेन प्रायेण दूषिता दम्पत्योः प्रेम्ण आनन्दं स्वहस्तेनैव विनाशयन्ति ।

**त्रयोदशः**—स्वामिनः सेवकाश्च यथावन्निदेशपालनाभावान्मिथो विरुध्य नष्टभ्रष्टा भवन्ति ।

**चतुर्दशः**—जडस्य ध्याताऽऽत्माऽपि जडबुद्धिर्जायते यतो ध्येयस्य जडत्वधर्मोऽन्तःकरणद्वाराऽवश्यमात्मनि समायाति ।

**पञ्चदशः**—परमेश्वरः सुगन्धयुतानि पुष्पादिवस्तूनि वायुजलदुर्गन्ध-निवारणायाऽऽरोग्यसम्पादनाय च व्यरचयत् । येषां पुष्पाणां परिमलो न जाने कियद्दिनपर्यन्तं वियति व्याप्य वायुजलमण्डलमशोधयिष्यद् यानि च पूर्ण-सुरभिसमयं यावन्निजमामोदं व्यतरिष्यँस्तानि कुसुमानि सततमवचित्याव-चित्य तेषां पूर्णविकासकालात् पूर्वमेव पूजका विनाशयन्ति । अवचितानि पुष्पाणि खलु पङ्केन समं संगम्य विकृत्य च प्रत्युत दुर्गन्धं जनयन्ति, किन्नु परमात्मना प्रस्तरोपरि निवेदनाय सुगन्धयुताः पुष्पादिपदार्था निर्मितास्सन्ति ?

**षोडशः**—प्रस्तरोपरि निवेदितानि पुष्पचन्दनाक्षतादीनि सर्वाणि

वस्तूनि जलमृत्तिकासंयोगेन मूत्रगर्तिकायां कुण्डे वा संगम्य विकृत्य च मनुजानां मलदुर्गन्धमिव निजदुर्गन्धं वियति वमन्ति। परःसहस्रा जीवास्तत्रैव पतन्ति म्रियन्ते विक्रियन्ते च।

एवमादयोऽनेके मूर्त्तिपूजने दोषाः सञ्जायन्ते। तस्मात् सर्वथा परिहेया वर्त्तते पाषाणादिमूर्त्तिपूजा सज्जनैः। ये च पाषाणमयीं मूर्त्तिमपूजयन् पूजयन्ति पूजयिष्यन्ति च ते नूनं नात्मानं पूर्वोदितदोषेभ्योऽरक्षन् रक्षन्ति रक्षिष्यन्ति च।

**प्र०**—कीदृश्यपि मूर्त्तिपूजा न करणीया नापि कारणीया वा? यश्चार्यावर्त्ते पञ्चदेवपूजाशब्दः प्राचीनपरम्परया प्रचलितोऽस्ति तस्येदमेवैतत्पञ्चायतनपूजायां तात्पर्य्यम्—यदम्बिकाशिवविष्णुगणेशसूर्याणां मूर्त्तीर्निर्माय पूजयन्ति। तदियं पञ्चायतनपूजा वर्त्तते न वा?

**उ०**—कीदृश्यपि मूर्त्तिपूजा न विधेया किन्तु "मूर्त्तिमन्तो" येऽधुना वर्णयिष्यन्ते तेषां पूजा सत्कारो वा करणीयः स पञ्चदेवपूजेति पञ्चायतनपूजेति पदस्य वाऽभिधायकः शब्द उत्तमार्थमभिधत्ते परं विद्याविहीनैर्मूढैस्तस्योत्तममर्थं परिहाय निकृष्टोऽर्थः परिगृहीतो येनाद्यत्वे खलु शिवादिपञ्चमूर्त्तीर्विरच्य पूजयन्ति जनाः तत्प्रत्याख्यानं त्विदानीमेवास्माभिर्व्यधायि, किन्तु सत्या पञ्चायतना वेदोदिता वेदानुकूलोक्ता चेयमस्ति देवपूजा मूर्त्तिपूजा च।

आकर्ण्यताम्—

**मा नो॑ वधीः पि॒तरं॒ मोत मा॒तर॑म्।**—यजु०। अ० १६। मं० १५

**आ॒चा॒र्यो॒ ब्रह्म॒चर्ये॑ण ब्रह्म॒चा॒रिण॑मिच्छते।**

—अथर्व० कां० ११। व० ५ मं० १७

**अति॑थिर्गृ॒हाना॒गच्छे॑त्।**—अथर्व० कां० १५। व० १३ मं० ६

**अर्च॑त॒ प्रार्च॑त॒ प्रिय॑मेधासो॒ अर्च॑त।**—ऋग्वेद

**त्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं ब्रह्म वादिष्यामि।**

—तैत्तिरीयोपनि० वल्ली० १ अनु० १

**कतम एको देव इति स ब्रह्म त्यदित्याचक्षते।**

—शतपथ० का० १४। प्रपाठ० ३। ब्राह्म० ७। कंडिका १०

**मातृदेवो भव पितृदेवो भव आचार्यदेवो भव अतिथिदेवो भव।**

—तैत्तिरीयोपनि० वा० १। अनु० ११

**पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा।**
**पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः॥**

—मनु० ३। ५५

**उपचर्यः स्त्रिया साध्व्या सततं देववत्पतिः।** —मनुस्मृतौ

प्रथमा माता मूर्त्तिमती पूजनीया देवताऽस्ति। तस्मात्सन्ततिभिस्तनूमनोधनैः संसेव्य जननी प्रसादनीया नतु कदापि पीडनीया। द्वितीयः पिता सत्कर्त्तव्यो देवः सोऽपि मातृवत्सेवनीयः। तृतीय आचार्यो देवो यो हि विद्यादाता तस्यापि देहमनोद्रव्यैः सेवा विधेया। तुरीयो देवोऽतिथिर्यो विद्यावान् धार्मिको निष्कपटो निखिलाभ्युदयकाङ्क्षी महीमण्डले भ्रमन् सत्योपदेशैः सकलान् सुखिनः करोति स सेवितव्यः। पञ्चमो भार्यया भर्त्ता देवो भर्त्रा च भार्या देवी पूजनीया। इमे पञ्चमूर्त्तिमन्तो देवास्सन्ति येषां सङ्गत्या मनुजानां देहस्योत्पत्तिः पालनं सत्यशिक्षागुणानां विद्यायाः सत्योपदेशस्य च लाभो भवति। एत एव परमात्मप्राप्तेः सोपानरूपाः सन्ति। एनानसेवयित्वा ये पाषाणादिमूर्त्तीरर्चयन्ति ते नितान्तं वेदविरोधिनस्सन्ति।

**प्र०**—मातृपित्रादीन् सेवेमहि मूर्त्तिपूजामपि कुर्वीमहि यदि तदनु न खलु कोऽपि दोषः?

**उ०**—पाषाणादिमूर्त्तिपूजायास्तु सर्वथा परित्यागे मात्रादिमूर्त्तिमतां देवानाञ्च सेवायामेव कल्याणं विद्यते। महतीयमनर्थकारिणी वार्ता वर्त्तते यत्साक्षान्मातृप्रमुखान् प्रत्यक्षसुखदायकान् देवान् परिहायान्यदेवेषु पाषाणादिषु शिरःकुट्टनं स्वीकृतं खलु!! इदमेतदर्थमेवाङ्गीकृतं जनैर्यन्मातापित्रादिसम्मुखे यदि नैवेद्यं पूजोपहारं वा स्थापयिष्यामस्तर्हि स्वयममी तद् भक्षयिष्यन्ति पूजोपहारञ्चादास्यन्ते चेदस्मन्मुखे हस्ते वा किमपि न पतिष्यतीति पाषाणादिमूर्त्तिं विरच्य तत्पुरतो नैवेद्यं निवेद्य टण्टण्टण्णिति घण्टां वादयित्वा पुम्पुम्पुम्मिति चापूर्य शङ्खं कोलाहलं विधायाङ्गुष्ठे प्रदर्श्य—यथा कोऽपि कञ्चन—"त्वमङ्गुष्ठं गृहाण भोजनं पदार्थं वाऽहं ग्रहीष्यामि"—इति वञ्चयित्वा कोपयित्वा च तस्य पुरो निहितान्नाद्यखिलपदार्थानादद्यात्स्वयञ्चोपभुञ्जीत तथैव लीलाऽमीषां पूजारीणामर्थात् पूजाया नाम सत्कर्मणामरीणां वर्त्तते प्रकामम्। अमी हि मनोहररीत्या मूर्त्तीरलङ्कृत्य स्वयञ्च वञ्चकवेषं विरच्य वराकाणां निर्बुद्धीनां मूढानामनाथानां धनसम्पत्तिं निगीर्य विलासं वितन्वते। कश्चन धार्मिको नृपश्चेदभविष्यत्तदाऽमून् पाषाणप्रियान् प्रस्तराणां विदारणे निर्माणे गृहविरचनादिकर्मणि नियुज्य तेभ्यो भोजनपानादिकमदास्यन्निरवाहयिष्यच्च।

**प्र०**—योषिदादेः पाषाणादिमूर्त्तिमवलोक्य यथा कामोत्पत्तिर्जायते तथैव वीतरागस्य शान्तस्य च मूर्त्तिमालोक्य वैराग्यस्य शान्तेश्च प्राप्तिः कथं न भविष्यति?

**उ०**—न भविष्यति। यतस्तस्या मूर्त्तेर्जडत्वधर्मस्यात्मनि प्रवेशेन विचारशक्तिः क्षीयते। विवेकं विना वैराग्यं वैराग्यमन्तरेण विज्ञानं विज्ञानादृते शान्तिश्च न जायते। यत् किञ्चिद् भवति तत्तेषां सङ्गेनोपदेशेन

तेषाञ्चेतिहासादिविलोकनेन भवति। यस्य हि गुणदोषौ न विदितौ तस्य केवलं मूर्त्तिदर्शनेन तस्मिन् प्रीतिर्न भवति। गुणज्ञानं खलु प्रीतेः कारणम्।

ईदृशैर्मूर्त्तिपूजादिदुष्टकारणैरेवार्यावर्त्ते निष्कर्माणः पूजारयो भिक्षुका अलसा पुरुषार्थविहीनाः कोटिशो जना अजायन्त। सकले महीमण्डलेऽमीभिरेव विस्तारिता मूढता। कपटानृते अपि भूयसा विस्तृते स्तः।

**प्र०**—दृश्यताम्—काश्यामौरङ्गजेबाभिधं यवनाधिराजं लाटभैरवादयो महान्तं चमत्कारं प्रादर्शयन्। यदा यवनास्तान् भङ्क्तुमनसस्तेषु शतघ्नीगोलान् प्राक्षिपंस्तदा भूयांसो भ्रमरा निर्गम्य निखिलां यवनसेनां व्याकुलीकृत्य व्यद्रावयन्।

**उ०**—नायं पाषाणचमत्कारोऽपितु तत्र भ्रमराणां पटलानि लग्नान्यभविष्यन्। तेषां स्वभाव एव क्रूरः खलु। यदा कोऽपि तान् स्पृशेत्तदामी सन्दंशनायाभिधावन्ति। यश्च क्षीरधारायाश्चमत्कार आसीदभूत्सा पूजकानां लीला।

**प्र०**—आलोक्यताम्—म्लेच्छेभ्यो दर्शनं न दातुं महादेवः कूपे वेणीमाधवश्चैकस्य ब्राह्मणस्य वेश्मन्यभिपत्य निलीनौ। किमयमपि नास्ति चमत्कारः ?

**उ०**—अये ! यस्य कालभैरवलाटभैरवादयः कोट्टपाला भूतप्रेतगरुडादयश्च गणा विद्यन्ते स प्रयुध्य यवनान् कथं नापसारयामास ? ननु महादेवस्य विष्णोश्च पुराणेषु कथाऽस्ति यदेतौ नैकान् त्रिपुरासुरादीन् महाभयङ्करान् दुष्टान् भस्मसाच्चक्रतुस्तदा यवनाः कथमाभ्यां न भस्मसात्कृताः ? अतः सिध्यति यत्ते वराकाः पाषाणाः कथमिव युद्धयेरन् योधयेयुर्वा ? यदा किल यवना मन्दिराणि मूर्तीश्च भञ्जन्तो विदारयन्तश्च काश्या उपकण्ठमाययुस्तदानीं पूजकास्तत्पाषाणलिङ्गं कूपे प्रक्षिप्य वेणीमाधवविप्रस्य सद्मनि प्रच्छादयामासुः कालभैरवभयेन यदि यमदूता नोपयन्ति काशीं, प्रलयसमयेऽपि चामी कालभैरवास्तां विनाशाद् रक्षन्ति तदा म्लेच्छदूतान् कथं नाभीषयन्त ? स्वस्य च स्वामिनो मन्दिरं विनश्यदेव कथमालोकितं तैः ? ततः सकलेयं पोपमाया वरीवर्ति।

**प्र०**—गयायां श्राद्धकरणेन पितॄणां पापानि प्रणश्य तत्रत्यश्राद्धस्य पुण्यप्रभावेन पितरः स्वर्गं प्रयान्ति पितरश्च निजहस्तान् निस्सार्य पिण्डमाददते। किमियमपि कथा मिथ्याऽस्ति ?

**उ०**—सर्वथा मिथ्या। यदि तत्र पिण्डदानस्य स एव प्रभावोऽस्ति तदा येभ्यः पण्डानामधारिभ्यः पितॄणां सुखाय लक्षाणि रूप्यकानि दीयन्ते तेषां व्ययो गयावासिभिर्वेश्यागमनादिपापकर्मणि क्रियते तत्पापं किं न खलु विनश्यति? पण्डाख्यनृणां हस्तान् विनाऽद्यत्वे ननु केऽप्यन्ये हस्ता निर्गच्छन्तो

नालोक्यन्ते। कदाचित् केनापि धूर्तेन भूमौ गुहां विरच्य तस्यां कश्चिन्मनुज उपवेशितः स्यात्ततस्तस्या मुखे कुशानास्तीर्य पिण्डं दत्तं भवेत्तेन च कपटिना तदुपात्तं स्यात्। एवं कोऽपि विवेकनेत्रविहीनो धनिको जनो वञ्चितो भवेद्यदि तदा नेदमाश्चर्यम्। तथैव वैजनाथं रावण आनयदिति वार्ताऽपि मिथ्या वर्त्तते।

प्र०—निर्वर्ण्यताम् कालिकातापुर्याः कालीकामाक्षादिदेवीर्लक्षशो मनुजा मन्यन्ते। नायं किन्नु चमत्कारः ?

उ०—कोऽपि न चमत्कारः। इमे अन्धा जना मेषपरम्परावद् गतानुगतिकाः संवृत्य कूपगर्त्ते निपतन्ति नत्वपसर्त्तुं प्रभवन्ति दूरतः। तथैव मूर्खमेकमनुगम्यान्येऽपि मूर्तिपूजारूपगर्त्ते निपत्य दुःखमश्नुवते।

प्र०—वरम्। इदं तु तिष्ठतु ! परं जगन्नाथपुर्यां प्रत्यक्षं चमत्कारोऽस्ति। एककलेवरपरिवर्त्तनकाले चन्दनकाष्ठं समुद्रात्स्वयमेवायाति। चुल्ल्या उपर्युपरि क्रमशः सप्त भाण्डानि स्थाप्यन्ते। उपर्य्युपरिष्ठानि भाण्डानि प्रथमं पचन्ति। यः कोऽपि तत्र जगन्नाथस्य प्रसादं नाद्यात्स कुष्ठी भवति। रथश्च स्वयमेव चलति पापिभ्यो दर्शनं न ददाति। इन्द्रदमनस्य राज्ये देवा मन्दिरं व्यरचयन्। कलेवरपरिवर्त्तनसमय एकस्य नृपस्य पण्डाख्यपोपस्य रथकारस्य च मरणादिचमत्कारान् मिथ्याकर्तुं न प्रभविष्यति भवान् ?

उ०—द्वादशवर्षाणि यो जगन्नाथमपूजयत्स विरज्य मथुरामागमत्। मां साक्षात्कृतवानसौ। आसां कथानां विषये मया पृष्टोऽसौ "सकला इमा वार्ता असत्यास्सन्तीति" मामकथयत्। किन्तु विचारेणेदं निश्चीयते यद् यदा कलेवरपरिवर्तनसमयः समायाति तदा तर्यां चन्दनकाष्ठमादाय समुद्रे प्रक्षिपन्ति तद्धि सागरतरङ्गैः संचाल्यमानं तीरदेशमायाति तच्च काष्ठं समादाय रथकारा मूर्त्तीर्विरचयन्ति। यदा पाकः सिध्यति तदा कपाटौ पिधाय पाचकान् विना कमप्यन्यं गन्तुं द्रष्टुं वा नादिशन्ति। भूमौ सर्वतः षट् चुल्लीर्मध्ये चैकां चक्राकारां चुल्लीं विरचयन्ति तेषां कलशाकारभाण्डानामधस्तलानि घृतमृत्तिकाभस्मभिर्विलिप्य षट्सु चुल्लिषु तण्डुलान् विपच्य तत्तलानि परिमृज्य तस्मिन्मध्यवर्त्तिनि भाण्डे तत्कालमेवौदनं निक्षिप्य षण्णां चुल्लीनां मुखानि लोहपत्रैः पिधाय प्रेक्षकाणां मध्ये ये धनाढ्यास्तानाहूय दर्शयन्ति। उपरिस्थितेभ्यो हण्डेभ्य ओदनमादाय पक्वांस्तण्डुलान् दर्शयित्वाऽधोहण्डगतानपक्वांस्तण्डुलान् गृहीत्वा प्रदर्श्य च—"किमपि हण्डानां कृते समर्प्यतां" इति तान् कथयन्ति। ज्ञानचक्षुषाऽन्धा धनग्रन्थिपरिपूर्णजना रूप्यकाणि काञ्चनमुद्राश्चार्पयन्ति। केऽपि च मासिकं वेतनमपि प्रतिजानन्ति दातुम्। शूद्रा नीचमनुजाश्च मन्दिरे नैवेद्यमानयन्ति। यदा नैवेद्यक्रिया समाप्यते तदा ते शूद्रा नीचजना उच्छिष्टं कुर्वन्ति तत्। तदनु यः कोऽपि

मूल्यं प्रदाय भक्तभाण्डमाददीत तदीय गृहं प्रापयन्ति । दीनगृहस्थसाधुसज्जनादिशूद्रान्त्यजपर्यन्ता जना एकस्यां पङ्क्तौ समुपविश्य परस्परस्योच्छिष्टं भक्षयन्ति । यदा सा पङ्क्तिरुत्तिष्ठति तदा तास्वेव पत्रावलीषु परानुपवेशयन्ति । महानयमनाचारः खलु । बहवो जनास्तत्र प्रगम्य तेषामुच्छिष्टमभक्षयित्वा स्वहस्तनिर्मितं प्राश्य प्रत्यावर्त्तन्ते तेषामीषदपि कुष्ठादिरोगा न जायन्ते । तस्यां जगन्नाथपुर्यामपि च बहवः प्रसादं नाश्नन्ति तेषामपि कुष्ठादिरोगा नोद्भवन्ति तत्पुरीवासिनोऽपि बहवः कुष्ठिनस्सन्ति तेषां सततमुच्छिष्टभक्षणेनापि रोगा न विनश्यन्ति अस्यां जगन्नाथपुर्यां वाममार्गिभिर्भैरवीचक्रं व्यरचि । यतः सुभद्रा श्रीकृष्णबलदेवयोर्भगिनी वर्तते खलु सैव द्वयोर्भ्रात्रोर्मध्ये स्त्रिया मातुश्च स्थाने समुपवेशिताऽस्ति । भैरवीचक्रं चेन्नाभविष्यत्तदेयं कथा कदापि नाभविष्यत् ।

अथ च रथस्य चक्रेषु कलायन्त्रं निर्मितमस्ति यदा तदनुकूलतया भ्राम्यते तदा कीलयन्त्रभ्रमणेन रथः संचलति । यदा रथो जनसम्बाधस्थले समायाति तदानीमेव तदीयकीलयन्त्रस्य प्रतिकूलतः संचालनेन रथः स्थिरीभवति । तदा पूजारयः—"दानं दीयतां पुण्यं क्रियतां येन जगन्नाथः प्रसन्नो भूत्वा निजरथं चालयेत् । स्वस्य च धर्मः संरक्ष्येत इति" तारस्वरं घोषयन्ति । यावद्दानं लभ्यते तावदित्थमेव घोषयन्ति । यदा च दानक्रिया समाप्यते तदा कश्चन ब्रजवासी सुन्दराणि वस्त्राणि दुकूलञ्च परिधाय पुरत उपस्थाय कृताञ्जलिः प्रार्थयते—"हे जगन्नाथ ! स्वामिन् ! अनुगृह्य भवान् रथं चालयतु । धर्ममस्माकं रक्षतु भगवान्"—इति एवमादिसमुदीर्य साष्टाङ्गं दण्डवत् प्रणम्य रथमारोहति । तत्कालमेव जनाः कीलमानुकूल्येन भ्रमयन्ति जयजयशब्दमुच्चार्य च परःसहस्रा जना रज्जुमाकर्षन्ति रथश्च सञ्चलति । यदा बहवो जना दर्शनाय प्रयान्ति तदा तदेतावन्महन्मन्दिरं वर्तते यत्तत्र दिवाऽपि महानन्धकारो भवति । तेन दीपाः प्रज्वाल्यन्ते । तासां मूर्त्तीनामग्रत उभयतो जवनिके भवतः प्रच्छादनाय । पण्डापूजारयोऽभ्यन्तरे तिष्ठन्ति । यदैकपार्श्ववर्त्तिनाऽऽकृष्यते तिरस्करिणी तदा झटिति मूर्त्तिरन्तरिता भवति । ततः सकलाः पण्डापूजारय उद्घोषयन्ति—"दानमुपाहरत । युष्माकं पापानि विनंक्ष्यन्ति । तदा दर्शनं भविष्यति । त्वरध्वं त्वरध्वमिति" वराका अज्ञानिनस्ते भक्ता धूर्त्तैर्लुण्ठ्यन्ते । ततो द्रुतमन्यां जवनिकामाकर्षन्त्यमी । तदानीमेव दर्शनं भवति । अथ जयशब्दमुदीर्य प्रसन्ना भूत्वा मिथः सम्बाध्यमानास्तिरस्कृताश्च समायान्ति । स एवेन्द्रदमनो यत्कुलजाता अद्यापि कालिकातानगर्यां निवसन्ति । आसीदसौ धनाढ्यो राजा देव्या उपासकः । लक्षाणां रूप्याणां व्ययं विधायामुना मन्दिरं निरमायि । आर्य्यावर्त्तदेशीयजनानां भोजनविवादोऽनयारीत्याऽपाकार्यैतेत्येवेदं निर्मितमासीन्मन्दिरम् ।

परमिमे मूढाः कदा नु खलु त्यजन्ति भोजनविवादम् !! देवाश्चेन्मन्यन्ते तदा त एव शिल्पिनः कारुवरा मन्यन्तां यैः किलमन्दिरं निरमीयत। नृपः पण्डारी रथकारश्च तदानीं न म्रियन्ते किन्तु ते त्रयोऽपि तत्र प्रधानास्तिष्ठन्ति। पुरा किल कदाचिदमी प्राकृतजनानपीडयिष्यन् यदा तदानीमेव तैः सम्मतिं विधाय कलेवरपरिवर्त्तनकाले तेषु त्रिष्वुपस्थितेषु मूर्त्तिहृदयाभ्यन्तराकाशे सुवर्णसम्पुटस्थापित एकः शालग्रामो—यं प्रतिदिनं प्रक्षाल्य चरणामृतं निर्मीयते स—रात्रिशयनार्तिकवेलायां विषलिप्तो विधाय निहितस्स्यात्तं प्रक्षाल्य त एव त्रयः पायितास्स्युर्येन ते मृता अभविष्यन्। इत्थं मृतास्ते परं भोजनभट्टाः—"जगन्नाथः स्वशरीरपरिवर्तनसमये त्रीन् भक्तानपि सह निनायेति" प्राकाशयिष्यन्। ईदृश्यो मिथ्यावार्ताः परधनपरिहरणाय बाहुल्येन वितन्यन्ते।

प्र०—रामेश्वरतीर्थे गङ्गोत्तरीजलधारापातनकाले लिङ्गं वर्द्धत इतीयं वार्ताऽपि किमनृता वर्तते ?

उ०—अनृता वर्तते। यतस्तदीयमन्दिरेऽपि दिवाऽन्धकारस्तिष्ठति। नक्तन्दिनं दीपकाः प्रदीप्यन्ते। यदा जलधारां मुञ्चन्ति तदा तस्मिञ्जले तडिल्लतेव दीपकप्रतिबिम्बं देदीप्यते। नान्यदस्ति किञ्चिदपि। पाषाणो न वर्धते नापि क्षीयते। यथापरिमाणमेव तिष्ठति। एतादृशीं लीलां कलयित्वा वकारान् बुद्धिहीनान् वञ्चयन्ति जनान्।

प्र०—रामचन्द्रो रामेश्वरं प्रतिष्ठापयामास। मूर्तिपूजा चेन्निगमप्रतिकूलाऽभविष्यत्तदा किमिति रामचन्द्रो मूर्त्तिमस्थापयिष्यत् ? किमिवाऽवर्णयिष्यद् रामायणे वाल्मीकिमुनिवरः ?

उ०—रामचन्द्रसमये तस्य लिङ्गस्य मन्दिरस्यापि वा नामधेयं चिह्नमपि वा न बभूव। परं दक्षिणदेशवासी कोऽपि रामाभिधानो नृपतिर्मन्दिरमिदं विरचय्य लिङ्गस्य रामेश्वर इति नाम चकारेति युक्तमिदं खलु ! यदा रामचन्द्रो देवीं सीतामादाय हनूमदादिभिस्समं लङ्कायाः प्रस्थाय वियद्वर्त्मना विमानमधिरूढोऽयोध्यामागच्छति स्म तदा सीतादेवीमेवं समवादीत्—

**अत्र पूर्वं महादेवः प्रसादमकरोद्विभुः।**
**सेतुबन्ध इति ख्यातम्॥**

—वाल्मीकि रा०। लङ्का का० सर्गः १२५। श्लोकः २०॥

"हे सीते ! तव विरहेण व्याकुला वयं पर्यभ्रमाम। अत्रैव स्थले वर्षाकालमनयाम। परमेश्वरस्य चोपासनां ध्यानमपि वयमकुर्म। यः सर्वत्र व्यापको विभुर्देवानामपि महादेवः परमात्मा वर्तते तदनुकम्पयैव वयमिह सकलां सामग्रीमलभामहि। पश्य—इमं सेतुं विरच्य लङ्कामुपगम्य तं रावणं

निहत्य वयं त्वां प्रत्यानयामेति"। एतदतिरिक्तं तत्र वाल्मीकिना किमप्यन्यन्नावर्णि।

**प्र०– रङ्ग है कालियाकन्त को। जिसने हुक्का पिलाया सन्त को ॥**

दक्षिणप्रान्ते कालियाकन्तस्य मूर्त्तिरेका वर्तते साऽद्यापि ताम्रकधूमपानं कुरुते। मूर्त्तिपूजा यदि मिथ्या स्यात्तदाऽयं चमत्कारोऽपि मिथ्या भवेत् ?

उ०—मिथ्या ! मिथ्या !! सकलेयं पोपलीला खलु। तस्या मूर्त्तेर्मुखं सान्तर्विवरं भवेत्तच्छिद्रं पृष्ठतो निस्सार्य भित्तेः परपारं परस्मिन् वेश्मनि नलिकाऽऽयोजिता भविष्यति। यदा पूजारिर्धूमपानिकां प्रपूर्य नलिकां संयोज्य मुखे निबध्य जवनिकां निक्षिप्य निर्गत्य बहिरागमिष्यत्तदा पृष्ठवर्त्ती जनो मुखेन धूममाकृक्ष्यत्। तेनेतो धूमपानिका गडगडगडेति न्यनदिष्यत्। द्वितीयं छिद्रं नासिकया वदनेन चायोजितं स्यात्। यदा विपरीतं फूत्कारमकरिष्यत्तदा नासाननविवराभ्यां धूमो निरगमिष्यत्। तत्समये बहवो मूढा धनादिपदार्थलुण्ठनेन निर्धना व्यधास्यन्त तैः।

प्र०—पश्यन्तु भवन्तः। डाकोराख्यदेवस्य मूर्त्तिर्द्वारिकाया भक्तेन साकं चलित्वाऽऽगता सपादैकरत्तिकामितसुवर्णेन समं तुलायां कियन्मणभारमिता मूर्त्तिस्तुलिताऽजनि। किमयमपि नास्ति चमत्कारः ?

उ०—नास्ति। तेन भक्तेन मूर्तिश्चोरयित्वाऽऽनीता स्यात्। सपादैकरत्तिकया मूर्त्तितुलना जातेति कस्याप्युन्मत्तस्य जनस्य जल्पितं स्यात्।

प्र०—दृश्यताम्—सोमनाथः पृथिव्या उपरि निरालम्बोऽस्थात्। महाँश्च चमत्कार आसीत्। किमियमपि कथाऽनृताऽस्ति ?

उ०—आम् ! अनृताऽस्ति। निशम्यताम्—ऊर्ध्वमधस्तले च लोहचुम्बकपाषाणा आयोजिता अभूवँस्तेषामाकर्षणेन सा मूर्त्तिर्निरालम्बाऽतिष्ठत्। यदा "महमूदग़ज़नवी" नामा यवनराज आगम्यायुध्यत तदाऽयं चमत्कारः समजनि—"सोमनाथस्य मन्दिरं भग्नं तस्य पूजकानां भक्तानाञ्च दुर्दशा सञ्जाता लक्षाणि सैन्यानि च दशसहस्रमितया यवनसेनया विद्रावितानि। पोपाः पूजकाश्च पूजां पुरश्चरणं स्तुतिं प्रार्थनाञ्चाकार्षुर्यदयि महादेव ! म्लेच्छगणमेतं त्वं जहि। पाहि पाह्यस्मानिति। अथचामी स्वशिष्यान् नृपगणान् समबोधयन्—"निश्चिन्तास्तिष्ठन्तु भवन्तः। महादेवो भैरवं वीरभद्रं वा प्रेषयिष्यति। स सकलान् म्लेच्छगणान् हनिष्यति अन्धान् वा विधास्यति। सद्य एवास्माकं देवता प्रादुर्भवति। हनुमान् दुर्गा भैरवश्च स्वप्ने—"वयं सकलं कार्यं साधयिष्यामः" इत्यकथयन्निति। ते वराकाः सरलहृदयाः राजानः क्षत्रियाश्च पोपानां प्रतारणेन तेषु व्यश्वसन्। कतिपये दैवज्ञाः पोपा अकथयन्—नास्तीदानीं मुहूर्तं भवतां सपत्नाभियानस्येति"।

एकोऽष्टमं चन्द्रमदर्शयदन्यो योगिनीमग्रेमुखीमदर्शयत्, इत्यादिभ्रान्तिजाले न्यपतन्। यदा म्लेच्छसेनयाऽभिगम्य समाक्रान्तास्समन्ततोऽमी तदातिदुर्गत्या पलायन्त। कतिपये पोपा पूजारयस्तदीयशिष्याश्च प्रगृहीताः। पूजारयः प्राञ्जलय इदमप्यवदन्—"तिस्रः कोटयो रूप्यका गृह्यन्तां परमिदं मन्दिरं मूर्तिश्चेमां मा भज्यतामिति"। यवनास्तु—"न वयं मूर्तिपूजका अपि तु मूर्त्तिभञ्जकास्स्म" इत्युदीर्य सपदि मन्दिरमभञ्जन्। यदोपरितनं पटलमत्रुट्यत्तदा चुम्बकपाषाणापसरणान्मूर्तिरपतत्। यदा मूर्तिरच्छिद्यत तदाऽष्टादशकोटिमूल्यानि रत्नानि निर्गतानीति। यदा पूजरिषु पोपेषु च कशाघाता न्यपतन् तदा ते रोदितुमारभन्त। कोषः कुत्रास्तीति पृष्टाः कशाप्रहारभिया झटिति ते प्रादर्शयन्। तदा सकलं कोषं विलुण्ठ्य पोपाँस्तदीयशिष्याँश्च ताडयित्वा मारयित्वा दासान् विधाय धान्यमपेषयँस्तृणान्यखनयन् मलमूत्रादिकमवाहयँश्चणकाँश्च भक्षयितुं प्रायच्छन् खलु। हा हन्त ! पाषाणं पूजयित्वा किमिति विनाशं प्राप्तवन्तो भवन्तः ? कथं परमेश्वरस्य भक्तिर्न कृता येन म्लेच्छानां दन्तावलीमत्रोटयिष्यन् भवन्तः ? स्वयञ्च व्यजेष्यन्त खलु। विमृशन्तु भवन्तः—"यावत्यो मूर्तयस्सन्ति तासां स्थाने यदि वीरवरान् नरानपूजयिष्यँस्तदा कियती रक्षाऽभविष्यन्नु" ? पूजारय एषां पाषाणानामियतीं महतीं भक्तिमकुर्वत परमेकाऽपि मूर्तिरमीषां रिपूणां शिरसि समुत्पत्य न प्राहरत्। यदि कञ्चनैकं वीरवरं पुरुषं मूर्तिमिवासेविष्यन्त तदाऽसौ निजसेवकान् यावद्बलं समरक्षिष्यत्सपत्नगणञ्चाहनिष्यत्।

**प्र०**—द्वारिकायाः "रणछोड़ाख्यदेवः" नरसिंहमेहता नामकस्य धनदानवचनपत्रिकां स्वीचकार तस्यर्णञ्च ददावित्यादिकथापि किं मिथ्या वर्त्तते ?

**उ०**—केनापि श्रेष्ठिना रूप्यका दत्ता भविष्यन्ति केनाऽपि च—"श्रीकृष्णः प्रददाविति" वितथमेव नामधेयं कथितं स्यात्। यदा चतुर्दशोत्तरैकोनविंशतिशतमिते वैक्रमाब्दे [१९१४] शतघ्नीनां गोलकैराङ्ग्लजना मन्दिराणि मूर्त्तिगणञ्च व्यनाशयँस्तदा कुत्रागमन्मूर्त्तयः ? प्रत्युत तदानीं वाघेरजातीयाः क्षत्रिया अतुलं पराक्रमं प्रदर्श्य प्रायुध्यन्त प्रत्यर्थिगणञ्च व्यापादयन्। परं मूर्तिर्मक्षिकायाश्चरणमपि त्रोटयितुं नासीत्समर्था। ननु श्रीकृष्णसदृशः कोऽपि वीरोऽभविष्यत्तदैतेषां दर्पं व्यदलयिष्यदेते च कान्दिशीकाः पलायिष्यन्त। वरम् ! इदं तु वदन्तु भवन्तः—"येषां रक्षक एव ताड्येत तस्य शरणागताः कथमिव न ताड्येरन्निति।"

**प्र०**—ज्वालामुखी तु साक्षाद् देवी विद्यते। सकलान् भक्षयति। प्रसादो दीयेत चेदर्द्धमश्नाति शेषमर्द्धञ्च मुञ्चति। यवनाधिराजस्तदुपरि कुल्याभिः सलिलममोचयँल्लोहपत्राणि च समायोजयँस्तथापि ज्वाला

नाशाम्यन्नापि व्यरमत् । तथैव हिङ्गलाजाख्याऽपि देवी निशीथे वाहनारूढा पर्वते दृश्यते पर्वतं गर्जयति । चन्द्रकूपो वदति । योनियन्त्रान्निर्गमनेन च पुनर्जन्म न जायते । ठुमराबन्धनेन पूर्णो महापुरुषः कथ्यते यावज्जनो हिङ्गलाजं न व्रजेत्तावदर्द्धमहापुरुषः कथ्यत इत्यादि वार्ताः सकला न मन्तव्याः किमु ?

उ०—नैव मन्तव्याः । सा तु ज्वालामुखीपर्वतादनलज्वाला निर्याति तत्र पूजारीणां विचित्रा वर्तते लीला । यथाऽधिवासनार्थगृहीतवृतायां दर्व्यां ज्वाला समायाति साऽपसारणेन फूत्कारेण वा शाम्यति घृतमल्पं खादति शेषञ्च मुञ्चति तद्वदेव तत्रापि विद्यते । यथा खलु चुल्लिज्वालायां निक्षिप्यमाणं निखिलं भस्मीभवति द्रव्यम् । वने गृहे वा लग्ना ज्वाला सकलं भक्षयति । कस्तत्र विशेषोऽस्मादस्ति । एकं मन्दिरं कुण्डञ्चेतस्ततो जलनलिकारचनाञ्चान्तरेण हिङ्गलाजस्थले काऽपि वाहनारूढा न भवति देवी । यच्च किञ्चिद् भवति तदखिलं पूजारीणां कपटलीलामन्तरेण नान्यत्किमपि विद्यते । एकं पङ्किलं जलकुण्डं विरचितमस्ति यस्याधस्तलाद् बुद्बुदा उद्गच्छन्ति सा सफलयात्रेति जडा मन्यन्ते । योनियन्त्रं द्रविणहरणाय रचितममीभिः । ठुमराकलनमपि तादृश्येव पोपलीला खलु !! तेन महापुरुषः स्याद्यदि तदैकस्मिन् पशौ ठुमराभारं निक्षिपेच्चेत्किं स महापुरुषो भवेन्नु ? महापुरुषस्तु अत्युत्तमधर्मयुक्तेन पुरुषार्थेन सञ्जायते ।

प्र०—अमृतसरनगरस्य सरोऽमृतरूपं, रीठाया एकस्याः फलमर्द्धमधुरं, भित्तिरेका नमन्त्यपि न निपतति, रेवालसरसि प्रस्तरास्तरन्ति, अमरनाथे स्वयमेव लिङ्गानि जायन्ते, हिमालयात् कपोतयुगलानि निर्गम्य सकलेभ्यो दर्शनं प्रदाय पुनर्गच्छन्ति च किमिदमखिलमपि न मन्तव्यम् ?

उ०—नैव । अमृतसर इति नाममात्रमेव तस्य सरोवरस्य । यदा कदाचित्तदारण्यमभविष्यत्तदा तदीयतोयं निर्मलं भवेदिति तस्य नामधेयममृतसर इति विहितं स्यात् । अमृतञ्चेदभविष्यत्तदा पौराणिकमतेन किन्वमरिष्यत्कोऽपि जनः ? अरिष्टिकायाः शाखासंयोजिता रीठावृक्षो भवेदथवा प्रजल्पितं स्यात् । भित्तिरचनैव कापीदृशी स्याद्येन सा नमत्यपि न निपतेत् । रेवालसरसि प्रस्तरतारणे कापि शिल्पिकला भविष्यति । अमरनाथे हिमस्य पर्वताः प्रजायन्ते ततो जलस्य तुहिनीभूय लघुलिङ्गाकृतिजनने किमाश्चर्यम् ? कपोतमिथुनानि सम्पालितानि भवेयुः । पर्वताभ्यन्तरप्रदेशाज्जना एतान्यमोचयिष्यन् प्रदर्श्य तानि च द्रविणमहरिष्यन् ।

प्र०—हरद्वारे स्वर्गस्य द्वारे हरस्य तीर्थे घट्टे वा जनः स्नायाच्चेत्किल्बिषाणि विनश्यन्ति । तपोवने निवासेन तपस्वी भवति । देवप्रयागे देवानां गङ्गोत्तर्यां गोमुखस्योत्तरकाश्यां गुप्तकाश्यास्त्रियुगीयनारायणस्य च

दर्शनं भवति। केदारनाथस्य बदरीनारायणस्य च पूजाकृत्यं षण्मासान् मनुष्याः षण्मासाँश्च देवा वितन्वन्ति। पशुपतेर्महादेवस्य मुखं नयपाले नितम्बभागः केदारनाथे जानुनी तुङ्गनाथे चरणौ चामरनाथे स्तः। एषां दर्शनस्पर्शनाभ्यां तत्र स्नानेन च मुक्तिर्भवति। ततः केदारनाथाद् बदरी-नारायणाद्वा स्वर्गं गन्तुमभिलषेच्चेद् गन्तुं पारयति जन इत्यादयो वार्ताः कीदृश्यस्सन्ति ?

उ०—उत्तरस्यां दिशि पर्वतेषु प्रवेशैकमार्गारम्भः खलु हरद्वारं विद्यते। हरतीर्थं तु नद्यां स्नानार्थमेकस्मिन् कुण्डे निर्मिता सोपानपरम्परा वर्तते वस्तु-तस्तु तद्—"अस्थितीर्थं" वर्तते। यतो देशस्यसर्वप्रान्तेभ्यो मृतकानामस्थीनि समानीय तत्र प्रक्षिपन्ति जनाः। पापानि कदापि कुत्रापि तत्फलभोगं विना न विनश्यन्ति नापि च्छिद्यन्ते। तपोवनं यदा भवेत्तदा भवेदिदानीन्तु "भिक्षुक-वनम्" विद्यते। तपोवननिवासेनैव तपस्वी न भवति किन्तु तपसोऽनुष्ठानेन। यतस्तत्र मिथ्यावादिनोऽपि बहवो वणिजो निवसन्ति। "हिमवतः प्रभवति गङ्गा"। पर्वतशिखरात् पतति जलम्। तत्र गोमुखाकृतिस्तु धनाभिलाषुकैः पोपैर्निर्मिता स्यात्। स एव गिरिस्तेषां स्वर्गः। तत्रोत्तरकाश्यादिस्थानानि ध्यानिनां कृते प्रवराणि सन्ति परमापणिकानां कृते तत्रापि पण्यवीथिका-स्सन्ति। देवप्रयागस्तु पुराणकल्पितजल्पितानां लीलास्थलम्। तत्रालखनन्दा गङ्गा चोभे सङ्गते इति तत्र देवा वसन्तीति मिथ्या कथा न कथ्येत चेत्कोनु खलु तत्र यायात्? धनञ्च को नु दद्यात्? गुप्तकाशी तु न विद्यते परं प्रसिद्धा काशी वर्तते। युगत्रयस्याग्निधूमो न दृश्यते किन्तु पोपानां दश-विंशतिवंशकालस्य प्रतीयते। यथा खलु भस्मलेपिनां धूमः पारसीकानाञ्चा-ग्निगृहमनिशमेव ज्वलदनलं विभर्ति। तप्तकुण्डेऽपि यतः पर्वतानामभ्यन्तर औष्ण्यं भवति तत उष्णीभूय जलमायाति। तदन्तिकवर्तिनि परस्मिन् कुण्डे च पर्वतोपरिष्टाद् यत्रौष्ण्यं नास्ति ततो जलमायातीति तच्छीतलतरं वर्तते। केदारनाथस्य स्थलमतिरमणीयमुत्तमञ्चास्ति परं तत्राप्येकस्मिन् दृढतरीभूते पाषाणप्रान्ते पूजारयस्तदीयशिष्या वा मन्दिरं व्यरचयन्। तत्र महन्ताख्या जनाः पूजारयः पण्डाख्याश्च जना विवेकचक्षुषा हीनेभ्यो धनाढ्येभ्यो विपुलं वित्तजातमादाय विषयानन्दं वितन्वते तथैव बदरी-नारायणे प्रतारणकलाकुशला बहवो निषण्णास्सन्ति। तत्रत्येषु—"राव-लाभिधानो" जनः प्रधानः। एष एकस्या भार्यायाः स्थाने नैकाः पत्नीर्विधा-यानन्दतितराम्। पशुपतिरित्येकमन्दिरस्य पञ्चमुखीति मूर्त्याश्चाभिधानं व्यधायि। यदा कोऽपि प्राश्निको न भवति भवति तदेदृशी लीला बलवती। परं यथा तीर्थवासिनो जना धूर्त्ता धनहर्तारश्च सन्ति न भवन्ति तादृशाः पार्वतीया जनाः। तत्रत्या भूमिः परमरमणीया पवित्रा च विद्यते।

प्र०—विन्ध्याचले विन्ध्येश्वरी काल्यष्टभुजा प्रत्यक्षसत्याऽस्ति। त्रिकालं रूपत्रयं परिवर्त्तयति तस्याः प्राङ्गणे न भवत्येकापि मक्षिका। तीर्थराजप्रयागे शिरोमुण्डनेन गङ्गायमुनयोः सङ्गमस्थले च स्नानेन स्वेच्छासिद्धिर्जायते। तथैवाऽयोध्यानगरी कतिवारमुड्डीय सकलवसतिसहिता स्वर्गमगमत्। मथुरा सकलतीर्थेभ्योऽधिकतमा। वृन्दावनं लीलास्थानम्। गोवर्धनव्रजयात्रा च महता भाग्येन सम्पद्यते। सूर्यग्रहणसमये कुरुक्षेत्रे लक्षशो मनुजाः सङ्गच्छन्ते। किमिमा निखिला वार्ता अनृतास्सन्ति ?

प्र०—प्रत्यक्षं तु नेत्राभ्यां—"इमाः पाषाणमूर्त्तयस्सन्तीति" तिस्रोऽपि मूर्त्तयो दृश्यन्ते। कालत्रये त्रिविधरूपभवनकारणं पूजकजनस्य वस्त्रालङ्कारादिपरिधानचातुर्यमेव खलु !! मक्षिकाः सहस्रशो लक्षाणि च भवन्तीति मया स्वचक्षुषा समालोकि। प्रयागे कोऽपि दिवाकीर्त्तिः श्लोककर्ता भवेदथवा पोपदेवाय किञ्चिद् द्रव्यं प्रदाय मुण्डनमाहात्म्यं विरचितं स्यात्तेन। प्रयागे स्नात्वा स्वर्गं व्रजेच्चेत्कोऽपि गृहं प्रतिनिवर्त्तमानो न दृश्येत। निवर्त्तमानाश्च गृहमालोक्यन्ते सकलाः। अथवा यदि कोऽपि तत्र निमग्नो म्रियेत तर्हि तस्य जीवोऽपि व्योम्नि वायुना समं परिभ्रम्य पुनर्जन्म ग्रहीष्यति। धनहारकैरेव तीर्थराज इति नामधेयं व्यधायि। जडत्वे हि राजप्रजाभावौ कदापि न सम्भाव्येते। अयोध्यानगरी रासभसारमेयमहत्तरचर्मकारयुता मलमूत्रालयसहिताऽखिला त्रिः सुरालयमुड्डीयगतेति कथनं नितान्तमसम्भवमस्ति। सुरालयं तु न गता तत्रैव स्थाने विद्यते यत्रासीत् पुरा। परं पोपदेवस्य प्रजल्पितेषु गप्पेष्वयोध्या स्वर्गमुत्पतितेति गप्पः शब्दरूपेणोत्पतन् विचरति। इत्थमेव नैमिषारण्यप्रमुखेऽपि स्थानेऽमीषामेव लीलाऽवगन्तव्या !! मथुरा त्रिभुवनाद् भिन्ना तु नास्ति परं तत्र त्रयो जन्तवो महालीलाधारिणस्सन्ति येषां प्रतापेन जलस्थलनभस्तलेऽपि कस्यापि सुखमसुलभं भवति। प्रथमास्स्थले—"चौबे" (चतुर्वेदिनः) इत्युपाख्या जनाः। कश्चित्स्नानाय व्रजेच्चेन्निजकरग्रहणायोपस्थाय प्रलपन्ति—"देहि देहि—यजमान ! भङ्गमरीचिसितोपलमिश्रं पयः पिबेम मोदकानश्नीयाम यजमानस्य च जयं घोषयेमेति"। द्वितीया जले—"कच्छपा दशन्त्येव येषां भयेन घट्टे स्नानमपि दुःखकरं भवति। तृतीया नभस्तले—"रक्तमुखा वानरा उष्णीषं वस्त्राभरणमुपानहोऽपि न परित्यजेयुर्दशेयुः प्रहृत्य निपातयेयुरपि। एते त्रयोऽपि पोपानां तदीयशिष्याणाञ्च पूजनीयास्सन्ति जन्तवः। विपुलैश्चणकाद्यन्नैः कमठान् गुडचणकादिभिर्वानरान् दक्षिणारूपद्रविणमोदकैश्च चतुर्वेदिनस्सेवन्ते सततं तदीयसेवकाः। वृन्दावनं खलु यदाऽऽसीत्तदाऽऽसीदिदानीन्तु वेश्यावनं विद्यते। तत्र गुरुशिष्याछलेन ललनललनादीनां स्वच्छन्दलीलावली विलसतितराम्। तथैव दीपमालिकाया मेलापके गोवर्द्धनगिरौ व्रजयात्रायामपि पोपानां प्रयोजनं

सिध्यति। कुरुक्षेत्रेऽपि सैवाजीविकाया लीलावगन्तव्या। एषु यः कोऽपि धार्मिकः परोपकारी पुरुषोऽस्ति सोऽस्याः पोपलीलायाः पृथग् भवति।

**प्र०**—इयं मूर्तिपूजा तीर्थानि चेमानि सनातनसमयतः प्रचलन्ति तानि कथमिवानृतानि भवेयुः ?

**उ०**—भवान् कं सनातनं वदति।

**प्र०**—य आदिकालात्सततं प्रवृत्तस्तं नु ?

**उ०**—यदीदं मूर्तिपूजादिकमादिकालात्प्राचलिष्यत्तदा वेदेषु ब्राह्मणादिषु च महर्षिमुनिकृतपुस्तकेष्वेषां नामापि कथं न सन्ति ? मूर्तिपूजेयमासन्नसहस्रत्रयवर्षेभ्योऽर्वाक्कालाद् वाममार्गिभिर्जैनैश्च प्रवर्तिता। नासीदियं प्रागार्यावर्ते नासंश्चेमानि तीर्थान्यपि। यदा जैनैर्गिरनारपालिटानाशिखरशत्रुञ्जयार्बुदप्रभृतीनि तीर्थानि निरमीयन्त तदा तेषां तीर्थानीवैभिरपि निर्मितानि। यदि कश्चिदेतेषामारम्भं परीक्षितुमभिलषेत्तर्हि पण्डाख्यजनानामतिपुरातनीं पुस्तिकां ताम्रपत्रादिलिखितांल्लेखाँश्च निरीक्षेत चेदेतानि सर्वाणि तीर्थानि पञ्चशतवर्षेभ्य अथवैकसहस्रवर्षेभ्योऽर्वाक्काल एव निर्मितानीति निश्चयो भविष्यति। सहस्रवर्षेभ्यः पूर्वकालिको लेखः कस्याप्यन्तिके नोपलभ्यत इत्याधुनिकानि सन्ति।

**प्र०**—यद्यत्तीर्थस्य नाम्नो वा माहात्म्यं यथा—**"अन्यक्षेत्रे कृतं पापं काशीक्षेत्रे विनश्यति"** इत्यादिकथनं सत्यमस्ति न वा ?

**उ०**—न सत्यम्। यतो यदि दुरितानि व्यनंक्ष्यँस्तदा दरिद्रा धनराज्यादिकमन्धाश्च नेत्राण्यलप्स्यन्त। कुष्ठिनां कुष्ठादिरोगा न्यवर्त्तिष्यन्त। परमेवं न भवति। तेन पापं पुण्यं वा कस्यापि न विनश्यति।

**प्र०—गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि।**
**मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥१॥**
**हरिर्हरति पापानि हरिरित्यक्षरद्वयम् ॥२॥**
**प्रातःकाले शिवं दृष्ट्वा निशि पापं विनश्यति।**
**आजन्मकृतं मध्याह्ने सायाह्ने सप्तजन्मनाम् ॥३॥**

इत्यादिश्लोकाः पोपपुराणस्य सन्ति। यः सहस्रक्रोशदूरादपि गङ्गा गङ्गेति वदेत्तस्य किल्बिषाणि विनश्य स विष्णुलोकं वैकुण्ठनामानमधिगच्छति ॥१॥

हरिरित्येतयोर्द्वयोरक्षरयोरुच्चारणं सर्वपापानि हरति तथैव रामकृष्णशिवभगवतीप्रभृतिनाम्नां माहात्म्यं विद्यते ॥२॥

यश्च प्रभाते शिवस्य लिङ्गं मूर्त्तिं वाऽऽलोकयेत्तस्य निशायां कृतं पापं विनश्येत्। मध्याह्ने तस्य दर्शनेनाजन्मकृतं सायङ्काले च दर्शनेन सप्तजन्म-

कृतं दुरितं विनश्यतीति दर्शनस्येदं माहात्म्यम्। किमिदं मिथ्या भविष्यति ? ॥३॥

**उ०**—मिथ्याभवने का शङ्का ? 'गङ्गे गङ्गे, हरे राम, कृष्ण, नारायण, शिव, भगवति' चेति नामस्मरणेन पापं कदापि न नश्यति। यदि नश्येत्तदा कोऽपि जनो दुःखी न सञ्जायेत। दुरिताचरणाच्च कोऽपि न बिभीयात्। यथेदानीन्तने समये पोपलीलायां कलुषाणि बाहुल्येन समेधन्ते। मूढाः खलु—वयं दुष्कृतानि विधाय नामस्मरणं तीर्थयात्रां वा विधास्यामश्चेदेनसां निवृत्तिर्भविष्यतीति" विश्वसन्ति। अमुनैव विश्वासेनैनांसि विधायेहलोकं परलोकञ्च विनाशयन्ति। परं कृतस्य दुष्कृतस्य फलं भुज्यत एव जनैः।

**प्र०**—तदा किमपि तीर्थं नामस्मरणञ्च सत्यमस्ति न वा ?

**उ०**—अस्ति। वेदादिसत्यशास्त्राणामध्ययनमध्यापनञ्च धार्मिकविद्वज्जनसङ्गः परोपकारो धर्मानुष्ठानं योगाभ्यासो निर्वैरभावो निष्कपटता सत्यभाषणं सत्यस्वीकरणं सत्याचरणं ब्रह्मचर्यसेवनमाचार्य्यातिथिमातृपितृसेवा परमेश्वरस्तुतिप्रार्थनोपासनाः शान्तिर्जितेन्द्रियता सुशीलता धर्मयुक्तपुरुषार्थो ज्ञानं विज्ञानञ्चेत्यादिशुभगुणकर्माणि दुःखेभ्यस्तारकत्वात्तीर्थानि सन्ति। यानि जलस्थलनामानि सन्ति तानि तीर्थानि कदापि न भवितुं शक्नुवन्ति। यतो—**"जना यैस्तरन्ति दुःखानि दुःखाद्वा तानि तीर्थानि"** निगद्यन्ते। जलस्थलानि तारकाणि न भवन्ति परं मज्जयित्वा व्यापादकानि सन्ति। आम्! तरणिप्रभृतयस्तीर्थानि वक्तुं शक्यन्ते यतस्ताभिरपि तरङ्गिणीश्वरप्रमुखं तरन्ति जनाः।

**समानतीर्थे वासी।**—अ० ४। पा० ४। सू० १०८

**नमस्तीर्थ्याय च।**—यजु०। अ० १६। मं० ४२

ये ब्रह्मचारिण एकस्मादाचार्यदिकं शास्त्रं सहैव पठन्ति ते सर्वे सतीर्थ्याः समानतीर्थसेविनो भवन्ति। ये वेदादिशास्त्रेषु निष्णाताः सत्यभाषणादिधर्मलक्षणेषु च साधवस्स्युस्तेभ्योऽन्नादिपदार्थदानं विद्याग्रहणञ्चेत्यादिकर्माणि तीर्थान्युदीर्यन्ते।

इदञ्च नामस्मरणं निगद्यते—

**यस्य नाम महद्यशः॥**—यजुः। अ० ३२। मं० ३

महतां यशसामर्थाद् धर्मयुतकर्मणां सम्पादनमेव परमेश्वरनामस्मरणम्। यथा—ब्रह्मेश्वरपरमेश्वरन्यायकारिदयालुसर्वशक्तिमदादीनि नामानि परमात्मनो गुणकर्मस्वभावतः सन्ति। यथा—ब्रह्म सर्वेभ्यो बृहत्। ईश्वरः सामर्थ्ययुक्तः। परमेश्वर ईश्वराणामीश्वरः। न्यायकारी कदाप्यन्यायस्याकर्त्ता। दयालुरखिलेषु कृपादृष्टिशीलः। सर्वशक्तिमान् स्वसामर्थ्ये-

नैवाखिलजगत उत्पत्तिस्थितिलयकारी, कस्यापि साहाय्यानपेक्षी। ब्रह्मा नानाविधसृष्टिपदार्थनिर्माता। विष्णुः सर्वत्र व्याप्याखिलरक्षकः। महादेवः सकलदेवाधिदेवः। रुद्रः प्रलयकर्त्ता। इत्यादिनामधेयानर्थान्मनुज आत्मनि दधीतार्थान्महद्भिः कर्मभिर्महान् भवेत्। समर्थेषु समर्थः स्यात्। सामर्थ्य-मुपचिनुयात्। अधर्मं कदापि न कुर्वीत। सकलेषु दयां वितन्यात्। सर्व-प्रकारेण साधनानि समर्थानि विदधीत। शिल्पविद्यया विविधान् पदार्थान् निर्मिमीत। सकलसंसारस्य स्वात्मवत् सुखदुःखं समवगच्छेत्। सर्वान् संरक्षेत्। बुधेषु बुधो भवेत्। दुष्टकर्माणि तत्कर्मकारिणश्च प्रयत्नेन नियमये-त्सज्जनाँश्च सम्पालयेत्। इत्थं परमेश्वरनाम्नामर्थान् विज्ञाय परमेश्वरस्य गुणकर्मस्वभावानुगुणं निजगुणकर्मस्वभावसम्पादनमेव परमेश्वरनामस्मरणं खलु विद्यते।

**प्र०—गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।**
**गुरुरेव परं ब्रह्म तस्मै श्रीगुरवे नमः॥**

इत्यादिगुरुमाहात्म्यं तु सत्यमस्ति? गुरोश्चरणौ प्रक्षाल्य जलेन तज्जलं पिबेत्। तन्निदेशानुगुणमनुतिष्ठेत्। गुरुर्लोभी चेद् वामन इव, क्रोधी चेन्नरसिंह इव मोही चेद् रामचन्द्र इव कामी चेत् कृष्णचन्द्र इवावगन्तव्यः। अपि कीदृशमेव गुरुवर्यः पापं कुर्यात्तदपि तस्मिन्नश्रद्धा न विधेया। सतां गुरूणां वा दर्शनार्थगमने पदे पदेऽश्वमेधयज्ञस्य फलं सम्पद्यते। इतीदं कथनं युज्यते न वा?

**उ०**—न युज्यते। ब्रह्मविष्णुमहेश्वरपरब्रह्मादीनि परमेश्वरस्य नामानि सन्ति। तत्तुल्यो गुरुः कदापि भवितुं नालं खलु!! इयं गुरुमाहात्म्य-गुरुगीताऽपि महत्येका पोपलीला वर्तते। गुरवस्तु मातृपित्राचार्यातिथयो भवन्ति तेषां सेवाविधानं तेभ्यश्च विद्यासुशिक्षादिग्रहणं शिष्याणां कर्त्तव्यं विद्यासद्गुणादिदानञ्च गुरूणां कर्त्तव्यमस्ति। परं यो गुरुर्लोभी क्रोधी मोही कामी च स्यात्स सर्वथा परिहेयो दण्डनीयश्च। अल्पदण्डेनायं न मन्येत चेदर्घ्यपाद्यप्रदानेऽर्थात्तस्य ताडनदण्डनप्राणहरणेऽपि न कोऽपि दोषः। येषां विद्यादिसद्गुणेषु गुरुत्वं नास्ति ये च वृथानृतमालातिलकादिकं वेदविरुद्धं मन्त्रञ्चोपदिशन्ति न सन्ति ते गुरवः किन्तु मेषपालतुल्यास्ते भवन्ति। यथा मेषपाला निजमेषाजानिकरेभ्यो दुग्धादिप्रयोजनं साधयन्ति तथैवैते गुरवः शिष्याणां शिष्यपत्नीनां द्रव्याणि परिहृत्य निजप्रयोजनं साधयन्ति।

**दोहा—लोभी गुरु लालची चेला, दोनों खेलें दाव।**
**भवसागर में डूबते, बैठ पत्थर की नाव॥**

"यत् किञ्चिदपि शिष्याः शिष्यभूताः स्त्रियश्च दास्यन्त्येवेति" गुरुरवगच्छति। "मिथ्याशपथजन्यपापेभ्यो दुष्कृतेभ्यश्च गुरुर्मोचयेदेव"

इत्यादिलोभेनोभावपि कपटमुनी भवसागरदुःखजले निमज्जतः यथा पाषाणप्लवे निषण्णा जना अम्भोनिधौ निमज्ज्य म्रियन्ते । ईदृशां गुरूणां शिष्याणाञ्च वदनानि धूलिधूसरितानि भवन्तु । तेषामुपकण्ठं कोऽपि न तिष्ठतु । यस्तिष्ठेत्स दुःखसागरे निपतेत् । यादृशी लीला पूजारिभिः पौराणिकैः प्रवर्तिता तादृश्येवामीभिर्मेषपालनिभगुरुभिरपि प्रवर्तिताऽस्ति लीला । स्वार्थिजनानां कृत्यमिदमखिलम् । परमार्थिनो जनास्तु स्वयं दुःखापन्ना अपि जगदुपकारान्न विरमन्ति । गुरुमाहात्म्यं गुरुगीतादिकमपि चैभिरेव दुरितचरितैर्व्यरचि गुरुभिः ।

**प्र०—अष्टादशपुराणानां कर्त्ता सत्यवतीसुतः ॥१॥**
**इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत् ॥२॥**—महाभारते
**पुराणान्यखिलानि च ॥३॥**—मनु० ॥
**इतिहासपुराणं पञ्चमं वेदानां वेदः ॥४॥**
छान्दोग्य० प्र० ७ ॥ खं० १ ॥
**दशमेऽहनि किंचित्पुराणमाचक्षीत ॥५॥**
**पुराणविद्या वेदः ॥६॥**—सूत्रम् ॥

अष्टादशपुराणानां रचयिता व्यासदेवो वर्तते । अतो व्यासवचनानां प्रामाण्यमवश्यं मन्तव्यम् ॥१॥ इतिहासेन महाभारतेनाष्टादशपुराणैश्च वेदानामर्थं पठेयुः पाठयेयुश्च । यत इतिहासपुराणानि वेदानामेवार्थानुकूलानि सन्ति ॥२॥ पितृकर्मणि पुराणस्य हरिवंशस्य च कथां शृणुयुः ॥३॥ इतिहासः पुराणञ्च पञ्चमो वेद उच्यते ॥४॥ अश्वमेधान्ते दशमेऽहनि किञ्चित् पुराणकथामाकर्णयेयुः ॥५॥ पुराणविद्या वेदार्थविगमेनैव वेदा विद्यन्ते ॥६॥

इत्यादिप्रमाणैः पुराणानां प्रामाण्यमेषां प्रमाणैश्च मूर्तिपूजायास्तीर्थानाञ्चापि प्रमाणत्वमस्ति यतः पुराणेषु मूर्तिपूजायास्तीर्थानाञ्च विधानमस्ति ।

उ०—अष्टादशपुराणानां कर्त्ता व्यासदेवोऽभविष्यच्चेत्तेष्वेतावन्ति गप्पाष्टकानि नाभविष्यन् । यतो व्यासकृतानां शारीरकसूत्राणां योगशास्त्रभाष्यादीनाञ्च ग्रन्थानामवलोकनेन—"व्यासो महाविद्वान् सत्यवादी धार्मिको योगी चासीदिति" विज्ञायते । ईदृशीं मिथ्याकथां कदापि नालेखिष्यदसौ । अतश्चेदं सिध्यति यद्यः सम्प्रदायिभिः परम्परावरोधिभिर्जनैर्भागवतादयो नवीनाः कल्पनया कल्पिताः प्रणीतास्सन्ति ग्रन्थास्तेषु व्यासदेवस्य गुणानां लेशोऽपि नासीत् । वेदशास्त्रविरुद्धमसद्वादलेखनञ्च व्याससदृशविदुषां कृत्यं नास्ति किन्तु कृत्यमिदं विरोधिनां स्वार्थिनामविदुषां जनानामेवास्ति । इतिहासः पुराणञ्च शिवपुराणादीनां नाभिधानं परमिदं तु ब्राह्मणानां सूत्राणाञ्च वचनम् । यथा—

**ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशंसीरिति ॥**

ऐतरेयशतपथसामगोपथब्राह्मणग्रन्थानामेवेतिहासः पुराणं कल्पो गाथा नाराशंसीति पञ्चनामानि सन्ति। (इतिहासः) यथा जनकयाज्ञवल्क्ययोः संवादः। (पुराणम्) जगदुत्पत्त्यादिवर्णनम्। (कल्पः) वेदशब्दानां सामर्थ्य-वर्णनमर्थनिरूपणञ्च। (गाथा) कस्यापि दृष्टान्तदार्ष्टान्तिरूपेण कथाप्रसङ्ग-वर्णनम्। (नाराशंसी) मनुजानां श्लाघ्याश्लाघ्ययोः कर्मणोर्वर्णनम्। एभिरेव वेदार्थोऽवगम्यते। पितृकर्मण्यर्थाज्ज्ञानिनां प्रशंसायां किञ्चित् श्रवणम्, अश्वमेधावसानेऽप्येषामेव श्रवणं लिखितमस्ति। ये हि व्यासकृतास्सन्ति ग्रन्थास्तेषां श्रवणं श्रावणञ्च व्यासजन्मयोऽनन्तरं भवितुं शक्यते न तु पूर्वम्। यदा व्यासस्य जनिरपि नाजनि तदा खलु वेदार्थानपठन्नपाठयन्नशृण्वन्न-श्रावयँश्च जनास्तस्मात्सकलेभ्यः पुरातनेषु ब्राह्मणग्रन्थेष्वेव निखिलमिदं वृत्तं सम्भाव्यते न त्वमीषु नूतनेषु कल्पनाकल्पितेषु श्रीमद्भागवतशिव-पुराणादिदूषितमिथ्याग्रन्थेषूपपद्यते। व्यासो वेदानध्यैष्टाधीत्य च वेदार्थमप-प्रथदिति वेदव्यासोऽयमभ्यधीयत। पारावारीणा वर्त्तुलमध्यगता हि रेखा व्यास उच्यते। अर्थादसावृग्वेदारम्भादारभ्याथर्ववेदसमाप्तिपर्यन्ताँश्चतुरो-वेदानध्यगीष्ट। शुकदेवजैमिन्यादिशिष्यानध्यापयदपि तान्। अन्यथा तस्य जन्मनो नामधेयं "कृष्णद्वैपायनः" इत्यासीत्। ये केचन—"वेदान् व्यासः संकलितवानिति" वदन्ति तदसत्यं वर्तते। अन्यथा व्यासस्य पिता पितामहः प्रपितामहः पराशरशक्तिवसिष्ठब्रह्मादयोऽपि च चतुरो वेदानपाठिषुरिति कथनं कथमिवोपपद्येत ?

**प्र०**—पुराणेषु सकला वार्ता वितथास्सन्त्यथवा सत्यापि काचन वर्तते ?

**उ०**—भूयस्यो वार्ता असत्यास्सन्ति। काचन घुणाक्षरन्यायेन सत्या-ऽप्यस्ति। यास्सत्यास्सन्ति ता वेदादिसत्यशास्त्राणां याश्चानृतास्ता अमीषां पोपानां पुराणरूपगृहस्य सन्ति। यथा खलु शिवपुराणे शैवाः शिवं परमेश्वरं मत्वा विष्णुब्रह्मेन्द्रगणेशसूर्यादीनमुष्य दासानकल्पयन्। वैष्णवा विष्णु-पुराणादौ विष्णुं मत्वा शिवादीन् विष्णोर्भृत्यानगणयन्। देवीभागवते देवीं परमेश्वरीं शिवविष्णुप्रमुखानमुष्याः किङ्करानमन्यन्त। गणेशखण्डे च गणेशमीश्वरं शेषानशेषान् भुजिष्यानकार्षुः। वरम्, इदं कथनमेतेषां सम्प्रदायिजनानां नास्तिचेत्केषां वर्तते ? प्राकृतजनस्य रचनायामपि परस्पर-मीदृशं विरुद्धकथनं न भवति तदा विदुषां विरचनायां तु कदापीदं न सम्भाव्यते। आस्वेका कथा सत्या मन्येत चेत्तदान्याः सकला वार्ता असत्या भवन्ति। शिवपुराणीयाः शिवाद् विष्णुपुराणीया विष्णोर्देवीपुराणीया देव्या गणेशखण्डीया गणेशात् सूर्यपुराणमानिनः सूर्याद् वायुपुराणमतीयाश्च वायोः

सृष्टेरुत्पत्तिप्रलयौ समवर्णयन् । अथ पुनरेकैकस्मादेकैकस्य जगतः कारणानि तैस्तैर्वर्णितानि तेषामुत्पत्तिरेकैकस्मादलेखि । ननु कश्चिदनुयुञ्जीत—"यो जगदुत्पत्तिस्थितिप्रलयकर्त्ता स कदाप्युत्पद्येत ? यश्चोत्पद्यते स कदापि सृष्टेः कारणं भवितुं शक्नोति न वेति" ? तदा केवलं मौनावलम्बनमन्तरेण किञ्चिदपि वक्तुममी न प्रभवन्ति । एषां सर्वेषां वपुषामुत्पत्तिरपि कस्मादेवा-भविष्यत्तदा पुनस्ते स्वयं सृष्टिपदार्थाः परिच्छिन्नाश्च संवृत्य जगदुत्पत्ति-कर्त्तारः कथमिव भवितुं पारयन्ति ? उत्पत्तिरपि विलक्षणप्रकाराऽमन्यत या खलु सर्वथाऽसम्भवाऽस्ति यथा—

शिवपुराणे शिवः "सृष्टिं सृजेयम्" इतीयेष यदा तदैकं नारायण-जलाशयमुत्पाद्य तस्य नाभेः कमलमुत्पादयामास । कमलाद् ब्रह्मा जज्ञे । स सकलं जलमयं ददर्श । तदा जलस्याञ्जलिमादायावलोक्य जलेऽपातयत्तेन बुद्बुद एक उत्थितः । बुद्बुदादेकः पुरुष उत्पन्नः । स ब्रह्माणं जगाद—"पुत्र ! सृष्टिमुत्पादयेति" । ब्रह्मा तमुवाच—"नाहं तव पुत्रः, किन्तु त्वं मे पुत्र इति" । तयोः कलहो बभूव । दिव्यसहस्रवर्षपर्यन्तमुभौ जले युयुधाते । तदा महादेवो विचिन्तयामास—"सृष्टिसर्जनायाहं प्राहिणवं तावुभौ मिथो युध्येत इति" । अथोभयोस्तयोर्मध्यादेकं तेजोमयं लिङ्गं जज्ञे तच्चाञ्जसा-ऽऽकाशे ययौ । तदवलोक्योभौ विस्मयान्वितौ बभूवतुर्विचारयामासतुश्च—"अस्याद्यन्तौ विज्ञेयौ । य आद्यन्तौ विदित्वा सपदि समागच्छेत्स पिता यश्च पश्चादगृहीतवृत्तान्तो वा समागच्छेत्स पुत्र उच्येतेति" । विष्णुः कूर्मरूपं धृत्वाऽधस्तात्प्रतस्थे ब्रह्मा च हंसशरीरं भूत्वोपरिष्टादुत्पपात । उभौ मनोवेगेन जग्मतुः । दिव्यसहस्रवर्षाणि यावदुभौ चेलतुस्तदपि तदन्तं नावापतुः । तदाऽधस्ताद् विष्णुरुपरिष्टाद् ब्रह्मा च विचिन्तयामासतुः—"यदि सोऽन्तं विज्ञायागतो भवेत्तदा मया पुत्रेण भवितव्यमिति" । तच्चिन्तासम-कालमेवैका धेनुरेकः केतकीवृक्षश्चोपरितलादुत्तीर्यजग्मतुः । ब्रह्मा तौ—"युवां कुत आगताविति" पप्रच्छ । ताभ्यां जगदे—"आवां वर्षसहस्रेभ्योऽस्य लिङ्गस्याधारेण समागच्छाव इति" । ब्रह्मणानुयुयुजे—"अस्य लिङ्गस्यान्तो-ऽस्ति न वेति" । "नेति"—ताभ्यां प्रतिबभाषे । ब्रह्मा तौ जगाद—"युवां मया समं समायातमित्थञ्च साक्ष्यं प्रयच्छतं यदहं लिङ्गस्यास्य शिरसि क्षीरधारां प्रावर्षं वृक्षश्च वदतु यदहं कुसुमान्यवाकिरम्" । ईदृशं साक्ष्यं दद्यातञ्चेदहं वां स्थाने नयेयमिति । ताभ्यामभिदधे—"आवामनृतं साक्ष्यं न दास्याव इति" । तदा ब्रह्मा क्रुद्धस्सन्नुवाच—"साक्ष्यं चेन्न दास्यथस्तदाहं वां सद्य एव भस्मसात्करोमीति" । तदोभाभ्यां सन्त्रस्य सञ्जगदे—"यथा भवान् वदति तथैव साक्ष्यं दास्याव आवामिति" । तदा त्रयस्तेऽधस्तलं प्रचेलुः । विष्णुः पूर्वमेव समायातो बभूव । ब्रह्मापि सम्प्राप, विष्णुं पप्रच्छ—

"त्वमन्तं विज्ञायागतो न वेति"? तदा—"नाहमस्य वृत्तान्तमुपलब्धवानिति" विष्णुर्बभाषे। ब्रह्मोवाच—"अहं समुपलब्धवानस्मीति"। विष्णुर्जगाद—"कश्चन साक्षी दीयतामिति"। तदा गोवृक्षाभ्याम्—"आवामुभौ लिङ्गस्योत्तमाङ्गे समास्वेति" साक्ष्यमदायि। तत्कालं लिङ्गाद् वागुत्पन्ना वृक्षं शशाप—"येन त्वमनृतमवादीस्तेन तव पुष्पं मदुपरि देवतान्तरोपरि वा जगति कुत्रचिदपि नारोक्ष्यति यश्च कोऽप्यारोपयेत्तस्य नियतं विनाशो भविष्यतीति"। गाञ्च शशाप—"येन मुखेन त्वमसत्यमवदस्तेनैव मलं खादिष्यसि। तवाननं कोऽपि नार्चयिष्यति परं पुच्छं पूजयिष्यतीति"। ब्रह्माणञ्च शशाप—"अगादीस्त्वमनृतमिति" जगति क्वापि तव पूजा न भविष्यतीति"। विष्णवे च वरं ददौ—"त्वं सत्यमब्रवीरिति सर्वत्र तव पूजा भविष्यतीति"। अथ तौ द्वौ लिङ्गमस्तुवाताम्। तेन प्रसन्नीभूय तल्लिङ्गादेका जटाजूटजटिला निर्गम्य मूर्त्तिर्निजगाद—"सृष्टिनिर्माणाय वामहं प्राहिणवं तत्कलहे कथं निलीनाविति"। ब्रह्मणा विष्णुना च—"आवां सामग्रीं विना कुतः सृष्टिं विरचयेवेति" न्यगादि। तदा महादेवः स्वजटाया एकं भस्मगोलं निस्सार्य ददौ जगाद च—"गच्छतम्। अस्मादखिलां सृष्टिं सृजतमित्यादि"। वरम्, यदि कोऽप्यमून् पुराणप्रणेतॄन् पृच्छेद्—"यद् यदा सृष्टितत्त्वानि पञ्चमहाभूतान्यपि च नाभवँस्तदा ब्रह्मविष्णुमहादेवशरीराणि जलकमललिंगगोकेतकीवृक्षा भस्मगोलश्च किं भवदीयपितामहनिलयात्समापतन्नु खलु"?

तथैव भागवते विष्णुनाभेः कमलं कमलाद् ब्रह्मा ब्रह्मणो दक्षिणपदात्स्वायम्भुवो वामचरणांगुष्ठाच्च राज्ञी सत्यरूपा ललाटाद् रुद्रमरीच्यादिदशपुत्रास्तेभ्यो दक्षप्रजापतयश्च जज्ञिरे। तेषां त्रयोदशपुत्रीणां विवाहाः कश्यपेन सह जज्ञिरे। तासां दितेर्दैत्या दनोर्दानवा अदितेरादित्या विनताया विहङ्गमाः कद्र्वाः सर्पाः सरमायाः सारमेयाः शृगालादयश्चान्याभ्यः पत्नीभ्यो मतङ्गजास्तुरङ्गमाः क्रमेलका रासभा महिषास्तृणानि बुसानि बर्वरप्रभृतयः कण्टकिनो द्रुमाश्च समुदपद्यन्त। धन्योऽसि रे धन्योऽसि। भागवतरचयितर्ज्ञानलवदुर्विदग्ध? कथमिव वर्णनीयस्त्वम्। ईदृशमिथ्याकथाप्रणयने लेशतोऽपि नालज्जथाः। नितान्तमन्ध एव जातः खलु। स्त्रीपुरुषयो रजोवीर्यसंयोगेन मनुष्यास्तूत्पद्यन्त एव परं परमेश्वरस्य सृष्टिक्रमविरुद्धं पशुपक्षिसर्पादयः कदापि समुद्भवितुं न शक्यन्ते। गजोष्ट्रसिंहसारमेयगर्दभवृक्षादीनाञ्च योषितो गर्भाशये स्थितेरवकाशः कुतः सम्भाव्यते? सिंहादयश्चोद्भूय निजजननीजनकान् किमिति नाश्नन्? मनुष्यशरीराच्च पशुपक्षिवृक्षादीनां सम्भवः कथमिव सम्भवति?

शोकोऽयं खलु विद्यत एतज्जनरचितायामस्यामत्यन्तासम्भवायां

लीलायां याऽद्य यावदपि संसारं भ्रमयति खलु। अये! इमा अतीवासत्या वार्ता अन्धास्ते पोपा भग्नान्तर्बाह्यनेत्रास्तदीयशिष्याश्चाकर्णयन्ति मन्यन्ते चेत्यत्यन्तमेवाश्चर्यास्पदं वृत्तमिदं यदमी मनुजास्सन्त्यथवा नु केऽप्यन्ये खलु। एषां भागवतादिपुराणानां प्रणेतारो गर्भ एव कथं न विनष्टाः खलु? उत्पद्यमाना अपि वा किमिति पञ्चतां न गता नु? यतस्त एभ्यो दुरितेभ्यश्चेदमोक्ष्यन्त तदार्यावर्तदेशोऽपि दुःखेभ्यो व्यमोक्ष्यत।

**प्र०**—आसु कथासु विरोधो न सम्भाव्यते। यतो "यस्य विवाहस्तदीयमेव गीतम्" इति न्यायेन यदा विष्णुं स्तोतुमुपक्रान्तास्तदा विष्णुं परमेश्वरं पराँश्च दासान् यदा च शिवगुणान् गातुं प्रवृत्तास्तदा शिवं परमात्मानमन्याँश्च किङ्करान् विदधिरे। परमेश्वरस्य मायया सर्वं सम्भाव्यते किल। मनुष्यात्पश्वादीनां पश्वादिभ्यश्च मनुष्योत्पत्तिं विधातुं प्रभवति परमेश्वरः। दृश्यताम्—कारणमन्तरेण सकला सृष्टिः स्वमाययोत्पादिता वर्तते। तस्मिन्नु किं वृत्तमसम्भाव्यं विद्यते यत्कर्त्तुमभिलषति तदखिलं कर्त्तुं पारयति।

**उ०**—अयि मुग्धा मनुजाः? विवाहसमये यस्य गीतं गायन्ति तं सर्वेभ्यो महान्तमन्याँश्च लघीयसो न मन्यन्त नाप्यन्यान् निन्दन्ति, तं सकलानां जनकं च न वितन्वन्ति जनाः? कथयन्तु पोपदेवाः? भवन्तश्चाटुकारेभ्यश्चारणेभ्यो वन्दिजनेभ्योऽप्यधिकतमगप्पवादिनस्सन्ति न वा खलु? यमेवानुगच्छन्ति तमेव सर्वोत्तमं विदधति येन च साकं विरुन्धन्ति तं सर्वेभ्यो निकृष्टतमं कलयन्ति भवन्तः। सत्येन धर्मेण च समं किन्नु प्रयोजनं श्रीमताम्? अस्ति स्वार्थेनैव केवलं प्रयोजनं भवताम्। माया मनुष्ये सम्भवति। ये हि कपटिनो वञ्चकास्त एव मायाविन उच्यन्ते। परमेश्वरे खलु कपटादिदोषाणामभावात्स मायावीति वक्तुं न शक्यते। आदिसृष्टौ कश्यपात्कश्यपपत्नीभ्यश्च पशुपक्षिसर्पवृक्षादय उदपत्स्यन्त चेदद्यतनेऽपि काले तथैव प्रजाः किमिव नोत्पद्येरन्? स एव युज्यते सृष्टिक्रमो योऽस्माभिः पूर्वमवर्णि। अस्मादेव वाक्यात् पोपा भ्रान्ता भूत्वा प्रालपिष्यन्नित्यनुमीयते—

**तस्मात् काश्यप्य इमाः प्रजाः**॥—शत० ७।५।१।५

शतपथे—'सकला सृष्टिरियं कश्यपरचिताऽस्तीत्यलेखि'।

**कश्यपः कस्मात् पश्यको भवतीति**॥—तु० तै० आ० १।२

सृष्टिकर्त्तुः परमेश्वरस्य कश्यप इति नामधेयमस्ति। कुतः? "पश्यतीति पश्यः पश्य एव पश्यकः" यो निर्भ्रमो भूत्वा चराचरं जगत् सकलान् जीवानमीषां कर्माणि विद्याश्चाखिला यथावत्पश्यति। "आद्यन्तविपर्ययश्चेति" महाभाष्यवचनेनाद्यक्षरस्यान्तेऽन्तवर्णस्य चादौ विधानेन पश्यकस्य कश्यपो जातः। अस्यार्थमविज्ञाय भङ्गाख्यमदिरां निपीय निजं जन्म सृष्टिविरुद्धकथाकथने विनाशितं पोपैः।

तथाहि—मार्कण्डेयपुराणस्य दुर्गापाठे देवानां शरीरेभ्यस्तेजो निर्गम्यैका देवी जज्ञे सा महिषासुरं जघान । रक्तबीजस्य देहादेकस्य बिन्दोरवनौ पतनेन तत्तुल्यरक्तबीजोत्पत्त्याऽखिलजगति रक्तबीजानां प्रपूर्णतारुधिरनदीप्रवाहादिगप्पावली बाहुल्येन व्यलेखि । यदा रक्तबीजैरखिलमवनितलं प्रपूर्णमासीत्तदा देवी तत्सिंहः सेना च तदीया कुत्रातिष्ठत् ? ननु कथयेद् देव्या विदूरे रक्तबीजा अभवँस्तदा सकलमहीवलयं रक्तबीजैः पूर्णं नासीत् । यदि पूर्णमभविष्यत्तदा पशुपक्षिमनुष्यादिप्राणिनो जलस्थलमकरमीनकच्छपमत्स्यादयो वनस्पतिप्रभृतिमहीरुहाश्च कुत्रास्थास्यन् ? अत्रेदमेव हि निश्चेतव्यम्—"दुर्गापाठनिर्मातुर्निकेतनेऽभिद्रुत्य गता अभवन्निति" । दृश्यतां कीदृशोऽसम्भवकथाया गप्पो भङ्गमदतरंगे लिखितो न खलु यस्य मूलं नापि कोऽप्याधारः ।

अथ यं ग्रन्थं "श्रीमद्भागवतं" वदन्ति तस्य निशम्यतां लीला । नारायणो ब्रह्मदेवं चतुःश्लोकिभागवतमुपादिशत्—

**ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम् ।**
**सरहस्यं तदङ्गञ्च गृहाण गदितं मया ॥**

—भा० स्क० २ । अ० ९ । श्लो० ३०

"ब्रह्मन् ? त्वं मम परमगुह्यं ज्ञानं यद् विज्ञानेन रहस्येन चान्वितं धर्मार्थकाममोक्षाङ्गभूतञ्चास्ति तदेव मदन्तिकात् गृहाण" । यदा विज्ञानयुतं ज्ञानं निगदितं तदा ज्ञानस्य विशेषणभूतं परममिति पदं निरर्थकं विन्यस्तम् । गुह्यशब्दविशेषणेन च रहस्यपदमपि पुनरुक्तं भवति। यदा मूलश्लोकोऽनर्थकोऽस्ति तदा ग्रन्थः कथं नानर्थकः ? ब्रह्मदेवाय—

**भवान् कल्पविकल्पेषु न विमुह्यति कर्हिचित् ॥**

—भाग० स्कं २ । अ० ९ । श्लोक ३६

इति वरं ददौ । भवान् कल्पे सृष्टौ विकल्पे प्रलयेऽपि च नाप्स्यति कदापि मोहमिति लिखित्वा पुनर्दशमस्कन्धे विमुह्य ब्रह्मदेवो वत्सहरणं चकारेति व्यलेखि । अनयोर्द्वयोर्वार्तयोरेका सत्याऽपरा चासत्येति भूत्वा द्वे अपि वितथे । यदि वैकुण्ठे रागद्वेषक्रोधेर्ष्यादुःखानि न विद्यन्ते तदा सनकादिकानां वैकुण्ठद्वारि कथं क्रोध उत्पन्नः ? यदि रोषो जातस्तदा स स्वर्ग एव नास्ति । तत्समये जयविजयौ द्वारपालावभूताम् । ताभ्यां स्वामिनिदेशोऽवश्यं पालनीय इति सनकादयो निरुद्धास्तत्तयोः कोऽपराधः संवृत्तः ? तेन विनाऽपराधं शाप एव न प्रभवेत् । यतः शापितौ—"युवां पृथिव्यां निपततमिति" ततस्तत्कथनेनेदं सिध्यति तत्र पृथिवी न स्यादिति । अम्बरानिलानलजलानि स्युः । तदा द्वारमन्दिरजलानि कस्याधारेऽतिष्ठन् ? पुनर्यदा जयविजयाभ्यां सनकादयोऽस्तूयन्तान्वयुज्यन्त च—"भगवन्तः ! कदा पुनरावां वैकुण्ठमाग-

मिष्याव इति ?" तदा तैरिमौ न्यगद्येताम्—"यदि प्रेम्णा नारायणस्य भक्तिं करिष्यथस्तदा सप्तमे जन्मनि विरोधेन च भक्तिं करिष्यथस्तदा तृतीये जन्मनि वैकुण्ठमधिगमिष्यथ इति।" अत्रेदं विमर्शणीयम्—"जय-विजयौ नारायणस्य किङ्करावास्तां तयोः संरक्षणं सहाय्यसम्पादनञ्च नारायणस्य कर्त्तव्यं कृत्यमभूत्। अपराधमन्तरेण निजभुजिष्याणां पीडयितारं जनं तत्स्वामी न दण्डयेच्चेत्तदीयभृत्यानां सकला एव जना दुर्गतिं विदध्युः। उचितमभवन्नारायणस्य यत्स जयविजयौ सममानयिष्यत्सनकादींश्चादण्ड-यिष्यद्यतस्तेऽभ्यन्तरमागन्तुं किमिति निरबध्नन् ? किमिति किङ्कराभ्यां सममयुद्धचन्त ? शापदानप्रतीकारतया सनकादिकानां पृथिव्यां निपातनमेव नारायणस्य न्याय्यं कार्यमासीत्। यदा खलु ध्वान्तमिदन्नारायणस्य निकेतने विद्यते तदा तदीयसेवका ये वैष्णवा इत्यभिधीयन्ते तेषां यावती दुर्दशा स्यादल्पीयस्येव सा वर्तते।"

पुनस्तौ हिरण्याक्षहिरण्यकश्यपौ जज्ञाते। तयोर्हिरण्याक्षं वराहो जघान। तस्य कथेत्थं वर्णिताऽस्ति—"असौ पृथिवीं कटमिव वटित्वा शिरस्युपधाय शिश्ये। विष्णुर्वराहविग्रहं परिगृह्य तन्मस्तकाधस्तान्निस्सार्य धरणीं वदने दधार। स उत्तस्थौ। द्वयोर्जन्यमजनि। वराहो हिरण्याक्षं निजघानेति"। ननु पृच्छेदमून् कश्चन—"गोलाकृतिः कटाकृतिर्वा पृथिवीति" तदा न किमपि निगदितुं प्रभवेयुः। पौराणिका हि प्रत्यर्थिनस्सन्ति भूगोल-विद्यायाः। वरम्, यदाऽऽवटच्य वसुधा शिरस्तले निहिता तदा स्वयं कुत्र सुष्वाप ? वराहश्च कस्मिन् पदं निधायाभिदुद्राव ? वसुमतीं तु वराहो वदनाम्बुजे बिभराञ्चकार तदोभौ कुत्र स्थित्वा युयुधाते ? तत्र तु स्थितये किमप्यन्यत्स्थानं न बभूव किन्तु भागवतादिपुराणप्रणेतुः पोपदेवस्य वक्ष-स्स्थले स्थित्वाऽयोत्स्येतां खलु तौ ? परं क्वाशयिष्यत पोपदेवः ? ईदृशीयं वार्त्ता वर्तते यथा—"गप्पिनो गृहे गप्पिन आगता अवदन् गप्पिनः"। यदा मिथ्यावादिनां सदनेऽन्ये गप्पिनो जना आयान्ति तदा गप्पप्रलपने का खलु दरिद्रता। अथावशिष्यते हिरण्यकश्यपः। तस्य तनयो यः प्रह्लादनामासीत्स भक्तोऽभवत्। तदीयपिता तमध्ययनाय पाठशालां प्रेषयति स्म। तदा स गुरून्—"मम पट्टिकायां राम नामेति नाम लिखित्वा ददतु भवन्तः" इति कथयति स्म। यदा तदीयजनकोऽश्रृणोत्तदा तमब्रवीदसौ—"किमिति त्वं मम रिपोर्भजनं कुरुषे" इति ? तनयो नामन्यत यदा तदा जनकस्तं निबध्य दाम्ना शैलशिख-रादपातयत् कूपे च प्राक्षिपत् परं व्यर्थमखिलं सञ्जातम्। तदा स एकं लोह-स्तम्भमनले सन्ताप्य तमवदत्—"यदि तवेष्टदेवो रामस्सत्यो भवेत्तदा त्वं स्पर्शेनास्य न धक्ष्यसे" इति। प्रह्लाद आलिङ्गितुं प्रचलन्मनसि प्रदहनान्मोक्ष्ये न वेत्यशङ्कत। नारायणस्तस्मिन् स्तम्भे पिपीलिकापरम्परामचालयत्।

निवृत्तस्तस्य सन्देहः। झटिति स्तम्भमुपगम्य समाश्लिष्यत्। सोऽस्फुटत्। तस्मान्नृसिंहो निरगात् प्रगृह्यासौ तस्य पितरं व्यदारयत्तदुदरमथ प्रह्लादं प्रेम्णाऽवालेहयत्। "वरं वृणीष्वेति" च प्रह्लादमगादीत्। निजपितुरसौ सद्गतिमयाचत। नृसिंहस्तु—"तवैकविंशतिवंशजपुरुषाः सद्गतिमगमन्निति" वरमदात्। दृश्यतामिदानीम्—अयमपि गप्पसहोदरोऽपरो गप्पोऽस्ति। कञ्चिद् भागवतस्य श्रोतारं वक्तारञ्च प्रगृह्य पर्वतशिखरात् पातयेच्चेत्कोऽपि न तं रक्षेत्। चूर्णीभूयासौ म्रियेतैव। प्रह्लादं तदीयपिता पठनाय प्राहिणोत्तत्र किं कृतममुना दुष्कृतम्? स च प्रह्लाद ईदृशो मूढो यत्पठनं परिहाय विरागी भवितुमवाञ्छत्। जाज्वल्यमानस्तम्भमारोढुं प्रावर्त्तत पिपीलिका प्रह्लादश्च तत्सम्पर्केण नादह्यतेति वार्तां यः सत्यां मन्येत सोऽपि स्तम्भेन संयोजनीयो यद्ययं न दह्येत तदा सोऽपि न दग्धो भविष्यतीति मन्ये! नृसिंहश्चापि किं नादह्यत? प्रथमस्तृतीयजन्मनि वैकुण्ठागमनस्य वरः सनकादिकानामासीत्। तं भवदीयनारायणो व्यस्मरत् किमु? भागवतमतेन ब्रह्मा ततः प्रजापतिरथ कश्यपस्तदनु हिरण्याक्षहिरण्यकश्यपौ चतुर्थे वंशे जायेते। एकविंशतिवंशा नैवाजायन्त प्रह्लादस्य। तेनैकविंशतिवंशजाः पुरुषाः सद्गतिमगच्छन्निति कथनं कियत्प्रमादास्पदम्। अथ च तावेव हिरण्याक्ष-हिरण्यकश्यपौ रावणकुम्भकर्णौ जातौ तदनु पुनः शिशुपालदन्तवक्रौ समजायेतां तदा नृसिंहस्य वरः कुत्रोड्डीनः खलु; ईदृश्यः प्रमादपूर्णा वार्ताः प्रमादिभिः क्रियन्ते श्रूयन्ते मन्यन्ते च न तु विद्वद्भिर्जनैः।

अक्रूरस्य पूतनायाश्च विषये विलोकनीयम्—

**रथेन वायुवेगेन ॥………जगाम गोकुलं प्रति ॥**

—भा० स्कं०। पू० अ० ३३। श्लोक० २४

अक्रूरः कंसप्रहितो वायुवेगगामितुरङ्गमयुतं रथमारुह्य सूर्योदयसमये मथुरात् प्रतस्थे, सूर्यास्तसमये च क्रोशयुगदूरं गोकुलं समाससाद। तत् किमश्वा भागवतरचयितुः परिक्रमामकरिष्यन्नु खलु? आहोस्विन् मार्गं विस्मृत्य भागवतकर्त्तुर्निकेतनमश्वनोदयिता सारथिरक्रूरश्चोपगम्याशयिष्येतां किमु? पूतनायाः शरीरं षट्क्रोशमायतं लम्बमानञ्चात्यन्तं वर्णितम्। मथुराञ्चान्तरा तां विनिहत्य श्रीकृष्णः प्राक्षिपत्। यद्येवमभविष्यत्तदा मथुरा गोकुलञ्चोभयमेव सम्मृद्य पोपस्यास्य गृहमपि समचूर्णयिष्यत्।

अथाजामेलस्य कथा विचित्रैव लिखिताऽस्ति—असौ किल नारदस्य कथनेन स्वतनयस्य नारायणं नाम विदधे। मरणसमये स निजपुत्रमाकारयाञ्चकार। नारायण एव मध्य उत्फाल्याजगाम। "स निजपुत्रमाह्वयति न तु मामिति" नाज्ञासीत् किमु तदीयान्तःकरणस्य भावं नारायणः? ईदृशमेवास्ति नाममाहात्म्यञ्चेदद्यत्वेऽपि नारायणस्मरणकर्त्तॄणां मोचयितुं

दुःखानि किमिति नायाति नारायणः ? सत्या चेदियं कथा तदा कारागृह-निरुद्धा जना नारायण ! नारायणेति कृत्वा किं न खलु मुच्यन्ते ?

इत्थमेव ज्योतिश्शास्त्रविरुद्धं सुमेरुपर्वतस्य परिमाणमलिखत् । प्रियव्रतस्य क्षितिपते रथस्य चक्ररेखया समुद्रा अभवन् । एकोनपञ्चाशत्कोटि-योजनवती वसुमती विद्यत इत्यादिमिथ्याकथाया गप्पावली भागवते लिखिताऽस्ति यस्याः कोऽपि पारावारो नास्ति ।

इदं भागवतं बोबदेवेन विरचितम् । यस्य सहोदरेण जयदेवेन गीत-गोविन्दं व्यरचि । दृश्यताम्—अमुनैते श्लोकाः स्वकृते "हिमाद्रिः" नामके ग्रन्थे लिखितास्सन्ति—"श्रीमद्भागवतं नाम पुराणं निर्मितं मयेति" । तस्य लेखस्य पत्रत्रयमस्मत्सकाशेऽभवत् । तस्मादेकं पत्रं विनष्टम् । तस्मिन् पत्रे श्लोकानां य आशय आसीत्तस्याशयमङ्गीकृत्य मया श्लोकद्वयं निर्माय नीचै-र्व्यलेखि । योऽवलोकयितुमभिलषेत्स हिमाद्रिग्रन्थेऽवलोकयेत्—

**हिमाद्रेः सचिवस्यार्थे सूचना क्रियतेऽधुना ।**
**स्कन्धाऽध्यायकथानां च यत्प्रमाणं समासतः ॥१॥**
**श्रीमद्भागवतं नाम पुराणं च मयेरितम् ।**
**विदुषा बोबदेवेन श्रीकृष्णस्य यशोन्वितम् ॥२॥**

ईदृशा एव नष्टपत्रे श्लोका अभवन् । अर्थान्नृपस्य सचिवो हिमाद्रि-र्बोबदेवं पण्डितमवदत्—"भवन्निर्मितं श्रीमद्भागवतं सम्पूर्णमाकर्णयितुं नास्त्यवकाशो मे, अतः संक्षेपेण श्लोकबद्धसूचीपत्रं विरचयतु भवान् । यदव-लोक्याहं श्रीमद्भागवतकथां समासतो जानीयामिति" । तदधस्ताद् विन्यस्तं सूचीपत्रं तेन बोबदेवेन निर्मितम् । तस्मात्तस्मिन् नष्टपत्रे दशश्लोका विनष्टा-स्सन्ति । एकादशेन श्लोकेन लिखामः ।

इमे निम्नाङ्किता अखिलाः श्लोका बोबदेवकृतास्सन्ति—

**बोधन्तीति हि प्राहुः श्रीमद्भागवतं पुनः ।**
**पञ्च प्रश्नाः शौनकस्य सूतस्यात्रोत्तरं त्रिषु ॥११॥**
**प्रश्नावतारयोश्चैव व्यासस्य निर्वृतिः कृतात् ।**
**नारदस्यात्र हेतूक्तिः प्रतीत्यर्थं स्वजन्म च ॥१२॥**
**सुप्तघ्नं द्रौण्यभिभवस्तदस्त्रात्पाण्डवा वनम् ।**
**भीष्मस्य स्वपदप्राप्तिः कृष्णस्य द्वारकागमः ॥१३॥**
**श्रोतुः परीक्षितो जन्म धृतराष्ट्रस्य निर्गमः ।**
**कृष्णमर्त्यत्यागसूचा ततः पार्थमहापथः ॥१४॥**
**इत्यष्टादशभिः पादैरध्यायार्थः क्रमात् स्मृतः ।**
**स्वपरप्रतिबन्धोनं स्फीतं राज्यं जहौ नृपः ॥१५॥**

**इति वै राज्ञो दार्ढ्योक्तौ प्रोक्ता द्रौणिजयादयः ॥**

**इति प्रथमः स्कन्धः ॥१॥**

इत्यादिद्वादशस्कन्धानां सूचीपत्रमित्थमेव विरच्य बोवदेवपण्डितो हिमाद्रिसचिवाय ददौ। सविस्तरं विलोकयितुं योऽभिलषेत्स बोबदेवकृते हिमाद्रिग्रन्थेऽवलोकयेत्। एवमेवान्येषां पुराणानामपि लीलावगन्तव्या। परमेकोनविंशतिर्विंशतिरेकविंशतिरेवमेकस्मादपरं गरीयः।

दृश्यताम्—श्रीकृष्णचन्द्रस्येतिवृत्तं महाभारतेऽत्युत्तमं वर्तते तस्य गुणकर्मस्वभावाश्चरित्रञ्चाप्तपुरुषोपमं विद्यते। यस्मिन् किमप्यधर्माचरणमाजन्मनो मरणपर्यन्तं किमपि वा दुष्कृतं कृतं स्यात्कृष्णचन्द्रेणेति नार्वर्णि। अयं भागवतप्रणेता च कृष्णचन्द्रमनुचितदोषैर्यथाभिलषितं कलङ्कितवान्। पयोदधिनवनीतादिचौरिकायास्तस्मिन्नारोपणं तस्य कुब्जादासीसमागमः पररमणीभी रासमण्डलेऽमुष्य नृत्यलीलादयश्च दोषाः श्रीकृष्णे समारोपितास्सन्ति तेन। एतत् पठित्वा पाठयित्वा श्रुत्वा श्रावयित्वा चान्यमतवादिनः श्रीकृष्णं निन्दतितराम्। भागवतमिदं नाभविष्यच्चेत् कृष्णचन्द्रसन्निभमहात्मनो मिथ्या निन्दा किमिति समभविष्यत्?

शिवपुराणे द्वादशज्योतिर्लिङ्गानि वर्णितानि येषु प्रकाशलेशोऽपि न विद्यते। नक्तं दीपमन्तरेणान्धकारे लिङ्गान्यपि नावलोक्यन्ते। सकलेयं विलसति पोपदेवस्य लीला।

**प्र०**—यदा वेदाध्ययनसामर्थ्यं नावशिष्टं तदा स्मृतयो यदा स्मृतिपठनाय बुद्धिर्नावशिष्टा तदा शास्त्राणि यदा च शास्त्रावगमनबलं नातिष्ठत्तदा पुराणानि प्रणीतानि। तानि केवलं स्त्रीशूद्राणां श्रवणाय निर्मितानि यतस्तेषां श्रुतिपठनश्रवणाधिकारो न वर्तते।

**उ०**—मिथ्येयं वार्ता। सामर्थ्यं हि पठनेन पाठनेनैव च सम्पद्यते। वेदानां पठनस्य श्रवणस्य च सर्वेषामधिकारोऽस्ति। दृश्यतां गार्गीप्रभृतयः स्त्रियः श्रुतिमध्यगीषत। छान्दोग्ये च वर्णितो जानश्रुतिर्नाम शूद्रोऽपि रैक्वमुनिसकाशे वेदमध्यगीष्ट। यजुर्वेदस्य षड्विंशाध्याये द्वितीये मन्त्रे—"वेदानां पठनस्य श्रवणस्य च मनुजमात्रस्याधिकारोऽस्तीति" स्पष्टमवर्णि। तत्पुनर्य ईदृशान् मिथ्या ग्रन्थान् निर्माय लोकान् वञ्चयित्वा सत्यग्रन्थेभ्यो विमुखमतजाले निपात्य निजप्रयोजनं साधयन्ति ते कथं न पापीयाँसस्सन्ति?

कीदृशं ग्रहाणां चक्रं सञ्चालितं येन विद्याहीना जना निगलितास्सन्ति।

आलोक्यताम्—"**आकृष्णेन रजसा०**" ॥१॥ सूर्यस्य मन्त्रः। "**इमं देवा असपत्नꣳ सुवध्वम्०**" ॥२॥ चन्द्रस्य। "**अग्निर्मूर्धा दिवः**

कुकुत्पतिः०" ॥३॥ मङ्गलस्य। "उद्बुध्यस्वाग्ने० ॥४॥ बुधस्य। "बृहस्पते अति यदर्यो०" ॥५॥ बृहस्पतेः। "शुक्रमन्धसः० ॥६॥ शुक्रस्य। "शन्नो देवीरभिष्टय०" ॥७॥ शनैश्चरस्य। "कया नश्चित्र आभुव०" ॥८॥ राहोः। केतुं कृण्वन्नकेतवे० ॥९॥ इयं च केतोः कण्डिकोच्यते। वस्तुतस्तु (आकृष्णे०) अयं सूर्यस्य भूमेराकर्षणस्य च मन्त्रः। द्वितीयो राजगुणविधायकः। तृतीयोऽग्नेः। तुरीयो यजमानस्य। पञ्चमो विदुषः। षष्ठो वीर्यान्नयोः। सप्तमो जलप्राणपरमेश्वराणाम्। अष्टमो मित्रस्य। नवमश्च ज्ञानग्रहणविधायको मन्त्रो विद्यते। नतु ग्रहवाचकाः। अर्थानवगमेन भ्रमजाले निपतितास्सन्ति।

**प्र०**—ग्रहाणां फलं सञ्जायते न वा?

**उ०**—यादृशं पोपलीलाया भवति फलं न खलु तादृशं किन्तु रविचन्द्रयोः किरणैरुष्णत्वशीतलत्वशालीन्यृतुमत्कालचक्राणि सम्बन्धमात्रेण निजप्रकृतेरनुकूलानि प्रतिकूलानि वा सन्ति सुखदुःखयोर्निमित्तानि भवन्ति। परं यत्पोपलीलाविलासिनो वदन्ति—"शृणुत, महाराज-श्रेष्ठिनो यजमानाः! अद्य भवतामष्टमचन्द्रसूर्यादयः क्रूरग्रहाः समागतास्सन्ति। सार्द्धद्विवर्षीयः शनैश्चरश्चरणे समायातोऽस्ति भवतां महान् विघ्नो भविष्यति। गृहद्वारं त्याजयित्वा परदेशेषु भवतो भ्रमयिष्यति परं यदि ग्रहेभ्यो दानं जपं पाठं पूजाञ्च कारयिष्यथ तदा दुःखेभ्यो मोक्ष्यध्वे यूयमिति"। प्रष्टव्या अमी—"शृणुतायि पोपाः! भवतां ग्रहाणाञ्च कस्सम्बन्धः! कश्चायं ग्रहः पदार्थः! इति"।

**पोपः**—

**दैवाधीनं जगत्सर्वं मन्त्राधीनाश्च देवताः।**
**ते मन्त्रा ब्राह्मणाधीनास्तस्माद् ब्राह्मणदैवतम्॥**

ज्ञायतां कीदृशं प्रमाणमस्तीति। देवतायत्तं सकलं जगत्। मन्त्राधीनाः सकलदेवताः। ते मन्त्राश्च ब्राह्मणानामधीनास्तस्माद् ब्राह्मणा देवता उच्यन्ते। यतो यथाकामं कामपि देवतां मन्त्रबलेनामन्त्र्य प्रसाद्य च कार्यसिद्धिसम्पादनस्यास्माकमेवाधिकारो वर्तते। अस्मासु चेन्मन्त्रशक्तिर्नाभविष्यत्तदा भवादृशा नास्तिका संसारेऽस्मभ्यं स्थातुमेव स्थानं नादास्यन्?

**सत्यवादी**—

ये तस्करा लुण्ठका दुराचारा जनास्सन्ति तेऽपि भवद्दैवतायत्ता भविष्यन्ति। देवता एव तान् दुरिताचरणे प्रैरयिष्यन्? तथास्ति चेद् भवद्देवतासु राक्षसेषु च न कोऽपि भेदो भविष्यतीति। युष्माकमधीनाश्चेन्मन्त्रा-

स्सन्ति तैश्च यूयं यथाकामं कारयितुं प्रभवश्चेत्तैर्मन्त्रैर्देवता वशंवदा विधाय वसुमतीपतीनां निधीनुपाहार्य निजगृहे निधायोपविश्य सानन्दं किमिति नोपभुङ्ग्ध्वे ? प्रतिगृहं शनैश्चरादिकानां तैलादिछायादानमादातुं कथं परिभ्रमथ ? यं च कुबेरं मन्यध्वे तं वशे कृत्वा यथेष्टं द्रव्यं गृह्णीध्वम्। वराकान् निर्धनान् किमिति लुण्ठथ ! भवद्भ्यो द्रव्यवितरणेन ग्रहाः प्रसन्ना अदानेन चाप्रसन्ना भवेयुश्चेदस्मान् सूर्यादिग्रहाणां प्रसन्नतामप्रसन्नतां वा प्रत्यक्षं दर्शयन्तु भवन्तः। यस्याष्टमः सूर्यश्चन्द्रो वान्यस्य यस्य च तृतीयः स्यात्तावुभौ ज्येष्ठमासि पादत्राणपरिधानरहितौ किरणतप्तायां भूमौ चालयन्तु। यस्योपरि प्रसन्नस्तस्य शरीरं चरणद्वयञ्च न दह्येत यस्य च क्रुद्धस्तस्य तु दह्येत। तथैव पौषमासे तावुभौ दिगम्बरौ विधाय पौर्णमास्या निखिलायां निशायामनावृतस्थले स्थापयन्तु। एकः शीतेन बाध्येतान्यश्च न बाध्येत चेद्विज्ञायतां "ग्रहाः क्रूराः सौम्यदृष्टयश्च भवन्तीति" किञ्च ग्रहाः किन्नु सम्बन्धिनस्सन्ति भवताम् ! भवतां मिथः पत्रेण तारेण वा व्यवहारो भवति किमु ! आहोस्विद् भवन्तस्तेषां सकाशं ते च भवदन्तिकं वा गच्छन्त्या-गच्छन्ति ननु ! अये भवत्सु मन्त्रशक्तिर्भवेच्चेत्कथं न स्वयं नृपा धनाढ्या वा भवेयुर्भवन्तः ! रिपुकदम्बकं निजवशङ्गतं न विदधति भवन्तः ! स हि नास्तिको भवति यो वेदस्येश्वरस्य च निदेशविरुद्धां पोपलीलां प्रवर्तयेत्। यदुपरि ग्रहोऽस्ति स यदि भवते ग्रहदानं न दद्यात्स्वयमेव चोपभुञ्जीत तदा का नु खलु चिन्ता ! ननु भवन्तः कथयेयुः—"नैव ! अस्मभ्यमेव दानेन प्रसीदन्त्यमी न त्वन्यजनाय दानेनेति चेत् किं भवन्त एव ग्रहाणां प्रतिनिधयस्सन्ति यदि भवन्त एव प्रतिनिधयः सन्ति तदा सूर्यादीन् निजसदनमाहूय दग्ध्वाम्रियन्ताम्। सत्यं त्विदं विद्यते यत् सूर्यादिलोका जडास्सन्ति। ते कस्मैचिदपि दुःखं सुखं वा दातुं न चेष्टन्ते किन्तु यावन्तो भवन्तो ग्रहदानोपजीविनः सन्ति ते सकला भवन्तो ग्रहाणां मूर्तयस्सन्ति। यतो **"ये गृह्णन्ति ते ग्रहाः"**। इति ग्रहशब्दस्यार्थोऽपि भवत्स्वेव संघटते। ये गृह्णन्ति तेषामेव ग्रहा इति नामानि सन्ति। यावद् भवतां चरणकमलानि नृपतिश्रेष्ठिजनधनाढ्यदरिद्राणामुपकण्ठं नोपसीदन्ति न तावत्कस्यापि जनस्य नवग्रहाणां स्मरणमपि जायते। यदा खलु साक्षान्मूर्त्ति-मन्तः सूर्यशनैश्चरादय इव भवन्तस्तानुपगम्याक्रामन्ति तदा ग्रहणमविधाय कदापि तान्न मुञ्चन्ति। ये केऽपि च भवदभ्यर्णं नागच्छेयुस्तेषां भवन्तो नास्तिकादिपदैर्निन्दां कुर्वाणा विचरन्ति।

**पोपदेवः**—दृश्यताम्—ज्योतिषः प्रत्यक्षं फलं नभोगता रविचन्द्र-विधुन्तुदाः केतुसंयोगरूपं ग्रहणं प्रथममेव सूचयन्ति। यथेदं प्रत्यक्षं भवति तथैव ग्रहाणामपि फलं प्रत्यक्षीभवति। अवलोक्यताम्—धनिका दरिद्रा राजानस्सेवकाः सुखिनो दुःखिनश्च भवन्ति ग्रहेभ्य एव।

**सत्यवादी**—यदिदं ग्रहणरूपं प्रत्यक्षं फलमस्ति तद् गणितविद्याया एव न तु फलितविद्यायाः। या हि गणितविद्याऽस्ति सा सत्या या च फलित-विद्या विद्यते सा खलु स्वाभाविकसम्बन्धजन्यफलं विहाय मिथ्या वर्तते यथानुलोमप्रतिलोमक्रमेण परिक्राम्यतोः पृथिवीचन्द्रयोः गणितेन विशदं विज्ञायते—"अमुकसमयेऽमुकदेशेऽमुकावयवे सूर्य्यस्य चन्द्रस्य वा ग्रहणं भविष्यतीति। यथा—

**छादयत्यर्कमिन्दुर्विधुं भूमिभाः।**

इति ग्रहलाघवस्य तुरीयाध्याये चतुर्थः श्लोकोऽस्ति। इत्थमेव सिद्धान्त-शिरोमणिसूर्यसिद्धान्तादिष्वपि विद्यते। यदा सूर्यपृथिव्योर्मध्ये चन्द्रमाः समायाति तदा सूर्यग्रहणं यदा च सूर्यचन्द्रयोरन्तराले पृथिवी समायाति तदा चन्द्रग्रहणं भवति। अर्थाच्चन्द्रमसः छाया भूमितले भूमेश्छाया च हिमांशौ पतति। प्रकाशरूपत्वादम्बरमणेरभिसुखं कस्यापि च्छाया न पतति परं यथा प्रकाशमानाद् विवस्वतो दीपकाद् वा देहादिच्छाया प्रतिनिवर्तते तथैव ग्रहण-विषये बोधनीयम्। ये हि धनाढ्या दरिद्रा प्रजा राजानो भृत्याश्च भवन्ति ते स्वकर्मणैव भवन्ति न तु ग्रहैः। बहवो ज्योतिर्विदः निजतनयानां विवाह-मङ्गलानि ग्रहाणां गणितविद्यानुसारं वितन्वन्ति तथापि तेषु विरोधो वा विधवा नारी वा मृतस्त्रीकः पुमान् वा सञ्जायते। फलं सत्यमभविष्यच्चेत् किमित्येवं समजनिष्यत? अतः कर्मणां गतिः सत्या सुखदुःखभोगनिवन्धन-रूपैव न तु ग्रहाणाम्। वरम्, ग्रहा अन्तरिक्षे पृथिव्यपि विहायसि मिथो दविष्ठा नु? एतेषां सम्बन्धः कर्त्रा कर्मभिश्च समं साक्षान्नाऽस्ति। कर्मणां कर्मफलानाञ्च कर्त्ता भोक्ता च जीवः कर्मफलभोजयिता च परमात्माऽस्ति। यदि भवन्तो ग्रहाणां फलं मन्यन्ते तदास्योत्तरं दीयताम्—"यस्मिन् क्षणे मनुजस्यैकस्य जन्म भवति यच्च भवान् ध्रुवात्त्रुटिं मत्वा जन्मपत्रिकां निर्मिमीते तस्मिन्नेव क्षणे क्षितिमण्डले परेषां जनूंषि भवन्ति न वा? यदि नेति कथ्येत तदानृतं यदि चोमिति कथ्येत तदैकेन चक्रवर्त्तिना तुल्योऽवनि-तलेऽन्योजनश्चक्रवर्ती नृपतिः किमिति न भवति? इति।" आम्!! इयत्तु निगदितुं प्रभवति भवान् यदियं लीलाऽस्माकमुदरभरणार्थं वर्तते। तदा तु कोऽपि मन्येतैव!

**प्र०**—किं गरुडपुराणमपि मिथ्याऽस्ति?

**उ०**—आम्। मिथ्याऽस्ति।

**प्र०**—तदा मृतानां जीवानां का गतिर्भवति?

**उ०**—यादृशानि सन्ति तेषां कर्माणि।

**प्र०**—यमराजो चित्रगुप्तो मन्त्री तस्य महाभयङ्करा अञ्जनगिरि-समाकाराः किङ्करा जीवान् प्रगृह्य नयन्ति। पापपुण्यानुसारं तान् नरके

स्वर्गे च प्रक्षिपन्ति। तदर्थं दानं पुण्यं श्राद्धं तर्पणं गोदानादिकञ्च वैतरणीतरङ्गिणीतरणाय वितन्वन्ति। कथङ्कारमिमा अखिला वार्ता अनृता भवितुमलम् ?

उ०—अखिला इमा वार्ताः पोपलीलाया गप्पाष्टकानि सन्ति। यद्यन्यस्थलीया जीवास्तत्र प्रयान्ति तेषाञ्च न्यायं धर्मराजचित्रगुप्तादयः कुर्वन्ति तदा ते यमलोकगता जीवाश्चेत्पापं वितनुयुस्तर्ह्यपरो यमलोको मन्तव्यो यत्रत्या न्यायाधीशास्तेषां न्यायं विदध्युः !! गिरिसंकाशानि यमगणशरीराणि स्युश्चेत्तानि कथं नावलोक्यन्ते ? आसन्नमरणाञ्जीवानुपादातुमल्पीयसि द्वारे तेषां गणानामेकाऽङ्गुल्यपि प्रवेष्टुं न शक्ता। रथ्यायां प्रतोल्यां वा किमिव नावरुध्यन्तेऽमी ? सूक्ष्मदेहानपि ते गृह्णन्तीति कथ्येत चेत्तेषां शैलसन्निभदेहानामस्थीनि महान्ति पोपाः स्वगृहं विहाय कुत्र निधास्यन्ति ? यदा वने दावानल आविर्भवति तदा युगपत्पिपीलिकादिजीवैर्निजवपूंषि मुच्यन्ते। तानादातुमसंख्या यमगणास्समाययुश्चेत्तत्रान्धकारेण भाव्यम्। यदा चामी जीवानां ग्रहणाय धाविष्यन्ति तदा कदाचित्तेषां वपूंषि मिथः समाहतानि भविष्यन्ति। ततो यथा शैलस्य महान्ति शिखराणि भङ्क्त्वा भूमितले निपतन्ति तथैव तेषां महान्ति गात्राणि गरुडपुराणस्य वाचयितॄणामाकर्णयितॄणाञ्चाङ्गनभुवि निपतिष्यन्ति चेदमी सम्मृद्य मरिष्यन्त्यथवा गृहद्वाराणि रथाश्च निरुद्धा भविष्यन्ति तदा ते कथं निर्गन्तुं गन्तुञ्च प्रभविष्यन्ति ? श्राद्धतर्पणपिण्डप्रदानादीनि तान् मृतजीवाँस्तु न प्राप्नुवन्ति परं मृतकानां प्रतिनिधेः पोपदेवस्य गृहजठरे करञ्चाप्नुवन्ति। यत्तु वैतरणीकृते गोदानं गृह्यते तत् पोपदेवस्य गृहमथवा घातकस्य गृहं गच्छति। वैतरणीनदीं नोपयाति धेनुस्तदा कस्य पुच्छं परिगृह्य तरिष्यति जीवः ? करस्त्वत्रैव दह्यते निखन्यते वा तत्कथमिवासौ पुच्छं परिग्रहीष्यति ? अत्रैको दृष्टान्त इह कथायामुपयुक्तोऽस्ति। यथा—

आसीदेकः कोऽपि जाटः। अत्युत्तमा धेनुरेका तस्य गृहे विंशतिसेटकपयोदायिनी चाभवत्। स्वादिष्ठमभूत्तस्या दुग्धम्। कदाचित् कदाचित् तत्पयो न्यपतत् पोपदेवस्य मुखकमलेऽपि। तस्य पुरोहितस्तु—"यदा जाटस्य स्थविरः पिताऽऽसन्नमरणो भविष्यति तदास्या एव धेनोः संकल्पं कारयिष्यामीति" निरन्तरमचिन्तयत्। कतिपयैरहोभिर्दैवयोगेन तदीयपितुर्मरणसमयस्समुपसेदिवान्। तस्य रसना प्रशान्ता। पल्यङ्कादधोऽवतारितोऽसौ, अर्थात् प्राणविसर्जनसमयस्समुपसन्नः। जाटस्येष्टमित्राणि सगोत्रा बान्धवा अपि चोपातिष्ठन्त तदानीम्। तदा पोपदेव उदीरयामास—"अयि यजमान ! त्वमिदानीमस्य हस्तेन गोदानं कारयेति।" जाटो दशरूप्यकान् निस्सार्य पितुः पाणौ निधाय—"पठ्यतां सङ्कल्पः" इत्यवदत्। पोपः समभ्यधात्—

"अये ! धन्योऽसि खलु धन्योऽसि । किन्तु वारं वारं म्रियते पिता ? सम्प्रति साक्षाद्धेनुरानीयतां या दुग्धदात्री स्याद् वृद्धा न भवेत्सर्वोत्तमा च स्यात्तादृश्याः पयस्विन्या दानं करणीयम् ।

**जाटः**—अस्मदन्तिके त्वेकैव धेनुरस्ति तामन्तरेणास्मत्सन्ततीनां निर्वाहो न भविष्यति । अत इमां न दास्यामि । गृह्यन्तां विंशतिरूप्यका पठ्यतां सङ्कल्प एभिश्च रूप्यकैरपरा पयोदात्री क्रीयतां धेनुः ।

**पोपः**—धन्यः खल्वसि । त्वं निजजनकादपि गामधिकां मन्यसे ? स्वपितरं वैतरणीतरङ्गिण्यां मज्जयित्वा दुःखयितुं वाञ्छसि किमु ?

उत्तमः खलु त्वं सुपुत्रोऽभूः । तदा तु पोपस्य पक्षे सकलाः कुटुम्बिजनाः संवृत्ताः यतस्तेऽखिलाः पूर्वमेव पोपेन प्रतारिता अभवन् । तदानीमपि ते सङ्केतितास्सर्व एकमतास्सम्भूय प्रसह्य तस्या एव धेनोर्दानं तस्मायेव पुरोहिताय दापयामासुः । तदा जाटः किञ्चिदपि नाभाषत । तस्य पिताऽम्रियत । पोपदेवश्च वत्सतरसहितां गां दोहनकलशिकाञ्चादाय स्वगृहे गां निबध्य कलशिकां निधाय पुनर्जाटगृहमागमत् । मृतकेन समं श्मशानभूमिमुपेत्य च दाहनक्रियामकारयत् । तत्रापि काञ्चित् पोपलीलां व्यतनोत् । तदनु दशगात्रसपिण्डीकरणादावपि तस्माद् द्रव्यमुपाहरत् । महाब्राह्मणा अपि तमलुण्ठन् । भोजनभट्टा अपि पुष्कलं मिष्टान्नमाकण्ठमुदरान्तः प्राक्षिपन् । यावत् खलु निखिलाः क्रिया अवसितास्तावज्जाटो यस्य कस्यापि वेश्मनः क्षीरं याचं याचं निर्वाहमकरोत् । चतुर्दशेऽहनि प्रत्यूषे पोपस्य निकेतनमुपगम्यासौ जाटो गां दुग्ध्वा कलशिकां प्रपूर्योत्तिष्ठन्तमद्राक्षीत् पोपम् । तमालोक्य पोपोऽभाषत—"आगम्यतां यजमान ! आस्यतामिति" ।

**जा०**—भवानपि, अयि पुरोहित ! इत आगम्यताम् ।

**पो०**—वरम्, एषोऽहमागच्छामि दुग्धं निधाय ।

**जा०**—नैव, नैव । दुग्धकलशिकाऽऽनीयतामितः । वराकः पोप उपगम्योपाविशदस्थापयच्चाभिमुखं कलशिकाम् ।

**जा०**—भवानतीव मिथ्यावादी विद्यते ।

**पो०**—किमसत्यं विहितम् ?

**जा०**—कथ्यताम्, किमर्थं भवता धेनुरगृह्यत ?

**पो०**—भवदीयपितुर्वैतरणीसरित्तरणाय ।

**जा०**—सुष्ठु खलु, तदा भवता तत्र वैतरणीतटे धेनुः कथं न प्रहिता वयं तु भवद्विश्वासेऽतिष्ठाम भवाँश्च निजगृहे निबध्य न्यषीदत् । न जाने खलु मम पिता वैतरणीनद्यां कतिवारं निमग्नोन्मग्नोऽभविष्यत् ?

**पो०**—नैव, नैव खलु । तत्रास्या दानस्य पुण्यप्रभावेणान्या पयस्विनी समुद्भूय तमुदतारयिष्यत् ।

**जा०**—वैतरणी सरिदितः कियद्दूरं कस्यां दिशि चास्ति ?

**पो०**—अनुमानेन त्रिंशत्कोटिक्रोशदूरे वर्त्तते यत एकोनपञ्चाशत्कोटि-योजनमिता वसुमती विद्यते । दक्षिणनैर्ऋत्यदिशि च वैतरणी नदी वर्त्तते ।

**जा०**—इयद्दूरतो भवतः पत्रिकया तारेण वा वृत्तान्तो गतस्स्यात्तस्य च—"तत्र पुण्येन गौर्जाताऽमुकस्य पितरं नदीमतारयद्" इत्युत्तरमुपलब्धं स्याच्चेद् दर्शयतु भवान् ।

**पो०**—अस्मत्सकाशे गरुडपुराणलेखं विहायान्यत्पत्रं वा तारो वान्यः कोऽपि नास्ति ।

**जा०**—कथमहं सत्यं मन्येय गरुडपुराणमिदम् ?

**पो०**—यथा सर्वे मन्यन्ते ।

**जा०**—इदं पुस्तकं भवत्पूर्वजैर्भवतो जीविकायै व्यरचि । पितुर्हि निजपुत्रेभ्योऽन्यः कोऽपि प्रियो न भवति । यदा मम पिता मदन्तिके पत्रं वा तारं वा प्रेषयिष्यति तदैवाहं वैतरणीतटे धेनुं नेष्यामि तञ्च पारमुत्तार्य पुनर्निजधेनुं गृहमानीयाहं मदीयतनयाश्च दुग्धं पास्यन्ति । आनीयतां दुग्ध-पूर्णा कलशिकेति समुदीर्य गां वत्सतरञ्चादाय जाटो निजगृहं प्रातिष्ठत ।

**पो०**—त्वं दानं प्रदाय प्रतिगृह्णासि ? तव विनाशो भविष्यति खलु ?

**जा०**—तूष्णीं तिष्ठ । अन्यथा त्रयोदशदिनपर्यन्तं दुग्धं विना यावद् दुःखमस्माभिः सोढं तावतः सकलस्य प्रतिशोधनं विधास्यामि । तदा जोषम-भजत्पोपः । जाटश्च सवत्सां धेनुमादाय समासदत् स्वगृहम् ।

यदेदृशा एव जाटसदृशाः पुरुषा भवेयुस्तदैव विलीयेत महीवलये पोपलीला । यच्चामीजना "दशगात्रपिण्डैर्दशाङ्गसपिण्डीकारणेन शरीरेण समं जीवः संयुज्यांगुष्ठमात्रशरीरः सन् पश्चाद् यमलोकमभिगच्छतीति" वदन्ति तदा तु मरणसमये यमदूतागमनं वृथा भवति । त्रयोदशदिवसानन्तरं तैरागन्तव्यम् । शरीरं सञ्जायेत यदि तदासौ स्वस्त्रीसन्तानेष्टमित्राणां मोहात् किमिति न निवर्त्तते ?

**प्र०**—स्वर्गे किमपि न लभ्यते यद् दानं दीयते तदेव तत्र लभ्यत इति सर्वदानानि करणीयानि ।

**उ०**—तस्माद् भवतः स्वर्गादयमेव लोक उत्तमो विद्यते यस्मिन् धर्मशालास्सन्ति जना दानं ददति प्रियमित्रेष्टज्ञातिजनेषु च भूयांसि निम-न्त्रणानि भवन्ति वस्त्राणि चोत्तमोत्तमानि लभ्यन्ते । भवत्कथनानुसारं स्वर्गे किमपि न लभ्यते । ईदृशि निष्कृपे कृपणे दरिद्रे च स्वर्गे पोपाः प्रगम्य दुर्गता भवेयुस्तत्र सज्जनानां किन्नु प्रयोजनम् ?

**प्र०**—भवत्कथनेन यमलोको यमश्च नास्ति चेत् प्रेत्य क्व व्रजन्ति जीवाः ? एषाञ्च न्यायं को नु वितनोति ?

उ०—भवतो गरुडपुराणोदितं त्वप्रमाणमस्ति परं यद् वेदोक्तं तत्प्रमाणम्—यथा—**यमेन** [ऋ० १०।१४।८] **वायुना** [अ० २०।१४१।२] **सत्यराजन्** [यजु० २०।४]। इत्यादिवचनैर्निश्चीयते—"वायोर्यम इति नामधेयमस्तीति"। वपूंषि विहाय विहायसि वायुना समं जीवास्तिष्ठन्ति यश्च सत्यकारी पक्षपातरहितः परमात्मा "धर्मराजः" अस्ति स एव सर्वेषां न्यायकर्त्ता वर्त्तते।

**प्र०**—भवत्कथनेन कस्म अपि गोदानादिदानं न देयं किञ्चिदपि च दानपुण्यं न करणीयमिति सिध्यति।

उ०—इदं भवत्कथनं सर्वथा वृथा वर्त्तते। यतः सुपात्रेभ्यः परोपकाराय सुवर्णरजतहीरकमौक्तिकान्नजलस्थानवस्त्रादिदानमवश्यं देयं परं कुपात्रेभ्यः कदापि न प्रदेयम्।

**प्र०**—कुपात्रसुपात्रयोः किन्नु लक्षणम्।

उ०—यः कपटी स्वार्थी विषयी कामक्रोधलोभमोहसंयुतः परहानिकारी समासक्तो मिथ्यावादी विद्याहीनः कुसङ्गवानलसो दातृसकाशे मुहुर्मुहुर्याचको निवारितोऽपि तदङ्गने स्थित्वा निर्बन्धेन याचमानोऽसंतोषवृत्तिरदातुर्निन्दकः शापगालीप्रदाता चासकृत्सेवमानस्यापि सकृदसेवमानस्य शत्रुभूतो बहिर्धृतमाधुर्यवेशोऽपि जनान् प्रतार्य तद्वञ्चकः स्वाभ्यर्णे विद्यमानेऽपि पदार्थे "मदन्तिके किमपि न विद्यते" इति कथयिता सकलान् यथा तथा वा बोधयित्वा स्वार्थसाधको नक्तं दिवा भिक्षायाचन एव प्रवृत्तो निमन्त्रितो यथेष्टं भङ्गादिमादकद्रव्यं निपीय वैपुल्येन परान्नभोक्ता पुनरुन्मत्तीभूय प्रमादशाली सत्यमार्गविरोधकोऽसत्यवर्त्मनि निजप्रयोजनाय प्रवर्त्तकस्तथैव स्वशिष्याणां स्वस्यैव सेवाया उपदेशको न त्वन्येषां योग्यविदुषां सेवायाः सद्विद्यादिप्रवृत्तिप्रत्यर्थी जगतो व्यवहारेऽर्थात् स्त्रीपुरुषजनकजननीसन्तानराजप्रजाप्रियजनमित्रेष्वप्रीतिसमुत्पादकः "इमे सर्वे मिथ्या सन्ति जगदपि मिथ्यास्ति" इत्यादिदुष्टोपदेशकर्त्ता चास्ति स कुपात्रं विज्ञेयः। यश्च ब्रह्मचारी जितेन्द्रियो वेदादिविद्यानामध्येताऽध्यापकश्च सुशीलः सत्यवादी परोपकारप्रियः पुरुषार्थी वदान्यो विद्यावान् धर्मात्मा शान्तो हर्षशोकरहितः स्तुतिनिन्दयोर्निर्भय उत्साही योगी ज्ञानी सृष्टिक्रममनतिक्रम्य वेदाज्ञानुगुणमीश्वरगुणकर्मस्वभावानुकूलञ्चाचरिता न्यायरीतियुक्तानां पक्षपातरहितानां सत्योपदेष्टॄणां सत्यशास्त्रपठनपाठनकर्तॄणाञ्च परीक्षकः कस्याप्यचाटुकारी प्रश्नानां यथार्थसमाधानविधाता स्वात्मवदन्यस्यापि सुखदुःखहानिलाभवेत्ता ऽविद्यादिक्लेशहठदुराग्रहाभिमानविहीनोऽमृतस्येवापमानस्य विषस्येव च सम्मानस्यावगन्ता सन्तोषी यः कोऽपि प्रेम्णा यावद् दद्यात्तावतैव प्रसन्नः सकृदापत्तिसमये याचितेऽप्यदातरि परिहर्त्तरि वा जने दुःखस्याशुभ-

कृत्यस्य वाप्यचिन्तयिता तदुपकण्ठात्सपदि निवर्तकस्तदनिन्दकश्च सुखिनां मित्रं दुःखिषु दयालुः पुण्यात्मभिः सममानन्दनः पापिनामुपेक्षकः (तेषु रागद्वेषशून्य इति यावत्) सत्यमानी सत्यवादी सत्यकारी निष्कपट ईर्ष्याद्वेषरहितो गम्भीराशयस्सदाचारी धार्मिकः सर्वथा दुराचारविमुखो निजतनूमनोधनानां परोपकरणे नियोजयिता परेषां सुखाय स्वप्राणानामपि समर्पयिता चैवमादिशुभलक्षणसम्पन्नो विद्यते स सुपात्रं ज्ञेयः। परं दुर्भिक्षादिविपत्कालेऽन्नजलवसनौषधिपथ्यस्थानादीनाञ्चाखिलाः प्राणिन एवाधिकारिणो भवेयुः।

प्र०—कतिविधा दातारो भवन्ति ?

उ०—त्रिविधाः, उत्तममध्यमनिकृष्टभेदेन। यो देशकालपात्राणि विज्ञाय सत्यविद्याधर्मोन्नतिरूपपरोपकृतये दद्यात्स उत्तमो दाताभिधीयते। यः कीर्त्तये स्वार्थाय वा दद्यात्स मध्यम उच्यते। यश्च स्वस्यान्यस्य वा किञ्चिदप्युपकारं कर्त्तुमसमर्थोऽस्ति परं वेश्यागमनादिकार्याय विटनटप्रमुखेभ्यो वितरेत्। दानसमये तिरस्कारादिकुचेष्टामपि कुर्यात् पात्रापात्रयोः किञ्चिदपि भेदं न जानीयात् किन्तु—"समानमानं सकलं हि सत्यम्।" इति विक्रयिणामिव विवादं कलहं विरच्य धर्मात्मानमन्यं दुःखिनं विधाय च सुखीभवितुं विश्राणयेद् द्रविणं सोऽधमो दाता समुदीर्यते, अर्थात् यः परीक्षापुरस्सरं विदुषो धर्मात्मनः सत्कुर्वीत स उत्तमः, यः किञ्चित् परीक्षां कुर्वाणोऽकुर्वाणो वा केवलं स्वप्रशंसायै धनं प्रतिपादयेत्स मध्यमः, यश्चान्ध इवापरीक्ष्यैव निष्फलं दानं विदध्यात्स नीचदाताभिधीयते।

प्र०—दानस्य फलानीह जायन्ते परलोके वा ?

उ०—सर्वत्र सञ्जायन्ते।

प्र—स्वयं नु जायन्ते कश्चन फलदातास्ति वा ?

उ०—फलदाता परमेश्वरः। यथा कोऽपि तस्करः स्वयं कारागृहं न जिगमिषति परं नृपोऽवश्यं तं चारके प्रेषयति धर्मात्मनां सुखं रक्षति तन्निवेंशयति तान् दस्युप्रभृतिभ्यः संरक्ष्य सुखे च स्थापयति। तथैव परमात्मा निखिलान् प्राणिनः पापपुण्यानां दुःखसुखरूपफलानि यथायथमुपभोजयति।

प्र०—येऽमी गरुडपुराणादिग्रन्थास्सन्ति ते वेदार्थं वेदं वा पुष्णन्ति न वा ?

उ०—नैव, परं वेदविरोधिनः प्रतिकूलगामिनश्च सन्ति। तन्त्राण्यपि तादृशान्येव सन्ति। यथा कोऽपि मनुज एकस्य मित्रं सकललोकस्य च शत्रुः स्यात्तद्वत् पुराणतन्त्रयोर्मन्ता जनो भवति यतः परस्परविरोधजनयितार इमे सन्ति ग्रन्थाः। मननममीषां न कस्यापि विदुषः कृत्यमस्ति। परमेषां मननमविद्वत्ता विद्यते खलु। दृश्यताम्—शिवपुराणे त्रयोदशी सोमवारः, आदित्य-

पुराणे रविवारश्चन्द्रखण्डे सोममङ्गलबुधबृहस्पतिशुक्रशनैश्चराः, राहुकेतु-ग्रहवन्तो वैष्णवानामेकादशी, वामनस्य द्वादशी, नृसिंहस्यानन्तस्य वा चतुर्दशी, चन्द्रमसः पौर्णमासी, दिक्पालानां दशमी, दुर्गाया नवमी, वसूनामष्टमी, मुनीनां सप्तमी, स्वामिकार्त्तिकेयस्य षष्ठी, नागस्य पञ्चमी, गणेशस्य चतुर्थी, गौर्यास्तृतीयाऽश्विनीकुमारयोः द्वितीयाऽऽद्याः, देव्याः प्रतिपत्, पितॄणाञ्चामावास्येति तिथयो हीमाः पुराणमतेन खलूपवासस्य सन्ति सर्वत्र चेदमेवालेखि—"यो मनुज एषु वारेषु तिथिषु चान्नपानग्रहणं करिष्यति स नरकं गमिष्यतीति ।" तदिदानीं समुचितमिदं पोपानां तदीयशिष्याणाञ्च यत्कस्मिन्नपि वारे कस्याञ्चिदपि तिथौ वा ते भोजनं न कुर्वीरन् यतो यदि भोजनं पानं वा करिष्यन्ति तदा ते नरकगामिनो भविष्यन्ति । अथ ये निर्णयसिन्धुधर्मसिन्धुव्रतार्कप्रमुखग्रन्थाः प्रमादिजननिर्मितास्सन्ति तेष्वप्येकैकस्य व्रतस्य महती दुर्गतिर्व्यधायि । यथा—एकादश्यां दशमीविद्धाः केचन शैवाः, द्वादश्यामेकादशीव्रतं कुर्वन्ति । कीदृशी महाविचित्रा विद्यते पोपलीला !! यदुपवासेऽपि च (क्षुधायां वा मरणेऽपि च) विवदन्त एव । यदेकादश्याव्रतं प्रचालितमस्ति तत्र स्वार्थसिद्धिरेव वर्तते दयाया लेशोऽपि नास्ति । ते वदन्ति—

**एकादश्यामन्ने पापानि वसन्ति ।**

यावन्ति पापानि सन्ति तान्यखिलान्येकादश्यां तिथावन्ने वसन्ति । प्रष्टव्याः खल्विमे पोपाः—"कस्य पापानि तस्यां वसन्तीति ?" तव त्वत्पित्रादेर्वा ? यदि सर्वेषां सर्वाणि पापान्येकादश्यां वसन्ति तदैकादशीदिने केनापि दुःखिना न भाव्यम् । एवं तु न भवति प्रत्युत क्षुधादिना दुःखं भवति दुःखं हि पापस्य फलं विद्यते तेन बुभुक्षाक्लेशसहनं पापमस्ति । अस्या महन्माहात्म्यं व्यरचि, तस्याः कथामनुवाच्य बहवः प्रतार्यन्ते । तत्रैका गाथाऽस्ति यथा—

ब्रह्मलोके वाराङ्गनाऽऽसीत्काचन । सा किञ्चिदपराधमकार्षीत् । शप्ताऽभूदियं ततः पृथिवीतले निपत्य—"कथङ्कारमहं पुनस्स्वर्गमागन्तुं प्रभवेयमिति" समस्तुत देवम् । सोऽब्रवीद् यदा कदाप्येकादशीव्रतस्य फलं कोऽपि तुभ्यं दास्यति तदानीमेव त्वं सुरलोकमागमिष्यसि न्यपतदियं विमानसहिता कस्मिंश्चिदेकस्मिन्नगरे, तत्रत्यो नरपतिः—"कासि त्वमिति" तामप्राक्षीत् । तदैषा सकलमुदन्तमश्रावयदवादीच्चावनिपतिम् । कोऽपि मह्यमेकादश्याः फलमर्पयेच्चेत्पुनरपि सुरालयमहं गन्तुं पारयेयमिति" । क्षितिपतिर्नगरेऽन्वेषणमकारयत्परं कोऽपि जनः एकादश्या व्रतधारी नालभ्यत किन्त्वेकदा कयोश्चिच्छूद्रस्त्रीपुरुषयोः कलहोऽभूत् । क्रोधवशंवदा पत्नी रात्रिं दिनञ्चाखिलं क्षुधिताऽस्थात् । दैवयोगेन तस्मिन् दिवस एकादश्येवाभवत् ।

नृपसेवकानसावभ्यधात्—"ज्ञानतस्त्वहमेकादशीव्रतं नाकार्षं परमकस्मात् तस्मिन्नहन्यतिष्ठं क्षुधिता खल्विति"। तदा तु ते तां राजसमक्षमानैषुः। तामगादीन्नृपवरो विमानमिदं स्पृशेति। साऽस्प्राक्षीत्। स्पर्शसमकालमेव विमानमुपर्य्युड्डयिष्ट। इदं त्वज्ञानतो जातस्यैकादशीव्रतस्य फलं विद्यते। विज्ञाय वितनुयाच्चेत्तस्य फलस्य का (मर्यादा) सीमा खलु। धन्याः स्थ विवेकचक्षुर्विकला यूयम्। यदीयं वार्ता सत्या स्यात्तदा वयमेकां ताम्बूल-वीटिकां (या स्वर्गे नोत्पद्यते ताम्) प्रेषयितुमभिलषामः। सकला एकादशी-व्रतिनः स्वस्वफलं प्रयच्छन्तु। यद्येकताम्बूलवीटिकोर्ध्वं गमिष्यति तदा पुनर्लक्षशः कोटिशश्च ताम्बूलवीटिकास्तत्र प्रेषयिष्यामः। वयमपि चैकादशी-व्रतमनुष्ठास्यामः। यदि चेत्थं न भविष्यति तदा युष्मानस्मात् क्षुत्पीडन-रूपापत्कालाद् रक्षिष्यामः। आसां चतुर्विंशत्येकादशीनां नामधेयानि पृथक् पृथग्विहितानि सन्ति। कस्याश्चन धनदेति कश्याश्चित् कामदेति कस्या अपि पुत्रदेति कस्याश्चिच्च निर्जलेति विहितम्। बहवो दरिद्रा बहुलाः कामुका बहवश्च निर्वंशा जना एकादशीमनुष्ठाय वर्षीयांसोऽभूवन् पञ्चत्व-मप्यगमंश्च परं धनं कामनां पुत्रञ्च नाविन्दन्त। ज्येष्ठमासस्य शुक्लपक्षे यस्मिन्नु समये मुहूर्त्तमपि जलं न लभ्येत चेन्मनुजो व्याकुलो भवति तस्मिन् काले व्रतिनो महादुःखं लभन्ते। विशेषतो वङ्गदेशे सकला विधवा वनिता एकादशीदिवसे महतीं दुर्गतिमधिगच्छन्ति लेखनसमये निर्दयस्य नृशंसस्यास्य मनसि कापि दया नाजनि। अन्यथा निर्जलायाः सजलेति पौषमासस्य शुक्लपक्षीयैकादश्याश्च निर्जलेति नाम व्यधास्यच्चेत्तदपि किञ्चित् समीचीनमभविष्यत्। परं दयया किन्नु प्रयोजनमस्य पोपस्य? कोऽपि जीवतु वा म्रियतां वा परमाकण्ठं पोपोदरं पूर्यताम्" गर्भिण्या वा सद्यो-विवाहितया वा ललनया बालकैर्युवकैर्वा जनैस्तु कदापि नोपोषितव्यम्। परं केनाप्युपोषितव्यमपि चेत्तदा यस्मिन् दिनेऽजीर्णता स्यात् क्षुधा वा न भवेत्तस्मिन्नहनि शर्करावत्पेयं पयो वा निपीय तिष्ठेत्। ये बुभुक्षायां नाश्नन्ति क्षुधां विना वा भुञ्जते त उभये रोगसमुद्रे निलीय दुःखं लभन्ते। प्रमादिनाममीषां कथने लेखने वा केऽपि न विश्वसेयुः।

अथ गुरुशिष्यमन्त्रोपदेशविषयं मतमतान्तरचरित्राणि च वर्णयामः। मूर्त्तिपूजकसम्प्रदायिजना अनुयुञ्जते—"वेदा अनन्तास्सन्ति। ऋग्वेदस्यैक-विंशतिः २१, यजुर्वेदस्यैकाधिकशतं १०१, सामवेदस्यैकसहस्रं १०००, अथर्ववेदस्य च नव ९ शाखा विद्यन्ते। आसां कतिचन शाखा उपलभ्यन्ते शेषा अलुप्यन्त। तास्वेव मूर्तिपूजायास्तीर्थानाञ्च प्रमाणं भविष्यति। यदि नाभविष्यत्तदा पुराणेषु कुत आगमिष्यत्? यदा खलु कार्यमवलोक्य कारणमनुमीयते तदा पुराणानि विलोक्य मूर्तिपूजायां का नु शङ्का?

उ०—यथा शाखा यस्य वृक्षस्य भवति तेन तुल्यैव सा भवति न तु विरुद्धा। अपि काममल्पा महत्यो वा शाखा भवेयुः परं तासु विरोधो न सम्भाव्यते। तथैव यावत्यः शाखा उपलभ्यन्ते तासु यदि पाषाणादिमूर्तिपूजाया जलस्थलात्मकतीर्थानाञ्च प्रमाणं नोपलभ्यते तदा तासु लुप्तासु शाखास्वपि नासीत्। चत्वारो वेदाश्च पूर्णा उपलभ्यन्ते तेभ्यो विरुद्धाः कदापि न भवितुमर्हन्ति शाखाः। याश्च विरुद्धास्सन्ति कोऽपि ताः शाखात्वेन प्रमाणयितुं न प्रभवति। यदेयं वार्ताऽस्ति तदा पुराणानि वेदानां शाखा न सन्ति किन्तु सम्प्रदायिजनैः परस्परं विरुद्धा ग्रन्था निरमीयन्त। वेदान् परमेश्वरकृतान् मन्यते यदि भवाँस्तदाऽऽश्वलायनादिकऋषिमुनिनाम्ना प्रसिद्धान् ग्रन्थान्निगमान् किमिति मनुते ? यथा शाखानां पल्लवानाञ्चावलोकनेन पिप्पलवटरसालप्रमुखमहीरुहा अभिज्ञायन्ते तथैव महर्षिमुनिप्रणीतैर्वेदाङ्गैश्चतुर्भिर्ब्राह्मणैः साङ्गोपाङ्गोपवेदादिभिश्च वेदार्थोऽभिज्ञायते, अत एवैते ग्रन्थास्तदीयशाखा अमन्यन्त। ये वेदप्रतिकूलास्तेषां प्रमाणं ये चानुकूलास्तेषामप्रमाणं न सम्भाव्यते। यदि भवानदृष्टशाखासु मूर्त्यादेः प्रमाणमनुमिमीत तदा तु यदा कोऽप्येवं पक्षं स्थापयिष्यति यल्लुप्तशाखासु वर्णाश्रमव्यवस्थाप्रतिकूलाऽर्थादन्त्यजशूद्राणां नाम ब्राह्मणादिरिति ब्राह्मणादेर्नामधेयञ्च शूद्रान्त्यजादिरित्यस्ति। अगमनीयगमनमकर्त्तव्यकर्त्तव्यं मिथ्याभाषणादिश्च धर्मः सत्यभाषणादिश्चाधर्म इत्यादि लिखितं स्यात्तदा तस्मै भवानिदमेवोत्तरं दास्यति यथा वयमद्ब्रूहि—"यद् वेदेषु प्रसिद्धशाखासु च यथा ब्राह्मणादेर्ब्राह्मणादिरित्यभिधानं शूद्रादेश्च शूद्रादिनामधेयमलिख्यत तथैवादृष्टशाखास्वपि मन्तव्यम्। अन्यथा वर्णाश्रमव्यवस्थादिकमखिलमन्यथा भविष्यतीति"।

वरं जैमिनिव्यासपतञ्जलिसमयपर्यन्तं तु सकलाः शाखा अविद्यन्त न वा ? यद्यविद्यन्त तदा कदापि भवान् प्रत्याख्यातुं न प्रभविष्यति। यदि नाविद्यन्तेति कथ्येत तदा पुनः शाखानां सद्भावे किन्नु प्रमाणम् ? दृश्यताम्—जैमिनिर्मीमांसायां सकलं कर्मकाण्डं पतञ्जलिमुनिर्योगशास्त्रे निखिलमुपासनाकाण्डं व्यासमुनिश्च शारीरकसूत्रेषु ज्ञानकाण्डमखिलं निगमानुकूलमलिखत्तेषु तैः पाषाणादिमूर्तिपूजायाः प्रयागादितीर्थानाञ्च नामान्यपि नालिख्यन्त। कुतो नु खलु लिख्येरन्? यदि क्वापि वेदेष्ववर्त्स्यन्नु तदा लेखनमन्तरेण कदापि नामोक्ष्यन्त। अतो लुप्तशाखास्वपि मूर्तिपूजादेरस्य नासीत् प्रमाणम्। इमा अखिलाः शाखा वेदा न सन्ति खलु ? यत एतासु परमेश्वरप्रदत्तवेदमन्त्राणां प्रतीकानि समुद्धृत्य व्याख्याः सांसारिकजनानाञ्चेतिहासादयोऽलिख्यन्त तस्मात्कदाप्येता वेदा भवितुं न शक्यन्ते। वेदेषु तु केवलं मनुजेभ्यो विद्या उपादिश्यन्त कस्यापि मनुजस्य नाममात्रमपि न विद्यते तस्मा-

दस्ति प्रत्याख्याता सर्वथा मूर्तिपूजा। दृश्यताम्—मूर्तिपूजया श्रीरामचन्द्रश्रीकृष्णचन्द्रनारायणशिवादीनां महती निन्दोपहासश्च भवति। ते खलु महान्तो महाराजाधिराजास्तेषाञ्च पत्न्यः सीतारुक्मिणीलक्ष्मीपार्वतीप्रमुखा महाराजमहिष्य आसन्निति विदन्त्येव सर्वे। परं यदामीषां मूर्तिर्मन्दिरादौ निधाय पूजारिजनास्तन्नाम्ना भिक्षां याचन्तेऽर्थात्तान् भिक्षुकान् विदधति यथा—"आगम्यतां महाराजाः श्रेष्ठिनो धनिकाः दर्शनं क्रियताम्। आस्यताम्। चरणामृतं गृह्यताम्। किञ्चिदुपह्रियताम्। श्रीमन्तो महाराजाः ! सीतारामराधाकृष्णलक्ष्मीनारायणमहादेवपार्वतीभिर्दिनत्रयाद् बालभोगो राजभोगो वा (भोज्यं पेयं वा) नालभ्यत। अद्यैतेषां सकाशे किञ्चिदपि नास्ति। अयि राजमहिषि ! श्रीमति ! श्रेष्ठिनि ! सीतादिभ्यो नासाभूषणादिकं विरचय्य दीयताम्। अन्नादिकं प्रहीयेत चेद् रामकृष्णादय उपभुञ्जीरन्। वस्त्राण्यखिलानि जीर्णानि। मन्दिरस्य कोणभित्तयः सकला निपतितास्सन्ति। पटाज्जलं गलति। दुष्टास्तस्करा यत् किञ्चिदासीत्तदपाहरन्। कानिचिदुन्दरुभिर्विदीर्णानीति दृश्यताम्। एकदोन्दरुभिरियाननर्थो व्यधायि यदस्य नेत्रमपि निस्सार्य पलायन्त। सम्प्रति वयं रजतस्य नेत्रं निर्मातुं न प्रभव इति तत्रास्माभिर्वराटकस्य नयनमायोजितम्"। रामलीलां रासमण्डलमपि च कारयामः। सीतारामौ राधाकृष्णौ च नृत्यतः राजानो महन्ताभिधाः पोपप्रभृतयस्तेषां सेवकाश्च सानन्दं निषीदन्ति। मन्दिरे सीतारामादय उत्थितास्तिष्ठन्ति पूजारयो महन्ताख्यजना वाऽऽसने तूलिकायां वोपधानमाश्रित्योपविष्टास्सन्ति। उष्णकालेऽप्यालये सार्गले तान् संवृण्वन्ति देवान् स्वयञ्च शीतलवायुमये प्रदेशे पल्यङ्कमास्तीर्य शेरते। बहवः पूजका निजनारायणं मञ्जूषिकायां निधाय वसनादिनोपरिष्टान्निबध्य गलेऽवलम्बयन्ति। यथा वानरी निजार्भकं गले लम्बयति तथैव पूजारयो गले लम्बयन्ति। कोऽपि मूर्त्तिं भनक्ति तदा हाहाकारं विधाय वक्षस्स्थलोपपीडं प्रलपन्ति—"हा ! हन्त, सीतारामौ राधाकृष्णौ पार्वतीशिवौ च दुष्टैर्भग्नाविति"। अधुना शिल्पिवरेण स्फटिकोपलस्य निर्मिताऽपरा मूर्तिरानाय्य प्रतिष्ठाप्य चार्चनीया। घृतविहीनो भोगो न निवेद्यते नारायणाय नाधिकं चेदल्पं तु प्रहीयतामवश्यम्–इत्यादिकथनानि सुतरामेषां कृते कथयन्ति। रासमण्डलस्य रामलीलाया वान्ते सीतारामाभ्यां राधाकृष्णाभ्यां वाऽमी भिक्षां याचयन्ति। इत्यादिवृत्तानि भवन्त एव विमृशन्तु। कियतो महतः शोकस्येयं वर्तते वार्ता। वरम्, निगद्यताम्–"सीतारामादयः किमीदृशा दरिद्रा भिक्षुकाश्चासन्निति" ! अयममीषामुपहासो निन्दा चेयं न चेत्किमस्ति खलु ? अनेन निजमाननीयनरवराणामतितरां भवति निन्दा। वरम्, यदेमेऽविद्यन्त तदा सीतां रुक्मिणीं लक्ष्मीं पार्वतीञ्च रथ्यायां कस्मिन्नपि निकेतने वा समुत्थाप्य पूजकाः—

"आगम्यतामासां दर्शनं विधीयतां पूज्यतां किमपि चोपह्रियतामित्यवादिष्यन् यदि तर्हि सीतारामादय एषां मूर्खाणां कथनेनेदृशं कर्म कदापि नाकरिष्यन्नापि च कर्तुमादेक्ष्यन् प्रत्युत ये केऽपि तेषामीदृशमुपहासमकरिष्यंस्तान् कदाप्यदण्डयित्वा नास्थास्यन्। आम्, यदैते तैर्नादण्डचन्त तदैतेषां कर्मभिरेव पूजारयो मूर्तिविरोधिभिर्भूयसा प्रसादं (दण्डं) दापिताः, साम्प्रतमपि प्रसादो लभ्यते। यावच्चेदं दुष्कर्म न परिहरिष्यन्ति तावदमी लप्स्यन्त एव प्रसादम्। प्रतिदिनमार्यावर्तस्य या महती हानिः पाषाणादिमूर्तिपूजकानाञ्च यः पराजयः स एतैः कर्मभिरेव जायत इत्यत्र कः सन्देहः? पापस्य हि दुःखं फलम्। आसामेव पाषाणादिमूर्तीनां विश्वासेन भूयसी हानिरजायत। न ह्रास्यन्ति चेदनुदिनमधिका हानिर्जनिष्यते।

अमीषु वाममार्गीयाः प्रबलागसस्सन्ति। यदामी शिष्यं विदधति तदा साधारणाय जनाय—

**दं दुर्गायै नमः। भं भैरवाय नमः। ऐं ह्रीं क्लीं चामुण्डायै विच्चे।**

इत्यादिमन्त्रानुपदिशन्ति। वङ्गदेशे च विशेषत एकाक्षरीमन्त्रमुपदिशन्ति यथा—

**ह्रीं, श्रीं, क्लीं** ।।—शावरतं० वं० प्र० ४४

इत्यादि। धनाढ्यानां पूर्णाभिषेकं कुर्वन्ति। ईदृशा एव दशमहाविद्यानां मन्त्राः—

**ह्रीं ह्रीं ह्रूं बगलामुख्यै फट् स्वाहा** ।।—शा० प्रकी० प्र० ४१

क्वचित् क्वचित्—

**ह्रूं फट् स्वाहा** ।।—कामरत्नतन्त्रबीजमन्त्र ४

अथ च मारणमोहनोच्चाटनविद्वेषणवशीकरणादिप्रयोगं वितन्वन्ति। तन्मन्त्रैस्तु किञ्चिदपि न सञ्जायते किन्तु सकलमपि क्रियया कुर्वते। यदा कस्यचिन्मारणस्य प्रयोगं विदधति तदेतः प्रयोजयितुरन्तिकाद् द्रव्यमादाय जिघांसितस्य जनकस्य मृत्तिकायाः पिष्टस्य वा प्रतिमापुत्तलं निर्मिमते। तस्य वक्षोनाभिकण्ठेषु च्छुरिकां निवेशयन्ति। नेत्रहस्तचरणेषु च कीलकान् निखनन्ति। तदुपरि भैरवस्य दुर्गाया वा मूर्त्ति विरच्य करे त्रिशूलं प्रदाय तदीयहृदये संयोजयन्ति। वेदिमेकां विधाय मांसादिकं जुह्वति। ततश्च दूतादिं प्रेषयित्वा तं विषादिना हन्तुमुपायमनुतिष्ठन्ति। यदि स्वपुरश्चरणानन्तर एव स निहन्यते तदात्मानं भैरवस्य देव्या वा सिद्धं वदन्ति "भैरवो भूतनाथश्च" इत्यादि पठन्ति च।

**मारय मारय, उच्चाटय उच्चाटय, विद्वेषय विद्वेषय, छिन्धि छिन्धि, भिन्धि भिन्धि, वशीकुरु वशीकुरु, खादय खादय, भक्षय भक्षय,**

**त्रोटय त्रोटय, नाशय नाशय, मम शत्रून् वशी कुरु मम शत्रून् वशी कुरु, हुं फट् स्वाहा ॥** —कामरत्नतन्त्र उच्चाटनप्रकरण मं० ५-७

इत्यादिमन्त्रान् जपन्ति । यथेष्टं मद्यं मांसादिकञ्च पिबन्त्यश्नन्ति च भ्रुवोर्मध्ये सिन्दूररेखां विरचयन्ति । कदाचित् कालीप्रभृतये कमपि मनुजं प्रगृह्य विशस्य हुत्वा च किञ्चिदमुष्य मांसमप्यश्नन्ति । यः कश्चन भैरवी-चक्रे व्रजेन्मद्यं न पिबेन्मांसञ्च नाश्नीयाच्चेत्तं निहत्य जुह्वति । तेषां मध्ये यो घोरकर्मा भवति स मृतमनुजस्यापि मांसं खादति । अजरीबजरीकारिणो मनुजा मलं मूत्रमपि खादन्ति पिबन्ति च ।

एके चोलीमार्गीया अपरे बीजमार्गीया अपि भवन्ति । चोलीमार्गीयाः कस्मिन्नपि गुप्तस्थले प्रच्छन्नभूमौ वैकं निलयं कलयन्ति । तत्र स्त्रियः पुरुषाः पुत्राः पुत्र्यो भगिन्यो जनन्यः पुत्रवध्वश्चेति सकलाः सङ्गम्य सम्भूय चान्योन्यं मांसमदन्ति मदिरां पिबन्ति च । ललनामेकां निरम्बरां विरच्य तस्या गुप्तेन्द्रियमर्चन्ति निखिलपुरुषास्ताञ्च दुर्गादेवीं वदन्ति । पुरुषमेकं दिगम्बरं विधाय तदीयगुप्तेन्द्रियं पूजयन्ति सकलललनाः, यदा मदिरां निपीय निपीयोन्मत्ता भवन्ति तदा सर्वासां योषितां वक्षोऽशुंकानि चोलिकेत्यभिधीय-मानानि कस्मिँश्चिन् महति मृण्मये पात्रे संयुक्तानि निधायैकैकः पुरुषस्तस्मिन् करं निक्षिप्य यस्य पाणौ यस्या वस्त्रं समागच्छेत्कामं सा जननी भगिनी कन्या पुत्रवधूर्वा किं न स्यात् किन्तु तत्काले तु तस्य पत्नी भवति । मिथः कुकर्म-करणेनात्युन्मत्तभावधारणेन चामी पादत्राणादिभिः कलहायन्तेतराम् । यदा प्रभाते प्रविरलतमसि निजनिजसदने समासीदन्ति तदा जननी जननी दुहिता दुहिता भगिनी भगिनी पुत्रवधूश्च पुत्रवधूर्जायते । बीजमार्गीयाश्च मैथुनं विधाय जले वीर्यं निक्षिप्य सम्मेल्य च पिबन्ति । पामरा इमे कर्मभिरेभिर्मुक्तिः साध्यत इति मन्यन्ते । विद्याविवेकसौजन्यादिविहीना भवन्ति ।

**प्र०**—शैवमतीयास्तु समीचीनास्सन्ति ?

**उ०**—कुतो नु सन्ति समीचीनाः ? "यथा प्रेतनाथस्तथा भूतनाथः" इतिवद् यथा वाममार्गीया मन्त्रोपदेशादिभिस्तेषां द्रव्यं हरन्ति तथैव शैवा अपि "ओं नमः शिवाय" इत्यादिपञ्चाक्षरादिमन्त्रानुपदिशन्ति । रुद्राक्षान् भस्म च धारयन्ति । मृत्तिकायाः पाषाणादेर्वा लिङ्गानि विरच्यार्चयन्ति । "हर हर बं बम्" इति अजशब्दमिव बड़बड़बडेति मुखेन प्रजल्पन्तः शब्दं वितन्वन्ति च तस्येदं कारणमुच्यते—"तालिकावादनेन बं बम्मिति शब्दोच्चारणेन च पार्वती प्रसन्ना महादेवश्चाप्रसन्नो भवतीति ।" यतो भस्मासुरपुरतो महादेवः पलायत यदा तदा बं बम्मिति शब्दपुरस्परं परिहासेन तालिका अवाद्यन्त । कपोलवादनेन चाप्रसन्ना पार्वती महादेवश्च प्रसन्नो भवति यतः पार्वती-पितुर्दक्षप्रजापतेर्मस्तकं छित्वा पावके निक्षिप्य तत्कलेवरेऽजमस्तकमायोज्यत ।

अजशब्दसमानं कपोलवादनं किल तस्यैवानुकरणं मन्यते । शिवरात्रिप्रदोष-व्रतान्यनुतिष्ठन्ति । एवमादिभिर्मुक्तिं मन्यन्ते । तस्माद् यथा वाममार्गीया भ्रान्तास्सन्ति तथैव शैवा अपि । एषु विशेषतो दीर्णकर्णा नाथा गिरीयाः पुरीया वन्या आरण्याः पार्वताः सागरा गृहस्था अपि च शैवा भवन्ति । केऽपि "हयद्वयमारोहन्ति" अर्थाद् वामं शैवञ्चोभयमतं मन्यन्ते । कियन्त एव वैष्णवा अपि तिष्ठन्ति । तेषां तन्त्रस्यायं श्लोकः—

**अन्तःशाक्ता बहिश्शैवाः सभामध्ये च वैष्णवाः ।**
**नानारूपधराः कौला विचरन्ति महीतले ।।**

अभ्यन्तरे शाक्ता वाममार्गीया बहिश्शैवा रुद्राक्षभस्मधारिणः सभायाञ्च वैष्णवा विष्णोरुपासका वयमिति वादिनः, इत्थं नानारूपधरा वाममार्गिणो जना अवनितले विचरन्ति ।

**प्र०**—वैष्णवास्तु समीचीनास्सन्ति ?

**उ०**—अये ! कथं नु समीचीनाः ? यथा ते तथैते सन्ति । दृश्यताम्—वैष्णवानां लीला—आत्मानं विष्णोर्दासं मन्यन्ते । तेषु श्रीवैष्णवा ये चक्राङ्किता भवन्ति ते स्वं सर्वोपरिवर्तमानं मन्यन्ते तन्न लेशतोऽपि खलु !

**प्र०**—किं न खलु लेशतोऽपि । अशेषतः खलु वर्तते । अवलोक्यताम्—ललाटे नारायणचरणारविन्दोपमं तिलकं तन्मध्ये च पीतवर्णा रेखा श्रीर्भवति अत एव वयं श्रीवैष्णवा उच्यामहे । नारायणमेकं विहायान्यं कमपि न मन्यामहे । महादेवस्य लिङ्गमपि नालोकयामः । यतोऽस्माकमलिके श्रीर्विराजते सा लज्जते । आलमन्दारादिस्तोत्राणां पाठं कुर्मः । नारायणं मन्त्रपूर्वकं पूजयामो मांसं नाश्नीमो मदिरामपि न पिबामस्तत्कथं न वयं साधवः खलु ?

**उ०**—भवदीयतिलकमिदं हरिपदकृतिरिति पीतरेखाञ्चेमां श्रीरिति व्यर्थं मन्यन्ते भवन्तः । यत इदं हस्तकौशलं ललाटचित्रञ्च वर्तते । यथा हि गजस्य ललाटं चित्रविचित्रं क्रियते कारुणा । भवल्ललाटे विष्णुपदचिह्नं कुत आयात् ? किं कोऽपि वैकुण्ठमुपगम्य विष्णोः पदचिह्नं ललाटे विधायागमत् ?

**विवेकी**—श्रीर्जडा चेतना वा ?

**वैष्णवः**—चेतना ।

**वि०**—तदियं रेखा जडत्वान्नास्ति श्रीः । वयं पृच्छामः—श्रीर्निर्मिता-स्त्यनिर्मिता वेति" ? यद्यनिर्मितास्ति तदा नेयं श्रीः । यत इमां तु भवन्तो नित्यं निजकरेण रचयन्तीति श्रीरियं भवितुं नार्हति । भवतां भालस्थले श्रीर्यदि भवेत्तदा कियन्त एव वैष्णवाः किमिति दुर्मुखाः शोभारहितवदना विलोक्यन्ते ? ललाटे श्रीः—लक्ष्मीर्विराजते चेद् गृहे गृहे भिक्षां याचमानाः

सदावर्तीयमन्नमादायोदरञ्च बिभ्राणाः किमिव परिभ्रमन्ति ? इदं दुराग्रहवतां निर्लज्जानाञ्च वृत्तं यल्ललाटे लक्ष्मीर्भवेत्कृत्यञ्च महादरिद्राणां स्यात्।

एषु कश्चन "परिकालनामा" वैष्णवो भक्त आसीत्। स स्तेयं लुण्ठनञ्च विधाय कपटमाकलय्य परधनमपहृत्य वैष्णवानामुपकण्ठे निधाय प्रासीदत्। एकदाऽमुना चौरिकायां कोऽपि पदार्थो नालभ्यत यमसावपहरेत्। तेन व्याकुलस्सन्नयं व्यचरत्। नारायणो व्यज्ञासीत्—"मम भक्तो दुःखं विन्दत इति"। अथ श्रेष्ठिनो रूपं परिगृह्य सुन्दरैरंगुलीयकाद्याभरणैरत्मानमलङ्कृत्य स्यन्दनमारुह्य तत्सम्मुखमागमत्। तदा तु परिकालो रथान्तिकमुपगम्य "सकलं पदार्थमविलम्बितमुत्तारय नोचेत्त्वां हनिष्यामीति" श्रेष्ठिनमवादीत्। उत्तारयन्नङ्गुलीयकोत्तारणे व्यलम्बतासौ। परिकालो नारायणस्य करशाखां विच्छिद्यांगुलीयकमग्रहीत्। नारायणोऽतिप्रसन्नो भूत्वा चतुर्भुजवपुर्विधाय तस्मै दर्शनमददान्यगादीच्च तम्—"त्वं मम प्रियतमो भक्तोऽसि। यतः सकलं वित्तमपहृत्य विलुण्ठ्य चोरयित्वा च सेवस इति त्वं धन्योऽसीति"। ततोऽयमुपगम्य वैष्णवानामभ्यर्णे सकलमलङ्कारं न्यधत्त।

एकदा परिकालं कोऽपि सांयात्रिको भृत्यं विधाय पोते समुपवेश्य देशान्तरमनैषीत्। तस्माद् देशादुडुपे पूगीफलं संभृतम्। एकं क्रमुकफलं भित्त्वाऽर्द्धशकलं विधाय परिकालो वणिग्वरम्—"इदं मदीयमर्द्धं पूगीफलं पोते निधेहि, विलिख्य च देहि यदस्मिन् प्लवेऽर्द्धक्रमुकफलं परिकालस्य वर्तते" इति समगादीत्। "अपि त्वं यथेच्छं सहस्रं पूगीफलमादद्याः" इति पोतवणिगभाषिष्ट। परिकालोऽब्रवीत्—"नाहमधार्मिको यदसत्यतया गृह्णीयामहं त्वर्द्धं वाञ्छामीति"। वणिग् वराकस्सरलान्तःकरण आसीत्, स लिखित्वाऽददात्। यदा स्वदेशतटनगरमुपासदत् प्रवहणं क्रमुकफलञ्चोत्तारयितुं प्रवृत्तं जनैस्तदा परिकालोऽभाषत—"ममार्द्धः पूगो दीयतामिति"। सार्थवाहस्तस्मै तमेवार्द्धं पूगमदात्। तदा परिकालः—"मम तु पोतेऽर्द्धः क्रमुको वर्तते तस्मादर्द्धभागं ग्रहीष्यामीति" विवादमकरोत्। राजपुरुषपर्यन्तं विवादो गतः। परिकालस्तु अनेनार्द्धपूगप्रदानमलेखि," इति व्याहृत्य वणिजस्तं लेखमदर्शयत् नैगमो बहुलमकथयत्परं नामनुतासौ। अर्द्धं पूगजातमुपादाय वैष्णवेभ्यः समर्पितवान्। तदा तु प्रासीदन्नतितरां वैष्णवाः, अद्यावधि तस्य तस्करस्य लुण्ठकस्य परिकालस्य मूर्तिं मन्दिरेषु निदधति। कथेयं भक्तमाले लिखिताऽस्ति। बुद्धिमन्तस्तत्र विलोकयन्तु यद् वैष्णवास्तदीयसेवका नारायणश्च इति त्रयी तस्करमण्डली वर्तते न वा ? यद्यपि मतान्तरेषु कोऽपि किञ्चिदंशतः सज्जनोऽपि भवति तदपि तस्मिन् मते स्थित्वा सर्वथा साधुर्भवितुं न प्रभुः। दृश्यतामधुना वैष्णवेषु वैमनस्यम् ! भिन्नजातीयं तिलककण्ठमालादिकं धारयन्ति। रामानन्दीया उभयतो गोपीचन्दनं मध्ये

च रक्ततिलकं नीमावतीया द्वे अपि सूक्ष्मे रेखे मध्ये च कृष्णविन्दुं माधवाः कृष्णरेखां गौडवङ्गीया असिधेनुकासन्निभां रेखां रामप्रसादीयाश्च द्वयोस्तिलकरेखयोर्मध्ये शुक्लवर्णं वर्तुलं तिलकञ्च विरचयन्ति। रामानन्दीया नारायणस्य हृदये रक्तरेखां लक्ष्म्याश्चिह्नं गोस्वामिनश्च श्रीकृष्णचन्द्रस्य हृदि राधा विराजत इत्यादिविलक्षणममी कथयन्ति।

कथैका भक्तमाले लिखिताऽस्ति—कश्चिदेको मनुजो महीरुहतले सुष्वाप। शयान एवासौ पञ्चत्वमाप। उपरिष्टाद् वायसो मलमुत्ससर्ज। तन्मलं तदीयललाटे तिलकाकृतिर्बभूव। तत्र यमकिङ्करास्तं नेतुं समाययुः। अत्रान्तरे विष्णुदूता अपि समासेदुः। ते विवादं चक्रिरे। यमकिङ्करा ऊचुः—"अस्माकं स्वामिनो निदेशानुसारं वयमेतं यमलोकं नेष्यामः" इति। विष्णुदूता बभाषिरे—"अस्मत्स्वामिन एतं वैकुण्ठं नेतुमादेशोऽस्ति। आलोक्यतामस्य ललाटे वैष्णवानां तिलकं विद्यते। कथमेनं नेष्यन्ति भवन्तः?" इति। तदा तु यमसेवकास्तूष्णीकाः संवृत्य यथागतं ययुः। विष्णुदूताः सुखेन तं वैकुण्ठं निन्युः। नारायणस्तं वैकुण्ठे निदधे। निरीक्ष्यताम्—यदाऽकस्मात् तिलकसम्भवनस्येदृशं माहात्म्यमस्ति तदा ये स्वेन प्रेम्णा करेण च तिलकं कलयन्ति ते नरकाद् विमुच्य वैकुण्ठं गच्छेयुश्चेदत्र किमस्ति चित्रम्। वयं पृच्छामः—"यदि सूक्ष्मतिलककरणेन वैकुण्ठं व्रजेयुस्तर्हि सकलमुखलेपनेन वपुषि निखिले विलेपनेन वा नु वैकुण्ठादप्युपरिलोकं प्रयान्ति न वेति?" अत इमा अखिलवार्ता व्यर्था वर्तन्ते। साम्प्रतमेतेषु बहवो भसितशरीराः काष्ठस्य कौपीनं परिधायानले तप्यन्ते, जटां वर्द्धयन्ति, सिद्धस्येव वेषं भजन्ति, बका इव ध्यानावस्थिता भवन्ति, भङ्गादिमादकद्रव्याणि सेवन्ते, शोणितशोणशोभानि नेत्राणि वितन्वन्ति, सर्वेभ्यः प्रसृतिपरिमाणमन्नं पिष्टं वराटकान् द्रव्यञ्च याचन्ते गृहमेधिनां तनयान् वञ्चयित्वा शिष्यान् विदधति च। प्रायेणामीषु श्रमजीविनः कर्मकरा जना भवन्ति। कश्चिद् विद्यां पठेच्चेत्तं पठनान्निवारयन्त्युपदिशन्ति च—

**पठितव्यं तदपि मर्तव्यं दन्तकटाकटेति किं कर्तव्यम्॥**

सतां विद्यापठनेन किं प्रयोजनम्? विद्याध्येतारोऽपि हि म्रियन्ते। ततो दन्तनिपीडनं किमिति विधेयम्? साधूनां तु चतुर्षु धामसु परिभ्रमणम्, सतां सेवनं रामस्य च भजनमेव कार्यम्। यदि केनापि मूर्खताया अवतारोऽविद्याया मूर्तिर्वा नालोक्यत तेन भस्मलेपिनां दर्शनं विधेयम्। तेषामभ्याशे कोऽपि गच्छति चेत्ते तं ताञ्च—वत्स? वत्से? इति वदन्ति। कामं स सा च खलु तेषां जनक इव जननीव च वा किं न स्यात्। यथा भस्मलेपी साधुजनस्तथैव "रूखड़सूखड़गोदड़ियेजमातवालेसुतरेसाईं, अकालीकनफटे जोगी औघड़" इति विख्याताः सकलास्साधव इमे समानशीलव्यसनास्सन्ति।

कस्यचन खाखीसमाख्यस्य साधोः शिष्यः—**"श्रीगणेशाय नमः"** इति वाक्यं रटन् कूपोपरि जलं ग्रहीतुमगात्। तत्रैकः पण्डितो निषण्ण आसीत्। स तं—**"स्रीगनेसाजनमें"** इति रटन्तमुपश्रुत्यावदत्—"अयि साधो! अशुद्धं रटसि त्वम्। **"श्रीगणेशाय नमः"** इति घोषयेति। स झटिति कमण्डलुं प्रपूर्य गुरुनिकटमयासीत्। अवोचच्च—"कोऽपि ब्राह्मणो मम रटनमिदमशुद्धं कथयतीति"। इत्थं निशम्याञ्जसा खाखीसमाख्यो गुरुरुत्थाय कूपमुपासदत् पण्डितञ्चावदत्—"किमये ; मदीयशिष्यं त्वं प्रतारयसि ? किं त्वमपाठी रे! गुरुलण्ठ! पश्य—त्वमेकविधं पाठं जानीषे। वयं तु त्रिविधं पाठं जानीमहे। यथा—**"स्रीगनेसाजन्नमें", स्रीगनेसायन्नमें", "श्रीगनेसायनमें"** इति।

**पण्डितः**—श्रूयतां साधो ? विद्याया वार्ताऽतीवकठिना खलु। पठनं विना नायाति सा।

**खाखी**—तूष्णीमेधि रे! सकला विद्वांसः पराभूता अस्माभिः। भङ्गपानेन समं सद्य एवाखिलास्ते निगिलिताः। सतां सदनं श्रेष्ठम्। वराकस्त्वं किमिव जानीयाः खलु ?

**प०**—दृश्यताम्—यदि भवान् विद्यामपठिष्यत्तदा किमीदृशमपावदिष्यत् ? भवतस्सर्वविधं ज्ञानमभविष्यत्।

**खा०**—अये! त्वमस्माकं गुरुर्भवसि ? न शृणुमस्तवोपदेशम्।

**प०**—कुतः श्रूयेत ? बुद्धिरेव नास्ति। उपदेशस्य श्रवणावगमनयोरपेक्ष्यते विद्या।

**खा०**—यः सकलानि वेदशास्त्राणि पठित्वा साधून् न मानयेत्स लेशतोऽपि नापठदिति मन्यताम्।

**प०**—आम्, वयं सत्पुरुषान् परिचरामः परं भवादृशान् समुच्छृङ्खलान् दुर्जनान् न भजामः। यतः सन्तो विद्वांसो धार्मिकाः परोपकारिणः पुरुषा एव साधव उच्यन्ते।

**खा०**—पश्य, वयं नक्तं दिवा दिगम्बरास्तिष्ठामः। अग्निना तप्यामहे, शतशो गञ्जाचरसादिधूम्रपानं कुर्मः, पुष्कलं भङ्गं पिबामो गञ्जाभङ्गधत्तूरपर्णानां शाकं भक्षयामः संख्यां विषमहिफेनगोलिकामपि द्रुतं निगिलामो मत्तदशायामहर्निशमशोकास्तिष्ठामः संसारं किमपि न गणयामो भिक्षां याचित्वा रोटिकां कृत्वा चाश्नीमो रात्रिमखिलामीदृशः कासस्समुद्भवति येन पार्श्वशायिनां कदापि निद्रा नालिङ्गेन्नेत्राणि—इत्यादयः सिद्धयस्साधुत्वञ्चास्मासु वसतीति पुनः त्वं किमिवास्मान् निन्दसि ? बुध्यस्वायि ब्राह्मण! त्वं नः पीडयिष्यसि चेत्त्वां भस्मसात्करिष्यामो वयम्।

**प०**—सर्वाणीमानि लक्षणान्यसाधोर्मूर्खस्य गवर्गण्डस्य च सन्ति न तु

साधोः। श्रूयताम्—**"साध्नोति पराणि धर्मकार्याणि यः स साधुः"**। यः सदा धर्मयुक्तमुत्तमं कर्म कुर्वीत परोपकारे चानवरतं प्रवर्त्तेत यस्मिन् कोऽपि दुर्गुणो न स्याद् यश्च विद्वान् सत्योपदेशेन सकलानुपकुर्यात्स साधुरुच्यते।

**खा०**—अलं प्रलप्य। साधोः कर्माणि त्वं कथमिव जानीयाः। सतां सदनं सत्तमं विद्यते। केनापि साधुना समं विवादं माकार्षीः। नो चेत्पश्य—स इमां सन्दंशिकां समुद्यम्य त्वां हनिष्यति शीर्षं च ते भङ्क्ष्यति।

**प०**—वरम्, गम्यतां भस्मलेपिन्? अलङ्क्रियतां निजासनम्। मयि मा कार्षीः कोपमधिकम्? जानासि? कस्य राज्यम्? कमपि हनिष्यसि चेत्प्रग्रहीष्यसे, कारावासं भोक्ष्यसे वेत्रयष्टिप्रहारमनुभविष्यसि च कश्चित्त्वामेव वा प्रहरिष्यति चेत् किं करिष्यसि? नेदं साधोर्लक्षणम्।

**खा०**—आगच्छायि शिष्य! कस्य राक्षसस्य मुखं दर्शितम्।

**प०**—त्वं कदापि कस्यचन महात्मनः सङ्गतिं नाकरोः। नो चेदीदृशो जडो मूढश्च नास्थास्यः।

**खा०**—स्वयमेव महात्मानो वयं खलु। न नः कस्याप्यन्यस्यावश्यकता।

**प०**—यस्य भाग्यं विनश्यति तस्य त्वादृशस्येव बुद्धिरहङ्कारश्च जायते। अथ खाखीनामा साधुः स्वासनमुपेयिवान् पण्डितश्च निजनिलयम्।

यदा सन्ध्याऽऽर्त्तिकं समवसितं तदा तं खाखीसमाख्यं साधुं वृद्धमवगम्यान्ये बहवः खाखीनामानः साधवो दण्डवद् दण्डवदिति वदन्तः सांष्टाङ्गं प्रणम्योपाविशन्। स स्थविरः खाखीसाधुः समप्राक्षीत्—"अरे रामदास! त्वं किमपठ इति"?

**रामदासः**—महाराज! मया "वेस्नुसहसरनाम" पठितम्।

**खा०**—अरे गोविन्ददास! त्वया किमधीतम्?

**गोविन्दः**—अहं "रामसतवराजम्" अपठमेकस्मात्खाखीसाधोः सकाशात्। अथ रामदासोऽपृच्छत् "महाराज! भवता किमधीतम्"? इति।

**खा०**—अस्माभिर्गीता पठिता।

**रा०**—कस्मात्?

**खा०**—तूष्णीमास्व रे बाल? वयं कमपि गुरुं न कुर्महे। पश्य—वयं "परागराजे" न्यवसाम। अक्षरमपि तदा वयं नाजानीम। यदा कमपि लम्बमानशाटिकाधारिणं पण्डितमपश्याम तदा गीतागुटिकायाम्—"अस्य शिखाशालिनोऽक्षरस्य किं नामधेयम्" इत्यपृच्छाम। एवं पृच्छन्तो वयमष्टादशगीताध्यायानरटाम। गुरुरेकोऽपि न कृतः। अये! ईदृशान् विद्याया द्वेषिणोऽवलम्ब्याविद्याराक्षसी न तिष्ठेच्चेत् क्व नु खलु सा व्रजेत्?

जना इमे मादकद्रव्यसेवनं प्रमादं कलहं भोजनं शयनं कांस्यतालताडनं घण्टाशंखादिवादनं पावकप्रदीपनं स्नानं क्षालनं सर्वदिक्षु वृथापर्यटनञ्च

परिहायान्यत् किञ्चिदपि श्रेष्ठं कर्म नानुतिष्ठन्ति। अपि कोऽपि कामं प्रस्तरमपि द्रवयेत्परममीषां खाखीसमाख्यानामात्मनो बोधयितुमतिदुष्करं वर्तते यतस्ते प्रायेण शूद्रवर्णस्थाः श्रमजीविनः कृषीवलाः कर्मकरादयः स्वकर्म विहाय केवलं भस्म विलिप्य विरागिभस्मिप्रभृतयो भवन्ति। विद्यासत्सङ्गादिकस्य माहात्म्यममी नावगन्तुं प्रभवन्ति। एषु नाथानां मन्त्रः—**"नमः शिवाय"** इति। भस्मलेपिनाम्—**"नृसिंहाय नमः"** इति। रामभक्तानाम्—**"श्रीरामचन्द्राय नमः"**, **"सीतारामाभ्यां नमः"** वेति। कृष्णोपासकानाम्—**"श्रीराधाकृष्णाभ्यां नमः"** **"नमो भगवते वासुदेवाय** चेति"। वङ्गीयानाञ्च—**"गोविन्दाय नमः"**, इति। एषां मन्त्राणां कर्णे पठनमात्रेणैते शिष्यान् विदधति। उपदिशन्ति चेत्थम्—"वत्स! तुम्ब्या मन्त्रं पठ"। यथा—

**जल पवितर सथल पवितर और पवितर कुआ।**
**शिव कहे सुन पार्वती तूंबा पवितर हुआ॥**

वरमीदृशा जनाः कदापि साधवो विद्वाँसो वा भवितुमथवा जगदुपकर्तुमर्हन्ति किमु? भस्मलेपिसाधवोऽहर्निशं काष्ठानि करीषाणि च ज्वलयन्ति। एकस्मिन् मासे कियतामेव रूप्याणामिन्धनानि भस्मसात्कुर्वन्ति। यद्येकमासस्यैधसां मूल्येन कम्बलादिवासांसि क्रीणीयुरिमे तदा शतांशधनेनापि सानन्दं तिष्ठेयुः परं कुत आगच्छेदियती बुद्धिरेषां सकाशम्? अथ चामुनैवाग्नितापनेनात्मानममी तपस्विनं वदन्ति। अनया रीत्या तपस्विनः स्युश्चेद् वन्या जना एभ्योऽप्यधिकास्तपस्विनस्स्युः। यदि जटावर्द्धनेन भसितलेपनेन तिलककरणेनैव तपस्विनो भवेयुर्जनास्तदा तु निखिला एवेदं कर्तुं प्रभवेयुः। इमे बहिस्त्यागस्वरूपा अभ्यन्तरे च महासङ्ग्रहकर्त्तारो भवन्ति।

**प्र०**—कबीरमार्गीयास्तु सन्ति साधवः?

**उ०**—नैव।

**प्र०**—कथं न साधवः? पाषाणादिमूर्तिपूजां प्रतिषेधन्ति! कबीरमहोदयः पुष्पेभ्य उत्पन्नोऽन्तेऽपि पुष्परूपो जातः। ब्रह्मविष्णुमहादेवा अपि यदा नोदपद्यन्त तदानीमपि कवीरमहाराज आसीत्। महान् खलु सिद्धोऽयम्। ईदृशो यद् यां वार्तां वेदाः पुराणानि चापि वेत्तुं न पारयन्ति तां कबीरो वेत्ति। कबीर एवादर्शयत् सत्यमार्गम्। "सत्यनाम कबीर" इत्यादिमन्त्रोऽस्य वर्तते।

**उ०**—पाषाणादिं परिहाय पल्यङ्कतूलिकोपबर्हपादुकाज्योतिर्दीपादिपूजनं पाषाणमूर्तेः पूजनान्न्यूनं नास्ति। किं कबीरमहोदयो भ्रमरः कोरको वाऽभूद् यः पुष्पेभ्यस्समुत्पन्नः? अन्ते च पुष्पं सञ्जातः? अत्र किल या कथाऽऽकर्ण्यते सैव सत्या भवेद् यत् कोऽपि तन्तुवायः काश्यां पुरा प्रतिवसति

स्म। नासीदमुष्य किमप्यपत्यम्। एकदा प्रभातप्रायायां विभावर्यां कुविन्दोऽयं कस्यांचन प्रतोल्यां गच्छन् मार्गस्यैकपार्श्वे कस्यामपि करण्डिकायां पुष्पाभ्यन्तरे वर्तमानं तस्यामेव निशायामुत्पन्नं बालकमद्राक्षीत्। तमसौ समादाय गृहमानीय निजगृहिण्यै प्रादात्। सा सुतनिर्विशेषमपालयत्। यदासौ युवा जातस्तदा तन्तुवायकर्माकार्षीत्। अथैकदा कस्यचित् पण्डितस्यान्तिकं संस्कृतमध्येतुमगमत्। स एतमवामन्यत प्रावोचच्चाहं तन्तुवायं न पाठयामीति। अनेनैव प्रकारेणायं कियतामेव पण्डितानां सकाशमयासीत्परं नापाठयदेनं कोऽपि। असंस्कृतया प्रणीतया वाचा तदायं तन्तुवायादिनीचजनानुपादिशत्। समादाय वीणामगायत्। भजनानि व्यरचयत्। विशिष्य चासौ पण्डितान् शास्त्राणि वेदाँश्चानिन्दत्। केचन मूढा अस्य जाले निपतिताः। यदाऽयं दिवंगतस्तदा जनैरसौ सिद्ध आसीदिति विख्यातः। यद् यदसौ जीवितदशायां प्राणयतत्तत्तदीयशिष्या अपठन्। कर्णौ पिधाय यः शब्दो निशम्यते सोऽनहतशब्दः इति सिद्धान्तो निश्चितः, मनसो वृत्तिः "सुरतिः" उच्यते तस्याः शब्दश्रवणे नियोजनमेव सतां परमेश्वरस्य च ध्यानं समुदीर्यते। तत्र नोपसीदति कालः कुन्ताकृतिस्तिलकं चन्दनादिकाष्ठमणिमाला च धार्यते। अत्रात्मन उन्नतिः का ज्ञानञ्च किं वर्द्धयितुं पार्यंत इति मनाग् विमृश्यतां खलु? केवलमियं बालकानां केलिलीला विलसति।

प्र०—पञ्चाम्बुप्रान्ते नानकमहोदय एकं मार्गं प्रावर्तयत् सोऽपि मूर्त्ति निराकरोत्। भारतीयान् यवनमते गमनान्न्यवारयत्। साधुरपि नाजायतासौ, गृहस्थ एवास्थात्। दृश्यतां तेनाऽयं मन्त्र उपदिष्टोऽस्ति येन—'तस्याशयः समीचीन आसीदति' विज्ञायते।

**ओं सत्यनाम कर्ता पुरुष निर्भो निर्बैर अकालमूर्त अजोनि सहभं गुरुप्रसाद जप आदि सच जुगादि सच है भी सच नानक होसी भी सच ॥**

—जपजी पौड़ी १

ओ३म् इति यस्य सत्यं नामधेयमस्ति स एव कर्त्ता पुरुषो निर्भयो निर्वैरोऽकालमूर्त्तिरर्थाद् यः काले योनौ च न समायाति यश्च प्रकाशते तस्यैव जपं गुरुकृपया विधेहि। स परमात्माऽऽदौ सत्य आसीत्। युगादौ सत्यो वर्तमानकाले सत्यो भविष्यत्कालेऽपि च सत्यो भविष्यति।

उ०—नानकमहोदयस्याशयस्तु समीचीन आसीत्परं नाभूद् विद्याया लेशोऽपि। आम्, तद्देशीयग्रामाणां भाषां व्यज्ञासीत्! वेदादिशास्त्राणि संस्कृतञ्च किञ्चिदपि नावेत्। अज्ञास्यच्चेन्निर्भयशब्दं "निर्भो" इति कथमलेखिष्यत्? तत्प्रणीतं संस्कृतस्तोत्रमेवात्र निदर्शनम्। संस्कृतेऽप्यहं पदं निदध्यामित्यवाञ्छत् परं पठनं विना कथमिव संस्कृतमधिगन्तुमलम्? आम्, यैः संस्कृतं कदापि नाकर्णितं तेषां ग्राम्यजनानां सम्मुखे संस्कृतं प्रणीयासौ

संस्कृतस्यापि पण्डितोऽभविष्यत्। स्वसम्मानप्रतिष्ठायोः प्रख्यातेश्चाभिलाषमन्तरेण वृत्तमिदं कदापि नाकरिष्यत्। स्वप्रतिष्ठामयमवश्यमकामयत। अन्यथा यादृशीं भाषामज्ञासीत्तादृशमेवाकथयिष्यत्। "संस्कृतमहं नापठमित्यपि" चावदिष्यत्। यदा किञ्चिदभिमानोऽभवत्तदा प्रतिष्ठायै शाठ्यमपि कृतं स्यात्। अतएव तस्य ग्रन्थे यत्र तत्र वेदानां निन्दा स्तुतिरपि च विद्यते। यतो यद्येवं नाकरिष्यत्तदा तमपि कोऽपि वेदार्थमप्रक्ष्यत् तञ्चासौ नावोधयिष्यच्चेत्तदीयप्रतिष्ठा नष्टाऽभविष्यत्, अतः पूर्वत एव स्वशिष्यसमक्षं कुत्र कुत्रचिद् वेदविरुद्धमवदत्। क्वचित्क्वचिच्च वेदविषये समीचीनमपि न्यगदत्। यतो यदि क्वचित् समीचीनं नागदिष्यत्तदा जन एनं नास्तिकमवदिष्यत्। तस्य ग्रन्थे वेदनिन्दां पश्य। यथा—

**वेद पढ़त ब्रह्मा मरे चारों वेद कहानि।**
**साध कि महिमा वेद न जानी॥** सुखमनी पौड़ी ७। चो० ८॥
**[नानक] ब्रह्मज्ञानी आप परमेश्वर॥** सु० पौ० ८। चो० ६॥

वेदाध्येतारो दिवं गता नानकमहोदयादयः किमात्मानममरमवधारयन्त खलु? किं ते पञ्चत्वं न प्राप्ताः? वेदस्तु सकलविद्यानां निधिरस्ति परं यो वेदचतुष्टयं कथामेव कथयेत्तस्य निखिला वार्ताः कल्पितकथास्सन्ति। यदि मूढा एव साधवोऽभिधीयन्ते तदा ते वराका वेदानां महिमानं कदापि नावगन्तुं प्रभवन्ति। नानकमहाशयो वेदानेव सममानयिष्यच्चेत्तस्य सम्प्रदायो न प्राचलिष्यत्। नापि स गुरुर्भवितुमपारयिष्यत्। यतः संस्कृतविद्यां तु नैवापठदसौ तदाऽन्यान् पाठयित्वा शिष्यान् विधातुं कथं प्राभबिष्यत्? अस्ति सत्यमिदं खलु यद् यस्मिन् काले नानकमहोदयः पञ्चनदप्रान्ते समजायत तत्समये पञ्चनदप्रदेशः संस्कृतविद्यायाः सर्वथा शून्यो यवनैश्च प्रपीडित आसीत्। तदानीं कियतो जनानयं समरक्षत्। नानकमहोदयस्य जीवनकाले कोऽपि तस्य सम्प्रदायो बहवो शिष्या वा नाभवन्। अपण्डितानां हि पद्धतिरियं यत्कस्यापि मरणानन्तरं तं सिद्धपुरुषं प्रख्यापयन्ति। तदनु विपुलं माहात्म्यं विरच्य तं परमेश्वरमिव मन्यन्ते। आम्, नानकमहोदयो महाधनाढ्यो भूमिभुगपि च नासीत्। परं तदीयशिष्या "नानकचन्द्रोदये" जन्मसाखिप्रभृतिग्रन्थेषु च महान्तं सिद्धं महैश्वर्यशालिनञ्चावर्णयन्। "नानको ब्रह्मादीन् साक्षात्कृत्य बहुलं समालपत् सकला एनं समभावयन्। नानकचन्द्रस्य विवाहमङ्गले बहवस्तुरङ्गमा मतङ्गजा रथाश्च काञ्चनरजतमौक्तिकपद्मरागरत्नादिभिरलङ्कृता आसन्। अनर्घरत्नानाञ्चेयत्तैव नाभूदित" लिखितवन्तः। वरमिमे गप्पा न चेत् किं सन्ति? अत्रास्य शिष्याणां दोषोऽस्ति न तु नानकमहोदयस्य। अथामुष्यानन्तरमस्य पुत्राद् उदासिनः प्रचलिता रामदासादिभ्यश्च निर्मलाः। कियन्त एव सिंहपीठाधि-

ष्ठिता भाषां निर्माय ग्रन्थे विन्यस्तवन्तः। एषु गुरुगोविन्दसिंहो दशमो अजायत। तदनन्तरं तस्मिन् ग्रन्थे कस्यापि भाषा न सम्मेलिता किन्तु तत्कालपर्यन्तं यावन्ति लघूनि पुस्तकान्यभवँस्तानि सर्वाणि संकलय्य तेषामाबन्धो न्यबध्यत। एभिर्जनैरपि नानकस्य पश्चाद् भूयस्यो भाषा व्यरच्यन्त। कियद्भिर्विविधपुराणानां मिथ्या कथा इव कथाग्रन्था व्यरचिषत। परं ब्रह्मज्ञानी स्वयं परमेश्वरः संवृत्तः, तदुद्दिष्टां कर्मोपासनां परिहायास्य शिष्यगणोऽस्मिन्नावर्जितोऽभूत्। अनेनातीव हानिस्सञ्जाता। अन्यथा या कापि विशिष्टा परमेश्वरभक्तिरलिख्यत नानकगुरुणा तामकरिष्यँश्चेत्समीचीनमभविष्यत्।

अथोदासिनो "वयं महान्तः" इति वदन्ति। निर्मला वदन्ति—"वयं श्रेष्ठाः" इति। अकालिनः सूतरहसाईसमाख्याश्च—वयं सर्वोपरिविराजमानाः" इति वदन्ति। एषु गोविन्दसिंहो वीरवरस्सञ्जातः। एतत्पूर्वजान् यवना भृशमपीडयन्निति तेषां तद्वैरं शोधयितुमवाञ्छदसौ। परमस्य सकाशे किमपि सामग्रीजातं नासीत्। ततश्च यवनानामाधिपत्यं देदीप्यमानमभूत्। अनेनैकं पुरश्चरणमकारि प्राकाशि च—"मह्यं देवी वरं कृपाणञ्चादात्" समभ्यधाच्च—"त्वं यवनैस्समं युध्यस्व तव विजयो भविष्यतीति"। बहवो जना अस्य सहचारिणः समवर्त्तन्त। यथा वाममार्गिभिः पञ्च मकाराश्चक्राङ्कितैश्च पञ्च संस्काराः प्रवर्तिता आसंस्तथैवामीभिः पञ्चककाराः प्रवर्तिताः। युद्धोपयोगिनोऽभवन्नेषां पञ्चककाराः। प्रथमः ककारः "केशाः" येषां रक्षणेन युद्धे दण्डात्करवालाच्च किञ्चिद् रक्षणं स्यात्। द्वितीयः "कङ्कणः", यो मस्तकगतोष्णीषेऽकालिजनैर्निधीयते हस्ते च "कटकः", याभ्यां करशिरसो रक्षणं भवेत्। तृतीयः "काछाख्यजङ्घापटः" यो जानुभ्यामुपरि जङ्घायां परिहितो धावनकूर्दनकर्मणि सम्यगुपयुक्तो भवति। अयमेतदर्थमेव प्रायेण मल्लैर्नटैरपि परिधीयते येन वपुषो मर्मस्थलं रक्षितं स्यादनवरोधश्च भवेत्। चतुर्थः "कङ्कतिका" यया केशाः प्रसाध्यन्ते। पञ्चमः "कर्दः" यो रिपूणां साम्मुख्ये सति शस्त्रमिव युद्धकर्मणि समुपयुज्येत। अतएवेयं रीतिर्गोविन्दसिंहेन स्वबुद्धिमत्तया तदानीन्तने समये प्रचालिताऽऽसीत्। अथेदानीन्तने समये किमपि नोपयुज्यते तेषां धारणम्। या युद्धार्थं कर्त्तव्या वार्ता अवर्त्तन्त ता अधुना धर्मेण सम्बद्धा मन्यन्ते। मूर्तिपूजा तु न विधीयते परं ततोऽधिका ग्रन्थपूजा क्रियते। नेयं मूर्तिपूजा किमु? कस्यापि जडपदार्थस्य पुरतः शीर्षावर्जनं पूजनं वापि मूर्तिपूजैव खलु सकला। यथा मूर्तिपूजका निजनिषद्यां दृढीकृत्याऽऽजीविकामायोजयंस्तथैवैतेऽपि समायोजितवन्तः। यथा पूजका मूर्तिदर्शनं कारयन्ति दापयन्ति चोपहारं तथैव नानकमार्गीया जना ग्रन्थस्य पूजां कुर्वन्ति कारयन्ति तस्मा उपहारमपि

दापयन्ति । परं मूर्तिपूजका वेदान् यावत् सम्मानयन्ति न तावत्तानिमे ग्रन्थ-पूजकाः सम्भावयन्ति ।

आम्, इदं तु निगदितुं शक्यते यदिमे वेदान्नाशृण्वन्नाप्यालोकयन्निति किं कुर्युः ? आकर्णयेयुरवलोकयेयुश्चेद् बुद्धिमन्तो जना ये खलु दुराग्रहाविष्टा न सन्ति ते सकलसम्प्रदायवन्तोऽपि समायान्ति वेदमते । परमेतैरखिलैर्भोजनस्य विवादः प्रायेणापासार्यत । यथाऽयमपसारितस्तथा विषयासक्ति दुरभिमानञ्चापि विधूय वेदमतोन्नतिं विदध्युश्चेदतितरां सुवार्ता खलु ।

प्र०—दादूमतीयानां मार्गस्तु समीचीनोऽस्ति ?

उ०—समीचीनस्तु वेदमार्गो यो गृह्येत चेद् गृह्यतामन्यथा सततं दुःखसागरे निलीना भविष्यन्ति भवन्तः । एषां मते दादूजीनामा जनो गुर्जरदेशे समुदपद्यत । अथ जयपुरोपकण्ठे "आमेराख्यपत्तने" अवसत । तैलाजीवस्य कर्म व्यदधात् । परमेश्वरस्य सृष्टेर्विचित्रा लीला यद् दादूजीसदृशोऽपि जनोऽपूज्यत । अथाधुना वेदादिशास्त्राणामेव सकला वार्ता विहाय—"दादूराम दादूराम" इत्यस्मिन्नेव जपने मुक्तिममन्यन्त जनाः । यदा सत्योपदेशको न भवति तदानीमेवेदृशा विवादाः प्रचलन्ति ।

कियद्दिनपूर्वमेव "रामस्नेही" इति मतं शाहपुरानगरात्प्रचलितमस्ति तेन सर्वं वेदोक्तधर्ममपास्य—राम रामेत्युच्चारणमेव श्रेष्ठममन्यत । तस्मिन्नेव ज्ञानं ध्यानं मुक्तिञ्च मन्यते । परं यदा क्षुधा बाधते न खलु तदा रामनाममध्यान्निस्सरति रोटिकाशाकादिकम् । यतो भोजनादिकञ्च गृहमेधिनामेव गृहेषु लभ्यते । तेऽपि तिरस्कुर्वन्ति मूर्तिपूजां किन्तु स्वयमेव मूर्तयः सञ्जायन्ते । रमणीनां सङ्गेषु प्रायेण तिष्ठन्ति । यतो रामस्य रामां विना नानन्दो लब्धुं शक्यः खलु ।

कश्चन रामचरणनामा साधुरजायत । यस्य मतं मुख्यतो मेवाड-प्रान्तान्तर्गतात् "शाहपुरा" पत्तनात् प्रवृत्तम् । स राम रामेतिसमुच्चारणमेव परममन्त्रं तदेव च सिद्धान्तं मन्यते । तस्यैकस्मिन् ग्रन्थे—यत्र सन्तदासादिकानां वाणी विद्यते स एवं लिखति—

**भरम रोग तब ही मिटचा, रटचा निरञ्जन राई ।**
**तब जम का कागज फटचा कटचा करम तब जाइ ।।**

—साखी ।। ६ ।।

अथ विभावयन्तु बुद्धिमन्तो जनाः—"राम रामेति कथनेनाज्ञानाभिधो भ्रमो यमराजस्य पापानुकूलफलप्रदशासनं वा जनानामाचरितानि कर्माणि वापि च कदापि च्छिद्येरन् न वेति" ? केवलमिदं मनुजानां पापेषु निपातनं मनुजजन्मनश्च विनाशनं विद्यते ननु ।

अथ य एषां मुख्यो रामचरणाख्यो गुरुरजायत तस्य वचनानि—

महमा नांव प्रताप की, सुणौ सरवण चितलाइ ।
रामचरण रसना रटौ, क्रम सकल झड़ जाइ ।।
जिन जिन सुमर्या नांव कूं, सो सब उतरया पार ।
रामचरण जो वीसर्या, सो ही जम के द्वार ।।
राम विना सब झूठ बतायो ।।
राम भजत छूटचा सब क्रम्मा । चन्द अरु सूर देइ परकम्मा ।
राम कहे तिन कूं भै नाहीं । तीन लोक में कीरति गाहीं ।।
राम रटत जम जोर न लागै ।।
राम नाम लिख पथर तराई । भगति हेति औतार ही धरही ।
ऊँच नीच कुल भेद बिचारै । सो तो जनम आपणो हारै ।।
संता कै कुल दासै नांहीं । रांम रांम कह राम सम्हांहीं ।।
ऐसो कुण जो कीरति गावै । हरि हरि जन कौ पार न पावै ।
रांम संतां का अन्त न आवै । आप आप की बुद्धि सम गावै ।।

प्रथमं तु रामचरणादीनां ग्रन्थावलोकनेन विज्ञायते—"असौ कश्चन ग्रामीणः सरलस्वभावो मनुष्य आसीत् । काञ्चिदपि विद्यामयं नापठदिति" । नो चेदीदृशं गप्पं कथमलेखिष्यत् । राम रामेति कथनेन कर्मभ्यो मुच्यते जन इति केवलमयं भ्रम एषाम् । केवलमिमे स्वीयं परकीयञ्च जन्म विनाशयन्ति । यमस्य भयं तु महत्तरमस्ति परं राजसैनिकतस्करलुण्ठकव्याघ्रसर्पवृश्चिकमशकादीनामपि भयं कदापि न विनश्यति । अपि काममहर्निशं राम रामेति जप्येत तदपि किमपि न भविष्यति । यथा शर्करा शर्करेति जपनेन रसना मधुरा न भवति तथैव सत्यभाषणादिकर्मणामाचरणं विना राम रामेति रटनेन किमपि फलं न जनिष्यते । यदि राम रामेति जपनमेषां रामो न शृणोति तर्हि यावज्जीवनं जपनेनापि नासौ श्रोष्यति । यदि चाकर्णयति तदा राम रामेति द्विर्जपनमपि व्यर्थं वर्तते । एभिर्निजोदरभरणाय परेषामपि जन्मनो विनाशायेदं पाखण्डजालं व्यरचि । तदिदमत्यन्तमाश्चर्यं वयमाकर्णयामो विलोकयामश्च यन्नाम तु रामस्नेहीति विहितं परं कृत्यं तु रण्डास्नेहिन इव करोति । यत एव विलोकयामस्तत एव रण्डाः सन्तनामधारिणां सदनं समावृण्वन्ति । यदीदृशं पाखण्डजालं नाचलिष्यत्तदाऽऽर्यावर्तदेशस्य दुर्दशा किमिवाभविष्यत् ? एते निजशिष्यानुच्छिष्टं भोजयन्ति । योषितोऽपि दण्डवदवनौ निपत्य तान् प्रणमन्ति । विविक्तेऽपि रमणीनां साधूनाञ्चोपवेशनं सततं भवति । अथैषां शाखाऽपरा मारवाडदेशीयखेडापाग्रामात् प्रचलिता । तस्या अयमितिहासः—एको रामदासनामा जात्याऽस्पृश्योऽन्त्यजोऽतीवधूर्त्त आसीत् । तस्य पत्नीद्वयमभूत् । आदौ स चिरकालं विरक्तो भूत्वा सारमेयैस्साकमभुङ्क्त । तदनु वामीकूण्डापथीयः संवृत्तः । ततो राम-

देवस्य "[1]कामडिया" अभवत् । स्वपत्नीद्वयेन साकं गायन्नयं व्यचरत् । एवं विचरन्नेष "[2]सीथलग्रामे" ढेढजातीयानां गुरुणा "रामदासेन" समं समगंस्त । स एनं "रामदेवस्य" पन्थानं प्रदर्श्य स्वशिष्यमकुरुत । तेन रामदासेन खेडापाग्रामे स्वस्थानं निर्मितम् । इतश्चन्द्रेष मतं प्रचलितम् । ततः शाहपुरे च रामचरणस्य । तस्याप्येवमितिवृत्तमाकर्णितं किल यथा—"स जयपुरस्य वणिगासीत् । असौ "दांतडाग्रामे" कस्माच्चन साधोर्दीक्षामगृह्णात् । तञ्च गुरुं व्यदधात् । शाहपुरञ्चोपगम्य स्वकेन्द्रस्थानमकरोत् । सरलहृदयेषु जनेषु द्रुतं बद्धमूलं भवति पाखण्डजालमिति तत्र दृढीभूतं तत् । एषु सर्वेषूपर्युक्तरामचरणस्य वचनानां प्रामाण्येन शिष्यान् विधायोत्तमाधमानां कञ्चिदपि भेदमिमे न गणयन्ति । ब्राह्मणादिकान्त्यजपर्यन्ताः शिष्या एषु भवन्ति । अधुनापि कुण्डापथीया इवैव सन्ति यतो मृत्तिकाकुण्डेष्वेवादन्ति । साधूनाञ्चोच्छिष्टं खादयन्ति । वेदधर्मान् मातुः पितुः संसारस्य व्यवहाराच्च भ्रमयित्वा विमुखीकुर्वन्ति जनान् निजशिष्याँश्च विदधति । रामनाम च महामन्त्रं मन्वते । एतमेव च सूक्ष्मं वेदमपि प्रचक्षते । राम रामेति कथनेनानन्तजन्मकालुष्याणि विनश्यन्ति । इदमन्तरेण न भवति कस्यापि मुक्तिः । यः श्वासप्रश्वासाभ्यां समं रामरटनं निर्दिशेत्स सत्यगुरुरभिधीयते । सत्यगुरुं परमेश्वरादपि महान्तं मन्वते । तस्य च मूर्त्तिं ध्यायन्ति । साधूनां चरणान् प्रक्षाल्य पिबन्ति । यदा गुरुचरणाद् दवीयसि स्थले शिष्यो व्रजेत्तदासौ गुरोः कररुहान् श्मश्रुकूर्चकुन्तलाँश्च स्वसकाशे सन्निधाय तदीयचरणामृतमनारतमादद्यात् । रामदासहररामदासग्रोर्वाणीग्रन्थान् वेदेभ्योऽपि बहु मन्यन्ते । तस्य प्रदक्षिणामष्टौ दण्डवत् प्रणामाँश्च कुर्वते । गुरुर्यदि सन्निहितस्तदा गुरुं दण्डवत् प्रणमन्ति । स्त्रीपुरुषान् रामरामेति समानमेव मन्त्रमुपदिशन्ति । नामस्मरणेनैव च कल्याणं मन्यन्ते । परं पठने पापमवधारयन्ति । तेषां कवितेयम्—

**पंडताइ पाने पड़ी, ओ पूरबलो पाप ।**
**राम राम सुमरयां बिना, रइग्यो रीतो आप ॥**
**वेद पुराण पढ़े पढ़ गीता, रामभजन बिन रइ गये रीता ॥**

ईदृशि पुस्तकानि प्रणीतानि सन्ति । पतिशुश्रूषायां नार्याः पापं गुरुसाधुसेवायाञ्च धर्मं निगदन्ति । वर्णाश्रमान् न मन्यन्ते । ब्राह्मणो रामस्नेही न चेन्सोऽधमश्चाण्डालो रामस्नेही चेत्स उत्तमो विज्ञायते । अधुना

---

१. राजपुत्रदेशे ये "चर्मकाराः" काषायवसनं परिधाय "रामदेवादीनां" शब्देत्युच्यमानानि गीतानि तानि चर्मकारानन्यजातीयाँश्च श्रावयन्ति ते "कामडिया" उदीर्यन्ते ।

२. योधपुरराज्ये महानेको ग्रामः ।

परमेश्वरस्यावतारं न मन्वते। रामचरणस्य च वचनं यदुपर्य्युद्धृतवन्तो वयं यथा—

**भगति हेति औतार ही धरही।**

इत्यनेन भक्तेः सताञ्च हरेर्यावतारमपि मन्यन्ते। इत्यादिपाखण्ड-प्रपञ्च एषां यावानस्ति तावानखिल-आर्यावर्त्तदेशस्याहितकारको वर्त्तते। एतावतैव बुद्धिमन्तो बहुलं वेत्स्यन्ति।

**प्र०**—गोकुलीयगोस्वामिनां मतं त्वतीवोत्तमं विद्यते। दृश्यतां कीदृश-मैश्वर्यमुपभुञ्जत एते। किमिदमैश्वर्यमैश्वर्यलीलामन्तरेण भवितुं शक्यते?

**उ०**—गृहमेधिनाञ्जनानामिदमैश्वर्यं न तु किञ्चिदपि गोस्वामिनाम्।

**प्र०**—अये! किमुच्यते! गोस्वामिनां प्रतापेनैवास्ति कथं हि नोप-लभ्यतेऽन्यैरीदृशमैश्वर्यम्?

**उ०**—इतरेऽपीत्थमेव कपटप्रपञ्चं वितनुयुश्चेत्कः सन्देह ऐश्वर्यलाभे? एभ्योऽप्यधिकां धूर्त्ततां कुर्युश्चेदधिकमप्यैश्वर्यं लप्स्यन्ते।

**प्र०**—धन्योऽस्ति खलु भवान्! कोऽत्र कपटप्रपञ्चः? इयं तु सकला गोलोकलीला लसति।

**उ०**—नेयं गोलोकलीला परं गोस्वामिनामस्ति लीला। गोलोकलीला चेद् गोलोकोऽपीदृश एव भवेत्!

मतमिदं तैलङ्गदेशतः प्राचलत्। तद्यथा—कोऽपि तैलङ्गदेशीयो लक्ष्मणभट्टनामा ब्राह्मणः कृतदारपरिग्रहः कुतश्चित् कारणान्मातापितरौ गृहिणीञ्चापहाय काशीमुपगम्य संन्यासमग्रहीत्। अहमकृतविवाहमङ्गल इति चानृतमवादीत्। भाग्ययोगेन तस्य मातापितृभ्यां पत्न्या चायं काश्यां संन्यासी समजनिष्टेति समश्रावि। तस्य पितरौ भार्या च वाराणसीमुपेत्य योऽमुं संन्यासिनमकृतं तम्—"एतं कथं संन्यासिनमकार्षीद् भवान्? दृश्य-ताम्—इयमस्य युवतिर्भार्या वर्त्तते" इत्यवदन्। गृहिणी चावदत्—"यदि भवान् मम भर्तारं मत्सहधर्मिणं न कुर्यात्तदा मह्यमपि संन्यासदीक्षां ददातु श्रीमान्" इति। तदा तु समाहूयासौ—"त्वमतीव मिथ्यावादी विद्यसे? त्यज संन्यासं भज गृहाश्रमं यतस्त्वमसत्यमुदीर्य संन्यासमग्रहीरिति" प्रावोचत्। तेन पुनस्तथैव कृतः। संन्यासं विहाय तैः समं प्रातिष्ठत। दृश्यताम्—अस्य मतस्य मूलमेव कपटानृताभ्यां निबद्धमभूत्। यदा तैलङ्गदेशं ययावयं तदा तं कोऽपि ज्ञातिजनो ज्ञातौ नाङ्गीचकार। ततः स ततो निर्गम्य परि-बभ्राम भार्यया समम्। अथैकदा काशीनिकटवर्तिनश्चरणार्गढस्यान्तिकस्थे चम्पारण्यनामके अरण्ये प्रचेलतुरिमौ दम्पती। तत्र कश्चनैकं बालकं वने विहाय समन्ततो विदूरेऽनलं प्रज्वाल्य प्रययौ। यतः परित्यागी—"अनलं न ज्वलयिष्यामि चेत्साम्प्रतमेव कोऽपि जन्तुरेनं हनिष्यतीति" बुबुधे। लक्ष्मण-

भट्टस्तदीयभार्या चादाय बालं निजपुत्रं विदधाते। अथ काशीमुपगम्य तावूषतुः। यदासौ बालकस्तरुणो जातस्तदाऽस्य पितरौ दिवं गतौ। काश्यां बाल्यदशाया आरभ्य युवावस्थापर्यन्तं किञ्चिदपठदपि। पश्चादन्यत्र कुत्रचिदुपगम्यैकस्मिन् विष्णुस्वामिनो मन्दिरे शिष्यः संवृत्तः। ततः कदापि किञ्चित्कलहकारणात्पुनः काशीमगात् संन्यासञ्चोपादात्। अथ कोऽपि तादृश एव ज्ञातिवहिष्कृतो ब्राह्मणः काश्यामवात्सीत्। आसीत्तदीया तरुणी तनया। स इममवादीत्—"त्वं संन्यासमपहाय मम तनुजां विवहेति"। तथैवाभूत्। यस्य जनको यादृशीं लीलां कृतवान् कथं न तदीयतनयस्तादृशीमेव लीलां वितनुयात्खलु? तां पत्नीमादाय तत्रैवागच्छद् यत्र प्रथमं विष्णुस्वामिनो मन्दिरे शिष्यः समजायत। दारपरिग्रहणादयं ततो निरसार्यत। अथ व्रजदेशे—'यत्राऽविद्यया स्वलीलागृहमकारि तत्रोपगम्य निजमायाप्रपञ्चमनेकविधयुक्तिभिर्व्यतनोत्। मिथ्याकथाश्चापप्रथत्—"यथा श्रीकृष्णमहं साक्षादकरवम्। सोऽब्रवीन्माम्—'ये गोलोकाद् दैवीजीवा मर्त्यलोकमुपागमँस्तान् ब्रह्मसम्बन्धादिभिः पवित्रीकृत्य गोलोकं प्रेषयेति"। इत्यादीर्मूढानां प्रलोभयित्रीर्वार्ताः संश्राव्य कतिपयजनान् (चतुरशीतिसंख्यकान्) वैष्णवान् व्यदधात्। निम्नलिखितान् मन्त्राँश्च प्राणयत्। तेष्वपि भेदो व्यधायि तेन।

यथा—

**श्रीकृष्णः शरणं मम। क्लीं कृष्णाय गोपीजनवल्लभाय स्वाहा॥**

—गोपालसहस्रनाम

इमौ साधारणमन्त्रौ स्तः परं वक्ष्यमाणमन्त्रो ब्रह्मसम्बन्धविधानस्य समर्पणस्य चास्ति—

**श्रीकृष्णः शरणं मम सहस्रपरिवत्सरमितकालजातकृष्णवियोगजनिततापक्लेशानन्ततिरोभावोऽहं भगवते कृष्णाय देहेन्द्रियप्राणान्तःकरणतद्धर्मांश्च दारागारपुत्राप्तवित्तेहपराण्यात्मना सह समर्प्पयामि दासोऽहं कृष्ण तवास्मि।**

इमं मन्त्रमुपदिश्य शिष्यैः शिष्याभिश्च समर्पणं कारयन्ति। "क्लीं कृष्णाय" इत्ययं "क्लींशब्दः" तन्त्रग्रन्थस्यास्ति। अनेनेदं वल्लभमतमपि वाममार्गिणां भेदो विद्यत इति बुध्यते। अतएव गोस्वामिनः प्रायः स्त्रीसङ्गं विदधति। "गोपीजनवल्लभेति"—किं कृष्णो गोपीनामेव प्रिय आसीन्नान्येषाम्? स एव योषितां प्रियो भवति यः स्त्रैणस्स्त्रीभोगप्रसक्तः स्यान्नरः। किमीदृशः श्रीकृष्ण आसीत्? अथ "सहस्रपरिवत्सरेति"—सहस्रवर्षगणना वृथाऽस्ति। यतो न खलु सर्वज्ञो वल्लभस्तदीयशिष्याश्च। किं कृष्णवियोगः सहस्रवर्षेभ्योऽजायत? नन्वद्यपर्यन्तमर्थाद् यदा वल्लभस्य मतं जन्मापि च नाभूत्ततः प्राक् स्वीयान् दैवीजीवानुद्धर्तुं किमिति नागमत्? तापक्लेशौ पर्यायवाचिनौ शब्दौ। अनयोरेकस्य ग्रहणमुचितमासीन्नतु द्वयोः। अनन्तशब्दस्य पाठ एव निरर्थकः।

यतोऽनन्तशब्दो निधीयेत चेत्सहस्रशब्दस्य पाठो न निधेयः। अथ च सहस्र-शब्दो निधेयेत चेदनन्तशब्दपाठः सर्वथा निरर्थको विद्यते। यदि चानन्तकाल-पर्यन्तं तिरोहित आच्छादितः स्यात्तस्य मुक्तये वल्लभस्यास्तित्वमपि व्यर्थं सम्पद्यते। यतोऽनन्तस्यान्तो न भवति। वरम्, देहेन्द्रियप्राणान्तःकरणतद्धर्म-स्त्रीगृहपुत्रप्राप्तधनानि कृष्णाय कथं नु समर्पयेत्? कृष्णो हि पूर्णकामत्वात् कस्यापि देहादीनामभिलाषं कर्तुं न पारयति। देहादीनां समर्पणमपि न सम्भाव्यते यतो देहस्यार्पणेन—नखशिखाग्रपर्यन्तो देह उच्यते तत्र यत् किमपि समीचीनमसमीचीनं वा वस्तु मलमूत्रादिर्विद्यते—तस्याप्यर्पणं कथं नु कर्तुं पार्येत? यानि च पापपुण्यरूपाणि कर्माणि भवन्ति तेषां कृष्णार्पणेन तत्फलभोक्तापि कृष्ण एव भवेत्। नाम तु कृष्णस्य गृह्णन्ति समर्पणञ्च स्वस्मै कारयन्ति। यत् किञ्चिद्देहे मलमूत्रादिर्विद्यते तदपि गोस्वामिने कथं नार्प्यते? "किं मधुरं मधुरं स्वाहा कटुकं कटुकञ्च थूः"। इदमप्यलेखि —"गोस्वामिन एवार्पणं विधेयं नान्यमतवादिने जनायेति" इयमखिला स्वार्थसाधनाय परधनादिहरणाय वेदोक्तधर्मविनाशनाय च व्यरचि लीला।

विलोक्यतामयं वल्लभस्य मायाप्रपञ्चः—

**श्रावणस्यामले पक्ष एकादश्यां महानिशि।**
**साक्षाद्भगवता प्रोक्तं तदक्षरश उच्यते ॥१॥**
**ब्रह्मसम्बन्धकरणात्सर्वेषां देहजीवयोः।**
**सर्वदोषनिवृत्तिर्हि दोषाः पञ्चविधाः स्मृताः ॥२॥**
**सहजा देशकालोत्था लोकवेदनिरूपिताः।**
**संयोगजाः स्पर्शजाश्च न मन्तव्याः कदाचन ॥३॥**
**अन्यथा सर्वदोषाणां न निवृत्तिः कथञ्चन।**
**असमर्पितवस्तूनां तस्माद्वर्ज्जनमाचरेत् ॥४॥**
**निवेदिभिः समर्प्यैव सर्वं कुर्यादिति स्थितिः।**
**न मतं देवदेवस्य स्वामिभुक्तिसमर्पणम् ॥५॥**
**तस्मादादौ सर्वकार्ये सर्ववस्तुसमर्पणम्।**
**दत्तापहारवचनं तथा च सकलं हरेः ॥६॥**
**न ग्राह्यमिति वाक्यं हि भिन्नमार्गपरं मतम्।**
**सेवकानां यथा लोके व्यवहारः प्रसिध्यति ॥७॥**
**तथा कार्य्यं समर्प्यैव सर्वेषां ब्रह्मता ततः।**
**गङ्गात्वे गुणदोषाणां गुणदोषादिवर्णनम् ॥८॥**

इत्यादयः श्लोका गोस्वामिनां सिद्धान्तरहस्यादिग्रन्थेष्ववलिख्यन्त। इदमेव गोस्वामिनां मतस्य मूलतत्त्वम्। ननु कश्चिदेताननुयुञ्जीत— "श्रीकृष्णस्य दिवं गतस्यासन्नपञ्चसहस्रवर्षाणि व्यतीतानि सोऽयं खलु

श्रावणमासस्य निशीथे वल्लभाय कथं नु मिलितः ?" इति ।।१।। यो गोस्वामिनः शिष्यो भवति तस्मै चाखिलवस्तुजातं समर्पयति तस्य देहजीवयोः सकला दोषा निवर्तन्ते। अस्त्ययमेव वल्लभस्य कपटप्रपञ्चो मूर्खान् वञ्चयित्वा स्वमतजाले निपातनस्य। यदि गोस्वामिनः शिष्याणां सर्वदोषा निवृत्ता भवेयुस्तदा ते रोगदारिद्र्यादिदुःखैः कथं पीडिताः स्युः ? ते च दोषाः पञ्चविधाः सन्ति ।।२।। प्रथमः प्रकारः—सहजो दोषो यः स्वाभाविकोऽर्थात् कामक्रोधादिभ्य उत्पद्यते, द्वितीयः—क्वचिद् देशे कालेऽनेकविधानि दुरितानि विधीयेरन्, तृतीयो—लोके भक्ष्याभक्ष्ये य उच्येते वेदोदिताश्चानृतभाषणादयस्सन्ति। चतुर्थः—संयोगजो यो दुष्टसङ्गात्—स्तेयव्यभिचाराभ्यां जननीभगिनीकन्यापुत्रवधूगुरुपत्नीप्रमुखसमागमाच्चोत्पन्नः। पञ्चमः—स्पर्शजा अस्पर्शनीयानां स्पर्शात् सञ्जाताः। पञ्चविधानिमान् दोषान् गोस्वामिनां मतमन्तरेणान्यः कोऽपि प्रकारो निवर्तयितुं न कल्प्यते ।।३।। अतोऽसमर्पितपदार्थान् गोस्वामिनोऽनुयायिनो नोपभुञ्जीरन्। अत एवामीषां शिष्या निजपत्नीकन्यापुत्रवधूधनादिपदार्थानपि तेभ्यः समर्पयन्ति। समर्पणस्यायं नियमोऽस्ति यद् यावद् गोस्वामिनश्चरणसेवायां न समर्पिता स्यात्तावत्तस्या भर्ता स्वभार्यां न स्पृशेत् ।।४।। तस्माद् गोस्वामिशिष्याः पूर्वं समर्प्य ततो निजनिजपदार्थानुपभुञ्जीरन्। यतः स्वामिभुक्तेरनन्तरं वस्तूनां समर्पणं न सम्भाव्यते ।।५।। अतः प्रथमं सर्वकृत्येषु सर्ववस्तूनि समर्पयेत्। आदौ गोस्वामिने भार्यादिकं समर्प्य पश्चादुपादद्यात्। तथैव हरये सर्ववस्तुसमर्पणं विधायादद्यात् ।।६।। गोस्वामिमताद् भिन्नमार्गस्य वाक्यमात्रमपि तदीयाः शिष्याः शिष्यिकाश्च कदापि न शृणुयुर्नापि स्वीकुर्युः। तदीयशिष्याणामयमेव व्यवहारः प्रसिद्धोऽस्ति ।।७।। तथैव सर्ववस्तूनां समर्पणं विधाय सर्वेषु ब्रह्मबुद्धिं कुर्वीत। तदनु यथा गङ्गायामन्यजलानि सङ्गम्य गङ्गारूपाणि भवन्ति तथैव स्वमते गुणाः परमते च दोषास्सन्तीति स्वमते गुणानां वर्णनं वितन्यात् ।।८।।

आलोक्यतामिदानीं गोस्वामिनां मतं सकलमतेभ्योऽधिकं निजप्रयोजनसाधकं विद्यते। वरम्, कश्चिदिमान् पृच्छेद् गोस्वामिनः—"ब्रह्मण एकमपि लक्षणं न विदन्ति भवन्तस्ततः शिष्यैः शिष्याभिश्च समं ब्रह्मणः सम्बन्धं कथमिव कारयितुं प्रभविष्यन्तीति"। ननु "वयमेव ब्रह्माणि स्मः। अस्माभिः साकं सम्बन्धेनैव ब्रह्मसम्बन्धो भवति" इति चेद् वदेयुस्तर्हि भवत्सु ब्रह्मणो गुणकर्मस्वभावानां मध्यादेकमपि वस्तु नास्ति, किन्नु पुनः केवलं भोगविलासार्थमेव भवन्तो ब्रह्माणि संवृत्यातिष्ठन् ? भवतु, शिष्यान् शिष्यिकाश्च भवन्त आत्मना समं समर्पिता विधाय पवित्रयन्ति खलु परं भवन्तो भवदीया भार्या दुहितरः स्नुषादयश्चासमर्पिततयाऽपवित्रा एव

अतिष्ठन्न वा ? भवन्तश्चासमर्पितवस्तून्यशुद्धानि मन्यन्ते तत्पुनस्तदुत्पन्ना भवन्तः किमिति नाशुद्धाः ? अतो युज्यत इदं भवतामपि यन्निजस्त्रीकन्या-पुत्रवधूप्रभृतीनन्यमतस्थजनेभ्यः समर्पितान् कारयन्तु भवन्तः। यदि नेति कथ्येत तदा भवन्तोऽपि परस्त्रीपुरुषधनादीन् पदार्थान् समर्पितान् मा कुर्वन्तु कारयन्तु च। वरमद्ययावद् यदभूत्तदभूदेव। परमिदानीं तु परिहरन्तु निजमिथ्याकपटप्रपञ्चादिदुश्चरितानि। अथ च परमेश्वरोदितवेदविहित-सुवर्त्मनि समुपगम्य निजं मानवं जन्म सफलीकृत्य धर्मार्थकाममोक्षरूपफल-चतुष्टयमुपलभ्यामन्दमानन्दमुपभुञ्जतामत्र भवन्तः। आलोक्यतां पुनः, इमे गोस्वामिनः स्वसम्प्रदायं पुष्टिमार्गं वदन्ति। अशनपानपुष्टिसम्पादनं-सकलस्त्रीसंगो यथेष्टभोगविलासश्च पुष्टिमार्ग उदीर्यते। परमिमे प्रष्टव्याः– "यतः महादुःखदायकैर्भगन्दरादिरोगैः पीड्यन्ते तदा कीदृशी पीडामनुभूय म्रियन्ते खल्विति"। तामेत एव विजानन्ति। वस्तुतस्तु नायं पुष्टिमार्गः किन्तु कुष्ठिमार्गो विद्यते। यथा कुष्ठिनः शरीरात्सकलधातवो द्रवीभूय निर्यान्ति स च विलपन्नेव देहं मुञ्चति तथैवालोक्यत एतेषामपि लीला। अतोऽस्यैव नरकमार्गाभिधानमपि समुपपद्यते। यतो दुःखं नरकं सुखञ्च स्वर्ग उच्यते। अनेनैव प्रकारेण मिथ्याजालं विरच्य वराकान् सरलहृदयाञ्जनाञ्जाले न्यपातयन्। स्वात्मानं च श्रीकृष्णं मत्वा सर्वेषां स्वामिनो भवन्ति। कथयन्त्यमी—यावन्तो दैवीजीवा गोलोकादिह समागमँस्तानुद्धर्त्तुमेव वयं लीलापुरुषोत्तमा अवतीर्णास्स्मः। यावदस्माकमुपदेशं नाङ्गीकुर्युस्तावदेषां गोलोकप्राप्तिर्न भवतीति"। तत्रैकः श्रीकृष्णः पुरुषोऽन्याः सकलाः स्त्रियः सन्ति। धन्याः स्थ यूयं धन्याः ! समीचीनं भवतां मतम् ! गोस्वामिनां यावन्तः शिष्यास्सन्ति ते सकला गोप्यो भविष्यन्ति। अथ विमृश्यतां खलु। यस्य पुरुषस्य द्वे भार्ये भवतस्तस्य महती दुर्गतिर्जायते। तदा यत्रैकः पुरुषः कोटयश्च पत्न्यस्सन्ति कोऽवधिस्तस्य दुःखस्य ? यदि निगद्येत—"श्रीकृष्णः परमशक्तिशाली वर्तते सकलाः प्रसादयत्ययं योषा इति तदा तस्य पत्नी या स्वामिनीति समुदीर्यते तस्यामपि कृष्णस्येव सामर्थ्यं भवेद् यतः सा तदीयार्द्धाङ्गिनी विद्यते। यथेह लोके स्त्रीपुरुषयोः कामचेष्टा तुल्याऽथवा पुरुषाद् योषितोऽधिका भवति तथा गोलोके कथं न स्यात्खलु ? एवमस्ति चेदन्यवनिताभिः साकं स्वामिनी निरतिशयं कलहं विवादञ्चाकरिष्यत्। सपत्नीभावो ह्यतीव जघन्यो भवति खलु। तस्माद् गोलोकः स्वर्गस्यापेक्षया नरक इवाजनिष्यत्। अथवा यथा बहुस्त्रीगामी पुरुषो भगन्दरादिरोगैः पीड्यते तथैव गोलोकेऽपि भवेत्। धिग् ! धिग् !! धिग् !!! एतादृशो गोलोकान्मर्त्यलोक एव वराको वरीयानस्ति। दृश्यताम्—यथात्र गोस्वामिन आत्मानं श्रीकृष्णं मन्यन्ते। बहुलाभिर्ललनाभिः साकं लीलाकलनेन च

भगन्दरप्रमेहादिरोगैः पीडिता भूत्वा महादुःखमुपभुञ्जते तथैव—कथ्यतामधुना—यदीयस्वरूपो गोस्वामी पीडयते चेद् गोलोकस्य स्वामी श्रीकृष्णो गदैरेभिः कथं न पीडितो भविष्यति ? यदि पीडितो न भवति तदा तदीयस्वरूपभूतो गोस्वामी किमिति पीडयते ?

प्र०—मर्त्यलोके लीलावतारधारणाद् रोगदोषास्सञ्जायन्ते नतु गोलोके। तत्र हि रोगदोषा एव न सन्ति।

उ०—"**भोगे रोगभयम्।**" यत्र भोगोऽस्ति नियतं तत्र रोगो भवति। अथ श्रीकृष्णस्य परःकोटिस्त्रीभ्यः प्रजा जायन्ते न वा ? जायन्ते यदि तदा पुत्राः पुत्र्यो वा भवन्ति ? अथवोभयमेव ? ननु—'पुत्र्य एव जायन्त' इति निगद्येत चेत्तासां विवाहमङ्गलं कैः समं सम्पद्येत ? तत्रहि श्रीकृष्णं विना नान्यः कोऽपि वर्तते पुरुषः। यदि वर्ततेऽन्यस्तदा भवतां प्रतिज्ञाहानिरजायत। अथ 'पुत्रा एवोत्पद्यन्त' इति कथ्येत चेत्तदापि स एव दोष आपतति यदेषां पाणिग्रहणं कुत्र काभिश्च समं भवतीति ? आहोस्विद् गृहाभ्यन्तर एव परिणीयत एभिरुतान्यस्य कस्यचित्पुत्राः पुत्र्यो वा सन्ति। तथापि 'गोलोक एक एव श्रीकृष्णः पुरुषोऽस्तीति' भवतां प्रतिज्ञा विनश्येत। यदि च—'सन्ततिरेव न भवति' इत्यभिधीयेत तदा श्रीकृष्णे नपुंसकत्वस्य प्रमदासु च वन्ध्यात्वस्य दोषः समापतिष्यति !

अये !! कथन्नु गोकुलमिदं !! इदं तु मन्ये यवनाधिपतेर्दिल्लीश्वरस्य रमणीनां बलमभूदिति। अथ गोस्वामिनः शिष्याणां शिष्यिकाणाञ्च यत्तनुमनोधनानि स्वस्मै समर्पणं कारयन्ति तदप्यनुपपन्नम्। यतः शरीरं तु विवाहकाले पत्न्याः पत्युश्चान्योन्यस्मै समर्प्यते। मनोऽपि पुनरन्यस्मै समर्पयितुं न पार्यते। मनसैव समं हि देहस्यापि समर्पणं सम्भाव्यते। अर्प्येत चेद् व्यभिचारिणो गण्येरन्। अथावशिष्यते धनम्। तस्यापीयमेव लीला विभावनीया। अर्थान्मनो विनाकृतं किमप्यर्पयितुं नालम्। शिष्या धनमुपार्जयेयुर्वयञ्चानन्दमुपभुञ्जीमहीति गोस्वामिनामेषामभिप्रायः।

यावन्तो वल्लभसम्प्रदायिनो गोस्वामिजनास्सन्ति तेऽद्यपर्यन्तं तैलङ्गीयज्ञातौ न विद्यन्ते। यश्च कश्चिदेतेभ्योऽज्ञानेन कन्यां ददाति सोऽपि ज्ञातिबहिष्कृतो भूत्वा भ्रश्यति यत इमे ज्ञातितः पातितास्सन्ति। विद्याविहीनाश्च नक्तंदिवा प्रमादे तिष्ठन्ति। अथालोकनीयम्—यदा कश्चन गोस्वामिनमामन्त्रयति निजालयं तदा तदीयगृहमुपगम्य तूष्णीं दारुपुत्रिकावन्निषीदति न किमपि भाषते नाप्याचरति च। वराकस्तु तदा समालपद् यदि मूर्खो न स्यात् !! "**मूर्खाणां हि बलं मौनम्।**" यदि भाषेत तर्हि तदीयं रहस्यं प्रकाश्येत। परं कामिनीनां वदनकमलानि नितरामेकाग्रमनसाऽवलोकयति। यदभिमुखं निरीक्षेत गोस्वामी तदीयं तु महदेव भाग्यं मन्यते। तस्याः

पतिर्भ्राता माता पिता चैते सुतरां प्रसीदन्ति च। तत्राखिला रमण्यो गोस्वामिनश्चरणौ स्पृशन्ति। यस्यामासक्तं स्यान्मनो गोस्वामिनोऽनुग्रहो वा भवेत्तदीयाङ्गुलीं चरणकमलेनासौ निपीडयति। सा रमणी तस्या भर्तृ-प्रमुखाश्चात्मानमतिभाग्यवन्तमवधारयन्ति। पत्यादयस्सकलास्तां ललनाम्—"त्वं गोस्वामिचरणानां चरणसेवायां याहीति" निगदन्ति। यत्र कुत्रचिच्च तदीयपतिप्रभृतयो न प्रसीदन्ति तत्र पुंश्चलीदूतीद्वारा कार्यं साधयति। वस्तुतस्तु तदीयमन्दिरेषु कार्यकरा ईदृशास्तदुपकण्ठे च बहवो वसन्ति।

अथैषां विलोक्यतां दक्षिणाया लीला। इत्थममी याचन्ते—"आनीय-तामुपहारो गोस्वामिनः, स्नुषायाः, तनयस्य, तनयायाः, मुख्यवर्यस्य, भृत्यवरस्य, गायकस्य, कृष्णदेवस्य चेति।" आभिस्सप्तभिर्विपणिभिर्यथाकामं द्रव्यमपहरन्ति। यदा कोऽपि गोस्वामिनः सेवको मरणमुपसीदति तदा तदीयोरस्स्थले गोस्वामी चरणं निदधाति यच्च किञ्चिदुपलभ्यते तद् गोस्वामिनानेन निगिल्यते। किं नेदं खलु महाब्राह्मणानामिव मृतकवस्तु-ग्राहकाणामिव च कर्म ?

केऽपि शिष्या विवाहमङ्गले गोस्वामिनमाहूय तेनैव तनयस्य तनयाया वा पाणिग्रहणं कारयन्ति। केऽपि च सेवकाः स्त्रीपुरुषास्सम्भूय केशरस्नान-मर्थाद् गोस्वामिनः शरीरे वनिताजनकृतेन केशरोद्वर्तनेनाङ्गसंस्कारं विधाय-एकस्मिन् महति पात्रे काष्ठपीठं निधाय गोस्वामिनं स्नपयन्ति। विशेषतस्तु महिलामण्डलमेवामुमाप्लावयति। पुनर्यदा गोस्वामी पीताम्बरं परिधाय पादुकायुगलमारुह्य बहिर्निर्याति शाटिकाञ्च तस्मिन्नेव पात्रे मुञ्चति तदा तदीयजलमाचामन्ति तद्भक्ताः। उत्तमलवङ्गैलाजातीफलादिशालिनीं ताम्बूलपर्णवीटिकां चामी वितरन्ति गोस्वामिने। स तु तां संचर्व्य किञ्चि-न्निगिलति शेषञ्चोद्गिरति तदीयसेवकेन स्वपुरोवृते कस्मिँश्चन रजतपात्रे तस्यापि प्रसादो वण्टचते स च 'विशेषः प्रसाद' इत्यभिधीयते।

अथेमे कीदृशा मनुष्यास्सन्तीति विमृश्यताम् ? मूढताया दुराचरणस्य च सीमा चेदेतावत्येव भविष्यति। बहवः समर्पणमाददते। तेषु कियन्तो वैष्णवानां हस्तनिर्मितमेवादन्ति भोजनं नान्येषाम्। तेषु कियन्तो वैष्णवानां हस्तनिर्मितमपि नादन्ति। एधांस्यपि प्रक्षाल्य गृह्णन्ति। परं पिष्टगुड-सितोपलवृतादिक्षालनेन तेषां स्पर्शो विक्रियते। किं कुर्वन्तु वराका एतानि क्षालयेयुश्चेत्पदार्थमेव हस्तेन विनाशयेयुः। वयं देवस्य रङ्गरागभोगेषु विपुलं धनं नियोजयाम इति वदन्त्यमी। परं तान् रङ्गरागभोगानमी स्वयमेवानु-तिष्ठन्ति नूनं महान्ति भवन्त्यनर्थकराणि कृत्यानि खलु। तथाहि—होलिकाव-सरे वर्णोद्धारियन्त्रनलिकां प्रपूर्य स्त्रीणामस्पर्शनीयेष्ववयवेषु (गुप्तस्थलेष्विति यावत्) विसर्जयन्ति ते। ब्राह्मणानां निषिद्धमपि रसविक्रयकर्म कुर्वन्ति।

प्र०—गोस्वामिनो रोटिकासूपक्वथिकौदनशाकमठरीमोदकादीनि प्रत्यक्षं पण्यवीथिकायामुपविश्य तु न विक्रीणन्ति किन्तु निजसेवकेभ्यः किङ्करेभ्यो वा पत्रावलीर्विभज्यर्वितरन्ति। ते च खलु विक्रीणते न तु गोस्वामिनः।

उ०—यदि गोस्वामिनस्तेभ्यो मासिकं वेतनं दद्युस्तदा कथं ते पत्रावलीः समादद्युः? गोस्वामिनो निजभृत्येभ्यः सूपौदनादीन् वेतनस्थाने वितरन्ति। ते च नीत्वाऽऽपणे विक्रीणन्ति। यदि गोस्वामिनः स्वयं बहिर्गत्वा व्यक्रेष्यँस्तदा तदीयभृत्या ब्राह्मणादयस्तु रसविक्रयदोषान् व्यमोक्ष्यन्त। केवलं गोस्वामिन एव रसविक्रयरूपपापभाजोऽभविष्यन्। आदौ तु स्वयमस्मिन् पापसमुद्रे निमग्ना अथान्यानपि न्यमज्जयन्। क्वचित्कुत्रचिच्च नाथद्वारादिषु गोस्वामिनोऽपि विक्रीणते। रसविक्रयोऽधमानां कर्म नोत्तमानाम्। ईदृशैर्जनैरस्यार्यावर्तस्याधोगतिर्व्यधायि।

प्र०—स्वामिनारायणस्य मतं कीदृशम्?

उ०—**"यादृशी शीतलादेवी तादृशो वाहनः खरः।"** यादृशी गोस्वामिनां धनहरणादौ विचित्रा वर्तते लीला तादृश्येव स्वामिनारायणस्यापि विद्यते। श्रूयताम्—'सहजानन्दनामा' जनोऽयोध्यान्तिकवर्तिनि ग्रामे जनिं प्रपेदे। स ब्रह्मचारी संवृत्य गुर्जरसौराष्ट्रकच्छभुजादिप्रदेशेषु विचचार। विलुलोके चायम्—"देशोऽसौ मूर्खः सरलहृदयश्चास्ति। कोऽप्येतद्देशीयजनान् निजमते यथाऽऽवर्जयितुमभिलषेत्तथैवेमे जना आवर्जयितुं शक्याः खल्विति।" तत्रादौ त्रिचतुराञ्छिष्यान् विदधौ तैर्मिथः सम्मतिं विधाय—"सहजानन्दो नारायणस्यावतारो महान् सिद्धश्चास्ति। भक्तेभ्यश्चतुर्भुजमूर्त्तिमाकलय्य साक्षाद् दर्शनमपि ददातीति" प्रथयाञ्चक्रे। अथैकदा काठियावाडप्रान्ते कोऽपि काठीजातीयो "दादाखाचर" नामा गढडेसमाख्यग्रामस्य भूमिभुगासीत्। तं शिष्या जगदुः—"यदि त्वं चतुर्भुजनारायणं द्रष्टुं वाञ्छसि तदा वयं सहजानन्दं प्रार्थयामहै?" इति। "अत्युत्तममिति" सोऽभिदधे। सरलहृदयो जन एष बभूव। एकस्मिन्प्रकोष्ठे सहजानन्दो मस्तके मुकुटं परिधाय शङ्खचक्रे स्वहस्तयोरुद्यतयोर्बिभराम्बभूव। अन्यो जनश्च तत्पृष्ठतः स्थित्वा महापद्मे निजकरयोरादाय सहजानन्दस्य बाहुमूलयोर्मध्यात्करो निस्सारयामास। तदा स चतुर्भुज इव सञ्जज्ञे। दादाखाचरं तदीयशिष्या ऊचुः—'त्वं सकृन्नेत्राभ्यां विलोक्य सद्य एव विलोचने निमीलयेरविलम्बितञ्चेतः समागच्छेः। यदि चिरं निरीक्षिष्यसे तदा नारायणो रोषं भजिष्यतीति।' शिष्याणां मनसि तु—'न खलु कदाचिदस्मत्कपटमयं कृत्यमेष परीक्षेतेति' भयं बभूव। तं निन्युरमी। स सहजानन्दस्तु सौवर्णसूत्रलताङ्कितानि देदीप्यमानानि कौशेयवासांसि वसानोऽन्धकारमये कोष्ठगृहे तस्थौ

तदीयशिष्यास्तत्क्षणमेव काचमञ्जूषान्तर्गतदीपेन कोष्ठाभिमुखं प्रकाशं प्रचिक्षिपुः। तत्र निरीक्षमाणेन दादाखाचरेण चतुर्भुजमूर्त्तिर्ददृशे। द्रुतं पुनर्दीपकमन्तरितं चक्रुः। सकलास्ते प्रह्वी भूय प्रणम्यान्यतो जग्मुः। गच्छन्त एव तेऽन्तरान्तरा तं भूमिभुजम्—'महाभाग्यं भवताम्। भवानधुना महाराजस्य शिष्यो भवतु' इत्यादि बभाषिरे। 'अतिसमीचीनम्' इति जगादासौ। यावदमी परिक्रम्यापरेण मार्गेणाजग्मुस्तावदेवान्यानि वस्त्राणि परिधाय सहजानन्दं स्वासनपीठमधिष्ठितं ददृशुः। तदा शिष्या अवोचन्—'दृश्यतामिदानीमन्यत्स्वरूपं परिगृह्यात्रविराजते महाराज इति।' दादाखाचरः स एषां कपटजाले निपपात। ततएव तस्य मतं बद्धमूलं संववृते। यतः स महानेको भूमिभुगभवत्। तत्रैव स्वमतमूलं दृढीकृतमनेन। अथेतस्ततः परिभ्रम्य सकलानुपादिशत्। बहून् साधूनपि व्यदधात्। कदाकदाचित्कमपि साधुं तस्य कण्ठनाडीमुपमृद्य मूर्च्छितमप्यकार्षीत्। अवादीच्चाखिलान्—"अहमेतं समाधिं समारोपयमिति" ईदृश्या धूर्त्ततया काठियावाडप्रदेशस्य सरलहृदया जनास्तस्य जाले निपेतुः। यदासौ पञ्चत्वमाप तदा तदीयशिष्या बहुतरं पाखण्डं वितेनुः।

अत्रायं दृष्टान्त उपपद्येत—कोऽपि चौरिकां कुर्वाणः प्रजगृहे। न्यायाधीशस्तदीयनासाकर्णच्छेददण्डमादिदेश। यदामुष्यनासिका चिच्छिदे तदा स कितवो नर्तितुं गातुं हसितुञ्चारेभे। "त्वं कथं हससीति" स जनैरनुयुयुजे। "कापि कथनस्य वार्ता न वर्त्तते" इति स जगाद। जनाः पप्रच्छुः—"कतमा वार्तेदृशीति" ? स उवाच—"अत्यद्भुतकरी वार्ताऽस्ति। मया कदापीदृशी न ददृशे" इति। जना बभाषिरे—"कथय का वार्ताऽस्तीति"। एष ऊचे—"मम सम्मुखं साक्षाच्चतुर्भुजो नारायणस्तिष्ठति। अवलोक्याहमतीव प्रसन्नस्सन्नृत्यामि गायामि निजभाग्यञ्च श्लाघे यदहं साक्षान्नारायणस्य दर्शनं करोमीति"। जना जगदुः—"अस्माभिः कथं न दृश्यत" इति ? स व्याजहार—"नासा मध्येऽन्तरायभूता तिष्ठति। सा यदि च्छिद्येत तदा नारायणो दृश्येत नान्यथेति"। तेषु कश्चन मूढ इयेष—"कामं गन्धवहा प्रयातु परं नारायणस्य दर्शनमवश्यं विधेयमिति"। इति विमृश्य सोऽभिदधौ—"ममापि गन्धवहां छिन्धि नारायणञ्च दर्शयेति"। सोऽमुष्य नासां विच्छिद्य कर्णे—"त्वमप्येवमेव विधेहि नोचेन्मम तव चोपहासो भविष्यतीति" कथयामास। असावपि—"नैवोपलभ्येत नासा सम्प्रति तद् युज्यत एवेदृशं कथनमिति" बुबुधे। तदा तु सोऽपि तत्र तेन तुल्यं नर्तितुं कूर्दितुं गातुं वादयितुं हसितुं कथयितुञ्चारेभे—"मयाऽपि नारायणो निरीक्ष्यत" इति। अनेन क्रमेणैकसहस्रमनुजानां समुदायो जज्ञे। महाँश्च कोलाहलो बभूव। स्वसम्प्रदायस्याभिधानञ्च 'नारायणदर्शीति' निदध्रे। कोऽपि मूर्खो नृपः शुश्रावामुना-

जुहाव च। यदा नृपतिस्तेषामुपकण्ठमुपययौ तदा तु तेऽतितरां नर्तितुं कूर्दितुं हसितुञ्चोपचक्रमिरे। तदा 'केयं वार्तेति' राजा पृष्टवान्। "साक्षान्नारायणो विलोक्यतेऽस्माभिरिति" ते जगदुः।

**राजा**—मया किमिति नावलोक्यते ?

**नारायणदर्शी**—यावन्नासा वर्तते न तावदालोक्येत। यदा च घोणा विच्छिद्येत तदा नारायणः प्रत्यक्षं निरीक्षिष्यते भवता। राजा विचिन्तयामास—"युक्तमिदं कथनमिति"। तदा नृपतिर्मुहूर्त्तमालोकयितुं दैवज्ञं जगाद। मौहूर्तिकस्तु—"यदादिश्यतेऽन्नदात्रेति" ददावुत्तरम्। बभाषे च ज्योतिषिकः—"दशम्यां तिथौ प्रातःकालेऽष्टवादने नासाछेदनस्य नारायणदर्शनस्य चोत्तमं वर्त्तते मुहूर्त्तमिति"। धन्योऽसि रे पोपकुञ्जर ! धन्योऽसि। स्वपुस्तिकायां नासिकाच्छेदनस्यापि मुहूर्त्तमलिख्यत किमु ? यदा नृपतिरियेष तेभ्यः सहस्रविग्रेभ्यश्चान्नसामग्रीं प्रददौ तदा तु तेऽतितरां प्रसन्नीभूय ननृतुरुत्पेतुर्जगुश्च। वृत्तमिदं नृपस्यामात्यप्रमुखाय कतिपयबुद्धिमज्जनेभ्यश्च न रुरुचे। नृपतेरेकश्चतुरन्वयसमागतश्चतुरो नवतिवर्षीयो वर्षीयानमात्यवरो वभूव। तदीयप्रपौत्रो यस्तदानीं धीसचिवोऽभूत्स तमुपेत्य तां वार्तामश्रावयत्। स्थविरोऽसौ—"धूर्त्तास्ते सन्ति त्वं मां राजान्तिकं नयेति" बभाण। स निनाय। उपविशन्तं तं नृपतिरतिहर्षयुतस्तेषां गतनासिकानां वृत्तान्तं श्रावयामास। प्रवया अमात्यो निजगाद—"शृणु, राजन् ! ईदृशी त्वरा न विधेया। अपरीक्ष्यकारिणां नृणामनुतापो भवतीति।"

**रा०**—किममी सहस्रपुरुषा अनृतं वदेयुः ?

**अमात्यः**—अनृतं सत्यं वा वदेयुः। परीक्षामन्तरेण सत्यानृते किमिव कथयितुं शक्येते ?

**रा०**—परीक्षा कथं विधेया ?

**अ०**—विद्यया सृष्टिक्रमनियमेन प्रत्यक्षादिभिः प्रमाणैश्च।

**रा०**—अनधीतविद्यः कथमिव परीक्षेत ?

**अ०**—विदुषां सङ्गत्या ज्ञानोपचयं विधाय।

**रा०**—विद्वान्नोपलभ्येत चेत् ?

**अ०**—पुरुषार्थिनां किमपि वस्तु दुर्लभं नास्ति खलु ?

**रा०**—तदा कथं विधीयतामिति भवतैवोच्यताम् ?

**अ०**—अहं वृद्धोऽस्मि गृहे चोपविशामि। अल्पकालञ्चेदानीं जीविष्यामीति प्रथममहमेव परीक्षेय तदनु यथा समुचितमवगम्येत तथा क्रियताम्।

**रा०**—अत्युत्तमा वार्ता ? दैवज्ञवर्य ! अमात्यवराय मुहूर्त्तमालोकयतु भवान्।

**दैवज्ञः**—यथाज्ञापयति महाराजः। अस्यामेव शुक्लपक्षीयपञ्चम्यां

समीचनं मुहूर्त्तमस्ति। उपस्थितायां पञ्चम्यां नृपवरमुपगम्याष्टवादनेऽमात्यवरः—"सहस्रं द्विसहस्रं वा सैन्यमादाय प्रस्थातव्यमिति" न्यवेदयत्।

रा०—तत्र सेनायाः किं प्रयोजनमस्ति ?

अ०—अत्रभवान् राज्यव्यवस्थायामनभिज्ञोऽस्ति तद् यथाहमादिशामि तथा विधीयताम्।

रा०—वरं गम्यतामयि सेनापते ! सेना सज्जीक्रियताम्। अथ सार्द्धनववादने वाहनमारुह्य नृपवरस्सर्वानादाय ययौ। अमूनवलोक्य ते विप्रा नर्तनं गानञ्चारेभिरे। नृपवरस्तु तत्रोपविश्य तेषां विप्राणां प्रधानं येनायं सम्प्रदायः प्रवर्तितो यस्य चादौ नासा विच्छिन्नाऽऽसीत्तमाकार्य—अद्यास्माकममात्यवराय नारायणस्य दर्शनं कारयतु भवानिति" समब्रवीत्। सुष्ठुतरमित्यगादीदयम्। अथोपस्थिते दशवादनसमये स्थालीमेकां मनुज एकोऽमात्यवरस्य नासाया अधस्ताद् धृतवान्। असौ च तीक्ष्णामसिपुत्रिकामादाय नासिकां विच्छिद्य स्थाल्यां प्राक्षिपत्। प्रावहच्चामात्यवरस्य नासाया रुधिरधारा। मुखञ्च मलिनं संवृत्तम्। ततः स धूर्त्तोऽमात्यवरस्य कर्णे—"भवानपि विहस्य सकलान् कथयतु 'यन्नारायणो मयाऽऽलोक्यते' इति। यतोऽधुना छिन्ना नासिका न पुनः समेष्यति। एवं न कथयिष्यति भवान् यदि तदा भवतां महानुपहासो भविष्यति। सर्वे जनाश्च हसिष्यन्ति" इति मन्त्रं समुपदिश्य पृथक् समजायत। अमात्यवरश्च पटखण्डं करे गृहीत्वा तेन नासां तिरोहितामकार्षीत्। यदामात्यवरमन्वयुङ्क्त नृपवरः—"कथ्यतां नारायणो दृश्यते नवेति" ? तदा नृपस्य कर्णेऽसौ—"किमपि न दृश्यते। वृथाऽयं वञ्चकः सहस्रमनुष्यान् गतनासिकान् विरूपानकरोदिति समगादीत्।

रा०—किमिदानीं विधेयम् ?

अ०—एते प्रगृह्य तीव्रं दण्डनीयाः। यावज्जीवं कारागृहे निरोद्धव्याश्च। सकलविकारकोऽयं दुष्टश्च गर्दभमारोप्यातिदुर्दशया हन्तव्यः। यदा नृपामात्यौ कर्णे समालपतां तदा ते भयभीताः पलायितुं सन्नद्धा अभूवन् परं समन्ततः सेनया समावृता आसन्निति ते समपसत्तुं नाशक्नुवन्। नृप आदिशत्—'सर्वान् प्रगृह्य लोहनिगडबद्धान् कुरुत। दुष्टमेनं च कृष्णमुखं विधाय रासभमारोप्यास्य कण्ठे जीर्णचर्मपादुकामालां परिधाप्य सर्वतो भ्रमयित्वा बालकैरस्योपरि रजोभस्मानि पातयित्वा प्रतिचतुष्पथमुपानद्भिः सन्ताड्य सारमेयैर्लुञ्चयित्वा च व्यापादयतेति।' यद्येवं न सम्पद्येत तदा पुनरन्येऽपीदृशं कर्म कुर्वाणा न भेष्यन्ति। यदेत्थं सम्पन्नं तदा विप्राणां सम्प्रदायो विरतः। इत्थमेव सकला वेदविरोधिनो नराः परद्रविणहरणे निपुणतरा भवन्ति। अस्तीयं सम्प्रदायानां लीला !!

इमे स्वामिनारायणमतमानिनो धनहराः कपटयुतं कुर्वन्त्याचरणम्।

कियतामेव मूर्खाणां प्रतारणायामी मरणावसरे कथयन्ति—'धवलतुरङ्ग-मारुह्य सहजानन्दो भवन्तं मुक्तिपदं नेतुं समायातः। नित्यञ्चास्मिन्मन्दिर एकवारं समायातीति'। यदा जनसम्मेलो भवति तदा पूजका मन्दिराभ्यन्तरे तिष्ठन्ति। अधस्तले चापणो योज्यते। मन्दिरादापणे गमनाय छिद्रं निधीयते। यदि केनापि नारिकेलो निवेद्यते तर्हि तं स एवाऽऽपणे प्रक्षिपति। एवमेको नारिकेलो दिने सहस्रकृत्वो विक्रीयते। इत्थमेव सर्वे पदार्थाः विक्रीयन्ते। यदीयज्ञातीयो यः साधुस्तेन तादृशमेव कर्म कारयन्ति। यथा—नापितेन नापितस्य कुम्भकारेण कुम्भकारस्य शिल्पकारेण शिल्पिनो वणिजः वणिजस्य शूद्रेण च शूद्रस्य कर्म कारयन्ति। स्वशिष्येभ्यः करग्रहणं नियुक्तमस्ति सनियमम्। लक्षाणि कोटयश्च रूप्यकाः प्रतार्यैकत्र संगृहीतास्सन्ति संगृह्णन्ति च। यो गुरुपीठमधितिष्ठति स गृहस्थः परिणयं करोति। भूषणादीनि परि-दधाति। यत्र कुत्रचिदेनमामन्त्रयन्ति तत्रासौ गोस्वामीव गोस्वामिवधूप्रभृति-नामग्रहणेन प्राभृतं पूजाञ्च गृह्णाति। स्वं सत्सङ्गिनं परमतवादिनश्च कुसङ्गिनो वदन्ति। स्वं विनाऽन्यः कीदृश एवोत्तमो धार्मिको विद्वान् पुरुषः किन्न खलु स्यात्परं तस्य प्रतिष्ठां शुश्रूषाञ्च कदापि न वितन्वन्ति। अन्यमतस्थजनसेवायां हि पापं गणयन्ति। प्रकाशं तदीयसाधवस्तु स्त्रीजनस्य मुखं नावलोकयन्ति किन्तु न जाने खलु रहसि का लीलाऽभविष्यत् सर्वत्रास्य ख्यातिर्न्यूना समजनि। क्वचित्क्वचित् साधूनां परस्त्रीगमनादिलीला प्राकाश्यत। तेषु च ये ये महान्तः सन्ति ते यदा म्रियन्ते तदा तान् गुप्तकूपे प्रक्षिप्य—अमुको महात्मा सदेहो वैकुण्ठमगात्। सहजानन्द उपगम्य तमनयत्। वयमतितरां प्रार्थयामहि "यन्महाराज! नायं नीयताम्। अस्य महात्मनो निवासेनात्र परमो लाभोऽस्तीति"। सहजानन्दस्तु—"नैव, अधुनास्य वैकुण्ठेऽतितरामावश्यकताऽस्तीति नयाम्येनमहमिति" समवादीत्। वयं स्व-चक्षुषा सहजानन्दं विमानञ्चापश्याम। ये चासन्नमरणा आसँस्तान् विमाने समुपवेश्योपरि समनयत्। पुष्पाणि च प्रवर्षन्नगच्छदिति" प्रकाशयन्ति। यदा च कोऽपि साधू रुग्णो भवति तस्य च जीवनस्याशा न भवति तदा सः—"अहं श्वो निशि वैकुण्ठं यन्ताऽस्मीति" वदति। श्रुतं किल यथा तस्यां निशि तदीयाः प्राणाः नोत्क्रामेयुर्यदि मूर्च्छितश्च स्यात्तदपि तं कूपे प्रक्षिपन्ति। यतो यदि तस्यां निशायां तं न प्रक्षिपेयुस्तदा स मिथ्यावादी भवेदिति कर्मेदृशमकरिष्यन्। इत्थमेव यदा गोकुलीया गोस्वामिनो म्रियन्ते तदा तदीयशिष्याः—"गोस्वामिनो लीलां वितत्य दिवं गताः" इति निगदन्ति। य एषां गोस्वामिनां स्वामिनारायणवादिनाञ्चोपदेशस्य मन्त्रोऽस्ति स समान एवास्ति। तद्यथा—**"श्रीकृष्णः शरणं मम"**। एवमस्यार्थो विधीयते—"श्रीकृष्णो मम शरणमस्ति। श्रीकृष्णस्याहं शरणागतोऽस्मीति यावत्।

परमस्यार्थः—"श्रीकृष्णो मम शरणं प्रपद्यताम्" अर्थान्मम शरणागतो भवेदित्येवमपि विधातुं शक्यते। यावन्तीमानि सकलानि मतानि सन्ति तान्ययथार्थामनर्गलां शास्त्रविरुद्धां वाक्यरचनां वितन्वन्ति। अनभिज्ञा हि खल्वमी विद्याया नियमानां विद्याविहीनभावात्।

**प्र०**—माध्वमतं तु समीचीनमस्ति ?

**उ०**—यथाऽन्यमतावलम्बिनो जना भवन्ति तथैव माध्वमतानुयायिनोऽपि सन्ति। इमेऽपि हि चक्राङ्किता भवन्ति। एतावानेतेषु विशेषश्चक्राङ्कितेभ्यो यद् रामानुजीयाः सकृच्चक्राङ्किता भवन्ति माध्वीयाश्च प्रतिवर्षं पुनः पुनश्चक्राङ्कितास्सञ्जायन्ते। चक्राङ्किता ललाटे पीतवर्णां रेखां माध्वीयाश्च कृष्णरेखां विदधति। केनचिन्माध्वीयपण्डितेन समं कस्यापि महात्मनः शास्त्रार्थचर्चा समजनि।

**महात्मा**—भवतेयं कृष्णरेखा तिलकञ्च किमिति व्यरचि ?

**पण्डितः**—अस्य विरचनेन वयं वैकुण्ठं गमिष्यामः। श्रीकृष्णस्यापि च गात्रं श्यामवर्णमभूदिति कृष्णतिलकं विधीयतेऽस्माभिः।

**म०**—यदि कृष्णरेखातिलकयोर्विरचनेन वैकुण्ठं व्रजति भवाँस्तर्हि सकलं मुखकमलं कृष्णं क्रियेत चेत्कुत्र गमिष्यते भवता ? किन्नु खलु वैकुण्ठस्यापि परतीरमुत्तरिष्यते ? यथा हि श्रीकृष्णस्य सकलं शरीरं श्यामलं समभूत्तथैव भवताऽपि निखिलं वपुर्विधीयतां कृष्णवर्णम्। तदैव श्रीकृष्णस्य सादृश्यं सम्भाव्यते, अत एवेदमपि मतं पूर्वोदितमततुल्यं वर्तते।

**प्र०**—लिङ्गाङ्कितानां मतं कीदृशमस्ति ?

**उ०**—यथा चक्राङ्कितानाम्। यथा हि खलु चक्राङ्कितारश्चक्रेण दाह्यन्ते, नारायणमन्तरेण कमपि न मन्यन्ते तथैव लिङ्गाङ्किता लिङ्गाकृत्या दाह्यन्ते महादेवादृते चान्यं कमपि न गन्वते। एष्वयं विशेषः खलु वर्तते यल्लिङ्गाङ्किताः पाषाणलिङ्गमेकं सौवर्णेन राजतेन वा पत्रेणाऽऽवृतं गलेऽवलम्बयन्ति। यदा पानीयमपि पिवन्ति तदाऽदो दर्शयित्वा पिबन्ति। अमीषामपि शैवतुल्यो भवति मन्त्रः।

## ब्राह्मसमाजः प्रार्थनासमाजश्च

**प्र०**—ब्राह्मसमाजः प्रार्थनासमाजश्च समीचीनोऽस्ति न वा ?

**उ०**—कियन्ति वचनानि समीचीनानि वहुलतराणि चासमीचीनानि सन्ति।

**प्र०**—ब्राह्मसमाजप्रार्थनासमाजौ सर्वेभ्यः श्रेष्ठौ स्तः। अनयोर्नियमा अतीवोत्तमाः खलु।

**उ०**—सर्वांशतो नोत्तमाः खलु नियमाः। यतो वेदविद्याविहीनानां

जनानां कल्पना किमिव सर्वथा सत्या भवितुं शक्या ? यान् कांश्चिन्मनुजान् ब्राह्मसमाजप्रार्थनासमाजौ कृश्चीनमते निपतनादरक्षतां याञ्च काञ्चित् पाषाणादिमूर्तिपूजां न्यवारयतामन्यकपटयुतग्रन्थजालादपि किञ्चिदरक्षतामित्यादिवृत्तान्ता उत्तमास्सन्ति ।

परममीषु स्वदेशभक्तिरल्पीयसी वर्तते । कृश्चीनानां बहव आचारा अङ्गीकृता एभिः । भोजनपानविवाहादिनियमा अपि परिणामिताः सन्ति ॥१॥

दूरमास्तां तावन्निजदेशस्य निजपूर्वजानां वा प्रशंसाविधानं प्रत्युत तदीयस्थाने मुक्तकण्ठं निन्दन्ति तानमी । व्याख्यानेषु कृश्चीनादिकाङ्ग्लजनानाकण्ठपूर्णोदरं प्रशंसन्ति । ब्रह्मादिमहर्षीणां नामान्यपि न गृह्णन्ति प्रत्युत—"विनाऽऽङ्ग्लजनानद्यावधि सृष्टितले कोऽपि विद्वान्नाजायत । आर्यावर्त्तीयजनाः सनातनसमयान्मूर्खा एव सन्ति । एषामभ्युदयः कदापि नाभूदिति" वदन्त्यमी ॥२॥

वेदादीनां प्रतिष्ठा तु विदूरे तिष्ठतु परं तेषां निन्दनादपि न पृथग् भवन्ति । ब्राह्मसमाजस्योद्देश्यपुस्तके साधूनां नामावलीगणनायाम्—"ईसामूसामुहम्मदनानकचैतन्यः" इति नामान्यलिख्यन्त । कस्यचिदृषिमहर्षिजनस्य नामापि नालेखि । अनेन विज्ञायते "एभिर्येषां नामानि लिखितानि तेषामेव मतानुसारिमतावलम्बिन इमे सन्तीति" । अये ! यदा नु खलु समुत्पन्ना इम आर्यावर्तेऽस्यैव देशस्यान्नजलाशनपानमकार्षुरद्यापि विदधति च तदा स्वमातृपितृपितामहादिमार्गं विहायान्यविदेशीयमत एषां भूयसाऽऽवर्जनं ब्राह्मसमाजप्रार्थनासमाजावलम्बिनामेतद्देशस्थसंस्कृतविद्याविहीनानामपि स्वेषां विद्वत्त्वप्रकाशनमाङ्ग्लभाषामधीत्य पण्डिताभिमानिनः संवृत्य झटिति चैकमतप्रवर्तने प्रवर्तनमित्यादिकार्यं कथङ्कारं स्थिरं वृद्धिकारकञ्च भवितुं शक्यते ? ॥३॥

आङ्ग्लजनयवनान्त्यजादिभिरपि समं भोजनपानयोः कोऽपि भेदो नागण्यताभीभिः । भोजनपानजातिभेदनिराकरणेनैवास्माकं देशो वयञ्च समुन्नतिमेष्याम इत्येवामी समवाधारयिष्यन् खलु । परमीदृशैर्वृत्तैः समुन्नतिस्तु दूरमास्तां प्रत्युतावनतिर्जायते ॥४॥

**प्र०**—जातिभेद ईश्वरकृतो मनुष्यकृतो वा विद्यते ?

**उ०**—ईश्वरकृतो मनुष्यकृतोऽपि च जातिभेदो वर्तते ।

**प्र०**—कतम ईश्वरकृतः कतमश्च मनुजकृतः ?

**उ०**—मनुष्यपशुपक्षिवृक्षजलजन्तुप्रभृतिजातयः परमेश्वरकृतास्सन्ति । यथाहि खलु पशुषु गवश्वहस्तिप्रमुखा जातयः पादपेषु पिप्पलवटाम्रादयो विहङ्गमेषु हंसवायसवकादयो जलजन्तुषु च मत्स्यमकरादयोजातिभेदा

परमेश्वरकृताः। तथा च मनुजेषु ब्राह्मणक्षत्रियवैश्यशूद्रान्त्यजा जातिभेदा स्सन्ति। परं मनुजेषु ब्राह्मणादयस्सामान्यजातिषु नैव गण्यन्तेऽपि तु सामान्यविशेषात्मकजातिषु। यथा प्राग्वयं वर्णाश्रमव्यवस्थायामवर्णयाम तथैव गुणकर्मस्वभावतोऽवश्यं वर्णव्यवस्था मन्तव्या। अमीभिर्मनुजकृतैरेषां गुणकर्मस्वभावैः पूर्वोक्तानुसारं ब्राह्मणक्षत्रियवैश्यशूद्रादिवर्णानां परीक्षापूर्वकं व्यवस्थाविधानं नृपवराणां विद्वद्वर्याणाञ्च कृत्यम्। भोजनभेदोऽपि परमेश्वरकृतो मनुजकृतश्चास्ति। यथा सिंहो मांसं गोमहिषादयश्च तृणादिकमभ्यवहरन्तीत्ययमीश्वरकृतो देशकालवस्तुभेदेन भोजनभेदो मनुष्यकृतश्चास्ति।

प्र०—आलोक्यतां यूरोपीयजना मुण्डितोपानत्कोटाख्योपरिवस्त्र-पतलूनासख्याधोंऽशुकादि परिदधति होटलाभिधभोजनालये चाखिलजनेन समं भक्षयन्ति सकलजनहस्तसिद्धमन्नमतएव ते निजोन्नतिं वितन्वन्ति सततम्।

उ०—भ्रमोऽयं भवताम्। यवनान्त्यजजना हि सकलहस्तसिद्धमश-नमश्नन्ति। कथं पुनस्तेषामुन्नतिर्न जायते ? यूरोपीयाः खलु बाल्यदशायां विवाहं न कुर्वते। पुत्रं पुत्रीञ्च विद्यासुशिक्षणाभ्यां सुलक्षणसम्पन्नं कुर्वन्ति। स्वयंवरविवाहमनुतिष्ठन्ति। दुर्जनैरुपदेशं न कारयन्ति। स्वयं विद्वाँसो भूत्वा यस्य कस्यापि पाखण्डजाले न पतन्ति। यत्किञ्चित् कुर्वन्ति तत्सकलं मिथो विमृश्य सभया च निश्चित्यैव विदधति, स्वजातिसमुन्नतिकृते तनुमनो-धनानि व्ययन्ते प्रमादालस्यं विहाय समुद्यमञ्च वितन्वते। दृश्यताम्—स्वदेशनिर्मितोपानहः कार्यालये न्यायालये च नेतुमादिशन्त्यमी न तु देशस्यास्य पादत्राणान्। एतावतैवावगम्यताम्—निजदेशनिर्मितोपानहमपि कियन्मानं प्रतिष्ठाञ्च कुर्वते। तावन्मानमन्यदेशस्थमनुजानामपि न विदधति खल्विति। विभाव्यताम्—शतवर्षेभ्यः किञ्चिदधिकवर्षाणि सञ्जातान्यत्रागतानां देशे यूरोपीयजनानाम्। परमद्यापीमे जनाः स्थूल-वस्त्रादीनि परिदधति। यथा स्वदेशे पर्यदधुः। किन्त्वमीभिः स्वदेशस्य रीतिर्नात्यज्यत। भवत्सु च बहवो जनास्तान् मिथ्याऽन्वकुर्वन्। तस्मादेव भवन्तो निर्बुद्धयस्ते च बुद्धिमन्त इति निर्णीयते। अनुकरणं खलु न कस्यापि बुद्धिमतः कृत्यम् ? तेषु यश्च यत्कृत्ये नियुक्तस्तद् यथोचितमनुतिष्ठति यथादेशञ्च निदेशे तिष्ठति, स्वदेशीयानां व्यापारादौ कर्मणि च साहाय्यं ददतीत्यादिगुणैः सत्कर्मभिश्चामीषामभ्युदयो वर्तते। मुण्डितपादुकाकोट-पतलूनादिवस्त्रपरिधानेन होटलाख्यसार्वजनिकभोजनालये भोजनपानादिना साधारणेन कर्मणा दुष्कृत्येन च नामी समुन्नतिं गताः खलु ? एषु ज्ञाति-भेदोऽपि विद्यते। विलोक्यताम्–कोऽपि यूरोपीयजनः कामं कियत्यपि महत्य-

धिकारपदे नियुक्तः प्रतिष्ठितश्च स्यात्स यदि कस्याप्यन्यदेशस्यान्यमतस्थस्य वा जनस्य पुत्रीं परिणयेदथवा कापि यूरोपीयजनस्य पुत्री परदेशीयजनेन पाणिग्रहणं कुर्याच्चेत्तत्कालमेव तदीयं निमन्त्रणं सहभोजनं विवाहादिकञ्च कृत्यमन्ये तद्देशीयबान्धवास्तिरस्कुर्वन्ति विरमयन्ति च। न चेदयं ज्ञातिभेदस्तदा किन्तु खलु? 'नास्मासु जातिभेदः' इति व्याहृत्य सरलान्तः-करणान् भवतश्चामी भ्रमयन्ति। भवन्तोऽपि स्वमूर्खतया तन्मन्यन्ते। अतो यत्किञ्चिद् विधेयं तद् विमृश्यैव विधेयं येन पुनरनुतापो न स्यात्। आलोक्यताम्—अगदङ्कारोऽगदश्चापेक्ष्यते व्याधितेन न तु निरामयेण। विद्यावान् नीरोगो विद्याहीनश्चाविद्यारोगग्रस्तो भवति। तद्रोगनिवारणाय सत्यविद्या सत्योपदेशश्चौषधमस्ति। भोजनपानयोरेव धर्मोऽवतिष्ठते विनश्यति चेत्यविद्यारोगोऽयं तेषाम्। यदा कमपि भोजनपानयोरनाचारं कुर्वाणा विलोकयन्ति तदा 'स धर्मभ्रष्टो जातः' इति वदन्ति विदन्ति च तस्य कथनमपि नाकर्णयन्ति निकटे नोपविशन्ति तमपि स्वान्तिके नादिशन्त्युप-वेष्टुम्। अथोदीयतां भवतां विद्या स्वार्थाय परमार्थाय वाऽस्ति? परमार्थस्तु तदानीमेव समपत्स्यत यदा भवतां विद्यया तेषामज्ञानिनां लाभोऽभविष्यत्। यदि—'तैर्न गृह्यते लाभः किं क्रियतामस्माभिः' इति निगद्येत तदायं भवतां दोषो न तेषाम्। यतो यदि भवन्तो निजाचरणं श्रेष्ठमकरिष्यँस्तदा ते भवद्भिः समं प्रेम विधायोपकृता अभविष्यन् परं भवद्भिः सहस्राणामुपकारं विनाश्य निजमेव सुखं सम्पादितं तेन महानयमपराधोऽजनि भवताम्। परोपकरणं हि धर्मः परहानिश्चाधर्म उच्यते। तस्माद् विद्वद्भिर्यथायोग्यं व्यवहृत्याज्ञानिनां दुःखसागरात् तारणाय तरणितुल्यैर्भाव्यम्। सर्वथा मूर्खाणामिव कर्माणि न करणीयानि किन्तु यैः परेषां स्वस्य च दिने दिने-ऽभ्युदयो भवेत् तादृंशि कर्माणि विधेयानि।

प्र०—वयं कमपि ग्रन्थं परमेश्वरप्रणीतं सर्वांशतस्सत्यं वा न मन्यामहे। मनुजानां मतिर्निर्भ्रान्ता न भवतीति तत्प्रणीता अखिला ग्रन्था भ्रान्ता भवन्ति। अतो वयं सर्वेभ्यः सत्यमङ्गीकुर्मोऽसत्यञ्च जहिमः। अपि सत्यं वेदेषु, कृश्चीनधर्मग्रन्थेषु, यवनधर्मपुस्तकेषु वाऽन्यस्मिन् कस्मिन्नपि वा ग्रन्थे स्यात्तदस्माकं ग्राह्यमस्ति, नासत्यं कस्यापि।

उ०—येन कथनेन भवन्तः सत्यग्राहिणो भवितुमभिलषन्ति तेनैवा-सत्यग्राहिणोऽपि निश्चीयन्ते भवन्तः। यदा हि खलु सकला जना निर्भ्रान्ता न भवितुं प्रभवन्ति तदा भवन्तोऽपि मनुष्यत्वाद् भ्रान्तिमन्तस्सन्ति। भ्रान्तिमतां हि वचनानि सर्वांशतः प्रामाणिकानि न सम्भवन्ति यदा तदा भवतां वचनेष्वपि विश्वासो न भविष्यति। तस्माद् भवद्वचनेऽपि सर्वथा न विश्वसनीयम्। यद्येवं तदा विषसम्पृक्तान्नवत् त्याज्यं भवद्वचनम्। ततो

भवत्प्रणीतव्याख्यानग्रन्थस्य प्रामाण्यं केनापि न विधेयम्। "महत्पदमभिप्रेप्सवो भवन्त आत्मानमपि किञ्चिद्विनाश्य स्वपदादपि प्रच्युताः"। न खलु सन्ति सर्वज्ञा भवन्तो यथाऽन्ये जना न सन्ति सर्वज्ञाः। कदाचित् भ्रमेणासत्यमङ्गीकृत्य सत्यमपि पर्यहरिष्यन्। तस्मात् सर्वज्ञस्य परमात्मनो वचनस्य साहाय्यमस्मादृशैरल्पज्ञैरवश्यमपेक्षणीयम्। यथा वेदव्याख्याने प्रत्यपादयाम तथा भवद्भिरवश्यमेव मन्तव्यम्। अन्यथा—"इतो भ्रष्टास्ततो भ्रष्टाः" सम्पत्स्यन्ते। यदा खलु सकलं सत्यं वेदेभ्य उपलभ्यते येषु लेशतोऽप्यसत्यं नास्ति चेत्तेषां स्वीकरणे शङ्काकरणं स्वस्य परेषाञ्च केवलं हानिसम्पादनमेव विद्यते। अनेनैव हेतुनाऽऽर्यावर्त्तीया इमे भवतो नैजानिव नैव गणयन्ति। भवन्तश्चार्यावर्त्तीयाणामुन्नतेः कारणभूता अपि नापारयन् भवितुम्। सकलगृहभिक्षुका हि स्थिता भवन्तः। भवन्तोऽवधारयन्ति—"अनेन कर्मणा वयं स्वस्य परस्य चोपकारं कर्त्तुं पारयिष्यामः" इति परं तन्न कर्त्तुं शक्ष्यन्ति। यथा–कस्यापि पितरौ सकलसंसारस्य बालकान् पालयितुं प्रवृत्तौ भवेताञ्चेत्सकलानां पालनं त्वसम्भवं परं तेन कर्मणा स्वबालकानपि विनाशयेताम्। तथैवाऽत्रभवतां गतिरस्ति। वरम्, वेदादिसत्यशास्त्राण्यमत्वा भवन्तः स्ववचनानां सत्यतामसत्यताञ्च परीक्षितुमार्यावर्तस्य चोन्नतिमपि विधातुं कदापि प्रभविष्यन्ति खलु? देशस्य यो रोगः सञ्जातस्तस्यौषधं भवदन्तिके न विद्यते। योरोपीया जनाश्च नापेक्षन्ते भवतः। आर्यावर्तीयजनास्तु भवतोऽन्यमतवादिन इवावबोधन्ति। अधुनापि विबुध्य वेदादीन् मत्वा देशोन्नतिं विधातुं प्रयतेरँश्चेत्तदपि समीचीनमस्ति। "सकलं सत्यं परमेश्वरात् प्रकाश्यत" इतीदं भवन्तो यदि वदन्ति तदा पुनर्महर्षीणामात्मसु परमेश्वरप्रकाशितान् सत्यार्थान् वेदान् किमिति न मन्यन्ते? आम्, इदमेव कारणं खलु यद् भवन्तो वेदान् नापठन् पठितुमभिलाषमपि न कुर्वन्ति चेति कथङ्कारं भवतां वेदोक्तं ज्ञानं भविष्यति? ॥५॥

अन्यच्च जगदुपादनकारणं विनैव जगत उत्पत्तिं जीवमपि चोत्पन्नं मन्वते यथा कृश्चीनयवनादयो मन्यन्ते। अस्योत्तरं सृष्ट्युत्पत्तिजीवेश्वर व्याख्यायां द्रष्टव्यम्। कारणमन्तरेण हि कार्योद्भवः सर्वथा न सम्भवति। उत्पन्नवस्तुनो विनाशाभावोऽपि तथैवाऽसम्भवः॥६॥

अयमप्येको भवतां दोषोऽस्ति यत्पश्चात्तापेन प्रार्थनया च पापानां निवृत्तिं मन्यन्ते। अनेनैव वृत्तेन जगति विपुलानि पापानि सन्त्युपचितानि। यतः पौराणिकास्तीर्थादियात्रया, जैना अपि नवकारमन्त्रजपेन तीर्थादिना च, कृश्चीना जना ईसाविश्वासेन, यवनाश्च "तोबाः" इति कथनेन भोगं विनैव पापानां निवृतिं मन्वते तेन पापेभ्यो भयं न विधाय पापेऽतितरां प्रवृत्तिः सञ्जाताऽस्ति। अस्मिन् कथने ब्राह्मप्रार्थनासमाजावलम्बिनोऽपि

पौराणिकादिसदृशास्सन्ति। वेदान् यदि समाकर्णयिष्यँस्तदा भोगं विना पापपुण्यानामनिवृत्त्या पापेभ्योऽभेष्यन् धर्मे च निरन्तरं प्रवृत्ता अभविष्यन्। यदि विनोपभोगं निवृत्तिर्मन्येत तदा परमेश्वरोऽन्यायकारी भवति ॥७॥

जीवस्य याऽनन्तोन्नतिर्मन्यते भवता सा कदापि न सम्भाव्यते, यतः ससीमानां जीवस्य गुणकर्मस्वभावानां फलेनापि नियतं ससीम्ना भाव्यम्।

**प्र०**--परमेश्वरो दयालुरस्ति तस्मात् ससीम्नां कर्मणां फलमनन्तं दास्यति।

**उ०**--एवं कुर्याच्चेत्परमेश्वरस्य न्यायो विनश्येत सत्कर्मणामुन्नतिमपि कोऽपि न करिष्यति। यतोऽल्पस्यापि सत्कर्मणः फलमनन्तमीश्वरो दास्यति। पश्चात्तापेन प्रार्थनया वापि च कियन्त्यपि पापानि स्युश्चेत्तानि सकलानि विनंश्यन्तीतीदृशकथनैर्धर्मस्य हानिः पापकर्मणाञ्च वृद्धिर्जायते।

**प्र०**—वयं स्वाभाविकं ज्ञानं वेदेभ्योऽपि महन्मन्यामहे नतु नैमित्तिकम्, यतः स्वाभाविकं ज्ञानं परमेश्वरदत्तमस्मासु यदि नाभविष्यत्तदा वेदानपि जनाः कथमपठिष्यन्नपाठयिष्यन्नवागमिष्यन्नवागमयिष्यँश्चेति मतमस्माकमतीवोत्तमं विद्यते।

**उ०**—भवतां कथनमिदं निरर्थकमस्ति। यतो यत् केनापि दत्तं ज्ञानं भवति न तत् स्वाभाविकं भवति। यत्स्वाभाविकमस्ति तत्सहजं ज्ञानं भवति। तस्यापचयोपचयौ न भवतः। तेन कोऽप्युन्नतिं विधातुं न प्रभुः। यतो वन्यजनेभ्योऽपि स्वाभाविकं ज्ञानमस्ति तथापि ते निजोन्नतिं कर्त्तुं न समर्थाः। यच्च नैमित्तिकं ज्ञानं तदेवोन्नतेर्निदानम्। दृश्यताम्—यूयं वयञ्च बालदशायां कर्त्तव्याकर्त्तव्ये धर्माधर्मौ किञ्चिदपि यथार्थतो नाजानीम। यदा वयं प्राज्ञेभ्योऽपठाम तदानीमेव कर्त्तव्यमकर्त्तव्यं धर्ममधर्मञ्चावगन्तुमपारयाम। ततः स्वाभाविकज्ञानस्य सर्वोत्तमत्वेन मननं न युक्तम् ॥८॥

यद् भवन्तः पूर्वजन्मपुनर्जन्मानि नामन्यन्त तत् कृश्चीनयवनमताभ्यां गृहीतं स्यात्। अस्याप्युत्तरं पुनर्जन्मविषयव्याख्यया विज्ञेयम्। परमेतावद् बोध्यम्—"जीवः शाश्वतोऽर्थान्नित्योऽस्ति तस्य कर्माण्यपि च प्रवाहरूपेण नित्यानि सन्ति। कर्मकर्मवतोर्नित्यः सम्बन्धो भवति। किमयं जीवः क्वचिन्निष्कर्माऽतिष्ठत्? स्थास्यति वा? परमेश्वरोऽपि भवत्कथनेन निष्कर्मा सम्पद्यते। पूर्वापरजन्मनोरनङ्गीकरणेन कृतहानिरकृताभ्यागमो नैर्घृण्यं वैषम्यञ्चेति दोषा अपि परमेश्वर आपद्यन्ते। यतो यदि जन्म न स्यात्तदा पापपुण्ययोः फलभोगहानिर्जायेत। यथा ह्यन्यस्मै सुखं दुःखं हानिर्लाभश्च दीयते तथैव तस्य फलं शरीरधारणमन्तरेण न जायते। अन्यच्च पूर्वजन्मनः पापपुण्यमन्तरेण सुखदुःखोपलब्धिरिह जन्मनि कथङ्कारं भवेत्। यदि पूर्वजन्मनः पापपुण्यानुसारं सुखदुःखावाप्तिर्न स्यात्तदा

परमेश्वरोऽन्यायकारी भवेत्। अनुपभुक्तविनष्टस्येव कर्मणः फलं सञ्जायेतेतीदमपि कथनं भवतां नोत्तमम् ॥९॥

अथ च परमेश्वरमन्तरेण दिव्यगुणवन्तः पदार्था विद्वांसोऽपि च न सन्ति देवा इत्यभ्युपगमोऽपि नोपपद्यते। परमेश्वरो हि सकलदेवानामधिपतित्वान्महादेव उच्यते। अन्ये देवा यदि नाभविष्यँस्तदायं महादेवः कथमवक्ष्यत ? ॥१०॥

अग्निहोत्रादिपरोपकारकर्माणि कर्तव्यतया न बुध्यन्त इति यत्तन्न साधु ॥११॥

ऋषिमहर्षिकृतोपकारान् न मत्वा—ईसादिमते प्रवर्त्तनं न समीचीनम् ॥१२॥

कारणविद्यारूपवेदान् विहायान्यकार्यविद्यानां प्रवृत्तिस्वीकरणं सर्वथाऽसम्भवं विद्यते ॥१३॥

यच्च विद्यायाश्चिह्नभूतं यज्ञोपवीतं शिखाञ्चापहाय यवनक्रश्चीनजनसदृशावस्थानं तदपि व्यर्थम्। यदा पतलूनादिवस्त्राणि परिदधति भवन्तः सुवर्णादिपदकानि च वाञ्छन्ति तदा किन्नु खलु यज्ञोपवीतादिवस्तुनो महान् भारः समजनि ? ॥१४॥

ब्रह्माणमारभ्यानन्तरमार्यावर्त्ते बहवो विद्वाँसोऽजायन्त तेषां प्रशंसामविधाय यूरोपीयजनानामेव स्तुतौ प्रवर्त्तनमिदं पक्षपातश्चाटुकारिता च न चेत्किमन्यदुच्येत ? ॥१५॥

बीजाङ्कुरवज्जडचेतनयोर्योगेन जीवोत्पत्तिमाननमुत्पत्तेः प्राग् जीवतत्त्वस्यानङ्गीकरमुत्पन्नस्य च विनाशास्वीकरणं पूर्वापरविरुद्धं वर्तते। उत्पत्तेः प्राक् चेतनं जडञ्च वस्तु नासीच्चेज्जीवः कुत आगतः ? संयोगश्च केषां सञ्जातः ? द्वाविमौ सनातनौ मन्येते चेदुपपन्नम्। परं सृष्टेः प्रागीश्वरं विना कस्याप्यन्यस्य तत्त्वस्यास्वीकरणमित्ययं भवत्पक्षो व्यर्थो भविष्यति। अतो यदि भवन्त उन्नतिं विधातुमभिलषन्ति तदा "आर्यसमाजेन" समं सम्मेल्य तदुद्देश्यानुगुणमाचरणमङ्गीकुर्वन्तु, अन्यथा किमपि हस्तगतं न भविष्यति। यतोऽस्माकं भवताञ्चैतदतीवोचितं वर्तते यद् यस्य देशस्य पदार्थैः स्वशरीरं सञ्जातमधुनापि पाल्यते पालयिष्यते च तस्योन्नतिस्तनुमनोधनैः प्रेम्णा सर्वैर्जनैः सम्भूय क्रियेतास्माभिः। अतो यथाऽऽर्यसमाज आर्यावर्तदेशस्योन्नतेः कारणं विद्यते न तथेतरो भवितुं शक्तः। यद्यस्मै समाजाय यथावत् साहाय्यं दद्युर्जनास्तदाऽतितरां समीचीनं वृत्तम्। समाजस्य हि सौभाग्यसंवर्द्धनं समुदायस्य कर्त्तव्यं नैकस्य खलु ॥१६॥

प्र०—भवान् सकलानां खण्डनमेव सदा कुरुते परं स्वस्वधर्मे सर्वे खलूत्तमास्सन्ति। खण्डनं कस्यापि न करणीयम्। यदि क्रियते तदाऽमीभ्यो

भवता को विशेषः प्रदर्श्यते ? यदि प्रदर्श्यते तदा किन्नु खलु भवतोऽधिकस्तुल्यो वा कोऽपि पुरुषो नासीत् ? नास्ति चाधुना ? ईदृशाभिमानो न युज्यते भवतः। परमात्मनो हि सृष्टौ नन्वेकैकस्मादधिकास्तुल्या न्यूनाश्च बहवः सन्तीति कस्यापि नोचितो गर्वः।

**उ०**—धर्मः सर्वेषामेको भवत्यनेके वा ? अनेके भवन्तीति चेदन्योन्यं विरुद्धा भवन्त्यविरुद्धा वा ? विरुद्धा भवन्तीति चेदुच्येत तदैकं विनान्यो धर्मो भवितुं न शक्यते। अविरुद्धा इति चेत्कथ्येत तदा तु पृथग्भावोऽमीषां निरर्थकोऽस्ति। अतो वयमेक एव धर्म एक एव चाधर्मोऽस्ति नानेक इत्येव विशेषं प्रतिपादयामः। यदि सकलसम्प्रदायानामुपदेशकान् कोऽपि नरेन्द्र एकत्री कुर्यात्तदा ते न भविष्यन्त्येकसहस्रान्न्यूनाः परमेषां मुख्यो भागोऽवलोक्येत चेत् पौराणिकजैनक्रश्चीनयवना इति चत्वार एव सन्ति। एषु चतुर्षु हि सर्वे सम्प्रदायास्समाविशन्ति खलु। कश्चन नृपवर एतेषां परिषदं विरच्य जिज्ञासुस्सन् प्रथमं वाममार्गीयमनुयुञ्जीत—'भगवन् ? अहमद्यावधि कमपि गुरुं कमपि च धर्मं न पर्यगृह्णाम्, तदुरीर्यताम्—'सकलधर्मेषु कस्य धर्म उत्तमः ? यमहमङ्गीकुर्यामिति' ?

**वाम०**—अस्माकमस्ति।

**जिज्ञासुः**—इमे नवनवत्यधिकनवशतानि कीदृशास्सन्ति धर्माः ?

**वा०**—सकला अनृता नरकगामिनश्च सन्ति यतः **"कौलात्परतरन्नास्ति"** इति वचनस्य प्रामाण्येनास्मदीयधर्मात्परमः कोऽपि न धर्मः।

**जि०**—भवतां को धर्मः ?

**वा०**—भगवतीमाननं मद्यमांसादिपञ्चमकारसेवनं रुद्रयामलादिचतुःषष्टितन्त्राणाञ्चाङ्गीकरणमित्यादिधर्मः। यदि त्वं मुक्तिं वाञ्छसि तदाऽस्माकं शिष्यो भव।

**जि०**—वरम्, परमन्येषां महात्मनामपि दर्शनं विधायानुयुज्य च तानागमिष्यामि तदनु यस्मिन् मम श्रद्धा प्रीतिश्च भविष्यति तस्याहं शिष्यो भविष्यामि।

**वा०**—अये ! किमिति भ्रान्त्यां पतितोऽसि ? इमे जनास्त्वां भ्रमयित्वा स्वमतजाले निपातयिष्यन्ति। मा गाः कस्याप्यन्तिकम्। अस्माकमेव शरणमायाहि। अन्यथा पश्चात्तप्स्यसे। पश्य—अस्मन्मते भोगमोक्षावुभावपि विद्येते।

**जि०**—सुष्ठु खलु, विलोक्य तु समागच्छानि। अथ शैवाभ्यर्णमुपगम्याप्राक्षीदसौ। सोऽपीदृशमेवोत्तरमदात्। एतावन्तं विशेषमब्रवीत्—"शिवं रुद्राक्षभस्मधारणं लिङ्गार्चनञ्चान्तरेण कदापि मुक्तिर्न भवतीति"। स तं विहाय नवीनवेदान्तिनोऽन्तिकमगमत्।

**जि०**—निगद्यतां भगवन् ! को भवतां धर्मः ?

**वेदान्ती**—वयं धर्माधर्मौ किञ्चिदपि न मन्महे । वयं साक्षाद् ब्रह्म-स्वरूपास्स्मः । अस्मासु धर्माधर्मौ कुतः स्तः ? सकलं जगदिदं मिथ्याऽस्ति । यदि त्वं ज्ञानी शुद्धचेतनो भवितुमिच्छेस्तदाऽऽत्मानं ब्रह्म मनुष्व । जीवभावं जहीहि । नित्यमुक्तो भविष्यसि ।

**जि०**—यदि भवान् नित्यमुक्तं ब्रह्मास्ति तदा ब्रह्मणो गुर्णकर्मस्वभावाः कथं न सन्ति भवति ? शरीरे च कथं बद्धोऽस्ति ?

**वे०**—तुभ्यं शरीरं प्रतीयते—इत्येव त्वं भ्रान्तोऽसि । अस्मभ्यं तु किमपि न प्रतिभाति ब्रह्मणो विना ।

**जि०**—को भवान् द्रष्टा, कञ्च पश्यति ?

**वे०**—द्रष्टृ ब्रह्म । ब्रह्म च ब्रह्म पश्यति ।

**जि०**—किं द्वे ब्रह्मणी स्तः ?

**वे०**—नैव । स्वयमात्मानं पश्यति ।

**जि०**—किं कोऽपि स्वभुजशिरसि स्वयमेव समारोढुं शक्नोति ? भवत्कथनं निरर्थकम् । केवलं विक्षिप्ततेयम् ।

अथासौ जैनानामुपकण्ठमुपगम्य समप्राक्षीत् । तैरपि तथैवोक्तम् । परमेतावान् विशेष उदीरितः—'जिनधर्मं विनाऽन्ये सकला धर्मा अनृतास्सन्ति जगतः कोऽप्यनादिरीश्वरः कर्त्ता नास्ति । अनादिकालतो जगदिदमेतादृशमेव स्थितमस्ति स्थास्यति च । एहि त्वमस्माकं शिष्यो भव । यतो वयं सम्यक्त्ववन्तोऽर्थात्सर्वथोत्तमास्स्मः । उत्तमानि तत्त्वानि मनुमहे । जैनमार्गादन्ये सकला मिथ्यात्ववन्तः सन्ति' । इति ।

अथोपगम्य कृश्चीनधर्मीयमपृच्छत् । स वाममार्गीय इव सकलं प्रश्नोत्तरमकार्षीत् । एतावान् विशेषः प्रदर्शितस्तेन । 'सर्वे जनाः पापीयांसस्सन्ति । स्वसामर्थ्येन पापानि न विनश्यन्ति । यीशोपरि विश्वासमन्तरेण पवित्रो भूत्वा मुक्तिं नोपलब्धुं पारयति जनः । यीशाख्यदेवः सर्वेषां प्रायश्चित्तार्थं स्वप्राणान् समर्प्य दयां प्रकाशितवान् । त्वमस्माकमेवानुयायी भवेति' ।

उपश्रुत्येदं जिज्ञासुर्मौलवीमहोदयसकाशमुपेयिवान् । तेन साकमपि तथैव प्रश्नोत्तराणि व्यदधादयम् । विशेषतः स इदमवादीत्—खुदानामानं परमेश्वरं तदीयसंदेशहरं पैगम्बराख्यं कुरानशरीफाभिधं धार्मिकग्रन्थञ्चामत्वा कोऽपि मुक्तिं प्राप्तुं न प्रभुः । य इमं धर्मं न मनुते स नरकगामी दस्युर्हन्तव्यश्चास्तीति ।

निशम्येदं जिज्ञासुर्वैष्णवाभ्याशमयासीत् । तादृश एव संवादोऽजनि, इयान्निगदितो विशेषः—'अस्माकं तिलकमुद्रां विलोक्य यमराजो बिभेतीति'

जिज्ञासुर्मनसि समज्ञासीत्—'यदा मशकमक्षिकाराजसैनिकतस्करलुण्ठकरिपवो न त्रस्यन्ति तदा यमराजगणाः कथमिव त्रस्येयुः खलु इति ।

अथाग्रे प्रस्थितस्तदा तस्मै सकलमतीयाः स्वं स्वं सत्यं प्रत्यपादयन् । कोऽपि कबीरं सत्यं कोऽपि नानकं कश्चिद् दादूं कश्चन वल्लभं कोऽपि सहजानन्दं कोऽपि च माधवं महात्मानं प्रभोरवतारञ्च निरदिशत् । एवं सहस्रजनाननुयुज्य तेषां परस्परं विरोधमवलोक्य जिज्ञासुर्विशेष निरचैषीत्—'कोऽप्येतेषु गुरुर्विधातुं नार्हः । यत एकैकस्य मिथ्यात्वे नवनवत्यधिकनवशतानि मनुजाः साक्षिणः संवृत्ताः । यथाऽसत्यवादिन आपणिका गणिकाजना विटादयो वा निजनिजपदार्थं प्रशंसन्ति परेषां पदार्थान् निन्दन्ति च तद्वदेवैते सन्तीति' । इत्थं विज्ञाय—

**तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥१॥**
**तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय ।**
**येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तान्तत्त्वतो ब्रह्मविद्याम् ॥२॥**

—मुण्डक १ । खं० २ । म० १२, १३

तस्य सत्यस्य विज्ञानाय स जिज्ञासुः समित्पाणिरर्थात् करौ सम्पुटीकृत्याऽरिक्तहस्तो भूत्वा वेदविदं ब्रह्मनिष्ठं परमात्मविज्ञातारं गुरुमुपगच्छेत् । अमीषां पाखण्डिनां जालेषु न निपतेत् ॥१॥

यदेदृशो जिज्ञासुर्विद्वाँसमुपसीदेत् तदा तस्मै शान्तचेतसे जितेन्द्रियाय समीपमुपेयुषे जिज्ञासवे स याथार्थ्येन ब्रह्मविद्यां परमात्मनो गुणकर्मस्वभावान् सम्यगुपदिशेत् । येन येन च साधनेन स श्रोता धर्मार्थकाममोक्षान् परमात्मानञ्च विज्ञातुं पारयेत्तत्तदुपदिशेत् ॥२॥

यदासावीदृशं पुरुषमुपगम्याब्रवीत्—"भगवन् ! साम्प्रतममीषां सम्प्रदायानां विवादैः कलहैश्च मम मानसं सम्भ्रान्तं समजनि । यतो यद्यहमेषु कस्याप्येकस्य शिष्यो भविष्यामि तदा नवनवत्यधिकनवशतजनानां विरोधी भविष्यामि । यस्य नवनवत्युत्तरनवशतानि सन्ति रिपव एकश्च सुहृदस्ति स कदापि सुखमुपलब्धुं न प्रभवतीति भवान् मामुपदिशतु तद् यदहमुररीकुर्यामिति" ।

**आप्तविद्वान्**—इमानि सकलानि मतान्यविद्याजन्यानि विद्याविरोधीनि च सन्ति । मूढान् प्राकृतान् वन्याँश्च मनुजान् भ्रमयित्वा स्वमतजाले निपात्य निजप्रयोजनं साधयन्ति । अमी वराकाः स्वमनुजजन्मफलेन विरहिता भूत्वा निजं मानुजं जनुर्मुधा विगमयन्ति । पश्य—यस्मिन् कथनेऽमी सहस्रजना एकमतयो भवेयुस्तद् वेदस्य मतं ग्राह्यमस्ति । यस्मिँश्च मिथो विरोधस्स्यात्तत् कल्पितमनृतमधर्म्यमग्राह्यमस्ति ।

**जि०**—कथमस्य परीक्षणं स्यात् ?

**आप्तः**—त्वं तानुपगम्य वक्ष्यमाणमिदं पृच्छ। सर्वेषामेकसम्मतिर्भविष्यति। तदासौ तत्सहस्रजनमण्डलीमध्ये स्थित्वाऽब्रवीत्—"शृणुतायि सकला जनाः ? सत्यभाषणे धर्मो मिथ्याभाषणे वा" ? सर्वे समानस्वरेणाब्रुवन्—"सत्यभाषणे धर्मोऽसत्यभाषणे चाधर्म इति"। तथैव विद्याध्ययने ब्रह्मचर्यपालने पूर्णयुवावस्थायां दारग्रहणे सतां सङ्गतौ पुरुषार्थे सत्यव्यवहारादौ च धर्मोऽस्त्यथवान्वविद्याया ग्रहणे ब्रह्मचर्यस्यारक्षणे व्यभिचारकरणे दुर्जनसङ्गे मिथ्याव्यवहारे छलकपटहिंसापरहानिकरणादौ कर्मणि च धर्मः ? सर्व एकमतयो भूत्वाऽवदन्—"विद्यादिग्रहणे धर्मोऽविद्यादिग्रहणे चाधर्म इति। तदा सकलानवादीत् जिज्ञासुः—"सर्वे भवन्त इत्थमेवैकमत्यं विधाय सत्यधर्मस्योन्नतिमसत्यमार्गस्य हानिञ्च किं न खलु कुर्वन्ति ? ते सर्वेऽवदन्—"यदि वयमेवंविधं कुर्यां कोऽस्मान् पृच्छेत् अस्माकं शिष्या अस्मन्निदेशे न तिष्ठेयुः। जीविका च विनश्येत्। पुनर्यमानन्दं वयं कुर्मः स सकलो हस्तादपसरेत्। अतो जानन्तोऽपि वयं निजमतस्योपदेशमाग्रहञ्च वितनुम एव। यतः—"शर्करया करपट्टिका भक्षणीयाः शाठ्येन च जनता प्रतारणीया", इति वृत्तान्तोऽस्ति। दृश्यताम्—जगति सरलहृदयाय सज्जनाय न कोऽपि ददाति नापि पृच्छति गणयति वामु परं यस्तु किमपि शाठ्यं वितनोति स एव पदार्थानुपलभत इति।"

**जि०**—यदि भवन्त ईदृशं पाखण्डं वितत्यान्यमनुजान् प्रवञ्चयन्ति तदा किमिति नृपतिर्न दण्डयति भवतः ?

**सकलमतवादिनः**—राजानमपि वयं निजशिष्यमकार्ष्म। अस्माभिः सुदृढः प्रबन्धो व्यधायि न स विनङ्क्ष्यति।

**जि०**—छलेनान्यमतस्थजनान् प्रतार्य तेषां हानिं कुर्वन्ति भवन्तश्चेत्परमेश्वरसम्मुखं किमुत्तरं दास्यन्ति ? घोरे नरकागारे च निपतिष्यन्ति। अल्पजीवनकृत एतावान्महापराधः किमिति न परित्यज्यते ?

**सकल०**—यदा यथा भविष्यति द्रक्ष्यते तदा। नरकः परमेश्वरस्य च दण्डो यदा भविष्यति तदा भविष्यति, इदानीं तु विधीयत आनन्दः। प्रसन्नतयाऽस्मभ्यं धनादिवस्तुजातं ददति जनाः प्रसह्य तु न किमपि खलु ? ततः किमिति नृपतिर्दण्डयेत् ?

**जि०**—यथा बालकं विप्रलभ्य तस्माद् धनादिवस्तुजातापहर्ता दण्ड्यते तथैव किमिव न भवन्तो दण्ड्यन्ते ?

यतः—

**अज्ञो भवति वै बालः पिता भवति मन्त्रदः।**

—मनु० अ० २। श्लोक ५३

यो ज्ञानरहितो भवति स बालकः। यश्च ज्ञानदाताऽस्ति स पिता

वृद्धश्चोच्यते। यो बुद्धिमान् विद्वानस्ति स तु भवत्कथनेन न वञ्च्यते किन्तु ये बाला इवाज्ञानिनो जनास्सन्ति तेषां वञ्चनकारिणो भवन्तोऽवश्यं दण्डनीया नृपेण।

**सकल०**—राजानः प्रजाश्चाखिला अस्मन्मते सन्ति चेत्को नु खलु दण्डयिताऽस्माकम्? यदेदृशी दण्डव्यवस्था भविष्यति तदेमा वार्ता विमुच्यापरां व्यवस्थां विधास्यामः।

**जि०**—यदिह भवन्तः समासीना व्यर्थं द्रविणं हरन्ति तद् विद्याभ्यासं विधाय बालकान् बालिकाश्च पाठयेयुश्चेद् भवतां गृहमेधिनाञ्च कल्याणं भवेत्।

**सकल०**—यदा वयं बाल्यादारभ्य मरणं यावत् सुखानि जह्याम बाल्यात्प्रभृतियुवावस्थापर्यन्तं विद्याध्ययने संलग्ना भवेम तदनु पाठने उपदेशे च यावज्जीवं परिश्रमं कुर्याम तदा तत्रास्माकं को नु लाभः? वयमनायासेनैव लक्षशो रूप्यकाँल्लभामहे। आनन्दविलासञ्च कुर्महे तं कथं वयं त्यजेम?

**जि०**—अस्य परिणामस्तु दुःखकरो विद्यते। दृश्यताम्—महान्तो रोगा जायन्ते भवताम्, सत्वरं म्रियन्ते भवन्तः। बुद्धिमत्सु निन्दिताश्च भवन्ति तदपि किं न बुध्यन्ते भवन्तः?

**सकल०—टका धर्मष्टका कर्म टका हि परमं पदम्।**
**यस्य गृहे टका नास्ति हा! टका टकटकायते॥१॥**
**आना अंशकलाः प्रोक्ता रूप्योऽसौ भगवान् स्वयम्।**
**अतस्तं सर्वं इच्छन्ति रूप्यं हि गुणवत्तमम्॥२॥**

अयिभ्रातः? त्वं बालकोऽसि। संसारस्य वार्ता न जानीषे। पश्य—टकां विना धर्मष्टकां विना कर्म टकां विना च परमं पदं न प्राप्यते। यस्य गृहे टका नास्ति सः—हा टकाः! हा टका इति रटन्नुत्तमोत्तमपदार्थानेकाग्रदृशा विलोकयँश्च—"हा हन्त! ममान्तिकं द्रव्यमभविष्यच्चेदिमानुत्तमपदार्थानभोक्ष्येऽहमिति" चिन्तयति॥१॥

यतः सर्वे केऽपि षोडशकलायुतस्यादृश्यरूपस्य भगवतो निरूपणं शृण्वन्ति स तु नालोक्यते परं षोडशाणकरूपांशकलायुतो यो रूप्योऽस्ति स एव साक्षाद् भगवानस्ति। अतएव सकला अपि जना रूप्याणामन्वेषणे संलग्ना भवन्ति। यतः सर्वाणि कार्याणि रूप्यैरेव सिद्धयन्ति॥२॥

**जि०**—सुष्ठु खलु भवतां गुप्तलीला प्रकाशं गता भवद्भिर्यावानयं पाखण्डः प्रवर्तितस्सोऽयमखिलः स्वसुखार्थं विहितः परमनेन जगतो विनाशः सम्पद्यते। यथा हि सत्योपदेशेन संसारस्य लाभो भवति तथैवासत्योपदेशेन

हानिर्जायते । यदा धनेनैव प्रयोजनमासीद् भवतां तदा वैतनिकसेवां व्यापारादिकृत्यञ्च विधाय धनं किमिति न संचिन्वन्ति भवन्तः ?

**सकल०**—तस्मिन् परिश्रमो भूयान् हानिरपि च सञ्जायते परमस्यामस्माकं लीलायां हानिः कदापि न भवति किन्तु सततं लाभ एव लाभो भवति । आलोक्यताम्—तुलसीदलं निक्षिप्य चरणामृतं प्रदाय कण्ठिकां कण्ठे परिधाप्य शिष्यविधानेन यावज्जीवं पशुवदधीनः स भवति । ततो यथा तं प्रवर्त्तयामस्तथासौ प्रवर्तते ।

**जि०**—इमे जना भवद्भ्यो विपुलं द्रविणं किमर्थं ददति ?

**सकल०**—धर्मस्वर्गमुक्तिनिमित्तम् ।

**जि०**—यदा भवन्त एव न मुक्ता मुक्तेः स्वरूपं साधनमपि वा न विदन्ति तदा भवत्सेवकैः किं नु लभ्येत ?

**सकल०**—किमिह लोके लभ्यते ? नैव । परं मरणानन्तरं परलोके लभ्यते । यावदिमे जना अस्मभ्यं प्रयच्छन्ति सेवन्ते चास्माँस्तत्कृत्स्नमेभिर्जनैः परलोके प्राप्यते ।

**जि०**—एभिस्तु दत्तं लभ्यते न वेति दूरमास्ताम् । परं ग्रहीतृभिर्भवद्भिः किं नु लभ्यते ? नरकः किञ्चिदन्यद् वा ?

**सकल०**—वयं भजनं विदध्मस्तस्य सुखं लप्स्यतेऽस्माभिः ।

**जि०**—भवतां भजनं तु धनोपार्जनायैवास्ति तदखिलं द्रविणमिहैव स्थास्यति यच्च मांसपिण्डमत्र पाल्यते तदपि भस्मीभूयात्रैव स्थास्यति । यदि भवन्तः परमेश्वरस्य भजनं व्यधास्यँस्तदा भवदात्माऽपि पवित्रोऽभविष्यत् ।

**सकल०**—किं वयमशुद्धाः स्मः ?

**जि०**—आन्तरेऽतितरां मलीमसास्सन्ति ।

**सकल०**—कथं विज्ञातं भवता ?

**जि०**—भवतामाचारव्यवहाराभ्याम् ।

**सकल०**—दन्तिनां दन्ता इव भवन्ति महात्मनां व्यवहाराः, यथा दन्तावलानां भक्षणस्य प्रदर्शनस्य च भिन्ना भवन्ति दन्तास्तथैवाभ्यन्तरे वयं पवित्रास्स्मो बहिश्च लीलामात्रं वितनुमः ।

**जि०**—यदि भवन्तोऽन्तःकरणेन शुद्धा अभविष्यंस्तदा बाह्य कृत्यान्यपि शुद्धान्यभविष्यन्निति भवन्तोऽभ्यन्तरेऽपि सन्ति मलिनाः ।

**सकल०**—कामं कीदृशा अपि स्याम वयं परमस्माकं शिष्यास्तु सज्जनास्सन्ति ?

**जि०**—यादृशा भवन्तो गुरवस्तादृशा एव भवतां विनेया अपि भविष्यन्ति ।

**सकल०**—ऐकमत्यं कदापि न भवितुं शक्यं यतो मनुष्याणां गुणकर्मस्वभावा भिन्नभिन्नास्सन्ति।

**जि०**—यदि बाल्यकालात्समानं शिक्षणं स्यात्सत्यभाषणादिधर्ममङ्गीकुर्यादसत्यभाषणादिकाधर्मं परिजह्यात्तदाऽवश्यमैकमत्यं भवेत्। मतद्वयमर्थाद्धर्मात्मानोऽधर्मात्मानश्चानिशं तिष्ठन्ति। ते तु तिष्ठन्तु परं धर्मात्मनां बाहुल्येनाधर्मात्मनाञ्च न्यूनत्वेन जगति सौख्यं समेधते। यदा चाधर्मकारिणां वैपुल्यं जायते तदा दुःखं वर्द्धते। यदि सर्वे विपश्चिद्वर्याः सदृशमुपदिशेयुस्तदैकमत्यसम्पादने न कोऽपि विलम्बस्स्यात्।

**सकल०**—अद्यत्वे कलियुगमस्ति। सत्ययुगस्य वृत्तं नाभिलष्यतां भवता।

**जि०**—कलियुगमिति कालस्य नाम विद्यते। कालो हि निष्क्रियत्वात् किञ्चिदपि धर्माधर्मयोः सम्पादने साधको बाधको वापि न भवति किन्तु भवन्त एव कलियुगस्य मूर्त्तयः सम्पद्यन्ते। यदि मनुजा एव सत्ययुगस्य कलियुगस्य च स्थानापन्ना न सम्पद्येरंस्तदा कोऽपि संसारे धर्मात्मा अधर्मात्मा नाभविष्यत्? तदिमे सकलाः सङ्गस्य गुणदोषास्सन्ति न तु नैसर्गिकाः।

इत्थमभिधायाप्तविद्वांसमुपसेदिवानसौ। अवादीच्च—'भगवन्! भवताहमुद्धृतोऽस्मि खलु, अन्यथाऽहमपि कस्यापि पाखण्डजाले निपत्य व्यनङ्क्ष्यम्। अधुनाऽहमपि पाखण्डिनाममीषां खण्डनं वेदोक्तसत्यमतस्य च मण्डनं विधास्यामीति।'

**आप्तः**—इदमेव सर्वेषां मनुजानां विशेषतो विदुषां संन्यासिनाञ्च कर्त्तव्यं वर्त्तते यदखिलजनान् सत्यस्य मण्डनमसत्यस्य च खण्डनं पाठयित्वा च सत्योपदेशेनोपकुर्वीरन्निमे।

**प्र०**—ये ब्रह्मचारिणः संन्यासिनश्च सन्ति ते तूत्तमास्सन्ति?

**उ०**—इम आश्रमास्तूत्तमास्सन्ति परमद्यतने समये ह्येतेष्वपि भूयान् खलु चारित्र्यव्यतिक्रमो वर्त्तते। कियन्त एव ब्रह्मचारीति निजं नाम विदधति निरर्थका जटाश्च वर्द्धयित्वा स्वसिद्धभावं ख्यापयन्ति जपपुरश्चरणादौ च निलीयन्ते विद्याध्ययनस्य नामापि माददते। येन हेतुना ब्रह्मचारिण इत्यभिधीयन्ते तद् ब्रह्मार्थाद् वेदमध्येतुं किञ्चिदपि नामी प्रयतन्ते। ब्रह्मचारिणस्तेऽजागलस्तना इव निरर्थकास्सन्ति। तथैवामी संन्यासिनोऽपि सन्ति ये विद्याविहीना दण्डकमण्डलू समादाय केवलं भैक्षचर्यां चरन्तः काञ्चिदपि वेदमार्गस्योन्नतिं न वितन्वन्ति। अल्पवयसि च संन्यासदीक्षां परिगृह्य परिभ्रमन्ति विद्याभ्यासञ्च परिजहति। एतादृशा ब्रह्मचारिणः संन्यासिनश्चेतस्ततो जलस्थलपाषाणादिमूर्त्तीनां पूजनञ्च कुर्वाणा विचरन्ति।

कियन्तो विद्यामधिगम्यापि मौनं भजन्ति। उपह्वरे यथेष्टं भोजनपानं विधाय शेरते। ईर्ष्याद्वेषयोर्निपत्य निन्दां कुचेष्टाञ्च विधाय निर्वहन्ति। काषाय-वसनधारणेन दण्डग्रहणेन च केवलमात्मानं कृतकृत्यमवगच्छन्ति सर्वोत्कृष्ट-मात्मानञ्च विदित्वा कृत्यमुत्तमं नानुतिष्ठन्ति। एतादृशः संन्यासिनोऽपि संसृतौ वृथा निवसन्ति। ये चाखिलजगतो हितं साधयन्ति ते तूत्तमास्सन्ति।

**प्र०**—गिरीपुरीभारती प्रभृतिनामानो गोस्वामिनस्तूत्तमास्सन्ति। यतस्ते मण्डलीं विरच्य इतस्ततो विचरन्ति परश्शतान् साधूनानन्दयन्ति सर्वत्राद्वैतमतञ्चोपदिशन्ति किञ्चित् पठन्ति पाठयन्त्यपि। अतएव ते तूत्तमा भविष्यन्ति।

**उ०**—इमानि सर्वाणि दश नामानि पश्चात् कल्पितानि सन्ति न तु सनातनानि। तेषां मण्डल्यः केवलं भोजनार्थं विद्यन्ते। बहवः साधवो भोजनार्थमेव मण्डलीषु तिष्ठन्ति। एते दम्भिनोऽपि भवन्ति। एकं हि महान्तं विदधति यश्च तेषु प्रधानो भवति। स गुरुपीठमधितिष्ठति सायङ्काले। सकला भूदेवास्साधवश्च समुत्थाय हस्ते पुष्पाणि समादाय—

**नारायणं पद्मभवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च।**
**व्यासं शुकं गौडपदं महान्तम् ॥**

इत्यादिश्लोकान् व्याहृत्य हर हरेत्युदीर्य तदुपरि पुष्पाण्यवकीर्य च साष्टाङ्गं प्रणमन्ति। यः कोऽप्येवं नाचरेत्तस्य तत्रावस्थानमपि कठिनं सम्पद्यते। संसारस्य प्रदर्शनाय दम्भोऽयं विधीयते येन जगति प्रतिष्ठामुप-गम्य द्रव्यादिकं प्राप्येत। कियन्त एव मठधारिणो गृहस्था भूत्वाऽपि संन्यासस्य केवलमभिमानं कुर्वन्ति कर्म तु किमपि नानुतिष्ठन्ति। संन्यासिनस्तदेव कर्मास्ति यत्पञ्चमसमुल्लासे प्रत्यपादि, तदननुष्ठाय व्यर्थं समयं गमयन्ति। यः कोऽपि सम्यगुपदिशेत्तस्यापि विरोधिनो भवन्ति। प्रायेणैते जना भस्म-रुद्राक्षान् धारयन्ति केचिच्च शैवसम्प्रदायस्याभिमानमाकलयन्ति यदा कदापि शास्त्रार्थं कुर्वन्ति तदा स्वमतस्य श्रीशङ्कराचार्योक्तस्य स्थापने चक्राङ्किताादि-मतस्य च प्रत्याख्याने प्रवर्तन्ते। परं वेदमार्गस्योन्नतौ, यावन्तश्च पाखण्ड-मार्गास्सन्ति तावतां खण्डने च प्रवृत्ता न भवन्ति। खण्डनमण्डनाभ्यां किं नु प्रयोजनमस्माकं वयं तु महात्मानस्स्म इतीमे संन्यासिनो जना अवबुध्यन्ते। ईदृशा जना अपि भारभूता भवन्ति भूमिमण्डले। यदेदृशी दशा विद्यते तदानीमेव तु वेदमार्गविरोधिनो वाममार्गादिसम्प्रदायिनः कृश्चीनयवन-जैनप्रमुखाश्चावर्द्धन्त इदानीमपि विवर्द्धन्ते। अमीषाञ्च विनाशस्संजायते दिने दिने तदपि नोन्मीलति विलोचनमेतेषां खलु, कुतो नु समुन्मीलेत् ? यदि किमपि चेतस्येतेषां परोपकारबुद्धिः कर्त्तव्यकर्मसु चोत्साहो भवेत्तदा नु किल। परमिमे जना निजप्रतिष्ठाया भोजनपानाच्चान्यदधिकं किमपि नाव-

गच्छन्ति लोकापवादाच्चातितरां बिभ्यति। पुनः (लोकैषणा) लोके प्रतिष्ठा-भिलाषः, (वित्तैषणा) धनोपचये तत्पराः संवृत्य विषयोपभोगेच्छा (पुत्रैषणा) पुत्रेष्विव शिष्येषु मोहश्चेत्यासां तिसृणामेषणानां परित्याग उचितो वर्त्तते संन्यासिनाम्। यदैषणा एव नामुच्यन्त तदा कथङ्कारं संन्यासो भवितुं शक्यते ? अर्थान्निष्पक्षपाततया वेदमार्गोपदेशेन जगतो हितायाहर्निशं प्रवर्त्तनमेव संन्यासिनां प्रधानं कर्तव्यं वर्तते। यदा स्वानि स्वानि कर्तव्य-कर्माणि नाचरन्ति तदा संन्यास्यादिनामविधानं व्यर्थमस्ति। अन्यथा यथा गृहस्था व्यवहारे स्वार्थे च प्रयतन्ते तेभ्योऽधिकतरं परोपकारकर्मणि संन्यासिनश्चेत् प्रयतेरंस्तदानीमेव सकला आश्रमा उन्नतिपदमारोहेयुः। दृश्यताम्—पश्यतामेव भवतां पाखण्डमतानि संवर्द्धन्ते। कृश्चीना यवना अपि सञ्जायन्ते जनाः। मनागपि भवद्भिर्निजगृहरक्षणं परेषां स्वेषु मेलनञ्च विधातुं न पार्यते ? विधातुं तु तदैव पार्येत यदा भवन्तस्तथा कर्त्तुमभिलषेयुः खलु। यावद् वर्त्तमाने भविष्यति च काले समुन्नतिशीला न जायन्ते मनुजा न तावदार्यावर्त्तीयाणामन्यदेशस्थानाञ्च मानवानामभ्युदयो भविष्यति। यदा-ऽभ्युदयकारकाणि वेदादिसत्यशास्त्राणां पठनपाठनानि ब्रह्मचर्याद्याश्रमाणां यथावदनुष्ठानानि सत्योपदेशाश्च भवन्ति तदैव देशाभ्युदयो जायते। प्रबुध्य-ताम्—बहुलाः पाखण्डवार्ताः किल सत्याः प्रतिभान्ति भवताम्। तद्यथा—यदा कश्चन साधुरापणिकः पुत्रादिदानसिद्धीः प्रदर्शयति तदा तदन्तिके बह्व्यो योषितः समायान्ति कृताञ्जलयश्च पुत्रं याचन्ते। साधुरामश्च सर्वाभ्यः पुत्रलाभस्याशीर्वादं ददाति। तासु यस्या यस्याः सुतो जायते सा सा—"साधुरामस्य वचसा सञ्जातः" इति मनुते। यदा तां कोऽपि—"शूकरीसारमेयीगर्दभीकुक्कुटीप्रमुखीणां प्रसूतिः कस्य साधुरामस्य वचनेनो-द्भवतीति" पृच्छेत्तदा सा किञ्चिदप्युत्तरं दातुं न प्रभविष्यति। "अहं पुत्रं जीवन्तं रक्षितुमलमिति" कश्चिद् व्याहरेच्चेत्स स्वयमेव कथं म्रियते ? कियन्त एव धूर्त्तजना ईदृशीं मायां विरचयन्ति यन्महाबुद्धिशालिनोऽपि जना विप्रलभ्यन्ते यथा धनसार्या धूर्त्तास्सन्ति। एते पञ्च सप्त वा मिलित्वा दवीयसि देशे प्रयान्ति। यश्च तेषु वपुषा सुदृढः सुन्दराकारश्च भवति तं सिद्धं विदधति। यस्मिन् नगरे ग्रामे वा धनाढ्या भवन्ति जनास्तदुपकण्ठ-वर्त्तिनि वने तं सिद्धं स्थापयन्ति। तस्य साधका नगरे प्रविश्यानभिज्ञा भूत्वा यं कमपि—"भवतेदृशोऽत्र कुत्रचिदवलोकितो न वा महात्मेति" पृच्छन्ति। त एवं निशम्य—"कोऽसौ महात्मा कीदृशश्च विद्यते" इत्यनुयुञ्जते। साधका वदन्ति—"महान् योगिराजो वर्तते। तद्दर्शनाय वयं निजनिजगृहाणि परिहाय तत इतस्तं मार्गयन्तो विचरामः स महात्माऽस्यां दिशि समायात इति कस्यापि मुखादस्माभिरश्रावि। गृहस्थो वदति—"यदा स महात्मोप-

लभ्येत तदाऽहमपि विज्ञापनीयः तदीयदर्शनं विधास्यामि। मनोगतवार्ताश्च प्रक्ष्यामीति"। अनेनैव प्रकारेण दिनमखिलं नगरे विचरन्ति। प्रतिजनञ्च तस्य सिद्धस्य कथां व्याहृत्य नक्तं सम्भूय सर्वे सिद्धसाधका अदन्ति पिबन्ति स्वपन्ति च। पुनरपि प्रभाते नगरे ग्रामे वोपगम्य तथैव द्वि-त्रीणि दिनानि तदीयवृत्तं निवेद्य पुनश्चत्वार एव साधकाः कमप्येकं धनाढ्यमुपेत्य निगदन्ति —"उपलब्धस्स महात्मा भवान् दर्शनं कर्त्तुं वाञ्छति चेत्तत्र प्रयातु द्रुतमिति"। यदा स प्रस्थातुमुद्यतो भवति तदा साधकास्तम्—"भवान् किं वृत्तं प्रष्टुमभिलषति? अस्मभ्यं कथयतु तदिति" पृच्छन्ति। तदा कश्चन पुत्रं कोऽपि धनं कश्चिद् रोगनिवृत्तिं कोऽपि च रिपोः पराजयं वाञ्छति। तानखिलानमी साधका नयन्ति। सिद्धसाधका यथासंकेतमर्थाद् यो धनाभिलाषी तं दक्षिणपार्श्वतो, यः पुत्राभिलाषुकस्तं सम्मुखतो, यो रोगनिवारणेच्छुस्तं वामतो, यश्च शत्रुं जिगीषुस्तं पृष्ठतो नीत्वा सम्मुखवर्तिनां मध्ये समुपवेशयन्ति। यदा प्रणमन्ति ते तदानीमेवासौ सिद्धः स्वसिद्धतया आडम्बरतस्त्वरितं तारस्वरेण च ब्रवीति—"किमत्रास्मदन्तिके पुत्रा निहितास्सन्ति? यत्त्वं पुत्राभिलाषेण समायातोऽसीति"। इत्थमेव धनेच्छुम्— "किमत्र द्रव्याणां राशयस्सन्ति? यत्त्वं धनाशया समागतः। साधूनां सकाशे कुतो निहितमस्ति धनमिति"। रोगिणञ्च—"किं वयं भिषजस्स्मः? यत्त्वं रोगनिवारणेच्छयाऽऽगतः। न वयं चिकित्सकाः? यत्तव रोगं निवारयेम। याहि कमपि वैद्यमुपयाहि" इति। परं यदि तस्य पिता रुग्णस्स्यात्तदा तदीयसाधकोऽङ्गुष्ठं माता रुग्णा चेत्तर्जनीं भ्राता व्याधितो यदि तर्हि मध्यमां पत्नी चेदातुरा तदाऽनामिकां कन्या च विकृता चेत्कनिष्ठिकाङ्गुलीं चालयति। तत्सङ्केतमवलोक्य स सिद्धो वदति—"तव पिता व्याधितो माता ते रुग्णा तव भ्राता तव पत्नी तव च दुहिता पीडिताऽस्तीति"। तदा तु ते चत्वारोऽपि बलवन्मोहिता जायन्ते। साधका आचक्षतेऽमून्—"दृश्यताम्— यथास्माभिरवादि तथैवेमे सन्ति न वेति?

**गृहस्थाः**—"आम्! यथा भवद्भिरवोचि तथैवाऽस्ति। बलवदुपकृता वयं भवद्भिः। अस्माकञ्चापि महान् भाग्योदय आसीद्यदीदृशो महात्मोपलब्धो यदीयदर्शनं विधाय कृतार्था वयमभूमेति" गदन्ति। साधका निगदन्ति —"श्रूयतां भ्रातरः! महात्माऽयं मनोगामी विद्यते। अत्र न चिरं निवत्स्यति। यदि किञ्चिदप्यमुष्याशीर्वादो ग्रहीतुमभिलष्यते भवद्भिस्तदा निजनिजसामर्थ्यानुगुणमस्य तनुमनोधनैः परिचर्या विधीयताम्। यतः—'सेवया लभ्यते फलम्।' यदि कस्मिंश्चित्प्रसन्नस्तर्हि न जाने किं वरं दास्यति तस्मै। अगम्या हि सतां गतिः।" इति। ईदृशं प्रशंसनं निशम्य गृहमेधिनो महता हर्षेण तं प्रशंसन्तो निजनिजगृहमायान्ति। 'न खलु कोऽपि निजपाखण्डं प्रकाशयेदिति'

साधका अपि तैः साकमेव प्रयान्ति। तेषां धनिकानां कश्चिन्मित्रवरस्सङ्गच्छेत चेत्तदग्रतः श्लाघन्ते। इत्थमेव ये ये साधकैस्समं व्रजन्ति तेषां तेषां वृत्तान्तमखिलं ते कथयन्ति। यदा नगरे—'अमुकस्थाने कश्चनैको महान् सिद्धः समागतोऽस्ति। तदन्तिकमागम्यतामिति' कोलाहलव्यतिकरस्सम्पद्यते तदा जनानां मण्डलीनां मण्डली तत्रोपगम्य पृच्छति—'महाराज! मम मनसो वृत्तान्तो निवेद्यतामिति।' तदा तु व्यवस्थाव्यतिक्रमेण तूष्णीं भूत्वा मौनमाकलयति विज्ञापयति च—'नास्मान् पीडयन्तुतरां भवन्तः' इति। तदा तु द्रुतमेव तदीयसाधका अपि व्याहर्तुमुपक्रमन्ते—'यदि भवन्त एतं महात्मानं पीडयिष्यन्तितरां तर्हि यास्यत्ययमितः खल्विति।' यश्च कोऽपि महाधनवान् भवति स साधकमन्यत्र आहूय पृच्छति—'मम मनोगतां वार्तां व्याहारयेच्चेदहं सत्यं मन्येयेति'। साधकः पृच्छति—'का वार्त्तास्ति? धनाढ्यस्तां कथयति। तदा तं तथैव संकेतेन नीत्वोपवेशयति। स सिद्धोऽवगम्याविलम्बितमेव वदति। तदा तु सकला मण्डली तन्निशम्यालपति—'अहो! महानयं सिद्धपुरुषोऽस्तीति।' ततः कोऽपि मिष्टान्नं कोऽपि द्रविणं कश्चिद् रूप्यकान् कश्चन सुवर्णमुद्राः कोऽपि वस्त्राणि कश्चिच्चान्यसामग्रीमुपहरति। तदनु यावत्कालं प्रभूता प्रतिष्ठा तिष्ठति तावद्यथाकामं द्रव्यमपहरन्ति ते। कस्मै कस्मैचिद्विवेकनेत्रहीनाय धनाढ्याय जनाय पुत्रप्राप्तेराशीर्वादं भस्म वा प्रयच्छति। तस्माच्च सहस्ररूप्यकानादाय वदति—"तव यदि सत्या भक्तिर्भविष्यति तदा पुत्रमवाप्स्यसीति"। एतादृशा बहवो वञ्चकशिरोमणयो विलसन्ति यान् विद्वद्वरा एव परीक्षितुं प्रभवन्ति नान्ये केऽपि। अत एव वेदादिविद्यानामध्ययनं सताञ्च सङ्गतिर्विधेया येन न कोऽप्यात्मानं मायाजाले निपातयितुं भ्रान्तस्स्यादन्यानपि च रक्षितुं पारयेत्। विद्यैव हि विलोचनं मनुजानाम्। विद्याशिक्षामन्तरेण न जायते ज्ञानम्। ये बाल्यकालादुत्तमविद्याशिक्षणं लभन्ते त एव मनुजा विद्वाँसश्च निष्पद्यन्ते। ये हि खलु कुसङ्गशालिनस्सन्ति ते दुष्टाः पापीयांसो महामूर्खाः संवृत्य विपुलं दुःखं लभन्ते। अतएव ज्ञानं श्रेष्ठमुच्यते—'यो जानाति स एव मनुत' इति।

**न वेत्ति यो यस्य गुणप्रकर्षं स तस्य निन्दां सततं करोति।**
**यथा किराती करिकुम्भजाता मुक्ताः परित्यज्य बिभर्ति गुञ्जाः॥**

—वृ० चा० अ० ११। श्लोक० १२

यो यस्य गुणं न जानीते स तस्य निरन्तरं निन्दां वितनुते। यथा वन्यो भिल्लजनो गजमौक्तिकानि परिहाय गुञ्जाहारं बिभर्ति तथैव यः पुरुषो विद्वान् ज्ञानी धार्मिकः सत्पुरुषसङ्गशीलो योगी पुरुषार्थी जितेन्द्रियः सुशीलश्च भवति स एव धर्मार्थकाममोक्षानुपलभ्यात्रजन्मनि परत्र चानिशमानन्देऽवतिष्ठते।

इदमार्य्यावर्त्तनिवासिजननां मतविषयमभिलक्ष्य संक्षेपतोऽलेखि। अतोऽग्रे यः कोऽपि लेशत आर्यनरेन्द्राणामितिहास उपालभ्यत स सकलसज्जनान् विज्ञापयितुं प्रकाश्यते। अधुनाऽऽर्यावर्त्तदेशीयराजवंशस्य (यस्मिन् श्रीमन्महाराजयुधिष्ठिरादारभ्य महाराजयशःपालपर्यन्ता राजानो बभूवुस्तस्य) इतिहासं लिखामः। श्रीमन्महाराजस्वायंभवमनोरुपक्रम्य महाराजयुधिष्ठिरपर्यन्तानां नृपाणामितिवृत्तं महाभारतादिष्वलिख्यतैव। अनेन सज्जनानां ततोऽऽनन्तरस्याल्पस्येतिहासस्य वृत्तान्तो विदितो भविष्यति। विषयोऽयं खलु विद्यार्थिसम्मिलिताया "हरिश्चन्द्रचन्द्रिकायाः" "मोहनचन्द्रिकायाश्च" अनूदितोऽस्माभिर्या हि पाक्षिकपत्ररूपेण श्रीनाथद्वारतः प्रकाश्यते। या च राजपुत्रदेशे मेवाडराज्ये—उदयपुरे चित्तौडदुर्गे निवसतां सकलजनानां विदिताऽस्ति। यद्येवमेवास्माकमार्यसज्जना इतिहासं विद्याग्रन्थाँश्चान्विष्य प्रकाशयिष्यन्ति तर्हि देशस्य महानेव लाभो भविष्यति। तत्पत्रसम्पादकमहाशयः स्वमित्राद्द्व्यशीत्यधिकसप्तदशशतमिते १७८२ वैक्रमाब्दे लिखितमेकं प्राचीनपुस्तकमादाय स्वीय एकोनचत्वारिंशदधिकैकोनविंशतिशतमिते १९३९ विक्रमसंवत्सरे मार्गशीर्षस्य शुक्लपक्षे १९—२० एकोनविंशे विंशतितमे च किरणेऽर्थात् पाक्षिकपत्रद्वये प्रकाशिवान् राजवंशेतिहासम्। स निम्नलिखितो विज्ञायताम्—

## आर्यावर्त्तदेशीयराजवंशावली

इन्द्रप्रस्थे श्रीमन्महाराजयशःपालपर्यन्ता आर्यनरेन्द्राः शासनं चक्रिरे। येषु श्रीमन्महाराजयुधिष्ठिरमारभ्य महाराजयशःपालपर्यन्तानां वंशेष्वनुमानतः १२४ चतुर्विंशत्युत्तरैकशतनृपतयः ४१५७ वर्षाणि ९ मासान् १४ दिनानि राज्यं चक्रुः। तेषां यथाक्रमं सविस्तरलेखनम्—

श्रीमन्महाराजयुधिष्ठिरवंशे-अनुमानतः ३० नृपाः १७७० वर्षाणि ११ मासान् १० दिनानि राजपपदं बुभुजिरे। तद्यथा—

| आर्यनृपाः | वर्षा० | मा० | दि० |
|---|---|---|---|
| १ राजा युधिष्ठिरः | ३६ | ८ | २५ |
| २ राजा परीक्षितः | ६० | ० | ० |
| ३ राजा जनमेजयः | ८४ | ७ | २३ |
| ४ राजा अश्वमेधः | ८२ | ८ | २२ |
| ५ द्वितीयरामः | ८८ | २ | ८ |
| ६ छत्रमलः | ८१ | ११ | २७ |
| ७ चित्ररथः | ७५ | ३ | १८ |
| ८ दुष्टशैल्यः | ७५ | १० | २४ |
| ९ राजा उग्रसेनः | ७८ | ७ | २१ |
| १० राजा शूरसेनः | ७८ | ७ | २१ |
| ११ भुवनपतिः | ६९ | ५ | ५ |
| १२ रणजीतः | ६५ | १० | ४ |
| १३ ऋक्षकः | ६४ | ७ | ४ |
| १४ सुखदेवः | ६२ | ० | २४ |

| | | | |
|---|---|---|---|
| १५ नरहरिदेवः | ५१ | १० | २ |
| १६ सुचिरथः | ४२ | ११ | २ |
| १७ द्वितीयः शूरसेनः | ५८ | १० | ८ |
| १८ पर्वतसेनः | ५५ | ८ | १० |
| १९ मेधावी | ५२ | १० | १० |
| २० सोनचीरः | ५० | ८ | २१ |
| २१ भीमदेवः | ४७ | ९ | २० |
| २२ नृहरिदेवः | ४५ | ११ | २३ |
| २३ पूर्णमलः | ४४ | ८ | ७ |
| २४ करदवी | ४४ | १० | ८ |
| २५ अलंमिकः | ५० | ११ | ८ |
| २६ उदयपालः | ३८ | ९ | ० |
| २७ दुवनमलः | ४० | १० | २६ |
| २८ दमातः | ३२ | ० | ० |
| २९ भीमपालः | ५८ | ५ | ८ |
| ३० क्षेमकः | ४८ | ११ | २१ |

क्षेमकनृपस्यामात्यो विश्रवाः क्षेमकं नृपतिं विशस्य भुवं शशास। तस्य १४ वंशजाः ५०० वर्षाणि ३ मासान् १७ दिनानि राज्यं चक्रुः। तेषां विवरणम्—

| आर्यनृपाः | वर्षा० | मा० | दि० |
|---|---|---|---|
| १ विश्रवाः | १७ | ३ | २९ |
| २ पुरसेनी | ४२ | ८ | २१ |
| ३ वीरसेनी | ५२ | १० | ७ |
| ४ अनङ्गशायी | ४७ | ८ | २३ |
| ५ हरिजित् | ३५ | ९ | १७ |
| ६ परमसेनी | ४४ | २ | २३ |
| ७ सुखपातालः | ३० | २ | २१ |
| ८ कद्रुतः | ४२ | ९ | २४ |
| ९ सज्जः | ३२ | २ | १४ |
| १० अमरचूडः | २७ | ३ | १६ |
| ११ अमीपालः | २२ | ११ | २५ |
| १२ दशरथः | २५ | ४ | १२ |
| १३ वीरसालः | ३१ | ८ | ११ |
| १४ वीरसालसेनः | ४७ | ० | १४ |

वीरसालसेनं राजानं वीरमहानामा प्रधानो निहत्य राज्यं विदधे। तस्य वंशजाः षोडश ४४५ वर्षाणि ५ मासान् ३ दिनानि राज्यं चक्रुस्तेषां विस्तारः—

| आर्यनृपाः | वर्षा० | मा० | दि० |
|---|---|---|---|
| १ राजावीरमहः | ३५ | १० | ८ |
| २ अजितसिंहः | २७ | ७ | १९ |
| ३ सर्वदत्तः | २८ | ३ | १० |
| ४ भुवनपतिः | १५ | ४ | १० |
| ५ वीरसेनः | २१ | २ | १३ |
| ६ महीपालः | ४० | ८ | ७ |
| ७ शत्रुशालः | २६ | ४ | ३ |
| ८ संघराजः | १७ | २ | १० |
| ९ तेजःपालः | २८ | ११ | १० |
| १० माणिकचन्द्रः | ३७ | ७ | २१ |
| ११ कामसेनी | ४२ | ५ | १० |
| १२ शत्रुमर्दनः | ८ | ११ | १३ |
| १३ जीवनलोकः | २८ | ९ | १७ |
| १४ हरिरावः | २६ | १० | २९ |
| १५ वीरसेनः द्वितीयः | ३५ | २ | २० |
| १६ आदित्यकेतुः | २३ | ११ | १३ |

मगधदेशाधिपमादित्यकेतुनृपतिं प्रयागाधिपतिर्धन्धरो नाम नृपो हत्वा राज्यं चकार तस्य नववंशजाः ३७४ वर्षाणि ११ मासान् २६ दिनानि राज्यं चक्रुः। तेषां विस्तारः—

| आर्यनृपाः | वर्षा० | मा० | दि० |
|---|---|---|---|
| १ राजाधन्धरः | ४२ | ७ | २४ |
| २ महर्षिः | ४१ | २ | २९ |
| ३ सनरच्ची | ५० | १० | १९ |

| आर्यनृपाः | वर्षा० | मा० | दि० |
|---|---|---|---|
| ४ महायुद्धः | ३० | ३ | ८ |
| ५ दूरनाथः | २८ | ५ | २५ |
| ६ जीवनराजः | ४५ | २ | ५ |
| ७ रुद्रसेनः | ४७ | ४ | २८ |
| ८ आरीलकः | ५२ | १० | ५ |
| ९ राजपालः | ३६ | ० | ० |

राजपालराजानं सामन्तो महापालो निहत्य राज्यमकरोत्। वंशः १ वर्षाणि १४ मासान् ० दिनानि ० तस्य विस्तारो नास्ति।

महापालनृपस्य राज्यमाक्रम्यावन्तिकाया (उज्जयिन्याः) अधिराजो विक्रमादित्यस्तं नृपं हत्वा राज्यं विदधौ त्रिनवतिवर्षाणि। नास्ति विस्तारस्तस्यापि।

नृपं विक्रमादित्यं हत्वा शालिवाहनस्य सामन्तः पैठणवास्तव्यः समुद्रपालो योगी राज्यं पालयामास। तस्य १६ वंशजाः ३७२ वर्षाणि ४ मासान् २७ दिनानि राज्यं चक्रिरे तेषां विस्तारः—

| आर्यनृपाः | वर्षा० | मा० | दि० |
|---|---|---|---|
| १ समुद्रपालः | ५४ | २ | २० |
| २ चन्द्रपालः | ३६ | ५ | ४ |
| ३ सहायपालः | ११ | ४ | ११ |
| ४ देवपालः | २७ | १ | २८ |
| ५ नरसिंहपालः | १८ | ० | २० |
| ६ सामपालः | २७ | १ | १७ |
| ७ रघुपालः | २२ | ३ | २५ |
| ८ गोविन्दपालः | २७ | १ | १७ |
| ९ अमृतपालः | ३६ | १० | १३ |
| १० बलिपालः | १२ | ५ | २७ |
| ११ महीपालः | १३ | ८ | ४ |
| १२ हरिपालः | १४ | ८ | ४ |
| १३ सीसपालः[1] | ११ | १० | १३ |
| १४ मदनपालः | १७ | १० | १९ |
| १५ कर्मपालः | १६ | २ | २ |
| १६ विक्रमपालः | २४ | ११ | १३ |

राजा विक्रमपालः पश्चिमदिशाया महीपालं (मलुखचन्द्रबोहराख्यम्) समाक्रम्य रणाङ्गणे युयुधे। युद्धे मुलुखचन्द्रो विक्रमपालं निहत्येन्द्रप्रस्थस्य राज्यं शशास। तस्य १० वंशजा नृपाः १९१ वर्षाणि, मासमेकं १६ दिनानि राज्यं चक्रुः। तेषां विस्तारः—

| आर्यनृपाः | वर्षा० | मा० | दि० |
|---|---|---|---|
| १ मलुखचन्द्रः | ५४ | २ | १० |
| २ विक्रमचन्द्रः | १२ | ७ | १२ |
| ३ अमीनचन्द्रः[2] | १० | ० | ५ |
| ४ रामचन्द्रः | १३ | ११ | ८ |
| ५ हरिश्चन्द्रः | १४ | ९ | २४ |
| ६ कल्याणचन्द्रः | १० | ५ | ४ |
| ७ भीमचन्द्रः | १६ | २ | ९ |
| ८ लोवचन्द्रः | २६ | ३ | २२ |
| ९ गोविन्दचन्द्रः | ३१ | ७ | १२ |
| १० राज्ञी पद्मावती[3] | १ | ० | ० |

राजमहिष्यां पद्मावत्यां दिवं गतायां तदीयतनयाभावात् सर्वे

१. कुत्रचिदितिहासे भीमपालोऽपि लिखितः।

२. मानकचन्द्र इत्यपि नामास्य कुत्रचिदलेखि।

३. पद्मावतीयं गोविन्दचन्द्रस्य राज्ञी समभूत्।

मन्त्रिणः संमन्त्र्य हरिप्रेमनामानं विरागिणं सिंहासने निवेश्य राज्यं विदधिरे। तस्य चत्वारो वंशजाः ५० वर्षाणि २१ दिनानि च राज्यं चक्रुः। तस्य विस्तारः—

| आर्यनृपाः | वर्षा० | मा० | दि० |
|---|---|---|---|
| १ हरिप्रेमा | ७ | ५ | १६ |
| २ गोविन्दप्रेमा | २० | २ | ८ |
| ३ गोपालप्रेमा | १५ | ७ | २८ |
| ४ महाबाहुः | ६ | ८ | २९ |

महाबाहुर्नृपतिर्विहाय राज्यमरण्ये तपस्तप्तुं जगामेति निशम्य वङ्गाधिप आधिसेनो नाम नृप इन्द्रप्रस्थमुपगम्य स्वयं प्रशशास। तस्य १२ वंशजाः १५१ वर्षाणि ११ मासान् २ दिने राज्यं चक्रुः। तद्विस्तारः—

| आर्यनृपाः | वर्षा० | मा० | दि० |
|---|---|---|---|
| १ राजाऽऽधिसेनः | १८ | ५ | २१ |
| २ विलावलसेनः | १२ | ४ | २ |
| ३ केशवसेनः | १५ | ७ | १२ |
| ४ माधवसेनः | १२ | ४ | २ |
| ५ मयूरसेनः | २० | ११ | २७ |
| ६ भीमसेनः | ५ | १० | ९ |
| ७ कल्याणसेनः | ४ | ८ | २१ |
| ८ हरिसेनः | १२ | ० | २५ |
| ९ क्षेमसेनः | ८ | ११ | १५ |
| १० नारायणसेनः | २ | २ | २९ |
| ११ लक्ष्मीसेनः | २६ | १० | ० |
| १२ दामोदरसेनः | ११ | ५ | १९ |

राजा दामोदरसेनो निजसामन्तं भृशमदुनोदिति तस्य सामन्तो दीपसिंहः सेनां भेदेन स्वायत्तीकृत्य राज्ञा सममयुध्यत। युद्धे च नृपं निहत्य दीपसिंहस्स्वयं राज्यं शशास। तस्य ६ वंशजाः १०७ वर्षाणि ६ मासान् २२ दिनानि च राज्यं चक्रुः। तस्य विस्तारः—

| आर्यनृपाः | वर्षा० | मा० | दि० |
|---|---|---|---|
| १ दीपसिंहः | १७ | १ | १६ |
| २ राजसिंहः | १४ | ५ | ० |
| ३ रणसिंहः | ९ | ८ | ११ |
| ४ नरसिंह | ४५ | ० | १५ |
| ५ हरिसिंहः | १३ | २ | २९ |
| ६ जीवनसिंहः | ८ | ० | १ |

जीवनसिंहो महीपतिः केनापि कारणेन स्वां सकलां सेनामुत्तरस्यां दिशि प्रजिघायेति वृत्तमुपश्रुत्य पृथ्वीराजचौहाणाख्यो वैराटाधिराजो जीवसिंहं समाचक्राम। रणाङ्गणे च तं हत्वा पृथ्वीराज इन्द्रप्रस्थराज्यं पालयामास[1]। तस्य पञ्च वंशजा ८६ वर्षाणि २० दिनानि च राज्यं चक्रुस्तद्यथा—

| आर्यनृपाः | वर्षा० | मा० | दि० |
|---|---|---|---|
| १ पृथ्वीराजः | १२ | २ | १९ |
| २ अभयपालः | १४ | ५ | १७ |
| ३ दुर्जनपालः | ११ | ४ | १४ |

---

१. अतोऽग्रेऽन्येष्वितिहासेष्वेवं लिखितमस्ति यन्महाराजपृथ्वीराजं 'सुलतानशहाबुद्दीनग़ोरीनामा' ग़ज़नीपतिः समाक्रमीत्। असकृच्चासौ पराभूय न्यवर्तत्। अन्ततः १२४९ मिते संवत्सरे मिथोवैमनस्यकारणान्महाराजं पृथ्वीराजं विजित्यामुमन्धं विधाय निजदेशमनैषीत्। तदनु दिल्ली राज्यं स्वयमशासत्। यवनानां ४५ वंशजाः ६१३ वर्षाणि राज्यं व्यदधुः।

| आर्यनृपाः | वर्षा० | मा० | दि० |
|---|---|---|---|
| ४ उदयपालः | ११ | ७ | ३ |
| ५ यशःपालः | ३६ | ४ | २७ |

यशःपालमहाराजस्य राज्यं "सुलतानशहाबुद्दीनगोरी" इतिनामधेयो 'ग़ज़नी' राजो बलेन प्रबलेन समं समागम्य समाचक्राम। राजानं यशःपालञ्च प्रयागदुर्गे १२४९ मिते संवत्सरे प्रगृह्यासौ कारागृहे निचिक्षेप। तदनु स 'सुलतानशहाबुद्दीन' नामा स्वयमिन्द्रप्रस्थस्य राज्यं (दिल्लीमिति यावत) शशास। तस्य ५३ वंशजा ७५४ वर्षाणि मासमेकं १७ दिनानि च राज्यं वितेनिरे। तस्य वर्णनं बहुष्वितिहासग्रन्थेषु व्यधीयतेति नात्र व्यधायि।

**अतः परं बौद्धजैनमतविषये लेखिष्यते।**

**इति श्रीमद्दयानन्दसरस्वतीस्वामिकृते सत्यार्थप्रकाशे मेधाव्रतेन देवगिरालङ्कृते आर्य्यावर्त्तीयमतखण्डनमण्डनविषये एकादशः समुल्लासः सम्पूर्णः ॥११॥**

# अनुभूमिका

## ( २ )

यदा खल्वाऽऽर्यावर्तीयमानवेषु सत्यासत्ययोर्विनिर्णेत्री वेदविद्या सर्वथैव विलुप्ता अविद्या च लब्धप्रसाराऽभवत् तदानीमेव मतमतान्तराणि प्रादुरभवन्। एतदेव जैनप्रमुख-विद्याविरुद्धमतप्रचारस्य निमित्तं समजनि। यतो वै वाल्मीकीयमहाभारतादिग्रन्थेषु जैनानां नामापि न विलोक्यते जैनानां ग्रन्थेषु तु वाल्मीकीयभारतादिग्रन्थसमुपवर्णिता रामकृष्णादीनां गाथाः सविस्तारमुपनिबद्धाः। एतेन मतमिदं ततः परस्तात्प्रवृत्तमिति विज्ञायते। यदि हि नाम जैनानां मतं तद्विश्वासानुसारेणातिप्राचीनमभविष्यत्तर्हि वाल्मीकीयप्रभृतिग्रन्थेषु तदुल्लेखोऽसंशयमभविष्यत्। तस्मादिदं मतमेतद्ग्रन्थपरभवमिति निर्विवादम्। "जैनग्रन्थेभ्यः कथाः समादाय वाल्मीकीयादिग्रन्था निर्मिता भविष्यन्ति" इति वादिनः—"वाल्मीकीयादिग्रन्थेषु युष्मद्ग्रन्थानां नास्ति कथं नामापि, कथञ्च तेषां युष्मद्ग्रन्थेषु समुल्लेखः" इति प्रष्टव्याः। किं तनयोऽपि जनयितुर्जन्मविलोकयितुमर्हति ? न कदाचन। तस्मात् जैनबौद्धयोर्मतं शैवशाक्तादिमतेभ्यः परस्तात्प्रचलितमिति सुव्यक्तम्। द्वादशेऽस्मिन् समुल्लासे जैनमतविषये यत्किञ्चदपि विलिखितं तत्सर्वं तेषां ग्रन्थोद्धरण-पूर्वकं विन्यस्तम्। नात्र जैनैर्मनः खेदयितव्यम्। यत्किञ्चिदपि वयमेषां मतविषये व्यलिखाम तत्केवलं सत्यासत्यविनिर्णेतुं नतु विरोधाय नाप्येषामनिष्टाय। जैना बौद्धा अन्ये वा विद्वांसो लेखमिमं विलोक्य सत्यासत्ययोर्मीमांसने विलेखे चावसरं लप्स्यन्ते। यावद्धि वादिप्रतिवादिरूपेण प्रीतिपूर्वकं मिथो वादो लेखो वा न विधीयते तावत्सत्या-सत्ययोर्न भवति निर्णयः। कृतविद्येष्वेव सत्यासत्यविचारशून्येष्वविद्वांसो महाज्ञान-निमग्ना महद्दुःखमुपभुञ्जते, अतः सत्यस्य विजयाय क्षयाय चासत्यस्य मित्रभावेन वादो लेखो वास्मन्मानवजातेः प्रधानं कर्म। अन्यथा हि मानवाः कर्हिचिदप्युन्नतिपथं नारोहेयुः। अयञ्च जैनबौद्धमतविषयविलेखोऽन्यमतावलम्बिनोऽतितरामुपकरिष्यते। एते हि स्वग्रन्थान् मतान्तरावलम्बिभ्यो द्रष्टुमध्येतुं विलेखितुं वा न प्रयच्छन्ति। मुम्बापुर्यार्यसमाजसदस्य-श्रीसेवकलालकृष्णदासश्रेष्ठिनः पुरुषार्थेनाहं महताऽऽयासेनैषां ग्रन्थानाप्नवम्। जैनग्रन्थानां वाराणसीपत्तनस्थित "जैनप्रभाकर" यन्त्रालये मुम्बापुर्याञ्च "प्रकरणरत्नाकरग्रन्थस्य मुद्रणेनान्येषामपि जैनमतविज्ञाने सारल्यं समजनि। स्वमतग्रन्थानां स्वयमेव विलोकन-मन्येभ्यश्चाप्रदानं कैर्विद्वद्भिरनुमोदितम् ? एतेन "एतद्ग्रन्थनिर्मातारः प्रथममेव बिभ्यति स्म यत् "सन्ति वै ग्रन्थेष्वमीष्वसम्भवाख्यानानि अन्यमतानुयायिनः तानि सम्प्रेक्ष्य नूनं निराकरिष्यन्ति" इति। आस्तां तावत्। सन्ति तादृशो भूयांसो नरा ये स्वीयदोषा-नपश्यन्तः परछिद्राण्यन्वेष्टुमतितरां प्रयतन्ते। नैष न्याय्यः पन्थाः। प्रथममात्मनो दोषानपनीय परेषां रन्ध्राणि विलोकनीयानि। अधुना बौद्धजैनमतविषयो विदुषां पुरः प्रस्तूयते। विद्वांसो यथाकामं विवेचयन्तु।

**किमधिकलेखेन बुद्धिमद्वर्य्येषु ॥**

# अथ द्वादशसमुल्लासारम्भः

## अथ नास्तिकमतान्तर्गतचारवाकबौद्धजैनमतखण्डन-मण्डनविषयान् व्याख्यास्यामः

पुरा किल नाम्ना बृहस्पतिरिति विश्रुतो बुधस्समभवत्। स हि वेदानीश्वरं यज्ञादिसत्क्रियाश्च न मनुते स्म। तस्य चेदं मतम्—

**यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः।**
**भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥**

नह्यस्ति मानवादिः कोऽपि चेतनो मृत्योरगोचरः—कर्हिचित् सर्वैरेव पञ्चत्वमुपेतव्यम्, अतो यावदस्मिन्देहेऽयमात्मा निवसेत् तावत् सुखमवतिष्ठेत। "अधर्माचारेण जायते ननु महत् कष्टम्, धर्मपरित्यागेन च महद् दुःखमनुभूयेत परजन्मनीति" वादिनं कञ्चित् चारवाकः प्रत्याचष्टे। "अयि मुग्धभ्रातः! मरणानन्तरं भस्मसात् सम्पद्यमानमुपभुक्तानन्दमिदं(येनास्मिन् जन्मनि भुक्ता वै भोगाः) शरीरं भूयोऽपि लोकममुं नावर्तिष्यते, अतः सर्वप्रयत्नैः सौख्यमुपभुङ्क्ष्व। लोके नयेन व्यवहर। ऐश्वर्यं प्रवर्धय। तेन च यथाभिलाषं भोगान् निर्विश। अयमेव लोकः सर्वस्वं नास्त्यपरः कोऽपि परलोकः। पश्य—पृथिव्यप्तेजोवायूनां चतुर्भूतानां परिणामेनोत्पद्यते खल्विदं शरीरमेषां संयोगेनैव च चैतन्यमपि तत्र समुत्पन्नं भवति। यथा हि मादकद्रव्याणां परिसेवनेन मदः समुत्पद्यते एवं देहेन सहोत्पन्नः खल्वयं जीवस्तेनैव सह प्रलीयते। केन पुनः पुण्यपापयोः फलं समनुभूयेत?

**तच्चैतन्यविशिष्टदेह एव आत्मा देहातिरिक्त आत्मनि प्रमाणाभावात्।**

आत्मा खलु देहे चतुर्भूतसंयोगेन समुत्पन्नः सन्, तद् वियोगसमकालमेव प्रणश्यति। नहि मरणानन्तरं कोपि जीवः प्रत्यक्षतामुपयाति। वयं च केवलं प्रत्यक्षं मन्यामहे, यतः प्रत्यक्षमन्तरेण नानुमित्यादीनि भवन्ति। सम्भवति प्रधाने प्रत्यक्षप्रमाणेऽप्रधानमनुमानादिकं नास्माभिर्गृह्यते। कमनीयाङ्गनालिङ्गनेनानन्दसमवाप्तिरेव पुरुषार्थफलम्।"

उ०—पृथिव्यादिभूतानां जडत्वात् न तेभ्यः कर्हिचित् चेतनेन समुत्पत्तुं शक्यम्। यथाद्यत्वे मिथुनीभावेनैव जनकयोरयं देहः समुत्पद्यते, एवमादि-

सर्गेऽपि मानवादिदेहनिर्माणं कर्तारं परमात्मानमन्तरेण न जातु सम्भवति । मदवच्च चेतनस्योत्पादविनाशौ न जायेते । क्षैव्यं हि चेतनस्य जायते नत्व-चेतनस्य । पदार्थाश्च विनाशम्—अदर्शनतामुपयान्ति, अभावस्तु कस्यापि न भवति । एवमात्मनोऽप्यदृश्यतया नाभावोऽभ्युपेतव्यः । अयं जीवात्मा सदेहः सन् प्रकाशभावमुपगच्छति । यदा चायमात्मा परित्यजति देहमिमं तदा प्राप्त-निधनमेतच्छरीरं न यथापूर्वं भवति सचेतनम् । बृहदारण्यकेऽपि समाम्नातः खल्वेषोऽर्थः । तद्यथा—

**नाहं मोहं ब्रवीमि, अनुच्छित्तिधर्मायमात्मेति ।**

याज्ञवल्क्यः समुपदिशति "अयि मैत्रेयि ! यत्संयोगेन शरीरमिदं चेष्टते सोऽयमात्मा अविनश्वर इति नाहं व्यामुग्धेन चेतसा ब्रवीमि । शरीरं विहाय निर्गते जीवात्मनि नास्मिन्देहे किमपि ज्ञानमवशिष्यते । देहस्यैवात्मत्वे तु पुनर्मरणानन्तरमपि पूर्ववत् ज्ञानमवशिष्येत । तस्माद् यस्यात्मनः संयोगेन चैतन्यं वियोगेन च जाडचमुत्पद्यते शरीरे व्यतिरिक्तः सोऽयमात्मा देहादमुष्मात्" इति ।

यथा हि चक्षुरिदं सर्वं पश्यदपि नात्मानं पश्यति एवं (अन्येषाम्) प्रत्यक्षं कुर्वताप्यात्मना स्वस्य ऐन्द्रियकं प्रत्यक्षं कर्तुं न शक्यते । यथा च स्वीयचक्षुर्भ्यां निखिलं घटपटादिपदार्थजातं वीक्षते चक्षुषी एवमात्मनो ज्ञानेन वीक्षते । द्रष्टा सततं द्रष्टैव सन्तिष्ठते न कर्हिचिद् दृश्यतामुपैति । यथा चाधार आधेयं विना, कार्यं कारणं विना, अवयवा अवयविनं विना, कर्माणि च कर्त्तारमन्तरेण स्थातुं न प्रभवन्ति; एवं कर्त्तुर्विना प्रत्यक्षमपि कथं जायेत ? किञ्च ललामललनया समागममेव पुरुषार्थफलं चेन्मन्येथा-स्तर्हि तत्सुखस्य क्षणिकत्वात् पुरुषार्थफलस्यापि क्षणिकत्वमापद्येत । किञ्च तत्समागमेन दुःखस्यापि जायमानतया तस्यापि पुरुषार्थफलत्वं सुतरामङ्गी-कर्तव्यम् । अपि चैवं स्वर्गस्यैव विच्छेदेन दुःखान्येवोपभोक्तव्यानि । दुःख-परित्यागे सुखसम्पादने च यत्नः समाधेय इति चेदेवं हि मोक्षसुखस्यैवोच्छेदा-पत्तेः । तस्मान्नेदं पुरुषार्थफलम् ।

**चारवाकः**—दुःखसंयुक्तसुखपरित्यागो मूढधियां सेवितः पन्थाः । यथा हि धान्यार्थिनो धान्यमाददते बुसञ्च परिहरन्ति तथैवास्मिन् जगति बुद्धिमन्तः सुखमाददाना दुःखानि परिहरेयुः । ये ह्यनादृत्यैहिकं सुखमुपस्थित-माशास्यमानस्वर्गसुखलिप्सया धूर्त्तप्रणीतवेदविहिताग्निहोत्रादिक्रियाकलाप-मुपासनां ज्ञानकाण्डञ्च परलोकार्थमनुतिष्ठन्ति मूढधियस्त इति मन्महे । परलोकस्यैवाविद्यमानत्वात् तदाशंसनं मौर्ख्यमेव ननु ?

तथा हि—

**अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।**
**बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ।।**

अग्निहोत्रम्, वेदत्रयी, त्रिदण्डम्, भस्मावलेपनञ्च मूर्खैः पुरुषार्थहीनैश्च कल्पितात्मनो जीविकेति चारवाकमतप्रवर्त्तको बृहस्पतिः सञ्चष्टे, किन्तु कण्टकवेधादिना सञ्जातं दुःखमेव नरकम्, लोकसिद्धो नरपतिः परमेश्वरः, देहविनाश एव मोक्षो नान्यदतः किञ्चिदस्तीति लौकायतिकानां सिद्धान्तः ।

उ०—विषयजानन्दं पुरुषार्थफलमङ्गीकृत्य विषयदुःखपरिहाणे कृतकृत्यता, स्वर्गाभ्युपगमश्चाज्ञानविलसितम् । अग्निहोत्रादियज्ञैर्वायुवृष्टचम्भसां शुद्धिद्वारेणारोग्यं तस्माच्च धर्मार्थकाममोक्षाः सिध्यन्ते तदविज्ञाय वेदेश्वरयोर्वेदोक्तधर्मस्य च गर्हणं धूर्तविचेष्टितम् । त्रिदण्डभस्मधारणयोः खण्डनं वयमप्यनुमोदामहे । कण्टकाद्युत्पन्नदुःखान्येव नरकं चेत् ततोऽपि भयावहा महाव्याधयः कथन्न नरकम् ? ऐश्वर्यवत्वात् प्रजापालने शक्तत्वाच्च राज्ञः श्रैष्ठ्याङ्गीकारः समुचित एव । परमन्यायाचारतत्परं पापिनमपि क्षमाभृतं परमेश्वरं चेन्मन्यध्वे तर्हि नास्त्यन्यः कोऽपि युष्मद्विधो मूढधियामग्रेसरः । शरीरविच्छेद एव मोक्षश्चेत् रासभसारमेयादिभ्यः को विशेषो ननु युष्मासु ? केवलमाकृतिरेव भिद्यते ।

**चारवाकः—**

**अग्निरुष्णो जलं शीतं शीतस्पर्शस्तथाऽनिलः ।**
**केनेदं चित्रितं तस्मात्स्वभावात्तद् व्यवस्थितिः ।।१।।**
**न स्वर्गो नाऽपवर्गो वा नैवात्मा पारलौकिकः ।**
**नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः ।।२।।**
**पशुश्चेन्निहतः स्वर्गं ज्योतिष्टोमे गमिष्यति ।**
**स्वपिता यजमानेन तत्र कस्मान्न हिंस्यते ।।३।।**
**मृतानामपि जन्तूनां श्राद्धं चेत्तृप्तिकारणम् ।**
**गच्छतामिह जन्तूनां व्यर्थं पाथेयकल्पनम् ।।४।।**
**स्वर्गस्थिता यदा तृप्तिं गच्छेयुस्तत्र दानतः ।**
**प्रासादस्योपरिस्थानामत्र कस्मान्न दीयते ।।५।।**
**यावज्जीवेत्सुखं जीवेदृणं कृत्वा घृतं पिबेत् ।**
**भस्मीभूतस्य देहस्य पुनरागमनं कुतः ।।६।।**
**यदि गच्छेत्परं लोकं देहादेष विनिर्गतः ।**
**कस्माद्भूयो न चायाति बन्धुस्नेहसमाकुलः ।।७।।**
**ततश्च जीवनोपायो ब्राह्मणैर्विहितस्त्विह ।**
**मृतानां प्रेतकार्याणि न त्वन्यद्विद्यते क्वचित् ।।८।।**

**त्रयो वेदस्य कर्त्तारो भण्डधूर्तनिशाचराः।**
**जर्फरीतुर्फरीत्यादि पण्डितानां वचः स्मृतम् ॥९॥**
**अश्वस्यात्र हि शिश्नन्तु पत्नीग्राह्यं प्रकीर्त्तितम्।**
**भण्डैस्तद्वत्परं चैव ग्राह्यजातं प्रकीर्त्तितम् ।१०॥**
**मांसानां खादनं तद्वन्निशाचरसमीरितम् ॥११॥**

चारवाकाभाणकबौद्धजैनाः स्वभावादेव जगदुत्पद्यत इति मन्यन्ते।

स्वीयस्वाभाविकैर्गुणैः समवेतानां द्रव्याणां संयोगेन सर्वेऽपि भावा निष्पद्यन्ते नास्त्यस्यकोऽपि जगतः चेतनः कर्ता। (चारवाकबौद्धादिष्वपि सौगतार्हतौ परलोकं जीवात्मानञ्चाभ्युपेतः चारवाकस्तु तावपि प्रत्याचष्टे। लौकायतिकादीनां त्रयाणामपि मतमंशतो भेदेन प्रायः समानमेव) ॥१॥

नास्ति कोऽपि स्वर्गो नरकः परलोकगन्ता आत्मा वा। न च वर्णाश्रमाणां क्रियाः किमपि फलं प्रयच्छन्ति ॥२॥

यज्ञेषु निहतः पशुः स्वर्गं गच्छति चेद् यजमानः किमिति पितरं निहत्य होमद्वारेण स्वर्गं न प्रहिणोति ? ॥३॥

यदि हि नाम श्राद्धतर्पणे मृतानपि प्राणिनस्तर्पयतः तर्हि किमिति प्रवासिभिः पान्थैः पाथेयमन्नवस्त्रधनादिकं सह नीयते। यथा हि मृतकोद्देशेन समर्पितं द्रव्यं स्वर्गमुपतिष्ठते एवं देशान्तरं गामुकानां सम्बन्धिनो गृहेष्वेव तदुद्देशेन द्रव्याण्यर्पयित्वा जनपदान्तरमुपस्थापयेयुः। अत्र लोके पाथेयन्नोपतिष्ठते चेत् स्वर्गेऽपि तत् कथमुपस्थातुं शक्नोति ? ॥४॥

अमुष्मिन् लोके दानेन चेत् दिवि स्थिताः सुतृप्ता भवन्ति तर्ह्यधस्तात् प्रदानेन प्रासादमारूढः पुमान् कथन्न तृप्यति ? ॥५॥

तस्माद् "यावज्जीवेत् सुखं जीवेत् धनाभावे ऋणमादाय भोगान् भुञ्जीत। नहि ऋणं प्रदेयं भविष्यति यतः खलु यस्मिन् देह आत्मना भोगा अन्वभाविषत उभावपि तौ लोकममुं न पुनरावत्स्यतः कः पुनः कं याचिष्यते कश्च प्रदास्यति ॥६॥

मरणसमयेऽयमात्मा देहान्निष्क्रम्य परलोकमुपैतीति केचिद् वदन्ति स तेषां मिथ्याप्रलापः। एवं हि सति बन्धुस्नेहपाशबद्धः भूयोऽपि कथन्नोपैति गृहान् ॥७॥

तस्मात् सर्वमप्येतत् ब्राह्मणैरात्मनो जीविकोपायः प्रवर्तितः। दशगात्रादिप्रेतकार्यं तेषां जीविकार्था लीलैव ॥८॥

वेदानां प्रणेतारो भण्डधूर्तनिशाचरा आसन्। "जर्फरीतुर्फरी" इत्यादिवचांसि पण्डितानां धूर्ततायुक्तानि वचनानि ॥९॥

धूर्तानां लीला मनाग् वीक्ष्यताम्—नार्या अश्वलिङ्गस्य ग्रहणम्,

यजमानभार्यायास्तेन सह समागमम्, कुमारीभिः परिहासञ्च धूर्तैर्विना कोऽन्यो विलेखितुमर्हति ॥१०॥

यत्र (भागे) मांसाशनं विहितं स वेदभागो निशाचरैर्निर्मितः ॥११॥

उ०—चेतनपरमात्मनो निर्माणमन्तरेण जडपदार्थाः स्वयमेव मिथः स्वभावेन संयुज्य नियमेनोत्पत्तुं न प्रभवन्ति । स्वभावादेव चेदुत्पद्येरन्नपरेऽपि सूर्यचन्द्रपृथिवीनक्षत्रादिलोकाः स्वयमेव कथन्नोत्पद्यन्ते ? ॥१॥

सुखदुःखयोरुपभोग एव क्रमेण स्वर्गनरकशब्दाभ्यां व्यपदिश्यते । जीवात्मनोऽभावे कः खलु सुखदुःखमुपभुञ्जीत ? यथात्र लोके जीवः सुखदुःखमुपभुङ्क्ते तथैव परस्मिन्नपि जन्मनि समश्नाति । अपि वर्णाश्रमाणां सत्यभाषणपरोपकारादिकाः क्रिया अपि निष्फला भविष्यन्ति ? नैवं जात्वपि सम्भवति ॥२॥

पशून् व्यापाद्य यज्ञानुष्ठानं न क्वापि वेदादिसच्छास्त्रेषु प्रतिपादितम् । श्राद्धं तर्पणञ्चोपरतानां वेदादिसच्छास्त्रविरुद्धत्वात् भागवतादिपौराणिकमतप्रवर्तकानां कल्पनाजालमेव केवलम् । तस्मादस्य निराकरणं निराकर्तुमशक्यम् ॥३—५॥

विद्यमानजीवस्याऽभावो न सम्भवति नहि सद्वस्तु कर्हिचिदभावं प्रतिपद्यते । शरीरमेव केवलं दग्धं भवति न तु जीवः । आत्मा तु पुनः प्रविशति देहान्तरम् । तस्मात् ये केचिदिह ऋणादिनापरपदार्थानुपभुज्य न प्रयच्छन्ति तेऽसंशयं पापिनः सन्तः परजन्मनि दुःखनिरये सम्पतन्ति । नाऽत्र विद्यते संदेहलवोऽपि ॥६॥

देहान्निष्क्रम्यायमात्मान्यत् स्थानं देहान्तरञ्च समुपैति तदानीं तस्य पूर्वजन्मनो बन्धुबान्धवादीनाञ्च ज्ञानाभावात् न भूयोऽप्यात्मनः कुलं समुपैतुं शक्नोति ॥७॥

आम्, प्रेतकर्मेदं विप्रम्मन्यैर्जीविकार्थं प्रवर्तितं परं वेदोक्तत्वाभावात् निराकरणीयमेव ॥८॥

यदि हि चारवाकप्रमुखा वेदादिसत्यशास्त्राणि न्यशामयिष्यन् न्यशमयिष्यन्नध्यैष्यन्त वा न जातु वेदानगर्हयिष्यन् "वेदा भण्डधूर्तनिशाचरकल्पैर्मानवैर्निरमायिषते" त्येवं कर्हिचिदवदिष्यन् । आम्, महीधरादयष्टीकाकारा भण्डधूर्तनिशाचरकल्पा अभवन् तेषामियं धूर्तता नतु वेदानाम् । परं चारवाकबौद्धजैना एव शोचनीयाः सन्ति यैर्हि वेदानां चतस्रः संहिता अपि न दृष्टा न श्रुता नापि कस्माच्चिद्विदुषः समधीताः, अतएत भ्रष्टबुद्ध्योऽनर्गलं वेदाननिन्दन् । वाममार्गिहतकानां प्रमाणशून्याः कल्पनाजालप्रसूता भ्रष्टटीका विलोक्य वेदविरोधिनः सन्तोऽपारेऽविद्याम्बुधौ न्यपतन् ॥९॥

योषिताश्वशिश्नं संग्राह्य समागमानुष्ठापनम्, यजमानकुमारीभिः

परिहासानुष्ठानमृते वाममार्गिभ्यो नान्ये जनाः कर्त्तुं क्षमन्ते । एतान् महापापिनो वाममार्गिणो विहाय भ्रष्टानि वेदार्थविरुद्धानि अशुद्धव्याख्यानानि को नु विदधीत ? तथापि चारवाकादयो नितरां शोच्यन्ते ये ह्यविचार्यैव वेदान्निन्दितुं प्रवृत्ताः । तैरात्मनोऽपि बुद्ध्या किञ्चित् विचारणीयमासीद् अथवा किन्ते कुर्वन्तु वराकाः । नासीत्तेष्वियती विद्या येन सत्यासत्ये विनिर्णीय सत्यस्य मण्डनमसत्यस्य च निराकरणं कर्त्तुं प्राभविष्यन् । यच्चापि मांसभक्षणं तदपि तेषामेव वेदव्याख्यातॄणां वाममार्गिणां विलसितम् । तस्मात् तेषां निशाचरेति व्यपदेशः सुतरामुपयुज्यते । नहि क्वापि वेदेषु मांसभक्षणं प्रतिपादितम्, अत एवमादिमिथ्यावार्तानां पापेन ते टीकाकृतो वेदानविज्ञायाकर्ण्य च यथेष्टं निन्दन्तश्चासंशयं संयोक्ष्यन्ते । वस्तुतस्तु ये वेदानद्विषन् द्विषन्ति द्वेक्ष्यन्ति वा नूनं तेऽविद्यान्धतमसे निमज्जन्तस्सुखं विहाय दारुणं दुःखमुपभोक्ष्यन्ते । यावच्च ते दुःखमाप्नुयुः तावदेव न्यूनम् । अतः सर्वैर्मानवैर्वेदानुकूलं व्यवहर्तव्यम् ॥१०—११॥

मिथ्याकल्पनया वेदानां व्यपदेशेन स्वार्थसाधनतत्परा वाममार्गिणो मद्यपानमांसाशनपराङ्गनासम्भोगादिदुष्कर्मणां प्रवृत्त्यर्थं वेदान् कलङ्कयामासुः । तानेव वाममार्गिभिः कल्पितानानाचारान् वीक्ष्य चारवाकबौद्धार्हता वेदान् निन्दितुं प्रवृत्ताः । प्रवर्तितञ्च तैः स्वतन्त्रं वेदविरुद्धमनीश्वरवादिनास्तिकमतम् । यदि हि नाम चारवाकादयो वेदानां मूलार्थान् व्यज्ञास्यन् न तर्ह्यवलोक्य तेषामलीकव्याख्या वैदिकं सद्धर्ममत्यक्षन् । अथवा किं कुर्वन्तु वराकाः—**विनाशकाले विपरीतबुद्धिः ।**

## चारवाकादीनां मिथो भेदप्रदर्शनम्

चारवाकादयः प्रायशः प्रभूतेषु विषयेषु समाना एव परं क्वचिद् भिद्यन्त अपि ।

(१) लौकायतिका देहोत्पत्त्यैव सहात्मन उत्पत्तिं तन्नाशेन चात्मनोऽपि नाशमभ्युपयन्ति । पुनर्जन्मपरलोकौ, प्रत्यक्षप्रमाणव्यतिरिक्तमनुमानादिप्रमाणजातमपि नाभ्युपगच्छन्ति । चारवाकशब्दस्य "वावदूकः पुमान् इति शाब्दिकोऽर्थः" "वैतण्डिकस्तु" विशेषार्थः । बौद्धजैनैस्तु प्रत्यक्षादिप्रमाणचतुष्टयमनादिरात्मा पुनर्जन्मपरलोकौ कैवल्यं चाभ्युपेयते, एतावानेव चारवाकेभ्यो बौद्धजैनानां भेदः । परं नास्तिकत्वम्, वेदेश्वरयोर्निन्दनम्, परमतद्वेषः, षड् यातनाः (अनन्तरोक्तानि षट्कर्माणि) नास्त्यस्य जगतः कर्ता कोऽपि इत्यादिविषयेषु सर्वेषामैक्यमेव । संक्षेपेणैतत्प्रदर्शितं चारवाकमतम् । इदानीं समासतो बौद्धमतं विवेचयिष्यामः ।

## अथ बौद्धमतविवेचनम्

**कार्य्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।**
**अविनाभावनियमो दर्शनान्तरदर्शनात् ॥**

कार्यदर्शनात् कारणस्य, कारणदर्शनाच्च कार्यस्य साक्षात्कारात् प्रत्यक्षव्यतिरिक्तमनुमानं सिद्ध्यति। नह्येतेन विना प्राणिनां व्यवहारा निष्पद्यन्ते। एवमादिलक्षणैरनुमानं चारवाकासम्मतमभ्युपेत्य बौद्धानां लौकायतिकेभ्यो भिन्नः पन्थाः प्रावर्तत। चतुःप्रभेदाश्च बौद्धा खलु विद्यन्ते। **माध्यमिकः, योगाचारः, सौत्रान्तिकः, वैभाषिकश्चेति**। "बुद्ध्या निर्वर्तते स **बौद्धः**" यद् यदात्मबुद्धिसम्मतं तत्तत् स्वीकार्य नेतरत्। तेषु—

प्रथमो **माध्यमिकः**—सर्वं शून्यमयमभ्युपैति, अर्थात् विद्यमानाः सर्व एव पदार्थाः शून्यरूपाः। आदौ—स्वोत्पत्तेः पूर्वमवसाने—प्रध्वँसानन्तरञ्च नावतिष्ठन्ते मध्येऽपि यत् प्रतीयते तदपि प्रतीतिसमकालिकं पश्चात् शून्यमेवावशिष्यते इति यावत्। यथा हि नासीत् घटः पूर्वमुत्पत्तेर्नापि प्रध्वंसानन्तरमवस्थास्यते "अस्ति घटः" इति घटज्ञानसमये समवभासते यदा चास्मज्ज्ञानेन भावान्तरं गोचरीक्रियते तदा घटज्ञानं विनश्यति, तस्मात् शून्यमेवैकं तत्त्वम्।

द्वितीयो **योगाचारः**—बाह्यशून्यवादी स हि—पदार्थानां बहिः शून्यभावं मानसे च ज्ञाने तत्सद्भावमङ्गीकुरुते। आत्मनि घटज्ञानसद्भाव एव "अयं घटः" इति वक्तुं शक्यते नान्यथेति।

तृतीयो **सौत्रान्तिकः**--बहिः कस्यापि पदार्थस्य साङ्गोपाङ्गतया प्रत्यक्षाभावेन तदेकदेशप्रत्यक्षेणैकदेशिनोऽनुमानसद्भावात् पदार्था बहिरनुमीयन्त इति मन्यते।

चतुर्थो **वैभाषिकः**—"अयं नीलो घटः" इति प्रतीतौ नीलविशिष्टघटाकारस्य बहिरेव प्रतीयमानत्वात् सर्वेषां पदार्थानां बहिरेव प्रत्यक्षं भवति नत्वन्त इति मन्यते। यद्यपि सर्वेषाममीषां बुद्ध एवाचार्यस्तथापि शिष्याणां बुद्धिभेदेन चतस्रः शाखाः समभवन्। यथा ह्यस्तङ्गते मरीचिमालिनि केचित् व्यभिचारिणः परस्त्रीगमनादिकं दुष्कर्माथापरे विद्वांसः सन्ध्यावन्दनादिकं श्रेष्ठकर्माचरन्ति। एकस्मिन्नेव समये यथाबुद्धि मिथो विभिन्नानि कर्माण्यनुतिष्ठन्ति।

पुनश्च—

प्रथमो **माध्यमिकः**—प्रतिक्षणं बुद्धेः परिणामात्पूर्वक्षणे ज्ञातं वस्तु द्वितीयक्षणे न तथाभूतमवतिष्ठते तस्मात् सर्वभावानां क्षणिकत्वमभ्युपेतव्यमिति मन्यते।

द्वितीयो **योगाचारः**—सर्वापीयं प्रवृत्तिर्दुःखरूपैव नहि कस्यापि प्राप्तौ कोऽपि सन्तुष्यति प्राप्तावपि कस्यचिदपरस्य लिप्सा न निवर्तत इति स्वीकरोति।

तृतीयो **सौत्रान्तिकः**--सर्वे पदार्थाः स्वीयलक्षणैर्लक्ष्यन्ते यथा हि गोश्चिह्नेन गौरश्वलक्षणैश्चाश्वः प्रतीयते, एवं लक्ष्येषु लक्षणानि सर्वदा व्यवतिष्ठन्त इति।

चतुर्थो **वैभाषिकः**—शून्यमेवैकं तत्त्वमभ्युपगच्छति। अत्र विषये माध्यमिकवैभाषिकयोः समानः पन्थाः। एवं बौद्धेषु भूयांसि विवादस्थानानि तेषु माध्यमिकादयः प्रधानभूताश्चत्वारो भेदाः।

उ०—सर्वशून्यत्वे शून्यस्य ज्ञात्रा न शक्यं शून्येन भवितुम्। सर्वशून्यत्वे हि शून्यं नाधिगच्छेत् शून्यम् (आत्मानम्) तस्मात् शून्यावगन्ता, ज्ञानविषयः शून्यञ्चेति पदार्थद्वयं सिद्ध्यति। किञ्च बहिः शून्यमभ्युपयतो योगाचारस्यान्तर्हृदये पर्वतो भवेत्। अस्तीति चेत् प्रत्युच्येत क्वास्ति तद् हृदये गिरिनिभोऽवकाशः ? तस्मात् पर्वतो बहिः प्रदेश एव वर्तते, केवलं तज्ज्ञानमात्मनि सन्तिष्ठते। निखिलभावानां प्रत्यक्षमनङ्गीकुर्वता सौत्रान्तिकेन आत्मनो निजवचसश्चानुमेयत्वमभ्युपेतव्यम्। प्रत्यक्षप्रमाणासद्भावे च "अयं घटः" इति प्रयोगो नोपपद्येत। तत्र हि तन्मतेन घटैकदेशस्यैव प्रत्यक्षत्वात् "अयं घटैकदेशः" इति भवितव्यं न चैवमिष्टापत्तिः, घटैकदेशस्य घटत्वासम्भवात्। वस्तुतस्तु सर्वावयवेषु एकस्यावयविनो विद्यमानत्वात् तत्प्रत्यक्षेण चावयवानामपि प्रत्यक्षत्वात् (सावयवप्रत्यक्षत्वात्) "अयं घटः" इति प्रत्यक्षमेवं नानुमेयम्। तुरीयवैभाषिकेण बाह्यपदार्थानां प्रत्यक्षाभ्युपगमोऽपि नोपपद्यते। यत्र हि ज्ञातृज्ञानेऽवतिष्ठेते तत्रैव प्रत्यक्षं सञ्जायते। प्रत्यक्षविषयस्य रूपादेर्बहिःप्रदेशे विद्यमानत्वेऽपि तदाकारज्ञानमात्मन्येव सन्तिष्ठते। एवं सर्वपदार्थानां तदीयज्ञानस्य च क्षणिकत्वे "इदमहमकार्षमिति" स्मरणात्मिका प्रत्यभिज्ञा न स्यात्। भवति च पूर्वदृष्टश्रुतस्य स्मरणं तस्मादनुपपन्नः क्षणिकवादः। जगत्यत्र सर्वस्यैव दुःखात्मकत्वे लेशतोऽपि सुखाभावे निशावासरयोरिवान्योन्यसापेक्षेण जायमानयोः सुखदुःखयोरेकतरस्याभावेऽपरसद्भावस्य वक्तुमशक्यत्वम्।

कस्यचिद्वस्तुनो (लक्ष्यभूतस्य) लक्षणं तस्मिन्नेकान्तेन निवसतीत्यपि सौत्रान्तिकसम्मतं मतं न वयमाद्रियामहे। लक्ष्ये लक्षणस्योपलब्ध्यनुपलब्ध्योरुभयोरपि दृष्टत्वात्। तथा च रूपस्य सततं चक्षुषा गृह्यमाणत्वाच्चक्षू रूपस्य लक्षणम्, रूपञ्च चक्षुषो लक्ष्यम्। अत्र लक्ष्यभूतात् रूपात् लक्षणभूतं चक्षुः सदैव व्यतिरिक्तं तिष्ठति। गन्धवत्वञ्च पृथिव्या लक्षणं नियमेनात्मनो लक्ष्यमधितिष्ठति न जातु ततः पृथगवतिष्ठते तस्मात् लक्ष्ये लक्षणं क्वचि-

न्निवसति, क्वचिन्नेति सुष्ठूक्तं भवति। शून्यवादिन उत्तरं पूर्वमवोचाम—शून्यस्य ज्ञाता शून्यात् भिन्नो भवतीति।

आर्हता अपि बौद्धसम्मतानेव तीर्थंकरानङ्गीकुर्वंते तस्मादैक्यमेवानयोः। ते च पूर्वोक्तभावनाचतुष्टयेन सकलवासनानां निवृतौ शून्यात्मकं निर्वाणं मोक्षमभ्युपयन्ति। स्वीयशिष्यांश्च योगाचारावुपदिशन्ति (तत्राप्राप्तस्यार्थस्य प्राप्तये पर्यनुयोगो **योगः**। गुरूक्तस्यार्थस्याङ्गीकरण**माचारः**)।

बुद्धिरेवानादिवासनावशादनेकाकारतयावभासत इति। (एते च चित्तचैत्त्यात्मकपञ्चविधस्कन्धमङ्गीकुर्वन्ति) तथा च—

**रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकाः॥**

(१) इन्द्रियै रूपादिविषयाणां ग्रहणं **रूपस्कन्धः**।

(२) आलयविज्ञानप्रवृत्तिविज्ञानप्रवाहो **विज्ञानस्कन्धः**।

(३) रूपविज्ञानस्कन्धसम्बन्धजन्यसुखदुःखादिप्रतीत्यात्मको व्यवहारो **वदनास्कन्धः**।

(४) 'अयङ्गौरयमश्वः' इत्यादिसंज्ञासंज्ञिनोस्सम्बन्धः **संज्ञास्कन्धः**।

(५) वेदनास्कन्धेनानुभूयमाना रागद्वेषादिक्लेशाः क्षुत्तृषाद्युपक्लेशा मदप्रमादमानादयो धर्माधर्मरूपव्यवहाराश्च **संस्कारस्कन्धः**।

**सर्वस्य संसारस्य दुःखात्मकत्वं सर्वतीर्थङ्करसम्मतम्॥**

तदिदं सर्वं दुःखं दुःखायतनं दुःखसाधनञ्चेति भावयित्वा तन्निरोधोपायं (तत्त्वज्ञानं सम्पादयेत्)। एवं बौद्धाः चार्वाकेभ्यो जीवात्मानमनुमानप्रमाणञ्चाधिकं मन्यन्ते। जगतो मोक्ष एव तेषां निर्वाणाख्यं कैवल्यम्। चारवाकास्तु अनुमानप्रमाणं जीवात्मानञ्च नाभ्युपयन्ति।

**देशना लोकनाथानां सत्त्वाशयवशानुगाः।**
**भिद्यन्ते बहुधा लोके उपायैर्बहुभिः किल॥१॥**
**गम्भीरोत्तानभेदेन क्वचिच्चोभयलक्षणा।**
**भिन्ना हि देशनाभिन्ना शून्यताद्वयलक्षणा॥२॥**

द्वादशायतनपूजा श्रेयस्करीति बौद्धा मन्यन्ते।

**अर्थानुपार्ज्य बहुशो द्वादशायतनानि वै।**
**परितः पूजनीयानि किमन्यैरिह पूजितैः॥३॥**
**ज्ञानेन्द्रियाणि पंचैव तथा कर्मेन्द्रियाणि च।**
**मनो बुद्धिरिति प्रोक्तं द्वादशायतनं बुधैः॥४॥**

यः खलु ज्ञानिविरक्तजीवन्मुक्तानां लोकनाथानां बुद्धप्रमुखतीर्थङ्क-

राणां पदार्थस्वरूपं बोधयति यो विभिन्नपदार्थानुपदिशति यश्च बहुभिर्भेदै-रुपायैश्च वर्णितः तस्याभ्युपगमः ॥१॥

महागम्भीरप्रसिद्धभेदाभ्यां क्वचित् गुप्तं क्वचित्प्रकाशं वर्तमाना गुरुणामुपदेशा ये हि शून्यलक्षणसमन्विताः पूर्वमभिहितास्तेषां सम्मननम् ॥२॥

द्वादशायतनपूजैव श्रेयस्करी (मोक्षप्रदा) तदर्थं प्रभूतान् धनादि-पदार्थानाहृत्य द्वादशायतनानि स्थानविशेषान् निर्माय सर्वतोभावेन पूजयेत्। अन्येषां पूजया किं फलम् ॥३॥

श्रोत्रत्वक्चक्षुर्नासिकाजिह्वा इति पञ्च ज्ञानेन्द्रियाणि, पायूपस्थं हस्तपादं वाक् च कर्मेन्द्रियाणि, मनो बुद्धिः, एषामेव सत्कार आनन्दोपभोगः द्वादशायतनपूजा।

एवमादिकं बौद्धानां मतम्।

उ०—दुःखमयश्चेत् सर्वः संसारो न जातु केऽपि जीवात्मानः (तत्र) प्रवर्तेरन्, परं तेषां प्रवृत्तिः संसारे प्रत्यक्षं समीक्ष्यते तस्मान्नेदं सकलञ्जगत् दुःखमयं भवितुमर्हति। अपि तु सुखं दुःखञ्चोभयमप्यत्र विद्यते। किञ्च— यदि बौद्धैरयमेव सिद्धान्तः स्वीक्रियते किमिति तर्हि भोजनपानादिकं पथ्यौषधिसेवनं वा कुर्वाणैर्देहपरिपालनप्रवृत्तैस्तैः सुखं मन्यते ? ननु देहाद्युप-भोगसाधनेषु प्रवर्त्तमाना अपि वयं दुःखमेव मन्महे इति चेत्, तन्न सुन्दरम्। न ह्ययं जीवः सुखमन्तरेण क्वापि प्रवर्तते। दुःखं वा परिज्ञाय ततो निवर्तितु-मीहते। सुखसाधनानां धर्मक्रिया (यज्ञादिक्रिया०) विद्यासत्सङ्गादिश्रेष्ठ-व्यवहाराणां सौगतैर्विना नान्येन केनापि विपश्चिता क्लेशदत्वमभ्युपेतुं शक्यते। बौद्धानां पञ्चस्कन्धा अपि अपरिपूर्णाः। नह्येतेषु सर्वान्तर्भावः सम्भवति। क्रियमाणायां तादृशस्कन्धविचारणायां प्रत्येकस्यानेकभेद-सम्भवात्। नाथवतां नाथं परमात्मानमनङ्गीकृत्य बौद्धानां तीर्थङ्करैः—ये हि बौद्धैर्लोकनाथा उपदेशकाश्चाभ्युपेयन्ते—कस्मादुपदेशोऽधिगतः। स्वय-मेवाधिगत इति चेत् न। नहि कारणं विना कार्यमुत्पद्यते। यदि हि तन्मतानुसारेण एवमेव तीर्थङ्करैः स्वयमेव ज्ञानमधिगतमिति कथञ्चिदभ्यु-पगम्येत, तर्हीदानीमपि अध्ययनाध्यापने श्रवणश्रावणे ज्ञानिनां सत्सङ्गादि-कञ्चान्तरेण तेषु ज्ञानिनः सम्पद्येरन् न च तथा भवन्ति तस्मात्तेषामिदं वचः सर्वथैव निर्मूलं युक्तिशून्यं सन्निपातग्रस्तमानवप्रलपितसन्निभञ्च वरीवर्ति।

बौद्धानां शून्यात्मकाद्वैततत्त्वोपदेशोऽपि न विचारसहः। नहि जातु विद्यमानं वस्तु शून्यभावमभिपद्यते अपितु केवलं सूक्ष्मकारणरूपतां प्रति-पद्यते। द्रव्याणामुपार्जनेन पूर्वोक्ता द्वादशायतनपूजैव कैवल्यसाधनञ्चेत् तर्हि दशप्राणानामेकादशस्यात्मनश्च पूजा कथन्न समाचर्यते ? इन्द्रियान्तः-करणानां पूजैव मोक्षप्रदेत्यभ्युपयतां सौगतानां विषयिजनानाञ्च को भेदः ?

यदा च बौद्धास्तेभ्यो (विषयेभ्यः) विमोक्तुं न शक्नुवन्ति तदा क्वास्ति तत्र मोक्षः। ननु यत्रेदृशा व्यवहाराः किं तत्र मुक्तेः प्रयोजनम्। अहो खल्विमे सौगताः कियतीमात्मनः सम्पादयामासुरविद्योन्नतिम्। यस्याः सादृश्यं न कुत्रापि लब्धुं शक्यते। वेदेश्वराभ्यां विरोधस्यैवेदं फलमिति निश्चितं भाति। पूर्वन्तावत् सकलं जगत् दुःखरूपं भावयामासुः तदनु द्वादशायतनपूजां प्रवर्तयामासुः। अप्येषामियं द्वादशायतनपूजा जगतः पदार्थेभ्यो बहिर्भूता ? या हि मोक्षं प्रदातुं क्षमा भवेत्। चक्षुषी निमील्य यदि नाम कोऽपि रत्नान्यन्वेष्टुमिच्छेत् किं स लब्धुं शक्नुयात् ? प्रत्यादेशेन वेदेश्वरयोः सौगतानामपीयमभवत् दुर्दशा। साम्प्रतमपि सुखमभिलषद्भिर्वेदेश्वरयोराश्रयेणात्मनो जन्म सफलयितव्यम्।

विवेकविलासनाम्नि ग्रन्थे बौद्धानां मतमित्थं वर्णितम्—

**बौद्धानां सुगतो देवो विश्वं च क्षणभंगुरम्।**
**आर्य्यसत्त्वाख्यया तत्त्वचतुष्टयमिदं क्रमात् ॥१॥**
**दुःखमायतनं चैव ततः समुदयो मतः।**
**मार्गश्चेत्यस्य च व्याख्या क्रमेण श्रूयतामतः ॥२॥**
**दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्त्तिताः।**
**विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ॥३॥**
**पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम्।**
**धर्मायतनमेतानि द्वादशायतनानि तु ॥४॥**
**रागादीनां गणो यः स्यात्समुदेति नृणां हृदि।**
**आत्मात्मीयस्वभावाख्यः स स्यात्समुदयः पुनः ॥५॥**
**क्षणिकाः सर्वसंस्कारा इति या वासना स्थिरा।**
**स मार्ग इति विज्ञेयः स च मोक्षोऽभिधीयते ॥६॥**
**प्रत्यक्षमनुमानं च प्रमाणं द्वितयं तथा।**
**चतुःप्रस्थानिका बौद्धाः ख्याता वैभाषिकादयः ॥७॥**
**अर्थो ज्ञानान्वितो वैभाषिकेण बहु मन्यते।**
**सौत्रान्तिकेन प्रत्यक्षग्राह्योऽर्थो न बहिर्मतः ॥८॥**
**आकारसहिता बुद्धिर्योगाचारस्य संमता।**
**केवलां संविदं स्वस्थां मन्यन्ते मध्यमाः पुनः ॥९॥**
**रागादिज्ञानसन्तानवासनाच्छेदसम्भवा।**
**चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्त्तिता ॥१०॥**
**कृत्तिः कमण्डलुर्मौण्ड्यं चीरं पूर्वाह्णभोजनम्।**
**संघो रक्ताम्बरत्वं च शिश्रिये बौद्धभिक्षुभिः ॥११॥**

बौद्धानामिमे चत्वारः सिद्धान्ता मुख्यतया वर्तन्ते—(अ) सुगतदेवो

भगवान् बुद्धो बौद्धानां पूजनीयः । (आ) क्षणभङ्गुरमिदञ्जगत् । (इ) सर्वे मानवाः योषितश्च आर्यवृत्ता भवेयुः । (ई) तत्त्वानामाख्या संज्ञादि-सिद्धिः ॥१॥

पूर्वं विश्वमिदं दुःखनिलयं विद्यात् तदनन्तरं समुदय उन्नतिस्तेन लभ्यते क्रमेणैषां व्याख्यानं शृणुत ॥२॥

अत्र संसारे केवलं दुःखमेव विद्यत इति, पूर्वंप्रतिपादितपञ्चस्कन्धाश्च परिज्ञेयाः ॥३॥

पञ्च ज्ञानेन्द्रियाणि शब्दादयश्च तेषां पञ्चविषया मनो बुद्धिरन्तः-करणं धर्मायतनमित्येतानि द्वादशायतनानि ॥४॥

मानवानां हृदयेषु रागद्वेषादिसमूहस्योत्पत्तिः 'समुदयः' । आत्मा आत्मनः स्वभावश्च 'आख्या' । एतयैव पुनः समुदयः समुत्पद्यते ॥५॥

क्षणिकाः सर्वे संस्कारा इति वासनास्थैर्यं बौद्धानां मार्गः तदेव शून्य-तत्त्वं—(आत्मनः) शून्यात्मभावस्तेषां मोक्षः ॥६॥

सौगताः (वयम्) प्रत्यक्षमनुमानञ्चेति प्रमाणद्वयमेव मन्महे । वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकभेदेन चतुःप्रभेदो बौद्धमार्गः ॥७॥

तत्र वैभाषिको ज्ञाने विद्यमानं वस्तु स्वीकुरुते । नहि ज्ञानेऽविद्यमानं केनापि सिद्धपुरुषेणाभ्युपेतुं शक्यते । सौत्रान्तिकश्चान्तःपदार्थानां प्रत्यक्षं मनुते नतु बहिः ॥८॥

योगाचारस्याकारसहिता विज्ञानयुक्ता बुद्धिः सम्मता । माध्यमिकेन केवलमात्मनि पदार्थानां ज्ञानमात्रमभ्युपगम्यते पदार्थास्तु नाभ्युपगम्यन्ते॥९॥

रागादिज्ञानप्रवाहवासनासमुत्थिता मुक्तिः बौद्धानां चतुर्भिरपि प्रस्थानैरङ्गीक्रियते ॥१०॥

मृगादीनामजिनम्, कमण्डलुः, वल्कलवसनं, पूर्वाह्णभोजनम् (नव-वादनात्पूर्वम्) एकाकिनाऽनवस्थानम्, रक्तवस्त्रपरिधानम्, एतद् बौद्ध-भिक्षूणां वेशादिकम् ॥११॥

उ०—बौद्धानां सुगतदेवो बुद्ध एव एको गुरुश्चेत् ननु तस्यापि गुरुः कः खल्वासीत् ? ॥१॥

विश्वस्य क्षणभङ्गुरत्वे चिरदृष्टवस्तुनः 'इदन्तदेवेति' प्रत्यभिज्ञा न स्यात् सर्वस्यैव क्षणभङ्गुरत्वे तत्पदार्थस्यापि विनष्टत्वात्कस्य स्मरणं स्यात् । क्षणिकवादमभ्युपयतां बौद्धानां मोक्षोऽपि क्षणिकः सम्पद्येत ॥६॥

सर्वेऽर्थाः—द्रव्याणि—ज्ञानान्विताश्चेत्तज्जडद्रव्येष्वपि ज्ञानेन भवि-तव्यम् । किञ्च तदीयगमनादिक्रियालम्बनं किं भवेत् ? बहिः दृश्यमानं वस्तु कथमलीकं भवितुमर्हति ॥८॥

बुद्धेराकारसहितत्वे तस्या दृश्यत्वं प्रसज्येत । यदि हि नाम केवलं

ज्ञानमात्मनि सन्तिष्ठते—बाह्यपदार्थानां ज्ञानमात्राङ्गीकारे पदार्थानाञ्चानभ्युपगमे—तर्हि ज्ञेयपदार्थमन्तरेण कथं ज्ञानस्य सम्भवः ॥९॥

वासनाछेद एव मुक्तिरिति चेत् सुषुप्तावपि मुक्तिरभ्युपगम्यताम् । परमीदृशः सिद्धान्तः विद्याविरुद्धत्वादनादरणीय एव ॥१०॥

एवमस्माभिः समासतो बौद्धानां मतं प्रदर्शितम् । बुद्धिमन्तो विचारशीलाः स्वयमेव एषां मतं विलोक्य विज्ञास्यन्ति एषां कीदृशी विद्या कीदृक् च मतमिति ।

## अथ जैनमतवर्णनम्

प्रकरणरत्नाकरस्य प्रथमभागे नयचक्रसारे समयभेदेन बौद्धैः सम्मताश्चत्वारः पदार्था विनिर्दिष्टाः—

(१) आकाशः (२) कालः (३) जीवः (४) पुद्गलश्चेति ।

जैनाश्चाधोनिर्दिष्टं पदार्थषट्कं मन्यन्ते—(१) धर्मः, (२) अधर्मः, (३) आकाशः, (४) पुद्गलः, (५) जीवः, (६) कालश्चेति । अत्राद्यं धर्मादितत्त्वपञ्चकमस्ति[1] कायशब्देन व्यपदिश्यते । धर्मास्तिकायः, अधर्मास्तिकाय इत्यादि । कालस्य त्वौपचारिकद्रव्यत्वात् (वस्तुतो द्रव्यत्वाभावात्) अस्तिकायत्वं नाङ्गीक्रियते ।

(१) यः खलु गतेः परिणामित्वेन परिणते (परिणामं प्राप्ते) जीवे पुद्गले च प्रकृतेः परमाणुपुञ्जे व्यवतिष्ठते । यश्च गतेः संस्तम्भनहेतुः स असङ्ख्यातप्रदेशेषु लोकेषु परिमाणेषु च व्याप्तो **धर्मास्तिकायः** ।

(२) यः खलु स्थिरता परिणाममुपगतयोर्जीवपुद्गलयोः स्थितिहेतुः **सोऽधर्मास्तिकायः** ।

(३) सर्वद्रव्याणामाधारोऽवगाहनप्रवेशनिर्गमादिक्रियावतां जीवपुद्गलानामवगाहनादिहेतुः सर्वव्यापक**श्चाकाशः** ।

(४) सर्वस्य जगतः कारणभूताः सूक्ष्मा नित्या एकरसा वर्णगन्धस्पर्शादिस्वात्मकार्यानुमेयाः पूरणगलनस्वभावाः (परमाणवः) [2]**पुद्गलाः** ।

(५) यश्चेतनस्वरूपो ज्ञानदर्शनयोराश्रयः, असङ्ख्यपरिणामैः परिणतिमधिगन्ता कर्त्ता भोक्ता च (कर्मफलयोः) स **जीवः** ।

---

१. धर्मादिपदार्थपञ्चकेषु तेषां कालत्रयेण सम्बध्यमानत्वात् "नास्ति" शब्दः, देहवदनेकप्रदेशवत्वाच्च "कार्याः" शब्दः प्रयुज्यते । परं साम्प्रतम् "अस्तिकायः" शब्दः पदार्थापरपर्यायः साङ्केतिकः सम्पन्नः । अस्तीति कायते—विद्यते अत उच्यते । धर्मश्चासावस्तीति धर्मास्तिकायः धर्मरूपः पदार्थ इत्यर्थः ।

२. पूरणात् पुत् गलनात् गलः । ततः कर्मधारयः । पूर्यन्ते गलन्ति चेति पुद्गलाः वृद्धयपक्षयभाजः परमाणवः ।

(६) यः खलु पूर्वोक्तानां पञ्चास्तिकायानां परत्वापरत्वे नव्यपुराणभावञ्च बोधयति प्रसिद्धपर्यायसंयुक्तश्च स **कालः**।

**स०**—बौद्धैराकाशादिचतुर्द्रव्याणां समयभेदेन नवीनताभ्युपगमो मिथ्यैव। नह्याकाशकालजीवपरमाणवः कदाचन नवीनाः पुराणा वा भवितुमर्हन्ति। इमे हि खल्वनादयः कारणरूपेणाविनाशिनश्च वर्तन्ते कथं पुनस्तेषु नवीनप्राचीनभावः सम्भवेत्? धर्माधर्मयोर्गुणत्वेन द्रव्यत्वाभावात् जैनैरेतयोर्द्रव्येषु परिगणनं नितरामुपहासास्पदम्। द्वावपीमौ जीवास्तिकायेऽन्तर्भवतः। तस्मादाकाशपरमाणुजीवकालानां चतुर्णामिवाभ्युपगमो वरीयान्। वस्तुतस्तु वैशेषिकोक्तानि नवद्रव्याण्येव समुचितानि। पृथिव्यादिपञ्चभूतानि कालदिगात्ममनांसि च नवद्रव्याणि नित्यं पृथक् पृथग् विनिश्चितानि। जीवमेकं चेतनमभ्युपगम्य परमात्मनो व्यासेधो जैनबौद्धानां मिथ्या पक्षपात एव।

बौद्धैर्जैनैश्चाभ्युपगता सप्तभङ्गी स्याद्वादश्च निर्दिश्यते—

(१) कस्यचिद्वस्तुनः सद्भावप्रतिपादनं "स्यादस्तिरूपः" प्रथमो भङ्गः। यदा हि वयं "अस्ति घटः" इति ब्रूमस्तदा तस्य विद्यमानत्वं तदभावस्य चाविद्यमानत्वं प्रतिपादयामः।

(२) कस्यचिद्वस्तुनोऽसद्भावप्रतिपादनं "स्यान्नास्तिरूपः" द्वितीयो भङ्गः। तथा ह्यसन् घट इति वचनेन घटाभावः प्रतिपाद्यते।

(३) कस्यचिद्वस्तुनोऽस्तित्वं प्रतिपादयतस्तत्रापरवस्तुनः सद्भावप्रत्याख्यानं तृतीयो भङ्गः। यथा हि "सन्नसन् घटः" इति। अत्र घटस्य घटत्वं प्रतिपाद्यते पटत्वञ्च निराक्रियते।

(४) कस्यचिद्वस्तुनः सत्त्वाख्यानं प्रकारान्तरेण तत्सद्भावप्रत्याख्यानञ्च चतुर्थो भङ्गः। तथा च—घटात्मनि घटान्तरस्यापेक्षमाणत्वात् घटोऽपि अघट इति व्यपदिश्यते। तत्रैकस्यैव घटवस्तुनो घटोऽघट इति संज्ञाद्वयस्य प्रवर्तमानतयाऽयं चतुर्थो भङ्गः।

(५) घटे पटस्यावक्तव्यत्वात्—घटे घटत्वं वक्तव्यं पटत्वञ्चावक्तव्यमिति "स्यादस्ति अवक्तव्यश्चेति" पञ्चमो भङ्गः।

(६) घटस्याभावत्वेन वक्तव्यत्वाभावात्—विद्यमानस्यैव वक्तव्यत्वात् "स्यान्नास्ति अवक्तव्यश्चेति" षष्ठो भङ्गः।

(७) यद् वक्तुमिष्टं परं न तद् विद्यते तथा च वक्तुं योग्योऽपि घटो नास्ति, इति सप्तमो भङ्गः।

एवम्—

**स्यादस्ति जीवोऽयं प्रथमो भङ्गः ॥१॥**
**स्यान्नास्ति जीवो द्वितीयो भङ्गः ॥२॥**
**स्यादवक्तव्यो जीवस्तृतीयो भङ्गः ॥३॥**

**स्यादस्ति नास्ति नास्तिरूपो जीवश्चतुर्थो भङ्गः ।।४।।**
**स्यादस्ति [च] अवक्तव्यो जीवः पञ्चमो भङ्गः ।।५।।**
**स्यान्नास्ति [च] अवक्तव्यो जीवः षष्ठो भङ्गः ।।६।।**
**स्यादस्ति नास्ति [च] अवक्तव्यो जीव इति सप्तमो भङ्गः ।।७।।**

(१) अस्ति जीव इति व्यवहारे जीवात्मनि तद्विरोध्यचेतनद्रव्याणामभावत्वबोधनात् "अस्ति जीवः" इति प्रथमो भङ्गः ।

(२) विचेतनेषु नास्ति जीव इति प्रयोगदर्शनादचेतनेषु जीवाभावत्वबोधनरूपः 'स्यान्नास्ति' इति द्वितीयो भङ्गः ।

(३) वर्णनाविषयो जीव इति तृतीयो भङ्गः ।

(४) देहविशिष्टात्माऽभिव्यक्तः तद्विवर्जितश्चानभिव्यक्त इति कथनं चतुर्थो भङ्गः ।

(५) अस्ति जीवः परमनिर्वचनीय इति पञ्चमो भङ्गः ।

(६) जीवः खल्वयं प्रत्यक्षप्रमाणेन न गृह्यते तस्मान्नास्ति चक्षुःप्रत्यक्षविषय इति व्यवहारदर्शनात् अयं स्यान्नास्ति चावक्तव्यरूपः षष्ठो भङ्गः ।

(७) अनुमानप्रमाणगम्यत्वात् जीवोऽस्तीति व्यपदिश्यते । तदानीमेव (तस्मिन्नेव काले) दृश्यत्वाभावात् विपरिणामिस्वभावत्वात् क्षणे क्षणे परिवर्तित्वाच्च "नास्ति" इति व्यपदिश्यते । अपि चायं जीवः कथंचिद् रूपेण विद्यमानो (तद्रूपेणैव) अविद्यमानो न भवति कथञ्चिद्रूपेण—रूपान्तरेणाविद्यमानश्च (तद्रूपेण) विद्यमानो न भवति तदयं 'अस्ति नास्ति' अवक्तव्यरूपः सप्तमो भङ्गः ।

एवं प्रत्येकस्मिन् वस्तुनि नित्यत्वानित्यत्वभेदेन, सामान्यविशेषधर्मभेदेन, तदीयगुणपरिणामभेदेन च सप्तभङ्गी प्रवर्तते । द्रव्यगुणस्वभावपरिणामानामानन्त्येन सप्तभङ्ग्या अप्यानन्त्यम् । अयमेव बौद्धानामार्हतानाञ्च स्याद्वादः सप्तभङ्गीन्यायश्च वेविद्यते ।

**स०**—सर्वाऽप्येषा बौद्धानां सप्तभङ्गी अन्योऽन्याभावे साधर्म्यवैधर्म्ययोश्चान्तर्भावयितुं शक्या । तमिमं सरलमार्गं प्रविहाय मूढधियो मोहयितुं कठिनो वक्रः पन्थाः समाश्रीयते । तथा च—जीवस्याचेतनेऽचेतनस्य च जीवेऽभावो नित्यं सन्निहितो भवति । जडात्मनोश्च वर्तमानत्वेन (जीवोऽपि विद्यमानः प्रकृतिश्चापि वर्तमाना) साधर्म्यं चेतनाचेतनत्वाभ्यां च वैधर्म्यम्, एवञ्च जीवे चेतनत्वं (अस्ति) विद्यते, अचेतनत्वञ्च (नास्ति) न विद्यते, इत्थं जडे जडत्वं वर्तते चेतनत्वञ्च नास्ति । तस्मात् गुणकर्मस्वभावानां साधर्म्यवैधर्म्याभ्यां बौद्धजैनानां सप्तभङ्गी स्याद्वादश्च सारल्येनावगन्तुं शक्यते, अतो मुधैव तेषां प्रपञ्चः । अत्र बौद्धजैनयोरुभयोरपि प्रायः समानः पन्थाः । अतः परं केवलं जैनमतविषये विलिख्यते ।

**चिदचिद् द्वे परे तत्त्वे विवेकस्तद्विवेचनम् ।**
**उपादेयमुपादेयं हेयं हेयं च कुर्वतः ॥१॥**
**हेयं हि कर्तृ रागादि तत्कार्य्यमविवेकिनः ।**
**उपादेयं परं ज्योतिरुपयोगैकलक्षणम् ॥२॥**

(१) आर्हताः खलु "चित्, अचित्"—चेतनजडात्मकं पदार्थद्वयमेव परं तत्त्वं मन्यन्ते। चिदचितोर्विवेचनम्—आदानयोग्यस्यादानमनुपादेयस्य चानुपादानं विवेकस्तद्वान् **विवेकी** इति गीयते।

(२) रागेच्छादिभिर्विनिर्मुक्तः स्रष्टास्य जगतोऽस्ति कश्चित्परमेश्वरो नामेति प्रतिपादको धर्मः प्रत्याख्येयः। योगपरिलक्षितः परमज्योतिःस्वरूप आत्मैव केवलं विद्यत इति बोधको (जैनधर्मः) ऽभ्युपगन्तव्यः। एते हि जीवव्यतिरिक्तमन्यत् चेतनत्वमीश्वरात्मकं नाभ्युपयन्ति। एषां मते नास्ति कश्चिदनादिसिद्धः परमेश्वरः। बौद्धैरप्येवमभ्युपेयते।

शिवप्रसादमहोदया आत्मनः **"इतिहासतिमिरनाशके"** ग्रन्थ एवमाहुः—"एषां नामद्वयं प्रवृत्तम्—एकं जैनः, अपरं बौद्ध इति। पर्यायवाचिनाविमौ शब्दौ। बौद्धेष्वपि केचित् मद्यमांससेविनो वाममार्गिणो भवन्ति तैः सहार्हतानां विरोधः। महावीरगौतमाह्वयौ गणधरौ बौद्धैर्बुद्धनाम्ना, आर्हतैश्च गणधरजिनवरेति नाम्ना व्यपदिश्येते। तत्र जिनवरेण प्रचारितो धर्मो जैनमतमिति व्यपदेशेन प्रसिद्धिमुपगतः"। तेनैव राज्ञा शिवप्रसादमहोदयेन 'इतिहासतिमिरनाशकग्रन्थस्य तृतीयभागे समुपन्यस्तम्—"शङ्करस्वामिनः समये—यो वै इतः पूर्वं वर्षाणां सहस्रे समभवत्—सर्वस्मिन् भारते वर्षे बौद्धधर्मो जैनधर्मो वा प्रवृत्त आसीदिति। तत्रैवात्र टिप्पण्यामुपन्यस्तम् "बौद्धशब्देनास्माभिस्तन्मतं परिगृह्यते यद्धि महावीरगणधरगौतमस्वामिनः परस्तात् पुरस्ताच्च शङ्करस्वामिनः सर्वत्र भारतेऽवैदिकं मतं प्रासरत्। यच्च महाराजाशोकसम्प्रतिभ्यामूरीकृतमस्ति"। जिनधर्मावलम्बिनस्तस्मात् न कथमपि निःसतुं प्रभवन्ति। जिनबुद्धशब्दौ याभ्यां क्रमेण जैनबौद्धधर्मौ प्रादुरभूतां समानार्थौ। कोशेष्वप्यनयोरभिन्न एवार्थ उपन्यस्तः। उभावपि (जैनबौद्धौ) गौतमे श्रद्दधाते। अपि च बौद्धानां दीपवंशादिप्राचीनग्रन्थेषु शाक्यमुनिर्गौतमो महावीरशब्देनैव प्रायशः स्मर्यते। तस्माद् वयं दीपवंशनिर्मातुः समये जैनबौद्धयोरभिन्नो धर्मोऽभवदित्यनुमिमीमहे। गौतमानुयायिनोऽस्माभिर्बौद्धशब्देन व्यवहृतास्तत्र वैदेशिकैस्तेषां बौद्धशब्देनोल्लेख एव कारणमिति"। अमरकोशेऽप्येवमेवोपन्यस्तम्।

तथा च—

**सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः।**
**समन्तभद्रो भगवान्मारजिल्लोकजिज्जिनः ॥१॥**

**षडभिज्ञो दशबलोऽद्वयवादी विनायकः ।**
**मुनीन्द्रः श्रीधनः शास्ता मुनिः शाक्यमुनिस्तु यः ॥२॥**
**स शाक्यसिंहः सर्वार्थः सिद्धः शौद्धोदनिश्च सः ।**
**गौतमश्चार्कबन्धुश्च मायादेवीसुतश्च सः ॥३॥**

—अमरकोशः कां० १ । वर्गः १ । श्लोकः ८—१०

दृश्यताम्—बुद्धजिनौ बौद्धजैनौ च एकस्यैव नामनी न स्तः किमु ? अपिनाम अमरसिंहोऽपि बुद्धजिनयोरैक्यप्रतिपादने व्यामुग्धः ? जैनेष्वविद्वांसो नात्मनो नापि परेषां (मतं) प्रविदन्ति केवलं दुराग्रहेण मुधैव जल्पन्ति, परं विपश्चित आर्हता बुद्धजिनयोर्बौद्धजैनयोश्चापार्थक्यमवगच्छन्ति । नास्त्यत्राल्पीयानपि संशयः । आर्हता एवमाहुः—"जीव एवायं परमेश्वरः सम्पद्यते, तीर्थङ्करा एव केवलिनो मुक्तात्मानः परमेश्वराः । नास्त्यन्यस्तदतिरिक्तोऽनादिः कश्चित्परमेश्वर इति । सर्वज्ञः, वीतरागः, अर्हन्, केवली, तीर्थंकृत्, जिन इत्येतत् नामषट्कं नास्तिकानां (बौद्धजैनानाम्) देवतानां वर्तते । चन्द्रसूरिः 'आप्तनिश्चयालङ्कारे' आदिदेवस्य स्वरूपमित्थमवर्णयत्—

**सर्वज्ञो वीतरागादिदोषस्त्रैलोक्यपूजितः ।**
**यथास्थितार्थवादी च देवोऽर्हन् परमेश्वरः ॥१॥**

रागादिदोषविवर्जितः, लोकत्रयसत्कृतः, पदार्थानां याथार्थ्येन प्रवक्ता सर्वज्ञोऽर्हन् देव एव परमेश्वरो वर्तत इति ॥१॥

तौतातिता एवमाहुः—

**प्र०—सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः ।**
**दृष्टो न चैकदेशोस्ति लिङ्गं वा योऽनुमापयेत् ॥२॥**
**न चागमविधिः कश्चिन्नित्यसर्वज्ञबोधकः ।**
**न च तत्रार्थवादानां तात्पर्यमपि कल्पते ॥३॥**
**न चान्यार्थप्रधानैस्तैस्तदस्तित्वं विधीयते ।**
**न चानुवादितुं शक्यः पूर्वमन्यैरबोधितः ॥४॥**

(ननु च कश्चित् पुरुषविशेषः सर्वज्ञपदवेदनीयः प्रमाणपद्धतिमध्यास्ते सद्भावग्राहकस्य प्रमाणपञ्चकस्य तत्रानुपलम्भात् तथा च दृश्यतां न तत्र प्रमाणपञ्चकं संघटत इत्याह) न खलु वयमिदानीमीश्वरमीक्षामहे तस्मान्नास्ति सर्वज्ञानादिपरमेश्वरः प्रत्यक्षम्, प्रत्यक्षासत्वे चानुमानमपि तं साधयितुं नालम् । तदेकदेशप्रत्यक्षेणैवानुमानप्रवृत्त्यभ्युपगमात् ॥२॥

प्रत्यक्षानुमानयोरभावे आगमः—शब्दप्रमाणमपि नित्यानादिसर्वज्ञपरमात्मानं साधयितुं नेष्टे । असति च प्रमाणत्रितये स्तुतिनिन्दापरकृतिपुरा-

कल्पात्मकानामर्थवादानां[1] तात्पर्यमपि न संघटते ।।३।।

बहुव्रीहिरिवान्यार्थप्रधानैः (अर्थवादैः) परोक्षपरमात्मनः साधनं न सम्भवति । किञ्च परमात्मनः (गुणस्वभावादिकम्) अन्येभ्य उपदेष्टृभ्यः श्रवणमन्तरेणानुवदितुं न शक्यम् ।।४।।

उ०—अनादिपरमात्मनोऽसद्भावे अर्हन् देवस्यापि यथायोग्यं प्रसूजनयित्रोर्देहं कः समुदपादयत् ? नहि संयोजयितारमन्तरेण सर्वावयव-सम्पन्नं यथोचितं सकलकार्यसम्पादनक्षमं शरीरमात्मनोत्पत्तुमर्हति । देहनिर्माणनिमित्तभूतानि द्रव्याणि चाचेतनत्वात् स्वयमीदृग्विशिष्टरचनया समन्वितानि शरीरभावं नाप्तुमर्हन्ति, नहि तेषु यथायथं निर्माणज्ञानं वर्तते । अपि च यः प्रथमं रागादिदोषैः संस्पृष्टस्तदनु तैर्मुच्यते न स जातु परमेश्वरो भवितुमर्हति । यन्निमित्ताद्धि स रागादिभिर्विप्रमुच्यते तन्निमित्तस्य प्रणाशेन तत्कार्यभूतस्य कैवलस्यापि विच्छेदापत्तेः । परिच्छिन्नोऽल्पज्ञश्च न कर्हिचित् सर्वगतः सर्वज्ञश्च सम्भवेत् । जीवो हि स्वरूपेणैकदेशी परिमितगुणकर्म-स्वभावश्च, न सर्वासु विद्यासु सर्वतोभावेन यथार्थप्रवक्ता भवितुं शक्नोति । ततो युष्माकं तीर्थङ्कराः कदाचनापि परमेश्वरपदवाच्या न भवितुमर्हन्ति ।

(२) अपि युष्माभिः केवलं प्रत्यक्षवर्तिनः पदार्था अभ्युपेयन्ते नतु परोक्षवर्तिनः ? यथा हि कर्णाभ्यां रूपं चक्षुर्भ्याञ्च शब्दो न परिगृह्यते तथैवायमनादिः परमेश्वरो नेन्द्रियैः परिगृह्यते । स हि केवलं पवित्रेणात्मना, शुद्धान्तःकरणेन, विद्यया योगाभ्यासेन प्रत्यक्षं समीक्ष्यते । यथा चाध्ययन-मन्तरेण विद्याया लाभा न समधिगम्यन्ते तथैव विना योगाभ्यासविज्ञानाभ्यां परमात्मापि नेक्ष्यते । यथा वा पृथिव्यां समवायसम्वन्धेन वर्तमानान् तदीयगन्धादिगुणान् सम्प्रेक्ष्य पृथिव्याः प्रत्यक्षं जायते तथैवास्मिन् सर्गे परमात्मनो रचनाविशेषहेतुभिस्तदीयप्रत्यक्षं समभिपद्यते । पुनश्च यत् पापाचरणेच्छावेलायां भयशङ्कालज्जा आत्मनि समुदयन्ति तत्सर्वमन्तर्यामिनः परमात्मनः प्रेरणया सञ्जायते । एतेनापि परमात्मनः प्रत्यक्षं नितरां साधितं भवति (प्रत्यक्षसद्भावे) चानुमाने कः सन्देग्धुमर्हति ।

(३) प्रत्यक्षानुमानसद्भाव आगमप्रमाणमपि नित्यानादिसर्वज्ञेश्वरं बोधयति । तस्मात् शब्दप्रमाणमपि तत्र वर्तत एव । यदा चायं जीवः

१. अर्थवादः—अर्थस्य लक्षणया स्तुत्यर्हस्य निन्दार्थस्य वा वादः—अर्थवादः । स च त्रेधा—१—गुणवादः, २—अनुवादः, ३—भूतार्थवादः, । केषाञ्चिन्मते तु सप्तविधः—१—स्तुत्यर्थवादः, २—फलार्थवादः, ३—सिद्धार्थवादः, ४—नित्यार्थवादः, ५—परकृतिः, ६—पुराकल्पः, ७—मन्त्रश्चेति । तत्र परकृतिः=परचरित्रवर्णनम् । पुराकल्पश्च इतिहासादिः । तत्रार्थवादानां स्तुतिपरत्वेन विधिना सहैकवाक्यत्वात् प्रामाण्यमभ्युपेयते । 'अनुवादकः'

प्रमाणत्रयेणापि परमात्मानमवबोद्धुं शक्नोति, तदा तन्न परमात्मनि अर्थवादः---तदीयगुणवर्णनं साधु संघटते, यतो हि नित्यवस्तूनां गुणकर्म-स्वभावा अपि नित्या भवन्ति तेन तत्प्रशंसायां नास्ति कश्चिदन्तरायः।

(४) यथा मानवीयकार्याणि कर्तारमन्तरेण न प्रसेषिष्यन्ते तथैवास्य (सृष्टिरूपस्य) महत्कार्यस्य कर्त्तारं विना सर्वथैवासम्भवः। एवञ्च परमात्मनः सत्तायां मूढधियोऽपि न संशयितुमर्हन्ति। उपदेशकेभ्यश्च परमात्मनो गुणान् संश्रुत्य तदीयानुवादोऽपि सारल्येन कर्त्तुं शक्यते। तस्मात्प्रत्यक्षादिप्रमाणैः परमात्मनः प्रत्यादेशादिव्यवहारो जैनानामनुचितः।

(तौतातिकानां सर्वज्ञो दृश्यत इत्यादिवचनस्यावशेषांशः)—

**प्र०— अनादेरागमस्यार्थो न च सर्वज्ञ आदिमान्।**
**कृत्रिमेण त्वसत्येन स कथं प्रतिपाद्यते ॥१॥**
**अथ तद्वचनेनैव सर्वज्ञोऽन्यैः प्रतीयते।**
**प्रकल्पेत कथं सिद्धिरन्योऽन्याश्रययोस्तयोः ॥२॥**
**सर्वज्ञोक्ततया वाक्यं सत्यं तेन तदस्तिता।**
**कथं तदुभयं सिध्येत् सिद्धमूलान्तरादृते ॥१॥**

आदिमान् सर्वज्ञोऽनादेः शास्त्रस्य विषयो न भवितुमर्हति। (स्वोत्पत्तितः पूर्वं विद्यमानेन स्वविषये किमपि वक्तुमशक्यत्वात्) अपि च शास्त्राणामपि कृत्रिमत्वं चेदभिमन्येत न तर्हि तादृशेन कृत्रिमासद्वचनेन सर्वज्ञस्य प्रतिपादनं कथञ्चिद् युज्यते ॥१॥

परमेश्वरस्यैव वचनेन—तत्प्रणीतवेदादिशास्त्रेण—परमेश्वरश्चेत् साध्यते तर्हि अनादिपरमात्मनाऽनादिशास्त्रसिद्धिः, अनादिशास्त्रेण चानादिपरमेश्वरस्य सिद्धिरिति अन्योन्याश्रयदोषः समापतति ॥२॥

यतो हि सर्वज्ञस्य वचनेन वेदवाक्यानां सत्यत्वम्, तेषामेव वेदानां वचनेन च परमेश्वरं साधयथ। कथमेतत् सम्भवति ? तच्छास्त्रपरमेश्वरयोः प्रसाधनाय तद्व्यतिरिक्तेन प्रमाणान्तरेण भवितव्यम्। एवञ्चा-(प्रमाणान्त-राभ्युपगमे)-नवस्थादोषः प्रसज्येत ॥३॥

उ०—वयं वेदानुयायिनः परमेश्वरं तदीयगुणकर्मस्वभावाँश्चानादीन् मन्यामहे। अनादिनित्यपदार्थेषु च नान्योऽन्याश्रयदोषो जात्वपि सम्भवति। यथा कार्येण कारणज्ञानं कारणेन च कार्यावबोधः सम्पद्यते, किञ्च कार्येषु कारणस्वभावः कारणेषु च कार्यस्वभावो नित्यः, एवं परमेश्वरस्य तदीयानन्त-विद्यादिगुणानां च नित्यत्वेन तत्प्रणीतवेदे न प्रसज्जति मनागप्यन-वस्थादोषः। यूयं तीर्थङ्करान् परमेश्वरान् मन्यध्वे नैतत्कर्हिचित्संगच्छते। नहि पितरावन्तरेण तेषां शरीरं भवेत्। देहासत्वे च कथन्ते तपश्चर्याज्ञान-मोक्षानधिगन्तुं प्रभवेयुः। अपि च संयोग आदिमानेव भवति वियोगं विना

संयोगस्यैवाभावात्। तस्मादनादिः सृष्टिकर्ता परमेश्वरोऽभ्युपेतव्यः। भवतु नाम कोऽपि कीदृशोऽपि सिद्धः सोऽपि देहादे रचनां साकल्येनाववोद्धुं न शक्नोति। सिद्धोऽपि जीवः सुषुप्तिदशामुपगतो न किमपि चेतयते। दुःखसम्भिन्नस्यात्मनो ज्ञानमपि न्यूनं भवति। एवं परिच्छिन्नसामर्थ्यस्यैकदेशिन आत्मनः परमेश्वरत्वाभ्युपगमो भ्रान्तवुद्धिभिरर्हन्तैर्विना न केनाप्यन्येन मन्तुं शक्यते। "तीर्थङ्करास्त आत्मनः पितृभ्यो जन्म लेभिरे" इति चेदभिधीयेत तेऽपि कुतः, तेषामपि जनकादयः कुतः समुत्पन्ना इत्यनवस्था प्रसज्येत।

## अथ आस्तिकनास्तिकयोः संवादः

साम्प्रतं प्रकरणरत्नाकरस्य द्वितीयभागे आस्तिकनास्तिकयोः संवादरूपाणि प्रश्नोत्तराण्यत्र विलिख्यन्ते। अयं ग्रन्थो जैनप्रवरैः स्वीकृतः मोहमय्याञ्च मुद्रापितः।

**नास्तिकः**—परमात्मनः सङ्कल्पेन किमपि न जायते अपि तु कर्मभिः सञ्जायते।

**आस्तिकः**—सर्वं कर्मभिर्जायत इति चेत्कर्माणि कुतः सम्भवन्ति? कर्माणि जीवादिभिः क्रियन्त इति चेदभ्युपगम्येत तर्हि तत्साधनभूतानि श्रोत्रादीनीन्द्रियाणि कुतोऽजायन्त? अनादिकालात् स्वभावेनैव प्रवृत्तानीति चेदभिधीयते तर्हि अनादिवस्तूनां परित्यागासम्भवाद् युष्माकं मते कैवल्यमुच्छिद्येत। प्रागभाववत् कर्माण्यनादिसान्तानीति चेदङ्गीकुरुषे तर्हि यत्नं विनैव सर्वेषां कर्माणि निवर्तेरन्। अविद्यमाने फलप्रदातरि परमात्मनि न केऽपि जीवाः स्वेच्छया पापफलं कर्हिचिद् दुःखमुपभोक्ष्यन्ते। यथा दस्युप्रभृतयो न स्तेयादिफलं निग्रहं स्वेच्छातः प्रतिपद्यन्ते, अपि तु राजनियमेन प्रसभमुपभोज्यन्ते। एवं परमात्मनो व्यवस्थयैव जीवाः पापपुण्यफलभाजो भवन्ति। इतरथा हि कर्मणां साङ्कर्यं प्रसज्येतान्यस्य कर्माणि अन्येनोपभुज्येरन्।

**ना०**—निष्क्रियः खलु परमेश्वरः। यदि हि नाम सोऽपि कर्माणि विदधीत नूनं तर्हि तेनापि कर्माण्युपभुज्येरन्, तस्मात् यथा वयं केवलिनो मुक्तान् निष्क्रियान् मन्यामहे तथैव युष्माभिरप्यभ्युपेतव्यम्।

**आ०**—नास्ति परमेश्वरो निष्क्रियोऽपि तु सक्रियो वर्तते। चेतनः सन् कथं न कर्ता भवेत्। कर्ता च क्रियाया न जातु पृथगवतिष्ठते। यादृशं यूयं जीवतो निष्पन्नं तीर्थङ्करं कृत्रिममीश्वरं मन्यध्वे न तादृशः परमेश्वरः केनापि विदुषा मन्तुं शक्यते। निमित्तादुत्पद्यमानः परमेश्वरोऽनित्यः परायत्तश्च भवेत्। स ह्यासीदीश्वरत्वलाभात् प्रथमं जीव एव तदनु कुतश्चिन्निमित्तादीश्वरः समभवत्, भूयोऽपि स जीवो भविष्यति स स्वीयं जीवत्वस्वभावं कर्हिचित् परित्यक्तुं न शक्नोति। स ह्यनन्तकालात् जीव एवास्ति

अनन्तकालञ्च यावत् जीव एव स्थास्यति। तस्मादनादिः स्वतः सिद्धः परमेश्वरोऽभ्युपगन्तव्यः। अत्रैवमवधीयतां यथाऽयं जीवः साम्प्रतं पापपुण्येऽनुतिष्ठन् तत्फलं सुखदुःखमुपभुङ्क्ते न तथा परमेश्वरः। क्रियाशून्येन परमात्मना कथमिदं जगन्निर्मातुं शक्यते? कर्माणि प्रागभाववदनादिसान्तानि चेन्मन्येथाः तर्हि तानि नात्मनि समवायसम्बन्धेन स्थातुं प्रभवेयुः। तथा च समवायसम्बन्धाभावेन संयोगजत्वादनित्यानि सम्पद्येरन्। कैवल्ये क्रियामनभ्युपगच्छन् भवान् पृष्ट आचष्टां मुक्तात्मानस्ते ज्ञानवन्तो भवन्ति न वा? भवन्ति चेदित्यङ्गीकुरुषे तर्हि अन्तःक्रियावत्वं स्वयमेवाभ्युपगतं ननु भवता। ज्ञानवत्त्वाभावे अपि नाम ते मुक्तौ पाषाणवदचेतनाः सम्पद्यन्ते? एकत्रैव निवसन्ति? नापि च किमपि चेष्टन्ते? एवञ्च सति कीदृशोऽयं मोक्षः? अन्धकारे बन्धने च समापतिताः (ते जीवाः)।

**ना०**—नास्ति परमेश्वरो व्यापकः। व्यापके हि तस्मिन् सर्वाणि वस्तूनि कथं चेतनानि न भवन्ति। किञ्च—ब्राह्मणक्षत्रियवैश्यशूद्रादीनामुत्तमाधममध्यमदशाः कुतः समभवन्? यतो वै परमेश्वरः सर्वत्र समानरूपेण व्यापकस्तस्मात्तेषु गौरवलाघवाभ्यां न भवितव्यम्।

**आ०**—व्याप्यव्यापकावभिन्नौ न भवतः। अपि तु व्याप्यमेकदेशि व्यापकञ्च सर्वदेशि भवति। यथा ह्याकाशं सर्वत्र व्यापकं, भूमण्डलं घटपटादयश्च सर्वे व्याप्या एकदेशिनः। परं पृथिव्याकाश इव परमेश्वरजगती अपि भिन्न एव। यथा चाकाशं घटपटादिषु व्यापकन्तथापि घटपटादय आकाशं न भवन्ति। तथैव चेतनः परमेश्वरः सर्वत्र व्यापकः परं ते चेतना न भवन्ति। यथा वा विदुषामविदुषां धर्मात्मनामधर्मात्मनां च साम्यं न भवति। अपि तु विद्यादिसद्गुणानां, सत्यभाषणादिकर्मणां, सौशील्यादिस्वभावस्य च न्यूनाधिक्येन गौरवलाघवे सञ्जायेते। ब्राह्मणक्षत्रियवैश्यशूद्रान्त्यजानां वर्णानां व्याख्यानं चतुर्थसमुल्लासेऽभिहितं तत्र द्रष्टव्यम्।

**ना०**—अथ चेत्परमात्मनो रचनया सृष्टिरियं सम्भवति किन्तर्हि मातृपित्रादीनां प्रयोजनम्?

**आ०**—परमेश्वरः केवलमैश्वरीसृष्टेरुत्पादको न तु जैवसर्गस्य। जीवात्मनां कर्तव्यकर्माणि नेश्वरः कुरुते, अपि तु जीव एव तानि विदधाति। परमेश्वरेण समुत्पादितानि वृक्षफलौषध्यन्नादिपदार्थानादाय मानवाश्चेन्न पिंष्युर्न कंडयेयुर्न रोटिकादिवस्तूनि निर्मायुर्नापि भक्षयेयुस्तर्हि किं परमेश्वरस्तेषामिमानि कर्माणि व्यतिकरिष्यते? जीवात्मानश्चैवं न विद्ध्युश्चेत्तेषां जीवननिर्वाहोऽपि न भवेत्। तस्मात् सृष्ट्यादौ जीवात्मनां शरीरनिर्माणमीश्वराधीनं तदनु तैः शरीरादिभिः पुत्राद्युत्पादनं जीवात्मनः कर्म।

**ना०**—शाश्वतोऽनादिश्चिदानन्दज्ञानस्वरूपः परमेश्वरो जगतः

प्रपञ्चक्लेशयोः कथमात्मानं पातयति ? नहि प्राकृतोऽपि जनो विहायानन्दं दुःखं परिगृह्णाति, पुनः परमेश्वरः कथमेवं व्यधात् ?

**आ०**—परमेश्वरो न कस्मिश्चिदपि प्रपञ्चे दुःखे वा सम्पतति नापि स्वानन्दं परित्यजति। एकदेशिनो हि प्रपञ्चदुःखयोः पतनं सम्भवेत् न तु सर्वदेशिनः। अनादिश्चिदानन्दो ज्ञानस्वरूपः परमेश्वरश्चेदिदं जगन्न निर्मायात् कोऽन्यस्तर्हि निर्मातुं शक्नुयात् ? नास्ति जीवात्मनि जगदुत्पादयितुं प्रकृतौ वा स्वयमुत्पत्तुं सामर्थ्यम्। एतेन "परमात्मैव जगन्निर्माति नित्यं सानन्दश्च तिष्ठतीति" सिद्धं भवति। परमात्मनैव परमाणुभ्यः सृष्टिरिव मातृपितृरूपनिमित्तकारणादुत्पत्तिप्रवन्धनियमो विरचितः।

**ना०**—परमेश्वरो मोक्षसुखं परित्यज्य जगतः सर्जनधारणप्रलयैः कथमात्मानं क्लिश्नाति ?

**आ०**—सनातनः परमेश्वरो नित्यमुक्ततयैकदेशिनः साधनैः सिद्धिमुपगताः सबन्धमुक्तिभाजो युष्माकं तीर्थङ्करा इव नास्ति। अनन्तगुणकर्मस्वभावः परमेश्वरस्तुच्छमिदं जगत् सृजन् धारयन् संहरन्नपि बन्धे न पतति। सापेक्षौ हि बन्धमोक्षौ—मुक्त्यपेक्षया बन्धो बन्धापेक्षया च मुक्तिरिति। कदाचिदप्यबद्धो मुक्त इति कथं वक्तुं शक्येत ? एकदेशिनो जीवा एव बद्धा मुक्ता वा भवन्ति नत्वनन्तः, सर्वदेशी, सर्वव्यापकः परमेश्वरो युष्माकं तीर्थङ्करं विना बन्धनैमित्तिकमोक्षयोश्चक्रे परिपतति तस्मान्नित्यमुक्तः परमेश्वरः।

**ना०**—यथा वै भङ्गापायिनः स्वयमेव मदमनुभवन्ति तथैव जीवात्मानः कर्मफलं भोक्तुं शक्नुवन्ति। नात्र परमात्मनः किमपि प्रयोजनम्।

**आ०**—यथा खलु नरपतिमन्तरेण दस्युलम्पटतस्करादयो दुर्जनाः स्वतो नृहत्यालयं कारां वा न गच्छन्ति नापि जिगमिषन्ति अपि तु भूपतिस्तान् राष्ट्रस्य न्यायव्यवस्थानुसारेण प्रसह्य धृत्वा यथोचितं दण्डयति एवमीश्वरोऽप्यात्मनो न्यायव्यवस्थया जीवात्मनः तत्कर्मानुसारेण यथायोग्यं दण्डयति नहि कोऽपि जीवः स्वदुष्कृतकर्मणां फलं भोक्तुमभिलषति, तस्मात्परमेश्वरो न्यायाधीशो नितरामावश्यकः।

**ना०**—जगत्यस्मिन्नास्त्येकः परमेश्वरोऽपि तु सर्व एव मुक्तात्मानः परमेश्वरपदभाजः।

**आ०**—सर्वथैव निरर्थकमिदं वचनम्। प्रथमं बद्धो हि मुक्तिमधिगतः पुनरप्यवश्यं बन्धनं समेयात् नह्ययं (जीवः) स्वभावमुक्तः। युष्माकं चतुर्विंशतितीर्थङ्करा अपि प्रथमं बद्धाः पुनर्मुक्ता भूयोऽप्यसंशयं बन्धने समेष्यन्ति। ईश्वराणाञ्चानेकत्वे यथा किल जीवात्मानो भूयस्त्वान्मिथः कलहायन्ते तथैव परमात्मनोऽपि विवदिष्यन्ते।

**ना०**—रे मूढ ! नास्ति कश्चिदपि जगतः कर्ता जगदिदं स्वयं सिद्धम् ।

**आ०**—अहो जैनानां कियान्महानयं प्रमादः । अपि कर्तारमन्तरेण किमपि कर्म, विना कर्माणि च किमपि कार्यं जगति जायमानं दृश्यते ? नहि गोधूमक्षेत्रे गोधूमाः स्वतः एव चूर्णं रोटिका वा सम्पद्य जैनोदरं प्रविशन्ति । नापि कार्पासस्तन्तुषु वसनेऽङ्गरक्षिकायामुत्तरीयवस्त्रे शाटिकायां उष्णीषादिके वा विपरिणम्य समेति । एवञ्च परमेश्वरं कर्तारमन्तरेण विविधं जगदिदं नानाविधा च रचना कथं सम्भवति ? अथाग्रहेण जगत् स्वयंसिद्धमङ्गीकुरुथ, तर्हि उपरिनिर्दिष्टं वसनप्रभृतिनिर्मातारं विना संसाध्य दर्शयत प्रत्यक्षम् । यदा चैवं विधातुं न शक्नुथ तदा युष्माकं प्रमाणविवर्जितकथनं को नाम धीमान् मन्येत ।

**ना०**—परमेश्वरो विरक्तो मोहितो वा ? विरक्तश्चेत् कथं जगतः प्रपञ्चे निमग्नः । मोहिते तु जगन्निर्माणसामर्थ्यं न भवेत् । (मोहितस्त्वक्षमो जगन्निर्मातुम्) ।

**आ०**—परमात्मनि वैराग्यं मोहो वा जातु वक्तुं न शक्यते सर्वव्यापको हि कं परित्यजेत्कं वाददीत । नास्ति परमात्मनः किमप्युत्कृष्टं सर्वञ्च तस्य प्राप्तुमिष्टम् । नापि तस्य कस्मिंश्चिदपि (वस्तुनि) मोहोऽपि सम्भवति । वैराग्यमोहौ हि जीवात्मन्येव सङ्गच्छेते न त्वीश्वरे ।

**ना०**—परमेश्वरं जगतः कर्तारं जीवात्मानां कर्मफलप्रदातारं चाङ्गीकरिष्यथ चेत्तर्हि स जगतः प्रपञ्चे निमग्नः सन् क्लेशभाग् भविष्यति ।

**आ०**—यदा हि खलु नानाविधकर्मणां कर्ता प्राणिभ्यः फलप्रदश्च धार्मिको विद्वान् न्यायाधीशोऽपि कर्मसु न सज्जति नापि प्रपञ्चे निमज्जति तदानन्तसामर्थ्यः परमेश्वरः प्रपञ्ची दुःखितो वा कथं भविष्यति । यूयं स्वाज्ञानेन परमात्मानमपि स्वतुल्यमात्मनस्तीर्थङ्करसन्निभं च मन्यध्वे तद् युष्माकमविद्याविलसितम् । अविद्यादिदोषाँश्चेदपास्तुमभिलषथ वेदादिसत्यशास्त्राण्याश्रयत । कथं भ्रान्ताः सन्तः प्रस्खलथ ।

साम्प्रतं जैनधर्मावलम्बिभिरभिमतं जगत् तत्सूत्रानुसारेण वर्ण्यते तत्र समासतो मूलार्थं प्रदर्श्य तदनु सत्यालीकौ समीक्षिष्यामहे ।

मूल—**सामि अणाइ अणन्ते चउगइ संसारघोरकान्तारे ।**
**मोहाइ कम्मगुरुठिइ विवागवसउ भमइ जीवो ॥**

—प्रकरणरत्नाकरः भा० २ । सम्यक्त्वस्वरूपस्तव ६० सूत्र २

(अयं हि प्रकरणरत्नाकरद्वितीयभागनामकग्रन्थस्य सम्यक्त्वप्रकाशप्रकरणे गोतममहावीरयोः संवादः)

अनादिरनन्तः खल्वयं संसारो नायं कर्हिचिदुत्पन्नो नापि विनश्यति जगदिदं केनचिन्न निर्मितमिति यावत् ।

तदेव "मूढ ! नास्ति कोऽपि जगतः कर्ता नेदं कर्हिचिदुत्पन्नं नापि जातु विनश्यतीति" उपरिष्टादास्तिकनास्तिकसंवादे समुपन्यस्तम् ।

**स०**—संयोगादुत्पन्नं न कर्हिचिदनादि अनन्तं वा भवितुमर्हति। कर्म चोत्पत्तिविनाशाभ्यां पृथग्भवितुं न शक्नोति । जगति उत्पद्यमानाः सर्व एव पदार्थाः संयोगजन्या उत्पत्तिविनाशशालिनश्च दृश्यन्ते एवञ्च जगदपि कथं नोत्पत्तिविनाशवत् ? तस्माद् युष्माकं तीर्थङ्करा नासन् सम्यग्बोधवन्तोऽन्यथा कथमीदृशानसम्भवार्थान् व्यलेखिष्यन् । यूयमपि स्वगुरूननुकुरुथ । युष्मदनुयायिभिः कर्हिचिदपि पदार्थविज्ञानं नाधिगंस्यते। यद् वै वस्तु प्रत्यक्षं संयोगजन्यं दृश्यते तस्योत्पत्तिविनाशौ कथं न मन्यध्वे ? एतेन "जिनधर्मावलम्बिनस्तेषामाचार्याश्च भू-खगोलविद्यां न विदन्ति स्मेति" सिद्ध्यति । अद्यत्वेऽप्येते विद्ययैतया विरहिता एव । कथमन्यथेदृशवक्ष्यमाणासम्भवार्थान् मन्येरन् ।

एते जैनाः पृथिवीकायम्—पृथिव्यपि जीवानां शरीरमिति यावत्—जलकायादिजीवाँश्च मन्यन्ते । यान् कोऽप्यभ्युपेतुं न शक्नोति । अपिच—तीर्थङ्कराणां—यान् ह्यार्हताः सम्यग् ज्ञानिनः परमेश्वराँश्च मन्यन्ते तेषां मिथ्यावार्तानिदर्शनानि दृश्यन्ताम्—

रत्नसारभागप्रथमनामकग्रन्थस्य (ग्रन्थमिमं जैनधर्मावलम्बिनः प्रमाणभूतं मन्यन्ते। अयञ्च ता० २८ अप्रैल १८७९ ईशवीये वाराणसीनगरे "जैनप्रभाकरनाम्नि यंत्रालये नानकचन्दमहोदयेन मुद्रापयित्वा प्राकाश्यं नीतः) १४५ पृष्ठे इत्थं कालविभागः समुपवर्णितः। सूक्ष्मकाल इति समयनामधेयम् ।

| | | |
|---|---|---|
| असंख्याताः समयाः | ... | १—आवलिः |
| १६७७०२१६—आवलयः | ... | १—मुहूर्तः |
| ३०—मुहूर्ताः | ... | १—दिवसः |
| १५—वासराः | ... | १—पक्षः |
| २—पक्षौ | ... | १—मासः |
| १२—मासाः | ... | १—वर्षः |
| ७०००००० × १००००००० + ५६००० × १००००००० } वर्षाः | ... | १—पूर्वः |
| असंख्यातपूर्वाः | ... | १—पल्योपमः कालः। |

असंख्यातशब्दस्य चायमभिप्रायः—

क्रोशचतुष्टयस्य समचतुरस्रं तावदेव निम्नं कूपमेकमुत्खाय जुगुलियमानवानां देहवालशकलैः परिपूरणम् । आधुनिकमानवमूर्धजापेक्षया जुगुलियमनुष्याणां केशाः चतुःसहस्रषण्णवति भागाः सूक्ष्मा भवन्ति। जुगुलिय-

मर्त्यानां समाहृतैश्चतुःसहस्रषण्णवतिसंख्याककेशैरद्यतनमानवानामेको बालः सम्पद्यत इति यावत्। एतादृशजुगुलियपुरुषस्यैकमूर्धजस्याङ्गुलपरिमितभागस्य सप्तकृत्वोऽष्टौ शकलविधानेन २०,९७,१५२ (विंशतिलक्षाणि, सप्तनवतिसहस्राणि, द्विपञ्चाशदधिकमेकशतं) खण्डानि भवन्ति। एतादृशबालांशैरुपरिनिर्दिष्टः कूपः पूरयितव्यः। ततो वर्षाणां शतेनैकैकांशो बहिर्निस्सारणीयः। इत्थं सर्वशकलानां निःसारणेन कूपस्य रिक्ततायामपि कालः सङ्ख्यात एव। यदा च तेषां शकलानामेकैकस्यासङ्ख्यातविभागाः क्रियेरन् तैश्च कूपस्तथा निविडं परिपूर्येत येन तदुपरिष्टाच्चक्रवर्तिनो राज्ञः सैन्यस्यापि निष्क्रमणेन कूपो मनागप्यधो न प्रविशेत् ततो वर्षाणां शतेनैकैकखण्डं निस्सारयेत्। एवं रिक्ते सति कूपेऽसङ्ख्याताः पूर्वाः सम्पद्यन्ते तैश्चैकः पल्योपमः कालः सङ्ख्यायते।

| | | |
|---|---|---|
| दशकोटिपल्योपमाः | ··· | १—सागरोपमः |
| दशकोटिसागरोपमकालः | ··· | १—उत्सर्पिणी |
| १—उत्सर्पिणी + १ अवसर्पिणीकालः | ··· | १—कालचक्रम् |
| अनन्तकालचक्रम् | ··· | १—पुद्गलपरावृत्तम् |

जैनसिद्धान्तग्रन्थेषु नवदृष्टान्तैः कालः परिसंख्यातस्ततः परमनन्तकाल उच्यते। एतादृशानन्तपुद्गलपरावृत्तकालो भ्रमतां जीवात्मनां संव्यतीत इति।

**स०**—अयि गणितशास्त्रविदो भ्रातरः? अपि युष्माभिर्जैनग्रन्थानां कालः संख्यातुं सत्यमिति मन्तुं वा शक्यते? अहो जैनतीर्थङ्करैः कीदृशी गणितविद्याऽधीता? एतादृशाः खलु जैनधर्मे गुरवः शिष्याश्च येषां ह्यविद्याया नास्ति पर्यन्तः। अन्यदप्येषां गहनमज्ञानं विलोकयत।

रत्नसारभागप्रथमग्रन्थस्य १३३ पृष्ठादारभ्य जैनानां सिद्धान्ताः—ये हि तेषां ऋषभदेवतो महावीरपर्यन्तानां चतुर्विंशतितीर्थङ्कराणां वचनसारसंग्रहरूपाः—समुपवर्णिताः। तस्यैव ग्रन्थस्य १४८ पृष्ठे विलिखितं "पृथिवीकायस्य जीवात्मानो मृत्पाषाणादिपृथिवीभेदाः समुपगन्तव्याः। तत्र निवसताञ्च जीवानामेकाङ्गुलस्यासंख्यातो भागः शरीरपरिमाणम्—अतिसूक्ष्ममिति यावत्। तेषामायुश्चात्यधिकं द्वाविंशतिसहस्रवर्षपरिमितम्। (रत्नसा० पृ० १४९) वनस्पतीनामेकदेहेऽनन्तजीवा भवन्ति ते च सामान्या वनस्पतयः परिसंख्यायन्ते। कन्दमूलप्रमुखा अनन्तकायप्रभृतयश्च सामान्यवनस्पतिजीवा गण्यन्ते। अनन्तमुहूर्तश्च तदायुःपरिमाणम्। परमत्रैषां पूर्वोदितो मुहूर्तो विज्ञेयः।

यत्र किलैकदेहे स्पर्शाख्यमेकमिन्द्रियमेकश्चैव जीवात्मा स **सामान्यवनस्पतिरिति** गीयते। तदीयदेहपरिमाणं चैकसहस्रयोजनपरिमितम्। (परं पौराणिकानामेकं योजनम्—चतुःक्रोशाः, जैनानाञ्च एकं योजनं

दशसहस्रक्रोशाः) आयुःपरिमाणञ्चात्यधिकं दशसहस्रवर्षाणि ।

साम्प्रतं वयमिन्द्रयद्वयवतो जीवान् (शरीरमेकं मुखञ्चापरमिति यावत्) शंखवराटिका यूकाप्रभृतीन् विवेचयामः । अष्टचत्वारिंशत्क्रोशाः एषां परमं देहपरिमाणम् । द्वादशवर्षाणि चायुःपरिमाणं परिसंख्यायते ।

**स०**—अत्रैतल्लेखको नितरां व्यामुग्धः । एतादृशमहद्देहिनो ह्यायुरधिकं वर्णनीयमासीत् । अष्टचत्वारिंशत्क्रोशपरिमितयूका जैनानामेव देहेषूत्पद्यन्ते त एव च ताः पश्यन्ति । क्वान्येषामेतादृशं भाग्यं यदियद्बृहतीं यूकां द्रष्टुं शक्नुयुः ।

अन्यश्चापि निरीक्ष्यतां तेषां—तमःप्रसारः ।

(रत्न० प्रथमभागे पृ० १५० तमे) जैनानां मत्कुणझिल्लिकामक्षिका-वृश्चिकाश्चैकयोजनदेहवन्तो भवन्ति । एषामायुःपरिमाणमत्यधिकतया षण्मासाः ।

**स०**—चतुःक्रोशस्य वृश्चिकः केनापि नावलोकितो भवेत् । अथ जैनधर्मे वृश्चिकमक्षिकादयोऽपि चतुःक्रोशपरिमिता भवन्ति तर्हि ते तेषामेव सद्मसु तैरेव च विलोकिता भविष्यन्ति नत्वन्येन केनचित् । ननु यदि कर्हिचिदे-तादृशो वृश्चिकः कमपि जैनं दशेत् तदानीं तस्य कावस्था भवेत् ?

मत्स्यादिजलचराणां देहपरिमाणमेकसहस्रयोजनम् । एकं योजनं दशसहस्रक्रोशाणामिति परिसंख्यानेन १,००,००,००० एककोटिक्रोशाणा-मिति यावत् । पूर्वोदितवर्षाणामेककोटिपरिमितञ्च तेषामायुः ।

**स०**—तादृशः स्थूलो जलचरो जैनव्यतिरिक्तेन नान्येन केनापि दृष्टो भवेत् ।

करिप्रभृतीनां चतुष्पदां क्रोशद्वयान्नवक्रोशपर्यन्तं देहपरिमाणं, चतु-रशीतिसहस्रवर्षाणि चायुपरिमाणम् ।

**स०**—इयद्बृहच्छरीरवन्तो जीवा अपि जैनेरेव दृष्टा भवेयुः । केवलं त एव मन्यन्ते नान्यः कोऽपि धीमानभ्युपेतुं शक्नोति ।

(रत्नसारप्रथमभा० पृ० १५१ तमे)—जलचरगर्भजानां जीवानां देहपरिमाणमेकसहस्रयोजनं १,००,००,००० एककोटिक्रोशा इति यावत् । तेषामायुःपरिमाणञ्चैककोटिवर्षाणि ।

**स०**—एतादृशो महाकाया दीर्घायुषश्च जीवा एतेषामाचार्यैरेव स्वप्नेषु दृष्टा भवेयुः । अपीदं नास्ति महावितथं यद्धि कदापि न सम्भवति ।

साम्प्रतं श्रूयतां भूमानम्—

(रत्न० प्रथमभा० पृ०१५२तमे)—अस्मिन् तिरश्चि लोकेऽसंख्यातानि द्वीपान्यसङ्ख्येयाश्च सागराः सन्ति । अत्रासङ्ख्यातशब्देन सार्धद्वयसागरोपम-कालः सङ्गृह्यते । अस्मिन्भूमण्डले सर्वद्वीपेषु जम्बूद्वीपः प्रधानः । लक्षयोजनानि

एकार्बुदक्रोशाश्चैतत्परिमाणम्। एनमभितश्चतुर्दिक्षु लवणसागरः। लक्षद्वययोजनानि—द्व्यर्बुदक्रोशास्तन्मानम्। जम्बूद्वीपं परितो 'धातकीखण्ड'-नामकं द्वीपं तस्य चतुर्लक्षयोजनानि—चतुरर्बुदक्रोशाः परिमाणम्। ततोऽपि परतः कालोदधिनाम सागरः तस्याष्टौ लक्षयोजनानि अष्टार्बुदक्रोशाः परिमाणम्। ततः परं "पुष्करावर्ताख्यं षोडशलक्षयोजनमर्थाद् षोडशार्बुदक्रोशपरिमितं दन्तुरितान्तस्तीरं द्वीपम्। तद्द्वीपार्धे मानवा निवसन्ति। ततोऽनन्तरमसङ्ख्येया द्वीपसागरा येषु तिर्यग्योनिजा जीवात्मान आसते।

(रत्नसारप्रथमभागे पृ० १५३ तमे) जम्बूद्वीपे—(१) हिमवत्, (२) एरण्डवत्, (३) हरिवर्षम्, (४) रम्यकम्, (५) देवकुरु, (६) उत्तरकुरुचेति षट्क्षेत्राणि सन्तीति।

**स०**—अयि भूगोलविद्याविदो मानवाः! भूगोलपरिमापणे यूयं भ्रान्ता उत जैनाः? जैनाश्चेदमुह्यन् तर्हि तान् प्रतिबोधयत यूयमेव भ्रान्ताश्चेत् तेभ्यः प्रतिबोधत।

अत्र मनागप्यवधानेन "आर्हतानामाचार्याः शिष्याश्च भू-खगोलविद्या गणितशास्त्रं च किञ्चिदपि नाधीतवन्तः" इत्यसंशयं निश्चीयते। कथमन्यथैतादृशमहासम्भवानर्गलगाथा व्यलेखिष्यन्। ईदृशाश्चानधीतविद्याः पुमांसो "जगदकर्तृकम्, ईश्वरश्च नास्ति" इत्यभ्युपगच्छेयुरत्र किमाश्चर्यम्। अत एव जैनसम्प्रदायिनः स्वग्रन्थानन्यधर्मावलम्बिने कस्मैचिदपि विपश्चिते न प्रयच्छन्ति। एतेषां हि प्रमाणभूततीर्थंकरनिर्मितसिद्धान्तग्रन्थेष्वेवेदृशा अविद्यायुता वार्ता शतशो वर्तन्ते। तस्मादेव जैनाः स्वग्रन्थान् न कमपि दर्शयन्ति। यदि हि नाम दर्शयेयुस्तेषामेव दोषाः प्रगटेयुः। अपि च जैनव्यतिरिक्तोऽन्योऽल्पधीरपि कश्चिन्न जात्वनर्थकप्रलापमिमं सत्यमङ्गीकरिष्यति। सर्वोऽप्ययं प्रपञ्चो जैनैर्जगदनादीत्यभ्युपगमाय प्रवर्तितः। परमयं नितरामलीक एव। जगतः कारणमनादीति तु सत्यम्। तद्धि परमाण्वादितत्त्वात्मकमकर्तृकम्। तेषु सनियमं निर्माणविनाशसामर्थ्यन्तु किञ्चिदपि नास्ति। परमाणवो हि द्रव्यम्। ते च स्वभावादेव विभिन्ना अचेतनाश्च, ते स्वयं यथायथमुत्पत्तुं न शक्नुवन्ति। अतस्तेषां निर्माता कश्चिच्चेतनोऽवश्यं वर्तते स च ज्ञानस्वरूपः। पृथिवीसूर्यादिसर्वलोकनियन्त्रणमनन्तानादिचेतनपरमात्मनः कार्यम्। संयोगविशेषात्मकं स्थूलं जगन्न कर्हिचिदनादि भवितुमर्हति। कार्यं जगन्नित्यमिति चेदङ्गीक्रियेत, तर्हि तदकारणं भवेत् तदेव च कार्यकारणरूपतां समेष्यति। एवञ्च स्वयमेवात्मनः कार्यकारणभावापन्नतयाऽन्योऽन्याश्रयात्माश्रयदोषौ प्रसङ्क्ष्यतः। यथा वै स्वस्कन्धयोः स्वयमारोहणम्, स्वस्य जनकः पुत्रश्च स्वयं न भवति। तस्माज्जगतः कर्ताऽस्तीति नास्ति संशयः।

**प्र०**—परमेश्वरः जगतः कर्तेति चेन्मन्यध्वे ननु कोऽस्ति परमात्मनः कर्ता?

उ०—कर्तुः कर्ता, कारणस्य चापि कारणं किमपि भवितुं नार्हति। यतो वै संयोगविभागविरहितं कार्यमाद्यकर्तृकारणयोः सद्भावादेव समुत्पद्यते। यो हि प्रथमसंयोगवियोगयोः कारणं तस्य कर्ता कारणं वा न कर्हिचिद्भवति। एतच्चाष्टमसमुल्लासे सृष्टिवर्णने विशेषतो वर्णितं तत्र द्रष्टव्यम्। इमे खलु जैनाः सरलविषयानपि याथार्थ्येन नावगच्छन्ति, कुतः पुनः परमसूक्ष्मसृष्टिविद्यामधिगन्तुं शक्नुयुः।

आर्हतैः किल सृष्टिः, द्रव्यपर्यायाश्चाद्यन्तविवर्जिताः, प्रतिगुणं, प्रतिदेशं, प्रतिवस्तु चानन्ता अभ्युपगम्यन्ते। एतद्धि प्रकरणरत्नाकरग्रन्थस्य प्रथमभागे स्पष्टमभिहितं परमेतन्न जातु संगच्छते। अन्तवतां समर्यादानां हि वस्तूनां निखिलसम्बन्धिनोऽप्यन्तवन्त एव भवन्ति। अत्रानन्तशब्देनासङ्ख्येयताभ्युपेयेत चेत्तदपि न सङ्गच्छते। जीवापेक्षयैतत्स्यादपि सङ्गतं परं परमात्मनोऽपेक्षया तु कथमपि न संघटते।

प्रतिद्रव्यं स्वस्वैकैककार्यकारणसामर्थ्यस्याविभागपर्यायैरनन्तसामर्थ्यवत्वकल्पनं केवलमज्ञानविजृम्भितम्। परमाणुर्वै केवलं द्रव्यसीमा, तस्मिन्ननन्तविभागरूपपर्यायाः कथं सम्भवेयुः? तथैव प्रतिद्रव्यमनन्तगुणकल्पनमेकस्मिन् गुणप्रदेशेऽविभागरूपासंख्येयपर्यायाणामनन्तताभ्युपगमश्च केवलं बालविलसितम् 'येषां ह्याधारः सान्तस्तदाधेयाः कुतो नान्तवन्तो भवेयुः।' ईदृशैरेव मिथ्यानर्गलप्रलापैर्जैनग्रन्थाः परिपूर्णाः।

जैनानां जीवाजीवाख्यपदार्थद्वयविषये मन्तव्यं प्रदर्शयामः—

**चेतनालक्षणो जीवः स्यादजीवस्तदन्यकः।**
**सत्कर्मपुद्गलाः पुण्यं पापं तस्य विपर्ययः॥**

जिनदत्तसूरिणो वचनमिदम्—एतदेव च प्रकरणरत्नाकरस्य प्रथमभागे नयचक्रसारे समुद्धृतम्। चेतनास्वरूपो जीवश्चेतनाविवर्जितश्चाजीवः, जडरूपा प्रकृतिरिति यावत्। सत्कर्मस्वरूपाः पुद्गलाः पुण्यं पापकर्मस्वरूपाश्च पापमित्युच्यन्ते।

**स०**—एषां जीवजडयोर्लक्षणं तु साधीयः, परं जडात्मकाः पुद्गलास्ते पापपुण्यवन्तो न कर्हिचिद् भवितुमर्हन्ति। चेतनानां हि पापपुण्यानुष्ठानस्वभावः। सर्व एव जडपदार्थाः पापपुण्यविवर्जिताः। जीवानामनादित्वाभ्युपगमोऽपि समीचीनः परं तस्यैवाल्पस्वरूपाल्पज्ञस्य जीवात्मनो मुक्तिदशायां सर्वज्ञत्वकल्पनमसङ्गतम्। अल्पाल्पज्ञस्य हि सामर्थ्यमपि सर्वदा भवति परिमितम्। जैनाः किल जगत्, जीवः जीवकर्माणि बन्धश्चानादिरिति मन्यन्ते। अत्राप्येषां तीर्थङ्करा भ्रान्ता इति प्रतीयते। संयोगजन्यस्य जगतः कारणम्, प्रवाहेण कार्यं जीवात्मनो बन्धमोक्षौ चानादीनि न भवितुमर्हन्ति। एवं ह्यङ्गीक्रियमाणे कर्मबन्धयोर्विनाशं कथमभ्युपेथ न ह्यनादि वस्तु जातु

परिहीयते। अनादेरपि विनाशाभ्युपगमे युष्माकं निखिलानादिपदार्थाना-मुच्छेदः प्रसज्येत तस्य नित्यत्वस्वीकारे च कर्मबन्धावपि नित्यौ भविष्यतः।

सकलकर्मक्षयान्मुक्तिञ्चेन्मन्येथास्तर्हि निखिलकर्मक्षयः कैवल्यनिमित्तं समजनि। नैमित्तिकी च मुक्तिर्न सर्वदा स्थातुमर्हति। अपि च कर्त्तृ कर्मणो-र्नित्यसम्बन्धत्वेन कर्माण्यपि न विप्रमोक्ष्यन्ते। एवं "चास्माकं तीर्थङ्कराणां च मुक्तिर्नित्येति" युष्माकं प्रवादो न जातु संगच्छते।

प्र०—यथा वै धान्यतुषविनिर्मुक्तं वह्निना प्रदग्धं वा बीजं न पुनः प्ररोहति तथैव लब्धमोक्षो जीवो जन्ममरणात्मके संसारे नावर्त्तते।

उ०—तुषबीजयोरिव जीवकर्मणोर्नास्ति सम्बन्धोऽपित्वनयोः सम-वायसम्बन्धः। जीवः तस्मिन् कर्मकर्त्तृत्वशक्त्योः सम्बन्धश्चानादिः। अथ चेत्तस्मिन् कर्मानुष्ठानशक्तेरप्यभावोऽङ्गीक्रियेत तर्हि सर्वे जीवात्मानः पाषाणकल्पा भवेयुः। न च तेषु मोक्षोपभोगसामर्थ्यमवशिष्येत। यथा किला-नादिकालप्रवृत्तं कर्मबन्धनं विप्रमुच्य जीवो मुक्ति लभते तथैव युष्माकं नित्यमोक्षादपि परावृत्तो बन्धनं समुपेष्यति। साधनैः संसिद्धः पदार्थो न कर्हिचिन्नित्यो भवति। अथ साधनैर्विनापि मुक्तिर्भवतीत्यङ्गीक्रियेत एवं कर्मान्तरेणैव बन्धनमपि जायेत। यथा हि वसनं मलिनं प्रक्षालनान्निर्मलं पुनरपि च मलीमसं सञ्जायते तथैव मिथ्यात्वादिहेतुभी रागद्वेषाद्याश्रयेण जीवः कर्मरूपं फलं लभते—यो हि सम्यग्ज्ञानदर्शनचरित्रैर्निर्मलः सम्पद्यते। मालिन्यहेतुभिर्मलाः संक्रामन्तीति चेदभ्युपेयते तर्हि मुक्तात्मा संसारं संसारी च मोक्षं लभत इत्यप्यवश्यमभ्युपेतव्यम्। यथा हि सत्सु निमित्तेषु मलं व्यपैति एवं निमित्तसद्भावे मालिन्यं संक्रमिष्यत्यपि। तस्माज्जीवस्य बन्धमोक्षौ प्रवाहरूपेणानादी स्वीकर्तव्यौ न त्वनाद्यनन्तौ।

प्र०—नासीदयं जीवः कर्हिचिदपि निर्मलोऽपि त्वस्ति मलीमसः ?

उ०—यद्ययं नासीन्निर्मलः कदाचित्, तर्हि न जातु निर्मलो भविष्यति शुद्धवसने हि संक्रान्तं मलमपनेतुं शक्यते नतु तस्य स्वाभाविकः श्वेतवर्णः कथञ्चिदपि व्यपगमयितुं पार्यते। भूयश्चापि वसनं मलीमसं सञ्जायते। एवं मुक्तावपि संक्रमिष्यति।

प्र०—अनर्थकः खलु परमेश्वराभ्युपगमः, जीवो हि पूर्वार्जितैः कर्म-भिरेव देहं धारयति (जन्म गृह्णाति)।

उ०—अथ चेत् केवलं कर्माण्येव देहोपलब्धिनिमित्तानि नत्वीश्वर-स्तर्हि नायं जीवः कर्हिचित् दुःख-बहुलं विगर्हितं जन्म सन्दधीत अपि तु नित्यं सज्जनूंपि परिगृह्णीयात्। कर्माणि प्रतिबध्नन्तीति चेत्, तदपि न। नहि तस्करः स्वयमेवागत्य बन्धनालयं प्रविशति नाप्यात्मानमुद्बध्य व्यापादयति

किन्तु नरपतिस्तं दण्डयति, एवं यूयमपि जीवात्मना देहस्य धारयितारं कर्मानुरूप्येण फलप्रदातारं च परमात्मानमभ्युपेत ।

प्र०—मद इव कर्मफलं स्वयं लभ्यते, फलाधिगमे नान्यः कश्चिदपेक्ष्यते ।

उ०—एवं सति यथा किल मदो नित्यं मदपानप्रसक्तान् न तथा मदयति यथानभ्यस्तसीधुपानान् तथैव सर्वदा बहुपापपुण्यकृद्भिरल्पीयः, कदाचिदल्पपापपुण्यकृद्भिश्च प्रभूतं फलं लभ्येत ।

प्र०—यस्य यादृशः स्वभावस्तेन तादृशमेव फलं लभ्यते ?

उ०—स्वभावाच्चेत्, तस्य व्यपगमः प्राप्तिर्वा न जायेत। शुद्धवसनानि यथा कारणैर्मलिनानि भवन्ति पुनस्तदपनयहेतुभिर्निर्मलान्यपि जायन्ते एवमभ्युपगमस्तु साधीयान् ।

प्र०—संयोगमन्तरा न कर्म परिणमति । यथा वै दुग्धाम्लसंयोगं विना दधि नोत्पद्यते एवं जीव-कर्मणोर्योगमन्तरेण कर्माणि फलं न दर्शयन्ति ।

उ०—दुग्धाम्लौ खल्वन्य एव कश्चित्तृतीयः संयुनक्ति, एवं जीवानां कर्मफलैः संयोजयिताऽन्यस्तृतीयः परमेश्वरोऽवश्यमभ्युपेतव्यः । नह्यचेतनपदार्थाः स्वयं नियमेन संयुज्यन्ते । जीवात्मानोऽप्यल्पज्ञतया स्वयं स्वकर्मफलमुपभोक्तुं न क्षमन्ते। एतेन परमेश्वरनियमितसृष्टिक्रमं विना कर्मफलव्यवस्था न सम्भवतीति सिद्धं भवति ।

प्र०—यो वै कर्मभिर्विप्रमुच्यते (मुक्तात्मा) स एवेश्वर इति व्यपदिश्यते ।

उ०—अनादिकालात् कर्माणि जीवेन सह संसृष्टानि तस्मान्न कर्हिचिदपि पृथग्भवितुमर्हन्ति ।

प्र०—आदिमान् कर्मबन्धः ।

उ०—सादिश्चेत्कर्मबन्धो नानादिर्भवेत् । एवञ्च संयोगादौ जीवात्मनो नैष्कर्म्यं प्रसज्येत । तथा च निष्कर्मणोऽपि कर्मसंयोगे मुक्तात्मानोऽपि कर्मभिः संसृज्येरन् । वस्तुतस्तु कर्तृकर्मणोः समवायसम्बन्धो नित्यसम्बन्धो भवति, स च जात्वपि न निवर्तते । तस्मादत्र विषये नवमसमुल्लासे प्रतिपादितमेव स्वीकर्तव्यम् । जीवात्मानः कदाचिदपि परमात्मनः साम्यं प्राप्तुं नार्हन्ति कामं ते निरतिशयं स्वज्ञानसामर्थ्ये परिवर्धयन्तु तथापि तेषां ज्ञानं सामर्थ्यं च परिमितमेव भविष्यति । जीवः खलु योगबलेन यथासम्भवं स्वसामर्थ्यं परिवर्धयेदिति तु सम्भवति । अपि च जैनेष्वार्हताः—"देहपरिमाणेन जीवस्यापि परिमाणं मन्यन्ते" । तत्र ते प्रष्टव्याः "एवं सति हस्तिनो जीवः पिपीलिकायां तस्याश्च करिणि कथं मातुं शक्नुयात् ? एतदपि मौर्ख्यमेव जीवो हि सूक्ष्मं वस्तु यः परमाणावपि निवसतुमर्हति । तस्य शक्तयश्च

प्राणैर्विद्युता शिरादिभिश्च संसृज्यन्ते ताभिरेव सकलदेहव्यवहारं जानीते। सदसत्संसर्गेण क्रमशः प्राशस्त्यमप्राशस्त्यं वा संलभते।

अथ जैनैरभ्युपगतधर्मं विवेचयिष्यामः—

मूल—**रे जीव भव दुहाइं इक्कं चिय हरइ जिणमयं धम्मं।**
**इयराणं पणमंतो सुह कय्ये मूढ मुसिओसि॥**

—प्रकरणरत्नाकरः। भाग २। षष्ठीशत० ६१। सूत्राङ्कः ३

रे जीव! एक एव श्रीवीतरागभाषितो जिनधर्मः सांसारिकजन्म-जरामरणादिदुःखानि व्यपनयति। जिनधर्मावलम्बिन एव प्रशस्ता गुरवो देवाश्चाङ्गीकर्तव्याः। ये नाम जीवात्मान ऋषभदेवाद् महावीरपर्यन्तेभ्यो वीतरागदेवेभ्यो भिन्नान् हरिहरब्रह्मादिकुत्सितदेवानात्मकल्याणार्थमर्चन्ति, ते नितरां वञ्चिता इति विभावनीयम्। जिनधर्मवर्णितान् सुदेवान् सुगुरून् सद्धर्मं च प्रविहायान्यकुदेवकुगुरुकुधर्माणां सेवनेनाल्पीयोऽपि हितं न जायत इति तात्पर्यम्।

स०—एषां धर्मपुस्तकानि कथमन्यान् विगर्हन्त इति सुधीभिरेव विचिन्तनीयम्—

मूल—**अरिहं देवो सुगुरू सुद्धं धम्मं च पंच नवकारो।**
**धन्नाणं कयच्छाणं निरन्तरं वसइ हिययम्मि॥**

—प्रक० भा० २। षष्ठी० ६०। सू० १

यो वै देवानामपि पूजनीयः सर्वेभ्योऽनुत्तमो देवाधिदेव श्रीमान् ज्ञानक्रियाशाली शास्त्रोपदेष्टा शुद्धो मलपङ्कविवर्जितो दयाविनयसम्पन्नोऽर्हन्तो जिनदेवस्तद्भाषितो धर्म एव दुर्गतान् प्राणिनः समुद्धरति नत्वन्यः हरिहरादिधर्मो भवार्णवादुत्तारयति।

परं साधुभिः समुपदिष्टा वक्ष्यमाणाश्चत्वारो गुणा श्रेयांसः—

१—दया, २—क्षमा, ३—सम्यग्ज्ञानदर्शनम्, ४—चारित्रञ्चेति। अयमेव जैनानां धर्मः।

**स०**—या दया मनुष्यमात्रे प्रकाशिता न भवति सा निरर्थकैव। एवं क्षमापि। ज्ञानलाभस्थानेऽन्धकारनिपातोऽज्ञानम्, चरित्रस्थाने चोपवासः (बुभुक्षया पीडनम्) किं नाम श्रेयान्?

मूल—**जइ न कुणसि तव चरणं न पढसि न गुणेसि देसि नो दाणम्।**
**ता इत्तियं न सक्किसि जं देवो इक्क अरिहन्तो॥**

—प्रकरण० भा० २। षष्ठी० स० २

हे मनुष्य! यद्यपि त्वं तपश्चरितुं, चरित्रं शोधयितुम्, सूत्राण्यध्येतुं, प्रकरणादीन् (प्रकरणरत्नाकरादिजैनग्रन्थान्) विवेचयितुं सत्पात्रेभ्यो वा दातुं न क्षमसे तथापि केवलमर्हन्तदेवे विश्वसिहि यो वा अस्माकमाराध्यः

सुगुरुः। जैनसद्धर्मञ्च श्रद्धेहि। एतदेव मतं सर्वतः प्रशस्यं तवोद्धार-निमित्तञ्च।

**स०**—यद्यपि क्षमादये प्रशस्तौ गुणौ तथापि पक्षपातितया दयाप्यदया क्षमाप्यक्षमा सञ्जायते। अयमभिप्रायः—कस्यापि प्राणिनोऽनुतापः सर्वथैव न सम्भवति। यतो दुर्वृत्तानां दण्डनमपि दयेति परिगणनीयम्। यदि वयमेकमपि दुरात्मानं दण्डप्रदानान्मुञ्चेम तर्हि मानवानां सहस्राणि दूयेरन्। तस्मात्सा दयाऽप्यदया क्षमाऽप्यक्षमा सञ्जायेत। सर्वप्राणिनां दुःखविनाशाय सुखप्राप्तये च प्रयतनं दयेति तु साध्वेव। वस्त्रपूतस्य वारिणः पानं, क्षुद्रजन्तूनां च परिरक्षणमेव केवलं नास्ति दया। एतदपि तेषां वचनमात्रं नहि ते तथा व्यवहरन्ति। अपि यस्य कस्यापि मतावलम्बिनो मानवस्य दययान्नपानादिभिरर्चनम्, परधर्मावलम्बिविदुषां सम्मानः शुश्रूषणञ्च नास्ति दया? यदि नामैते (जिनधर्मोपदेष्टारः) वस्तुतो दयावन्तोऽभविष्यन्नैवं तर्ह्युपा—(वक्ष्यमाणम्)—देक्ष्यन्।

(विवेकसारपृष्ठे २२१ लिखितम्) १. परमतिस्तवनम् (परधर्मावलम्बिनां) गुणप्रशंसनम्, २. नमस्कारः=तेषामभिवादनम्, ३. आलपनम्=परमतस्थैरल्पभाषणम्, ४. संलपनम्=तैः सह पौनःपुन्येन भाषणम्, ५. तेभ्योऽन्नवस्त्रादिप्रदानम्, ६. परमतप्रतिमापूजनाय गन्धपुष्पादिप्रदानम्, इमाः षड्यतनाः—एतानि षट् कर्माणि जैनैः कदापि नानुष्ठेयानि।

**स०**—अहो खल्वेषां जैनानां परमतस्थमानवेषु कियान् विद्वेषः, कियद्दयाराहित्यं मात्सर्यञ्च। अन्यमतावलम्बिमानवेष्वदयमानानां जैनानां निर्दया इति व्यपदेशो युक्त एव। स्वकुटुम्बिनां परिचरणं हि नास्ति धर्मनिष्ठा। तन्मतवर्तिनश्च तेषां कुटुम्बिकल्पा एव, अतएव तान् परिचरन्ति नान्यधर्मवतः, तस्मात्को नाम धीमान् तान् दयावतो वक्तुं शक्नोति? "जैनैर्मथुरानरपतेर्नमुचिनामकोऽमात्यः शत्रुरस्माकमिति विभाव्य विनिहतो घातकाश्च प्रायश्चित्तेन संशुद्धाः" इति, विवेकसारग्रन्थस्य १०८ तमे पृष्ठे प्रतिपादितम्।

**स०**—अप्येतदपि कार्यं नास्ति दयाक्षमयोर्विनाशकम्? परमतावलम्बिमानवेषु प्राणान्तं वैरनिर्यातनतत्पराणामेषां दयालुरिति नामधेयापेक्षया हिंसक इत्येव नाम समुचितं प्रतिभाति।

साम्प्रतं 'आर्हतप्रवचनसंग्रहे' 'परमागमसार'—ग्रन्थनिर्दिष्टं सम्यग्दर्शनादिलक्षणं प्रदर्श्यते।

१. सम्यक्श्रद्धानम्, २. सम्यग्दर्शनम्, ३. ज्ञानम्, ४. चरित्रञ्चेति चत्वारि मोक्षसाधनानि योगदेवेन व्याख्यातानि—

जीवादिद्रव्येषु जिनप्रतिपादितशास्त्रानुकूलमेव—ततो विपरीताभि-

निवेशादिविरहितं—श्रद्धानं—जिनमते प्रीतिरिति यावत् सम्यक्श्रद्धानं सम्यग्दर्शनञ्च। तथा चाह—

**रुचिर्जिनोक्ततत्त्वेषु सम्यक् श्रद्धानमुच्यते।**

जिनप्रतिपादिततत्त्वेष्वेव सम्यक् श्रद्धेयं नत्वन्यत्र।

**यथावस्थिततत्त्वानां संक्षेपाद्विस्तरेण वा।**

**योऽवबोधस्तमत्राहुः सम्यग्ज्ञानं मनीषिणः॥**

जीवादिद्रव्याणि यथाभूतानि वर्तन्ते तेषां संक्षेपाद् विस्तरेण वावबोधं सम्यग् ज्ञानमाहुः—

**सर्वथाऽवद्ययोगानां त्यागश्चारित्रमुच्यते।**

**कीर्त्तितं तदहिंसादिव्रतभेदेन पञ्चधा॥**

**अहिंसासूनृतास्तेयब्रह्मचर्य्यापरिग्रहाः ।**

सर्वतोभावेन गर्हणीयपरमतसम्बन्धपरित्यागश्चारित्र्यमुच्यते। तच्चाहिंसादिव्रतभेदेन पञ्चविधम् १–(अहिंसा) प्राणिमात्रस्याव्यापादनम्। २—(सूनृता) प्रियवाक्। ३—(अस्तेयम्) चौर्यविवर्जनम्। ४—(ब्रह्मचर्यम्) उपस्थेन्द्रियसंयमः। ५—(अपरिग्रहः) सर्ववस्तुपरित्यागः।

**स०**—एषु भूयांसः समुपदेशाः समीचीनाः—हिंसास्तेयादिगर्ह्यकर्मपरित्यागः शोभनम्। परं सर्वमिदं परमतनिन्दादिदोषैर्दूषितप्रायम्। यथा किलाद्यसूत्रे "हरिहरादिप्रवर्तितो धर्मः संसारं नोद्धरति" इत्युपन्यस्तम्। अपीदमल्पीयो विनिन्दनम्? यद्ग्रन्थविलोकनेनैव कृत्स्नविज्ञानं धार्मिकत्वं च परिलक्ष्यते तेषां विगर्हणम्; पूर्वोक्तप्रकारेण महासम्भवोपदेशप्रदातॄणां तीर्थङ्कराणाञ्च स्तवनं केवलमाग्रह एव। चारित्र्यविवर्जितोऽश्रुतः त्यागसामर्थ्यशून्योऽपि जिनधर्मावलम्बी "जिनमतं सत्यमिति" वचनेनैव साधुः परमतस्थाश्च साधवोऽप्यसाधवः सम्पद्येरन्?

एवंवादिनो मानवान् "भ्रान्ता बालबुद्धयः" इति व्यतिरिक्तं किमन्यदभिदधीमहि। एतेन "एषामाचार्याः स्वार्थैकपरायणा आसन्नतु पूर्णविद्वांसः" इति निश्चीयते।

यदि हि नाम ते सर्वान्नागर्हयिष्यंस्तर्हि तादृशालीकवार्तासु कोऽपि न प्रासङ्क्ष्यन्नापि तेषां प्रयोजनमसेत्स्यत्। परधर्मावलम्बिनः "जैनमतं सर्वानुत्सादयति वैदिकञ्च मतमुद्धरति हरिहरादिदेवाः साधव ऋषभदेवादयश्चासाधवः" इति चेद् भाषेरन्, अपि जैनास्तथैवाप्रियं न मंस्यन्ते?

अन्यदप्येषामाचार्यस्खलितं दृश्यताम्—

मूल— **जिणवर आणा भंगं उमग्ग उस्सुत्त लेस देसणउ।**

**आणा भंगे पावं ता जिणमय दुक्करं धम्मम्॥**

—प्रकर० भाग २। षष्ठी० ६०। सू० ११

उन्मार्गोत्सूत्रलवदर्शनेन जिनवराणां—वीतरागतीर्थङ्कराणां शासन-व्यतिक्रमः सञ्जायते। तदेव पापं दुःखमूलम्। जिनेश्वरोपदिष्टसम्यक्त्वादि-धर्मपरिग्रहणे महद्दुष्करमतो येन जिनाज्ञालंघनं न भवेत्तथानुष्ठेयम्।

**स०**—स्वमुखेनैवात्मनः प्रशंसनम्, स्वधर्मस्यैव श्रेष्ठत्वप्रतिपादनं, परमतविगर्हणञ्च मौर्ख्यमेव। तस्यैव प्रशंसनं समीचीनं यमन्येऽपि विद्वांसः प्रशंसेयुः। तस्करा अपि स्वमुखेनात्मानं श्लाघन्ते। अपि ते प्रशस्या भवितु-मर्हन्ति? एषामीदृशा एव समुपदेशाः।

मूल—**बहुगुण विज्झा निलओ उस्सुत्त भासी तहा विमुत्तव्वो।**
**जह वरमणिजुतो विहु विग्घकरो विसहरो लोए॥**

—प्रकर० भा० २। षष्ठी० सू० १८

विषधरभुजगे निहितो मणिरिव परधर्मावलम्बी महाधार्मिको विद्वानपि जैनैः परित्याज्यः।

**स०**—अहो खलु कियान् विभ्रमः। यद्येषामाचार्याः शिष्याश्च विद्वांसोऽभविष्यन् तद्विपश्चिद्भिरस्नेक्ष्यन्। एषां किल तीर्थङ्करा अप्यविद्वांसः कथमिमे तर्हि विदुषः सम्मानयेयुः। मले रजसि वा निपतितं स्वर्णमपि कश्चित्परित्यजति? एतेन "जैनव्यतिरिक्ताः केऽन्ये तथा पक्षपातिनो दुराग्रहिणो निर्विद्याश्च भविष्यन्तीति" सिद्ध्यति।

मूल—**अइसय पाविय पावा धम्मिअ पव्वेसु तोवि पावरया।**
**न चलन्ति सुद्धधम्मा धन्ना किविपाव पव्वेसु॥**

—प्रकर० भा० २। षष्ठी० सू० २९

जैनाः कुलिङ्गिनो—जैनमतविरोधिनो जनान् कदापि नेक्षेरन्।

**स०**—अहो कियदिदं वैजात्य—(अनार्यत्वम्)—मिति धीमद्भिरेव विचारणीयम्। वस्तुतस्तु सत्यधर्मा न कुतोऽपि बिभेति। एषामाचार्याः "असारमस्मन्मतं वितर्काक्षमं परश्रावणेन निराकृतं भविष्यति तस्मात्सर्वे गर्हणीया मूढधियश्च स्वपाशे विलोभनीयाः" इति साधु पश्यन्ति स्म।

मूल—**नामंपि तस्स असुहं जेण निदिठाइ मिच्छ पव्वाइ।**
**जेसिं अणुसंगाउ धम्मीण वि होई पाव मई॥**

—प्रक० भा० २। षष्ठी० सू० २७

जिनधर्मव्यतिरिक्ता अन्ये धर्मा मानवान् पापिनः सम्पादयन्ति। तस्मात्कस्याप्यन्यस्य धर्ममनङ्गीकृत्य जिनधर्माभ्युपगम एव श्रेयान्।

**स०**—एतेन "अयं जिनधर्मः सर्वप्राणिनो विद्वेष-विरोध-निन्देर्ष्यादि-दुष्कर्माम्बुधौ पातयतीति सिद्धं भवति। सर्वान् गर्हयितारो जिनधर्मावलम्बिन इव नान्यः कोऽपि परमतस्थो महानिन्दकोऽधार्मिकश्च संलक्ष्यते। अपि निर्विशेषं सर्वेषां विगर्हणमात्मनश्च श्लाघनं नास्ति दुरात्मविचेष्टितम्?

विवेकिनस्तु—कामं कमपि धर्ममवलम्बेरन्—सन्तं प्रशंसन्ति दुर्वृत्तञ्च विनिन्दन्ति ।

**मूल—हा हा गुरुअ अकज्झं सामी न हु अच्छि कस्स पुक्करिमो ।**
**कह जिण वयण कह सुगुरु सावया कह इय अकज्झं ।।**

—प्रक० भा० २ । षष्ठी० सू० ३५

सर्वज्ञजिनभाषितं वचनम्, जैनानां सद्गुरवस्तद्धर्मश्च क्व ? तद्विपरीतधर्मोपदेष्टारोऽन्यमार्गोपदेशकाश्च क्व ? (एषां महदन्तरमिति यावत्)। अस्माकं गुरवो देवा धर्मश्च साधवः, अन्येषां चासाधव इति यावत् ।

**स०**—इदं हि वदरीफलविक्रेत्रीशाकाङ्क्षना-(कूंजड़ी)-विचेष्टितमिव दृश्यते। याह्यम्लान्यप्यात्मनो वदराणि मिष्टानि परस्य मिष्टान्यप्यम्ला-नीत्यपलपति। ईदृशा एव जैनानामुपदेशाः खलु वर्तन्ते। एते हि परमतस्थानां शुश्रूषणं महदकार्यं—पापं परिगणयन्ति ।

**मूल—सप्पो इक्कं मरणं कुगुरु अणंताइ देइ मरणाइ ।**
**तो वरिसप्पं गहियुं मा कुगुरूसेवणं भद्दम् ।।**

—प्रक० भा० २ । सू० ३७

"सर्पस्थो मणिरिवान्यधर्मस्थाः साधवो धार्मिका अपि मानवा दूरतः परिहेयाः" इति पूर्वमेवाभिहितम् । साम्प्रतं ततोऽप्यधिकतरं परमतस्थान्वि-गर्हयन्नाह—जिनगुरुवर्जमितरे सर्व एव कुत्सिता गुरव उरगादप्यधमाः। तेषां दर्शनं परिचरणं तैः सह संसर्गश्च न विधेयः। भुजगदष्टाः सकृदेव म्रियन्तेऽन्यमार्गानुयायिगुरूणां साहचर्येण तु भूयो भूयो जन्ममरणयोः संनिपतन्ति। तस्मात् हे भद्र ! परधर्मगुरूणामन्तिकेऽपि मोपसीद । मनागपि तान् परिचरन् हि त्वं दुःखाम्बुधौ निमङ्क्ष्यसि ।

**स०**—जैन इव नान्यः कोऽपि कठोरचेता भ्रान्तो विनिन्दको द्वेष्टा च भवेत् । परानविगर्हमाणानामात्मानञ्चाश्लाघमानानामस्माकं परिचर्या समादरश्च न भविष्यतीति कदाचित्ते विचिन्तयन्ति परमिदं तेषां दौर्भाग्यं, यतोह्य विहितोत्तमविद्वत्साहचर्यपरिचर्याः खल्विमे न कर्हिचिदपि यथार्थज्ञानं सद्धर्मं च लप्स्यन्ते । तस्मादात्मनो विद्याविरुद्धालीकव्यवहारान् प्रविहाय वैदिकं सद्धर्ममङ्गीकुर्युरेतदेव तेषां महद्धितकरम् ।

**मूल—किं भणिमो किं करिमो ताण हयासाण धिट्ठ दुट्ठाणं ।**
**जे दंसिऊण लिंगं खिवंति न रयम्मि मुद्ध जणं ।।**

—प्रक० भा० २ । षष्ठी० सू० ४०

विनष्टहितप्रत्याशमविनेयं दुष्कर्मसु नदीष्णं (विदग्धम्) किं ब्रूमः किं वा विदधामः। कृतोपकारोऽपि स उपकर्तारमेव विनाशयति। विगतचक्षुः

पञ्चास्यो दयया स्वनयनप्रदातारमेव विनाशयेत् । परधर्मावलम्बिनामुपकारः खलु स्वविनाश एव, तस्मात्तैर्जात्वपि संसर्गो न विधेयः ।

**स०**—जिनधर्मावलम्बिन इवान्यमतवर्तिनोऽपि चेद् विचिन्तयेयुस्तर्हि तेषां कियती दुरवस्था भवेत्? अपि चान्ये यदि तैः सह संव्यवहारं परित्यजेयुस्तत् प्रभूतकर्मविनाशेन ते कथं दूयेरन्? जैना अपि तथैवान्यान् प्रति कथं न विचिन्तयन्ति ।

मूल—**जह जह तुट्टइ धम्मो जह जह दुट्ठाण होइ अइ उदउं ।**
**समद्दिट्ठि जियाणं तह तह उल्लसइ समत्तं ॥**

—प्रक० भा० २ । षष्ठ० सू० ४२

यथा यथा दर्शनानर्हा निह्नव-पासच्छा-उसन्ना-कुसीलियादिका अन्यधर्मावलम्बिनस्त्रिदण्डिपरिव्राजकविप्रादिदुर्वृत्तमानवाः सविशेषमर्च्यन्ते तथा तथा सम्यग्दृष्टिजीवानां सम्यक्त्वं प्रकाशते । इदं हि महदाश्चर्यम् ।

**स०**—अप्येतेभ्यो जैनेभ्योऽधिकः, कोऽप्यन्यो मत्सरी विद्वेष्टा च भविष्यति? अन्यमतेष्वपि मात्सर्यविद्वेषौ वर्तेते तथापि जैनेष्विव नान्यत्र क्वचिद् दृश्येते । द्वेष एव पापमूलम्, कथं पुनर्जैनेषु पापाचारो न प्रवर्धेत?

मूल—**संगो वि जाण अहिउ तेसिं धम्माइ जे पकुब्बन्ति ।**
**मुत्तूण चोरसंगं करन्ति ते चोरियं पावा ॥**

—प्रक० भा० । षष्ठी० सू० ७५

मूढजना दस्युसाहचर्येण नासाकर्तनादिदण्डेभ्य इव जैनमतातिरिक्त-मोषकधर्मावलम्बिना मानवाः स्वाहितान्न बिभ्यतीत्येवास्य संक्षेपार्थः ।

**स०**—प्रायशो मानवा अन्यानपि स्वसदृशानेव विगणयन्ति । सर्व एवान्ये धर्मा दस्यवः, केवलं जैनमतमेव श्रेष्ठि—यथार्थमिति सत्यमेतत्? यावद्धि मानवा अज्ञानातिशयेन कुसंगेन च भ्रष्टबुद्धयो भवन्ति न तावदन्यैः सह मात्सर्यविद्वेषादिदुष्कर्मजातं परित्यजन्ति । जैनमतमिव नान्यो धर्मः परान् विद्वेष्टि—

मूल—**जच्छ पसुमहिस लरका पव्वं होमन्ति पाव नवमीए ।**
**पूअन्ति तंपि सढ्ढा हा हीला वीयरायस्स ॥**

—प्रक० भा० २ । षष्ठी० सू० ७६

"जैनमार्गाद् भिन्नाः सर्वे धर्मा मृषा भूताः केवलं जैनमतमेव सम्यग्-दर्शकम्—सर्वेऽन्ये धर्माः पापीयांसो जैनधर्मश्च पुण्यशील इति यावत्" इति पूर्वसूत्र एवाभिहितम् । तस्मात् यः किलालीकधर्मान् संस्थापयेत् स पापीया-निति विज्ञेयम् ।

**स०**—चामुण्डा देवी—("कालिका, ज्वाला" एत अपि तस्या एव नामधेये)—मुपलक्ष्य प्रतिविहितो दुर्गानवम्युपवासः पापकृत्यञ्चेत्कथं युष्माकं

पर्यूषणप्रभृतीनि व्रतान्यपि न सन्ति पापकृत्यानि ? एतानि हि नितरां व्यथयन्ति । जिनमतानुयायिनो वाममार्गिणां प्रपञ्चं दूषयन्तीति तु समीचीनं परं शासनमरुत्प्रमुखाः स्वदेवीः कथं न गर्हयन्ति ? "अस्माकं देव्योऽहिंसकाः" इतिचेदभिधीयेत तदलीकमेव । शासनदेवी ह्येकस्य पुंसोऽपरस्य छागस्य च चक्षुषी समुदपाटयत् । कथं तर्हि पुनः सा निशाचरीणां दुर्गाया वा सहोदरा भगिनी न मन्यते ? अपि च पच्चखाणादिस्वव्रतानां प्रशंसनं नवम्यादिपर-व्रतानाञ्च विगर्हणं मौर्ख्यमेव । नहि परोपवासानां विनिन्दनं स्वेषाञ्च श्लाघनं प्रशस्यते । सत्यभाषणादिव्रतानुष्ठानं तु सर्वेषां समुचितम् । जैना-नामन्येषां वोपवासा न कर्हिचित्प्रशस्यन्ते ।

मूल—**वेसाण वंदियाणय माहृण डुंबाण जरकसिरकाणं ।**
**भत्ता भरकाट्ठुणं वियाणं जन्ति दूरेणं ।।**

—प्रक० भा० २ । षष्ठी० सूत्र ८२

ये वै वेश्याचारणवन्दिब्राह्मणान् स्तुवन्ति, यक्षान् बहु मन्यन्ते, गणेश-प्रमुखा अलीकदेवता आराधयन्ति तेऽविद्यायां स्वयं मज्जन्तः परानपि मज्जयन्ति, यतो हि ते देवताभ्य एव सकलकामनावाप्तिमाशंसमाना वीतरागपुरुषान् जैनयोगिनो नानुवर्तन्ते ।

**स०**—अन्यधर्मावलम्बिदेवतानां मिथ्यात्वप्रतिपादनं स्वेषां च सत्यत्वं केवलं पक्षपातव्यवहारः । अन्यवाममार्गिदेवीः प्रतिषेधन्त इमे जैनाः शासनदेवीं हिंस्रां कथं न मन्यन्ते । तथा च—(श्राद्धदिनकृत्ये पृ० ४६ तमे) इयं किल शासनदेवी कमपि मनुजं रात्रिभोजननिमित्तं चपेटिकया प्राहरत् तस्य चक्षुषी च समुत्पाटयामास । तदनु छागस्य नेत्रे समुद्धृत्य तन्मनुजनयनस्थाने सज्जया-मासेत्युपवर्णितम् । रत्नसारग्रन्थस्य प्रथमभागे (पृ० ६७ तमे) "मरुद् देवी प्रास्तरिकरूपमास्थाय पथिकानुपकरोति स्मेत्यभिहितम् ।" इदमप्यलीकम् ।

मूल—**किं सोपि जणणि जाओ जाणो जणणीइ किं गओ विद्धि ।**
**जइ मिच्छरओ जाओ गुणेसु तह मच्छरं वहइ ।।**

—प्रक० भा० २ । षष्ठी० सू० ८१

जैनमतविरोधिनो मिथ्यात्विनोऽलीकधर्मवन्तः कथमजायन्त ? समुत्पन्ना वा कथं व्यवर्धन्त ? जन्मसमकालमेव कथं न व्यनश्यन् ?

**स०**—पाठकाः ? मनागेषां वीतरागभाषिते दयाधर्मेऽवधीयताम् । एते हि परमतवर्तिनां जीवनमपि नेच्छन्ति । कथनमात्रमेवैषां दयाधर्मः । इमे हि क्षुद्रजन्तुषु पशुषु वा दयां प्रकाशयन्ति नतु परमतमानवेषु ।

मूल—**सुद्धे मग्गे जाया सुहेण मच्छन्ति सुद्ध मग्गंमि ।**
**जे पुण अमग्गजाया मग्गे गच्छन्ति तं चुय्यं ।।**

—प्रक० भा० २ । षष्ठी० सूत्र ८३

जैनकुले समुत्पद्य कश्चन मुक्तिमधिगच्छेदिति नाद्भुतं जैनातिरिक्तकुलसमुद्भूता मोक्षमश्नुवीरन्निति तु महदाश्चर्यम्। जैनमतस्था एव मोक्षं लभन्ते न तु परधर्मावलम्बिनः। जैनमतमनङ्गीकुर्वन्तो नरकभाजो भवन्तीति तात्पर्यम्।

**स०**—अपि जैनमते कोऽपि दुर्वृत्तो निरयी वा न भवति? सर्व एव मोक्षं प्रतिपद्यन्ते? अपि नेदं प्रमत्तगीतम्? मुग्धजनातिरिक्तः कोऽन्योऽत्र विश्वसेत्।

मूल—**तिच्छयराणं पूआ संमत्त गुणाण कारिणी भणिया।**
**साविय मिच्छत्तयरी जिण समये देसिया पूआ॥**

—प्रक० भा० २। षष्ठी० सूत्र ६०

जिनप्रतिमार्चनं प्रशस्तमन्यधर्मावलम्बिप्रतिमापूजनं त्वप्रशस्यम्। यो वै जिनशासनमनुरुध्यते स एव तत्त्वज्ञानी नेतरः।

**स०**—अहो किं वाच्यम्; अपि वैष्णावादीनामिव युष्माकं प्रतिमा न सन्ति पाषाणादिजडवस्तूनाम्? वस्तुतो यथा खलु युष्माकं प्रतिमार्चनमलीकं तथैव वैष्णवादीनामपि मिथ्यैव। यूयमात्मानं तत्त्वज्ञानिनमपराँश्चातथाभूतान् मन्यध्वे तेन युष्मद्धर्मे नास्ति किमपि तत्त्वज्ञानमिति प्रतीयते।

मूल—**जिण आणाए धम्मो आणा रहिआण फुंड अहमुत्ति।**
**इय मुणि ऊणय तत्तं जिण आणाए कुणहु धम्मं॥**

—प्रक० भा० २। षष्ठी० सूत्र ६२

दयाक्षमादिरूपं जिनदेवशासनं धर्मस्तदतिरिक्तोऽन्याचार्याणामुपदेशोऽधर्मः।

**स०**—अहो कीदृशोऽयमन्यायः। अपि जैनमतानवलम्बी कोऽपि पुमान् सत्यवादी धर्मात्मा च नास्ति? धार्मिकोऽप्यन्यधर्मस्थः किं न समादरणीयः? चेज्जैनानामाननरसने चर्ममये नाभविष्यतामन्येषाञ्च चर्ममय एव स्यातां तदा कदाचिदिदं सम्भाव्यं भवेदपि। एते हि स्वमतस्यैव ग्रन्थवाक्यसाधुप्रमुखान् प्रशंसन्तो (कीर्तयन्तः) वन्दिनोऽप्यतिशेरते।

मूल—**वन्नेमि नारयाउवि जेसिन्दुरकाइ सम्भरं ताणम्।**
**भव्वाण जणइ हरि हर रिद्धि समिद्धी वि उद्घोसं॥**

—प्रक० भा० २। षष्ठी० सूत्र ६५

हरिहरादिदेवानां विभूतिर्निरयप्रतिपादिका तामभिवीक्ष्य जैनानां रोमाणि प्रहृष्यन्ति। यथा खलु राजनिदेशमुल्लंघ्य प्राणान्तं दुःखमनुभूयते तथैव जिनेन्द्रशासनव्यतिक्रमेण जन्ममरणक्लेशं कथं न लभ्येत?

**स०**—जैनगुरूणां मानसी स्थितिरभिसमीक्ष्यताम्। साम्प्रतं ह्येतेषामन्तःस्थिताऽपि लीला प्राकाश्यंगता। हरिहरादिदेवानां तदुपासकानाञ्च

समृद्धिं द्रष्टुमपि न जैनाः खलु शक्नुवन्ति। कथमन्येषामभ्युदय इति तेषां रोमाणि हृष्यन्ति। एषामैश्वर्यं वयं लभेमहि एते चाकिञ्चनाः स्युरिति कामयन्ते स्मेति प्रतीयते। जैना वै नरपतेश्चाटुकारा अलीकवादिनो भीरवश्च भवन्त्यत एव राजनिदेशमुदाहरन्ति। अपि मिथ्यापि राज्ञः शासनमूरीकर्तव्यमेव? जैनेभ्यः समधिकोऽन्यः कोऽपि मत्सरी विद्वेष्टा च नो संलक्ष्यते।

मूल—**जो देइ सुद्ध धम्मं सो परमप्पा जयम्मि न हु अन्नो।**
**किं कप्पद्दुम्म सरिसो इयर तरू होइ कइयावि॥**

—प्रक० भा० २। षष्ठी० सू० १०१

अज्ञानिनः खलु जिनधर्मविरोधिनो जनाः। जिनेन्द्रभाषितधर्मोपदेष्टारः साधवो गृहमेधिनो ग्रन्थप्रणेतारो वा तीर्थङ्करसन्निभाः। नैषां कश्चित्साम्यमावहति।

**स०**—अहो किमु वक्तव्यम्? यदि हि नाम जैना बालबुद्धयो नाभविष्यन् कथमीदृशमतमभ्युपैष्यन्? यथा किल वाराङ्गनाऽऽत्मानमेव सततं श्लाघते नत्वन्यां काञ्चित् तथैवैतेऽपि कमपि न प्रशंसन्ति।

मूल—**मूलं जिणिंद देवो तव्वयणं गुरुजणं महासयाणं।**
**सेसं पावट्ठाणं परमप्पाणं च वज्जेमि॥**

प्रक० भा० २। षष्ठी० सू० १०२

जिनेन्द्रदेवस्तत्प्रतिपादितसिद्धान्ता जिनमतोपदेष्टारश्च कर्हिचिज्जैनैर्न परित्याज्याः।

**स०**—इदं हि जैनानामाग्रहाविद्यापक्षपातेभ्यो व्यतिरिक्तं किमन्यद् भवितुमर्हति? वस्तुतस्तु जैनानां काँश्चिद् व्यवहारान् विहाय सर्वमन्यदपरिग्राह्यम्। अल्पधीरप्येषां देवान् सिद्धान्तग्रन्थानुपदेशकाँश्च समीक्षमाणः शृण्वन् विचिन्तयन्नेव च परिहास्यत्यत्र नास्ति कश्चित् संशयः।

मूल—**वयणे वि सुगुरु जिणवल्लहस्स केसिं न उल्लसइ सम्मं।**
**अह कह दिणमणि तेयं उलुआणं हरइ अन्धत्तं॥**

—प्रक० भा० २। षष्ठी० सू० १०८

जिनवचनान्यनुरुध्यमाना एव सत्करणीयाः, नतु तत्प्रतीपगामिनः। जैनगुरव एव वन्दनीयाः, न त्वन्यमार्गावलम्बिन इति यावत्।

**स०**—यदि नाम जिनमतावलम्बिनोऽन्याज्ञानिनो जनान् शिष्यान् विधाय पशूनिव नाभन्त्स्यन् तर्हि तत्पाशप्रच्युताः स्वमुक्तिसाधनान्यनुष्ठाय निजजन्मासफलयिष्यन्। कुमार्गिणः कुगुरवो मिथ्यात्विनः कूपदेष्टारश्चेति परैरधिक्षिप्ता यूयं कियद्दुःखमनुभविष्यथ? यूयं ह्येतादृशसम्बोधनैराकारयन्तः परान् व्यथयथ, अतएव युष्मन्मते बह्व्योऽसारवार्ता वर्तन्ते।

**मूल—जे रज्जधनाईणं कारणभूय हवन्ति वावारा।**
**ते वि हु अइपावजुया धन्ना छड्डंति भवभिया ॥**

—प्रक० भा० २। षष्ठी० सू० १०९

मरणान्तदु:खं सम्प्राप्ता अपि जैनाः कृषिव्यापारादिकार्याणि न कुर्वीरन्, इमानि हि जनं निरयं प्रापयन्ति।

**स०**—प्रष्टव्याः खलु जैनाः साम्प्रतं यूयं व्यापारादिकर्मजातं किमर्थं विधत्थ? कथमिमानि कर्माणि न परित्यजथ? परित्यक्तवतां च युष्माकं शरीरपोषणमपि कथं सम्भवेत्! अथ चेद् युष्मदुपदेशमनुरुध्य सर्व एव जनाः परित्यजेयुः किं समश्नीय प्राणान् धारयिष्यथ? मुधैवेदृशात्याचारसमुपदेशः। किं कुर्वन्तु वराका यथा काममजल्पन् नहि ते विद्यावन्तः सत्सङ्गजुषो वा आसन्।

**मूल—तइया हमाण अहमा कारण रहिया अनाण गव्वेण।**
**जे जंपन्ति उस्सुत्तं तेसिं घिद्धिछ पंडिच्चं ॥**

—प्रक० भा० २। षष्ठी० सू० १२१

जैनागमविरुद्धशास्त्राणामङ्गीकर्तारो नितरामधमाः। सिध्यत्यपि कस्मिँश्चित् कार्ये जैनमतप्रतिकूलं न वदेन्नाङ्गीकुर्यात् नाप्यन्यधर्मं परिगृह्णीयात्।

**स०**—इदानीं यावत्सर्वैरेव युष्माकमुपदेष्टृभिरन्यमताय गालिप्रदानमन्तरा न किमप्यन्यदनुष्ठितं नाप्यग्रे भविष्यन्तो विधास्यन्ति। यत्र क्वचिज्जैनाः स्वकार्यं सफलीभवत् पश्यन्ति तत्र शिष्याणामपि शिष्यतां गच्छन्ति। कथं पुनरेते ईदृशानर्गलप्रलापेषु न लज्जन्ते। महदिदं शोकस्थानम्।

**मूल—जम्बीरजिणस्स जिओ मिरई उस्सुत्त लेसदेसणओ।**
**सागर कोडाकोडिं हिंडइ अइभीमभवरण्णे ॥**

—प्रक० भा० २। षष्ठी० सू० १२२

जैनसाधवो धर्मात्मानोऽन्येऽपि च साधुशीला इति भाषमाणो मानवः कोटिवर्षाणि नरकमुपभुज्यापि निकृष्टजनुः प्रतिपद्यते।

**स०**—अहह! विद्याशत्रवः! अस्मन्मिथ्यावचांसि कोऽपि न प्रत्याख्यास्यतीत्येव भवद्भिर्विचिन्तितं भवेन्नूनम्। अत एवेदं विनिन्द्यं वचः समुपदिष्टम्। परमिदमसम्भाव्यम्। कियन्नाम युष्मान् प्रतिबोधयामः, यूयं हि परेषां मृषा गर्हणेऽन्यमतविद्वेषे च सन्नद्धाः सन्तः स्वीयप्रयोजनसाधनं नितरां सुकरं मन्यध्वे।

**मूल—दूरे करणं दूरम्मि साहणं तह पभावणा दूरे।**
**जिणधम्म सद्दहाणं पि तिरकदुरकाइ निट्ठवइ ॥**

—प्रक० भा० २। षष्ठी० सू० १२७

जिनधर्मं पालयितुं नितरामक्षमोऽपि जनो "जिनधर्म एवावितथो न त्वन्यः" इति श्रद्धयैव दुःखेभ्यः सन्तरति।

**स०**—अहो खल्वतः परं मूर्खान् स्वमत आवर्जयितुं किमन्यद् भविष्यति ? यत्र किल कर्मानुष्ठानमन्तरेणापि मुक्तिर्लभ्यते तादृशो निर्बुद्धिः जिनधर्मव्यतिरिक्तः कोऽन्यो धर्मो भवेत्।

मूल—**कइया होही दिवसो जइया सुगुरूण पायमूलम्मि।**
**उस्सुत्त लेस विसलव रहिओ निसुणेसु जिणधम्मं॥**

—प्रक० भा० २। षष्ठी० सू० १२८

मनुष्यश्चेदहं जिनागमान्—जिनधर्मशास्त्राण्येवाकर्णयिष्यामि नतूत्सूत्राणि। परमतग्रन्थान् कर्हिचिदपि न श्रोष्यामीतीच्छयैव दुःखाम्बुधिमुत्तरति।

**स०**—इदमपि केवलं मुग्धजनान् विमोहयितुं समुपन्यस्तम्। नह्येवमभिलषन् कश्चिद्दैहिकेभ्योऽपि दुःखेभ्यः संतरति नापि प्राग्जन्मस्वनुष्ठितदुरितानां दुःखात्मकं फलमनुपभुज्य विमोक्तुमर्हति। यदि नामैत ईदृशालीकविद्याविरुद्धवार्ता न व्यलेखिष्यँस्तर्ह्येषामविद्यामयनिःसारग्रन्थान् वेदादिशास्त्राणां पठनश्रवणाभ्यां सत्यासत्यपरिज्ञानेन कोऽपि न व्यश्वसिष्यत्। परमिमे खल्वविद्वांसो दृढं नियन्त्रिताः, एषां हि धर्मपाशाद् मूढधियां महादुष्करो मोक्षः। कश्चन धीमान् कृतसाधुसमागमो मुच्येत इति कथञ्चित्सम्भवति।

मूल—**जह्मा जेणंहि भणियं सुय ववहारं विसोहियं तस्स।**
**जायइ विसुद्ध बोही जिण आणा राहगत्ताओ॥**

—प्रक० भा० २। षष्ठी० सू० १३८

ये वै जिनाचार्यप्रोक्तसूत्रनिरुक्तिवृत्तिभाष्याण्यङ्गीकुर्वते नत्वन्यग्रन्थान् पश्यन्त्यपि त एव शुभकर्मणामनुष्ठानेन (आत्मनिर्धारितव्रतादीनां) दुःसहव्यवहाराणां परिपालनेन च चरित्रवन्तः सन्तः सुखान्यधिगच्छन्ति।

**स०**—अप्यनशनक्लेशसहनमेव चरित्रमुच्यते ? क्षुत्पिपासाभ्यां व्यथासहनमेव चरित्रं चेदकालपीडिता अप्राप्तभोजना वा बहवो जना बुभुक्षया पीडचमानाः संशुद्धच शुभफलान्यधिगच्छेयुः ? परं न ते नापि यूयं शुद्धचथ। अपि तु पित्तादीनां प्रकोपेन रोगान्विताः सन्तः सुखस्थाने दुःखानि लभध्वे। वस्तुतस्तु न्यायाचरणं ब्रह्मचर्यसेवनं सत्यभाषणादिकं च धर्मः। अलीकभाषणमन्यायाचरणादिकञ्च पापम्। सर्वैः सह प्रीतिपूर्वकं परोपकारव्यवहारश्च चरित्रमुच्यते। जिनमतावलम्बिनां क्षुत्पिपासाभ्यां निपीडनं नास्ति धर्मः। जैनानामेवमादिसूत्राणामनुसरणेनाल्पीयः सत्यं बहुलमसत्यञ्च सम्प्राप्ता दुःखाम्बुधौ निमज्जन्ति।

**मूल—जइ जाणिसि जिण नाहो लोयायाराविपरकए भूओ।**
**ता तं तं मन्नं तो कह मन्नसि लोय आयारं॥**

—प्रक० भा० २। षष्ठी० सूत्र १४८

सौभाग्यवन्त एव मानवा जिनधर्मं स्वीकुर्वते। जिनधर्ममनङ्गीकुर्वतां भाग्यं विनष्टमिति यावत्।

**स०**—अप्ययमुपदेशो नास्ति भ्रमपूर्णोऽलीकश्च? अप्यन्यमतेषु सौभाग्यशालिनो जैनमते वा दौर्भाग्यवन्तः केऽपि न सन्ति? यच्चापि सधर्माणो—जिनमतावलम्बिनः परस्परं न क्लिश्नीयुरपितु सस्नेहं व्यवहरेयुरिति समुपदिष्टं तदपि जैना अन्यैः सह दुर्व्यवहारे किमपि पापं न गणयन्तीति बोधयति। परमिदं नितान्तमनुचितम्। साधवो हि साधुभिः स्नेहेन व्यवहरन्ति। दुर्वृत्तांश्च शिक्षया सुशिक्षयन्ति। पुनश्च जैनगुरवः समुपदिशन्ति—"ब्राह्मणास्त्रिदण्डिनः परिव्राजकाचार्याः–संन्यासिनस्तपस्विनो—वैरागिप्रभृतयः सर्वे जैनमतशत्रवः" इति। सर्वानेव शत्रुभावेन पश्यतां गर्हयताञ्च जैनानां क्व गतो दयाक्षमात्मको धर्मः? अन्यैः सह विद्वेषो हि दयाक्षमयोः प्रणाशः। विद्वेषसमानश्च नास्त्यपरः कोऽपि हिंसात्मको दोषः। जैनाः खलु द्वेषमूर्तयः। अल्पीयांस एवापरे जैना इव द्वेषिणो भविष्यन्ति। यदि केचन आऋषभदेवाद् महावीरपर्यन्तान् चतुर्विंशतितीर्थङ्करान् रागिणो विद्वेषिणो मिथ्यात्विनः प्रतिपादयेयुः जैनमतावलम्बिनः सन्निपातज्वरग्रस्तान् मन्येरन्, एषां धर्मं च निरयं गरलमिति विभावयेयुस्तर्हि तेऽतितरां दुर्मनसो भवेयुः। अतएव जैनाः परमतविगर्हणद्वेषात्मके निरये निमज्जन्तो महान्तं क्लेशमनुभवन्ति। इमे दुःस्वभावमिमं परित्यजेयुश्चेत् शोभनं भवेत्।

**मूल—एगो अगरू एगो विसावगो चेइ आणि विवहाणि।**
**तच्छय जं जिणदब्बं परुप्परन्तं न विच्चन्ति॥**

—प्रक० भा० २। षष्ठी० सू० १५०

निखिलश्रावकाणामेक एव (समुपास्यो) देवः, गुरुः, धर्मश्च। जिनप्रतिमानां चैत्यानां (जिनमन्दिराणाम्) तत्सम्बद्धद्रव्याणाञ्च परिरक्षणं जिनप्रतिमार्चनं च परमो धर्मः।

**स०**—निखिलमूर्तिपूजादिप्रपञ्चस्य जिनमतमेवोद्गमः। एतदेव चाशेषपाखण्डमूलम्।

श्राद्धदिनकृत्ये (प्रथमपृष्ठे) मूर्तिपूजायाः प्रमाणानि—

**नवकारेण विबोहो ॥१॥ अणुसरणं सावउ ॥२॥ वयाइं इमे ॥३॥ जोगो ॥४॥ चिय वन्दणगो ॥५॥ पच्चरकाणं तु विहि पुब्बं ॥६॥**

सर्वश्रावकैः (चैत्यस्य) प्रथमद्वारि नवकारजपोऽनुष्ठेयः ॥१॥

द्वितीये द्वारि नवकारजपसमनन्तरम्—'अहं श्रावकोऽस्मीति' विचिन्तनीयम् ।।२।।

(तृतीयद्वारि) कियन्त्यस्माकमणुव्रतादिकानीति विभावनीयम् ।।३।।

(चतुर्थे द्वारि) चतुर्वर्गे (धर्मार्थकाममोक्षादिषु) मोक्षः प्रधानं ज्ञानादिकं च तत्साधनम् । स च योग इत्यभिधीयते । मानवानां नैर्मल्यसम्पादकतयाऽऽवश्यकानि तदीयषट्करणान्युपचारेण (गौणवृत्त्या) योग इति व्यवह्रियन्ते । तं योगं व्याख्यास्यामः ।।४।।

(पञ्चमद्वारे) चैत्यवन्दनम्—प्रतिमाप्रणामो द्रव्यैः प्रतिमार्चनं च विधेयम् ।।५।। षष्ठं प्रत्याख्यानद्वारं नवकारसीप्रमुखविधिना वर्णयिष्ये ।

अपि चात्रैव ग्रन्थे परस्तात् भूयाँसो विधयः प्रतिपादिताः तथा च—सायन्तनभोजनवेलायां जिनबिम्बस्य तीर्थङ्करप्रतिमायाः समर्चनं, द्वारपूजनञ्च विधेयम् । अस्यां च द्वारपूजायां महान्प्रपञ्चः । चैत्यनिर्माणविषयेऽपि "प्रयत्नमन्दिराणामुद्धारेण मुक्तिर्लभ्यते" इत्यभिहितम् । पूजकश्चैत्येषु यथानियममुपविश्य भक्तिपुरःसरं पूजयेत् **"नमो जिनेन्द्रेभ्यः"** एवमादिमन्त्रैः (देवताः) स्नापयेत् । **जलचन्दनपुष्पधूपदीपनैः** इत्यादिमन्त्रैश्च गन्धादिकं निवेदयेत् ।

(रत्नसारप्रथमभागस्य द्वादशे पृष्ठे) समुपासकं (धर्मयाजकम्) नरपतिः प्रजा वा कोऽपि (कस्मिंश्चिदपि कार्ये) निरोद्धुं न शक्नुयादिति प्रतिमार्चनस्य फलमभिहितम् । (रत्नसारप्रथमभागग्रन्थस्य तृतीये पृष्ठे) "मूर्त्तिपूजया व्याधयः, क्लेशाः, महादोषाश्च नोपसर्पन्ति । कश्चन कुमारपालनामा मानवः पञ्चवराटिकानां पुष्पमुपायनीकृत्याष्टादशजनपदानां राज्यमलभत" इति समुपन्यस्तम् ।

**स०**—सर्वमिदं कल्पनाप्रसूतं वितथं मूर्खांश्च विलोभयितुं प्रवर्तितम् । भूयांसः खलु जैनयाजका नराधिपप्रमुखैरवरुध्यन्तेऽपरे च पूजां समाचरन्तोऽपि व्याधिभिः पीडचन्ते, नापि पाषाणादिमूर्त्तिपूजया वीघापरिमितमपि राज्यं लभन्ते । यदि नाम पञ्चवराटिकापुष्पनिवेदनेनापि राज्यं लभ्यते तर्हि किमिति तादृशानेककुसुमान्युपायनीकृत्य सकलभूवलयाधिपत्यं नासादयन्ति ? कथं च राजदण्डमनुभवन्ति ? अपिच—प्रतिमार्चनेनैव भवार्णवं सन्तरन्ति भवन्तश्चेत् कथं ज्ञानसम्यग्दर्शनचरित्राण्यनुतिष्ठन्ति ? रत्नसारप्रथमभागग्रन्थस्य (त्रयोदशे पृष्ठे) "गौतमस्याङ्गुष्ठेऽमृतं प्राप्यते । तदीयस्मरणेन च मनोवाञ्छितफलान्यधिगम्यन्ते" ? इति विलिखितम् । एतदपि न समीचीनम् । एवं हि सर्वे जैना अमरत्वं प्राप्नुयुः । परं न तल्लभन्ते तस्मात्केवलमिदमेषां मूर्खजनान् विमोहयितुं प्रवञ्चनामात्रम् । नास्त्यत्र किमपि सारभूतम् ।

जलचन्दनपुष्पधूपनैरथदीपाक्षतकैर्नैवेद्यवस्त्रैः ।
उपचारवरैर्वयं जिनेन्द्रान् रुचिरैरद्य मुदा यजामहे ॥

वयं खलु वारिपाटीरतण्डुलपुष्पधूपदीपनैवेद्यवसनादिकैः प्रशस्तोपचारैर्जिनेन्द्रान् तीर्थङ्करान् पूजयाम इति ।

अत एव वयमियं मूर्त्तिपूजा जैनेभ्यः प्रचलितेत्युद्घोषयामः । जिनमन्दिरेषु मोहो नोपसर्पति (तानि च) भवाम्बुधेस्तारयितुं प्रभवन्ति (विवेकसारस्य २१ पृष्ठे) । मूर्त्तिपूजया मोक्षः संलभ्यते । जिनमन्दिरप्रवेशेन सद्गुणा आसाद्यन्ते । जलचन्दनादिभिस्तीर्थङ्करसमर्चनेन च नरकेभ्यो विप्रमुक्ताः स्वर्गं प्रतियान्ति (विवेकसारस्य पृष्ठे ५१, ५२ तमे)। जिनमन्दिरेषु ऋषभदेवप्रमुखाणां प्रतिमार्चनेन धर्मार्थकाममोक्षाः संसाध्यन्ते (विवेक० पृ० ५५ तमे) । जिनमूर्त्तीनां पूजनेन जगतः सर्वक्लेशा मुच्यन्ते (वि० पृ० ६१) ।

स०—अहो खल्वेषां कीदृशा विद्याविरहिता असम्भाव्याश्चोपदेशाः । यदि हि नामैवं पापादिदुष्कर्माणि मुच्येरन्, मोहो नोपसर्पेत, सद्गुणा आसाद्येरन्, धर्मार्थकाममोक्षा लभ्येरन्, निखिलक्लेशाः परिहीयेरन्, भवाम्बुधेः पारमुत्तीर्येत, नरकं विहाय स्वर्गः सम्प्राप्येत च कथं तर्हि जैनमतावलम्बिनः सुखिनः सन्तो निखिलपदार्थान् नाधिगच्छन्ति ?

यैः किल जिनमूर्तयः स्थापितास्तैरात्मनो निजकुटुम्बस्य च वृत्तिरुपकल्पिता (विवेकसारस्य पृ० ३ तमे) । शिवविष्णुप्रभृतीनां मूर्त्तिपूजनं नितरां जघन्यम्, निरयहेतुरिति यावत् (विवेकसारस्य पृ० २२५ तमे) ।

स०—शिवादिप्रतिमा निरयसाधनं चेत्कथं जैनानामपि मूर्तयो न नरकहेतवः ? अस्माकं मूर्तयस्त्यागवत्यः शान्ताः शुभमुद्रान्विताश्चातएव प्रशस्ताः, शिवादीनान्तु विपरीततया न तथेति चेत्प्रतिभाष्येत तर्हीदं तत्र प्रतिवक्तव्यम् "युष्माकं प्रतिमाः खलु महार्घेषु चैत्येषु प्रतिष्ठिता भवन्ति (प्रत्यहं च) ताभ्यश्चन्दनकेसरादिकमुपानीयते कथं पुनस्ताः त्यागवत्यः ? शिवादीनाञ्च मूर्तयः छायामन्तरेणापि कर्हिचिन्निवसन्ति कथं तास्तथा न गण्यन्ते ? शान्ता इति चेत् जडपदार्थानां निश्चलतया सकलमूर्तयः शान्ता एव को नु युष्मत्प्रतिमासु विशेषः ? तस्मात्सर्वमतानां मूर्तिपूजा वृथैव ।

प्र०—अस्मन्मूर्तयो वसनाभरणादीनि न संदधत अतः प्रशस्ता ।

उ०—सकलजनसमक्षं नग्नमूर्तीनामवस्थापनं पशुधर्मः ।

प्र०—यथा वै योषितश्चित्रस्य प्रतिकृतेर्वा विलोकनेन कामः समुत्पद्यते तथैव साधुयोगिनां प्रतिमेक्षणेन शुभगुणाः सञ्जायन्ते ।

उ०—प्रास्तरिकप्रतिमाविलोकनेन शुभगुणप्राप्तिमङ्गीकुर्वाणेषु जडत्वादयोऽपि तद्गुणाः संक्राम्येयुः । जडबुद्धयश्च सन्तः सर्वथा विनङ्क्ष्यथ । अपि चोत्तमविदुषां साहचर्यपरिचर्याराहित्येन मौर्ख्यं प्रवर्धेत । ये चैकादश-

समुल्लासे दोषा अभिहिताः सर्वे एव ते पाषाणादिमूर्तिपूजकेषु संक्रामन्ति । यथा च जैना मूर्तिपूजाविषये मुधैव जल्पन्ति तथैवेषां मन्त्रेष्वपि असम्भवप्रायं वर्णितम् । अयं चैषां मन्त्रः (रत्नसारप्रथमभा० पृ० १ तमे)—

**नमो अरिहन्ताणं नमो सिद्धाणं नमो आयरियाणं नमो उवज्झायाणं नमो लोए सब्बसाहूणं एसो पञ्च नमुक्कारो सव्व पावप्पणासणो मङ्गला-चरणं च सव्वेसि पढमं हवइ मङ्गलम् ॥१॥**

मन्त्रस्यास्य माहात्म्यातिशयो वर्णितः । अयमेव सर्वजैनानां गुरुमन्त्रः । मन्त्रस्यास्य माहात्म्यवर्णने जैनैः पुराणतन्त्रनिर्मातारो वन्दिनश्चाप्यधरीकृताः । श्राद्धदिनकृत्ये (पृ० ३ तमे)—

**नमुक्कारं तउ पढे ॥९॥**
**जउ कब्बं । मन्ताणमन्तो परमो इमुत्ति धेयाणधेयं परमं इमुत्ति ।**
**तत्ताणतत्तं परमं पवित्तं संसारसत्ताणदुहाहयाणं ॥१०॥**
**ताणं अन्नन्तु नो अत्थि । जीवाणं भव सायरे ।**
**बुड्डुं ताणं इमं मुत्तुं । नमुक्कारं सुपोययम् ॥११॥**
**कब्बं । अणेगजम्मंतरसं चिआणं । दुहाणंसारीरिअमाणु साणं ।**
**कत्तोय भव्वाणभविज्जनासो । न जावपत्तो नवकारमन्तो ॥१२॥**

अयं (नमो अरिहन्ताणमित्यादि नवकारमन्त्रः) मन्त्रः पवित्रः परम-मन्त्रश्च स ध्येयेषु परमध्येयः तत्त्वेषु परमतत्त्वम् । अयं खलु नवकारमन्त्रः सागरस्य पारं यियासोर्नौकेव दुःखपीडितानां सांसारिकजनानां (साहाय्याय) तरणिरिव वर्तते । इमं परित्यजन्तो भवसागरे निमज्जन्ति परिगृहीतारश्चास्य दुःखेभ्यः सन्तरन्ति । जीवानां दुःखविमोचकः, सर्वपापविनाशको मुक्तिप्रदश्च मन्त्रादमुष्मान्नान्यः कोऽपि मन्त्रो वर्तते । अयमेव जीवानां जन्मजन्मान्तरेषूत्पन्नशारीरिकदुःखान्यपनीय तान् भवार्णवादुत्तारयितुं समर्थः । नवकारमन्त्रमनधिगत्य जीवः संसारसागरादुत्तर्तुं न शक्नोतीति सूत्रार्थः । अपि च अग्निप्रमुखाष्टभयेषु नवकारमन्त्रं विना नान्यः कोऽपि साहाय्यं कर्त्तुं प्रभुः । महारत्नं वैदूर्याख्यं मणिरिव, रिपुभयेऽमोघास्त्रमिव श्रुतं (बहुश्रुतं विद्वाँसं) केवलिन—(प्राप्तमोक्षं)—मुपाददीत । किञ्चायमेव नवकारमन्त्रः सकलद्वादशाङ्गिरहस्यभूतः । अस्य चायमर्थः (नमो अरिहन्ताणं) सर्वतीर्थङ्करेभ्यो नमः (नमो सिद्धाणम्) सकलजिनमतसिद्धेभ्यो नमः (नमो आयरियाणं) जिनमताचार्येभ्यो नमः (नमो उवज्झायाणम्) जिनधर्मस्य सकलोपाध्यायेभ्यो नमः । (नमो लोपलव्वसाहूणम्) ये केचनाऽस्मिल्लोके जिनसाधवस्तेभ्यो नमः । यद्यप्यस्मिन्मन्त्रे जैनपदं न वर्तते तथापि जैनानामनेकग्रन्थेषु जिनमतव्यतिरिक्तेभ्यो नमस्कारो न विहितः, तस्मादयमेवार्थो मन्त्रस्यास्य साधीयान् ।

(तत्त्वविवेकग्रन्थे पृ० १६९ तमे) "यः खलु मानवो दारुप्रस्तरान् देवधिया समर्चति स सत्फलं लभते" इत्यभिहितम्।

**स०**—परं सत्यमिदं चेत्तदेवं सति सर्वे जना दर्शनेन सुखात्मकफलानि कथं न प्राप्नोति ?

पार्श्वनाथस्य प्रतिमा विलोकनेन पापानि विनश्यन्तीति (रत्नसार-प्रथमभा० दशतमे पृष्ठे) वर्णितम्। सपादलक्षमन्दिराणि समुद्दधारेति कल्पभाष्ये-(५१ तमे पृष्ठे)-ऽभिहितम्। एवं मूर्तिपूजाविषये किलैषां भूयान् प्रवादः। अत एव जिनमतमेव मूर्तिपूजाकारणमिति निश्चीयते।

अधुना जैनसाधूनां लीलाः समीक्ष्यन्ताम्—

कश्चन जैनमतसाधुः कोशाभिधां वारवधूमुपभुज्य तदनु विरक्तः स्वर्गलोकं जगामेति (विवेकसार० पृ० २२८ तमे)। अर्णको मुनिः चारित्र्य-सम्भ्रष्टः कानिचिद् वर्षाणि दत्तश्रेष्ठिनः सद्मनि विषयानुपभुज्य देवलोकं ययौ। श्रीकृष्णतनयं ढंढणमुनिं स्थालियोऽपजहार देवत्वं च समासददिति (विवेकसारस्य पृ० १७ तमे)। केवलं लिङ्गधारिणोऽपि जैनमतसाधवः श्रावकैः समभ्यर्चनीयाः, सच्चरित्रा असच्चरित्रा वा साधवः पूजनीया इति (विवेकसारस्य पृ० १४६ तमे)। चारित्र्यविवर्जितोऽपि जैनमतसाधुरन्यधर्मस्य साधुभिः श्रेयानिति (विवेकसारस्य पृ० १६८ तमे)। श्रावका जैनमतसाधून-सच्चरित्रान् दुश्चरितानपि पश्यन्तः परिचरेयुरिति (विवेकसारस्य पृ० १७१ तमे) दस्युरेकः पञ्चमुष्टिकेशान् लुञ्चयित्वा चारित्र्यं जग्राह, महत्कष्टमनुभूयान्वताप्सीत्, षष्ठे च मासि केवलज्ञानमासाद्य सिद्धताभियायेति (विवेकसारस्य पृ० ११६ तमे)।

**स०**—एषां साधुगृहस्थानां लीलाभिसमीक्ष्यताम्। अहो नु दुष्कर्म-प्रवृत्तोऽपि जैनसाधुः शोभनां गतिं प्रपेदे !

पुनश्च (विवेकसारे पृ० १०६ तमे) श्रीकृष्णस्तृतीयनरकमलभत। (विवेकसारस्य पृ० १४५ तमे) धन्वन्तरिर्निरयमाससाद। (विवेकसारस्य पृ० ४८ तमे) जोगीजंगमकाजी मुल्लेत्यादिनामभृतः कियन्तो ज्ञानेन तपःक्लेशमनुभूयाप्यधोगतिमासेदुरिति वर्णितम्। (रत्नसारभागे पृ० १७१ तमे) नव वासुदेवाः—त्रिपृष्ठो वासुदेवः, द्विपृष्ठो वासुदेवः, स्वयम्भूर्वासुदेवः, पुरुषोत्तमवासुदेवः, सिंहपुरुषवासुदेवः, पुण्डरीकवासुदेवः, दत्तवासुदेवः, लक्ष्मणवासुदेवः, श्रीकृष्णवासुदेवश्च सर्वे इमे एकादश-द्वादश-चतुर्दश-पञ्चदश-अष्टादश-विंश-द्वाविंशतीर्थङ्करसमये निरयमगच्छन्। नव प्रतिवासुदेवा अपि—अश्वग्रीवप्रतिवासुदेवः, तारकप्रतिवासुदेवः, मोदकप्रतिवासुदेवः, मधुप्रतिवासुदेवः, निशुम्भप्रतिवासुदेवः, बलीप्रतिवासुदेवः, प्रह्लादप्रतिवासुदेवः, रावणप्रतिवासुदेवः, जरासन्धप्रतिवासुदेवश्च, नरकमयासिषुरिति"

समुपन्यस्तम्। ऋषभदेवाद् महावीरपर्यन्ताश्चतुर्विंशतितीर्थङ्कराः कैवल्यमापुरिति च कल्पभाष्ये (५५-५६ तमे पृष्ठे) विलिखितम्।

**स०**—जैनमतस्थाः सर्वं एव साधवो गृहस्थास्तीर्थङ्कराश्च येषु भूयांसो वेश्यासङ्गिनः परस्त्रीगामिनस्तस्करप्रभृतयश्चासन् स्वर्गमोक्षाववि न्दन्त। श्रीकृष्णप्रमुखा महाधार्मिका महात्मानस्तु निरयमगमन्निति कियानन्यायः। वस्तुतः सज्जनैर्जैनानां साहचर्यदर्शने अपि न विधेये। एषां सङ्गेन हीदृशालीकवार्तास्तेषामप्यन्तःकरणेषु सन्निहिता भवेयुः। निर्बन्धशीलानां पक्षपातिनामेषां साहचर्येण पापातिरिक्तं किमन्यल्लभ्येत। जैनेष्वपि साधुजनानां संसर्गे न कोऽपि दोषः।

विवेकसारे(पृ० ५५ तमे)ऽभिहितम्—"गङ्गादितीर्थानां वाराणस्यादिक्षेत्राणाञ्च सेवनेन मनागपि परमार्थो न सिद्धयति। अस्माकं गिरनारपालीटाणा आबूनामधेयप्रमुखतीर्थक्षेत्राणि मुक्तिमपि प्रयच्छन्तीति।"

**स०**—यथा वै शैववैष्णवादीनां तीर्थक्षेत्राणि जलस्थलरूपाण्यचेतनानि तथैव जैनानामपि। तत्रैकस्य विगर्हणमपरस्य च प्रशंसनं ननु मौर्ख्यमेवेति धीमद्भिरेव विचिन्तनीयम्।

## अथ जैनमुक्तिवर्णनम्

(रत्नसारभा० पृ० २३ तमे) तीर्थङ्करो महावीरो गौतममाह—ऊर्ध्वलोके सिद्धशिलाख्यमेकं स्थानमस्ति। या सिद्धशिला स्वर्गपुर उपरिष्टात्पञ्चचत्वारिंशद्योजनदीर्घा तावत्येव चायता अष्टयोजनस्थूला च। या च धवलिम्नि मौक्तिकं शुभ्रहारं गोदुग्धं चाप्यपहसन्ती वर्तते। स्फटिकमणेरपि निर्मला हि सा चामीकरवत् प्रकाशते। इयं च सिद्धशिला चतुर्दशलोकशिखरेऽवस्थिता। अमुष्याः सिद्धशिलाया अप्यूर्ध्वं शिवपुरं नामैकं धाम वरीवर्ति। तत्र किल मुक्तात्मानो निरवलम्बा जन्ममरणादिदोषेभ्यः परिमुक्ताः सानन्दं निवसन्ति। न भूयो जन्ममरणं प्रतियन्ति सर्वकर्मभ्यश्च परिमुच्यन्ते।

**स०**—इयं खलु जैनानां मुक्तिः। अत्र गम्भीरविचारेण प्रतीयते—यथा वै अन्यमतावलम्बिषु वैकुण्ठकैलासगोलोकश्रीपुरप्रमुखानि पौराणिकाः, तुरीयस्यां दिवि यीशवीयाः, सप्तमे च यवना मुक्तिस्थानानि वर्णयन्ति तथैव जैनानां सिद्धशिला शिवपुरं च वर्तते। यद्धि जैनाः समुच्छ्रितं विभावयन्ति तदेवास्मदधःप्रदेशवासिभिर्निम्नमिति गण्यते नह्युच्चावचः कश्चन व्यवस्थितः पदार्थः। यमेवार्यावर्तवासिनो जैना ऊर्ध्वमिति मन्यन्ते तमेव पातालप्रदेश-(अमेरिका)-वासिनो नीचैरिति विभावयन्ति। यश्चार्यावर्तवासिभिर्नीच इति व्यपदिश्यते स एव पातालप्रदेशवासिभिरुच्च इति परिगण्यते। अपि चेयं सिद्धशिला पञ्चचत्वारिंशल्लक्षेभ्यो द्विगुणा

नवतिलक्षयोजनमायता भवेत् तथापि ते मुक्तपुरुषाः स्वात्मनो बन्धनमेवानुभवन्ति यतो हि तच्छिलायाः शिवपुराद्वा बहिर्निर्गमनेनैव तेषां मुक्तिः परिहीयते। तत्र निवासेऽभिलाषस्ततो निर्गमनेऽपरागश्च भविष्यति। यत्र च प्रतिबन्धः प्रीतिरप्रीतिर्वा भवेत् कथं सा मुक्तिरिति व्यपदिश्येत? मुक्तिस्तु यथास्माभिर्नवमसमुल्लासे व्याख्याता तथैव सर्वैर्मन्तव्या। जैनानां हि मुक्तिरियमन्यादृशं बन्धनमेव। वस्तुतो मुक्तिविषये जैना इमे नितरां व्यामुग्धाः। वेदानां यथार्थावबोधनमन्तरा न कर्हिचित् मोक्षस्वरूपं ज्ञातुं शक्यत इत्यत्र नास्ति संशयः।

साम्प्रतं वयमेषामन्यानप्यनर्गलप्रलापान् दर्शयामः—

षष्टिलक्षाधिकैककोटिकलशैर्जन्मसमये महावीरः स्नापितः। (विवेकसार० पृ० ७८ तमे) महावीरदर्शनार्थं गतो दशार्णमहीवल्लभः किञ्चिदभिमेने। तदहङ्कारनिरासाय १६, ७७, ७२, १६००० इन्द्राकृतयः, १३, ३७, ०५, ७२, ८०, ००, ००, ००० इन्द्राण्यश्च तत्र समागमन्। एतदवलोक्य भूपतिर्विसिष्मिये (विवेकसार० पृ० १३६ तमे)।

**स०**—एतावतामिन्द्राणामिन्द्राणीनाञ्च स्थितिहेतोरीदृशाः कियन्तो भुवनकोशाः समपेक्ष्यन्त इति धीमद्भिरेव विचिन्तनीयम्।

श्राद्धदिनकृत्ये (आत्मनिन्दाभावनायाम् पृ० ३१ तमे) "वापीकूपतडागा न निर्मातव्या" इति विलिखितम्।

**स०**—सर्व एव मानवा जैनमतमङ्गीकृत्य वापीकूपतडागादिकं न निर्मापयेयुस्तत्कुतः सकललोको वारि लभेत?

**प्र०**—तडागादिनिर्माणेन भूयांसः प्राणिनो म्रियन्तेऽतस्तन्निर्मातारः पापिनः सञ्जायन्ते तस्माद्वयं जिनधर्मावलम्बिनः कार्यमिदं न विदध्महे।

**उ०**—कथं युष्माकं मतिर्विनष्टा। क्षुद्रजन्तूनां हिंसया पापमिव पशुमानवादिबृहत्प्राणिनां जलपानेन सञ्जातमहापुण्यमपि कथं न परिगणयथ?

(तत्त्वविवेके पृ० १९६ तमे) नगरेऽस्मिन् नाम्ना नन्दमणिकारः श्रेष्ठी वापीखननेन धर्मप्रच्युतः षोडशमहाव्याधिभिः समाक्रान्तः। उपरतश्च तस्यामेव वापिकायां दर्दुरः समजायत। ततो महावीरदर्शनेन स (दर्दुरः) जातिस्मरः समभवत्। महावीरो ब्रवीति—"ममागमनमाकर्ण्य" प्राग्जनुषि धर्माचार्योऽयमिति विज्ञाय मामभिवन्दितुमागच्छन् पथि श्रेणिकाश्वखुरसम्पिष्टो ममार। शुभध्यानेन चामुना दर्दुराङ्को महर्धिकदेवता अभवत्। स्वावधिज्ञानेन मामिहागतमवबुध्यात्र समागत्याऽभिवन्द्य च स्वसौभाग्यं दर्शयन् प्रतिजगामेति"।

**स०**—एवमादिविद्याविरहितालीकाख्यायिनो महावीरस्य सर्वोत्तम इति मननं महाभ्रमः।

(श्राद्धदिनकृ० ३६ तमे पृष्ठे) शववसनानि साधुराददीत इति ।

**स०**—एतेषां साधवोऽपि महाब्राह्मणाः समजायन्त । वस्त्राणि तु साधवो गृह्णीयुः । शवाभरणानि कः परिगृह्णीयात् ? कदाचिद् महार्घतया स्वयमेव रक्षन्ति । एवं ते केऽभवन् ?

धान्यस्य भर्जनकुट्टनपेषणपाकादिषु पापं सञ्जायते इति (रत्नसारस्य भा० पृ० १०५ तमे) ।

**स०**—अप्येतन्नास्ति मौर्ख्यम् ? यदि नामेमानि कर्माणि न क्रियेरन् कथं मानवादिप्राणिनः प्राणितुं प्रभवेयुः ? जैना अपि पीडिताः सन्तो म्रियेरन् ।

वाटिकारोपणेन मालाकारो लक्षपापानि संलभते ।

—रत्नसारप्रथमभागे पृ० १०४ तमे

**स०**—अहो कियानयं व्यामोहो यदेभिः "मालाकारः लक्षगुणात्मकं पापमधिगच्छन्नपि पत्रफलपुष्पछायाद्याश्रयेण जीवानामानन्दनेन महत्पुण्यं विन्दत" इत्यत्र मनागपि नावहितम् ।

(तत्त्ववि० पृ० २०२ तमे) एकस्मिन्नहनि लब्धिनामा साधुः भ्रमेण वेश्यागृहं प्राविशत् । धर्मव्यपदेशेन च भैक्ष्यमयाचत । वाराङ्गनाऽब्रवीत्— "नास्त्यत्र धर्मस्य किमपि प्रयोजनमपितु केवलमर्थः समपेक्ष्यते" इति । ततः स लब्धिसाधुः सार्धद्वादशलक्षनिष्कान् तत्सद्मनि वर्षयामास ।

**स०**—कः खलु निर्बुद्धिमन्तरेण वृत्तान्तमिमं सत्यं विभावयेत् ?

(रत्नसारप्रथमभागस्य पृ० ६७ तमे) अश्वमारूढैका प्रास्तरिकप्रतिमा यत्र तत्र जनान् विरक्षतीति ।

**स०**—अयि जैनमहोदयाः ! अद्यत्वे हि यूयं स्तेनदस्युशत्रुभिः पीड्यमानास्तां स्मारं स्मारमात्मानं कथं न विरक्षथ ? किमर्थञ्च ग्रामपालालयेषु (पुलिसचौकी) शरणार्थिनो भ्राम्यथ ?

जैनसाधूनां लक्षणानि जिनदत्तसूरिः श्लोकैराह—

**सरजोहरणा भैक्ष्यभुजो लुञ्चितमूर्द्धजाः ।**
**श्वेताम्बराः क्षमाशीला निःसंगा जैनसाधवः ॥१॥**
**लुञ्चिताः पिच्छिकाहस्ता पाणिपात्रा दिगम्बराः ।**
**ऊर्ध्वाशिनो गृहे दातुर्द्वितीयाः स्युर्जिनर्षयः ॥२॥**
**भुङ्क्ते न केवली न स्त्रीमोक्षमेति दिगम्बरः ।**
**प्राहुरेषामयं भेदो महान् श्वेताम्बरैः सह ॥३॥**

(सरजोहरणाः) चमरीभृतः (भैक्षभुजः) भैक्ष्यचर्याधृतप्राणवृत्तयः (लुञ्चितमूर्धजाः) क्लृप्तशिरोरुहाः (श्वेताम्वराः) शुभ्रवसनाः (क्षमाशीलाः) क्षमावन्तः (निःसङ्गाः) सकलसङ्गविवर्जिताश्च जैनयतयः "श्वेताम्वराः" इति समाख्यायन्ते ॥१॥

अपरिहितवसना लुञ्चितशिरःकेशाः पिच्छिका—ऊर्णातन्तुनिर्मित-मार्जनीपाणयो धृतपाणिभोजना द्वितीया "दिगम्बराख्याः" जैनसाधवो भवन्ति। ॥२॥

भैक्ष्यप्रदातृगृहस्थे कृताशने भोक्तारस्तृतीया जैनसाधवो जिनर्षयः। दिगम्बरा केवलिनां भोजनं योषितां च मोक्षं न मन्यन्ते श्वेताम्बरास्तु मन्यन्ते। अयमेवानयोर्महान् भेदः ॥३॥

इमानि सन्ति खलु जैनैरभ्युपगतानि मोक्षसाधनानि।

जैनानां केशलुञ्चनं सर्वत्र विख्यातम्। क्वचिच्च पञ्चमुष्टिकेश-लुञ्चनमपि प्रतिपादितं तथाच—विवेकसारे (पृ० २१६ तमे) पंचमुष्टिशिरः-केशान् लुञ्चयित्वा चारित्र्यमग्रहीत् साधुरभवदिति यावदित्यभिधीयते। एवं कल्पसूत्रभाष्ये (पृ० १०८ तमे) केशान् लुञ्चयित्वा गोबालसन्निभान् कल्पयेदिति।

स०—कथयत जैनमहोदयाः? एवं क्वावर्तत युष्माकं दयाधर्मः। केशलुञ्चनेन कियत्कष्टमनुभूयते, कामं स्वहस्तेन गुरुणाऽन्येन वा केनचित् तदनुष्ठीयेत। अपीदं नास्ति विहिंसनम्? जीवात्मने क्लेशप्रदानं हि हिंसेति समाख्यायते।

विवेकसारग्रन्थप्रथमभागे ७-८ तमे पृष्ठे "१६३३ तमे संवत्सरे (विक्रमी०) श्वेताम्बरेभ्य ढूँढोयाभिधेयः तस्माच्च त्रयोदशपन्थिनः (तेरह-पन्थी) प्रादुरभवन्निति" स्पष्टमुदीरितम्। इमे ढूँढियाजनाः पाषाणादिप्रतिमा नाङ्गीकुर्वंते स्नानभोजनातिरिक्तकाले सर्वदैवानने पट्टं निबध्नन्ति। यतयोऽपि ग्रन्थाध्ययनसमय एव वदनं वस्त्रेणापिदधति नत्वन्यस्मिन्काले।

प्र०—मुखे पट्टबन्धनं सर्वथैवावश्यकं, यतो हि वदनवाष्पोष्मणा वायुकाया वायुस्थितसूक्ष्मदेहवन्तो जीवा म्रियन्ते तन्मरणजनितपापं च मुखमपिधातारं सञ्जायतेऽतो वयमार्हता मुखाच्छादनं साधु मन्यामहे।

उ०—भवतामियमुपपत्तिर्विद्यया प्रत्यक्षादिप्रमाणैश्च विरुध्यते। नहि जरामरणविवर्जिता जीवात्मनो मुखवाष्पोष्मणा कर्हिचिदुपरन्तुं शक्नुवन्ति। जीवाश्च युष्माभिरपि जरामरणविवर्जिताः परिगण्यन्ते।

प्र०—जीवस्तु नोपरमति परमाननोष्णवायुना ते विनिपीड्यन्ते। पीडयिता च नरकी संपद्यतेऽतो मुखे पट्टबन्धनं प्रशस्यते?

उ०—इदमपि भवतां कथनमसम्भवं, न ह्यन्येषां यातनां विना कस्यापि जीवस्य निर्वाहः सम्भवति। यदि युष्मन्मतानुसारेण मुखोष्णवायुरपि जीवानां यातनानिमित्तं किमिति तर्हि भ्रमणोपवेशाभ्यां हस्तनेत्रादीनां परिस्पन्देन च जीवनिपीडनं नाभ्युपगम्यते? एवं च यूयमपि जीवानपीडयित्वा वस्तुं न शक्नुथ।

**प्र०**—आम्, यथाशक्यमवश्यं जीवा विरक्षणीयाः। यत्र पुनर्वयं तान् परिपातुं न शक्नुमस्तत्रासमर्थाः किं कुर्मः ? जीवा हि सकलवाय्वादिपदार्थेषु परिपूर्णाः। यदि वयमाननं वसनेन नापिदध्मस्तर्हि भूयाँसो जीवा म्रियेरन् सति तु तदावेष्टनेऽल्पीयाँसो म्रियन्ते।

**उ०**—इदमपि भवतां युक्तिविवर्जितं वचः। वसनबन्धनेन हि जीवा अधिकं दूयन्ते। वसनेन मुखपिधातुर्वदनवायुः संनिरुध्याधस्तात् पार्श्वाभ्यां वा मौनावलम्बिनश्च नासिकारन्ध्रेण सवेगं निष्क्रामति, तेन चौष्ण्याधिक्येन युष्मन्मतानुकूलं जीवाः सविशेषमर्द्यन्ते। पश्यत—यदि सद्मनः कोष्ठस्य वा सर्वद्वाराणि संवृण्वीरन् जवनिकया वा पिधीयेरन् तर्हि तत्रौष्ण्यं प्रवर्धते। अपावरणेन पुनर्न तावानुष्मा सञ्जायते एवमानने पट्टबन्धनेन समधिकोष्णताऽपावरणेन चाल्पीयसी सञ्जायते। एवञ्च यूयमात्मनो मतानुसारेण जीवान् भृशं निपीडयथ। यदा हि मुखं पिधीयते तदा वायुरेकत्रीभूय नासारन्ध्रेण सवेगं निस्सरन् जीवान् प्रबलमाहत्य निपीडयति। यथा च कश्चन मानवो वह्निं मुखेन फूत्करोत्यपरश्च नलिकया, तत्र वदनपवनः सर्वत्र प्रसरणेन मन्दं नलिकावायुश्चैकत्रितः प्रबलमाहन्ति वह्निम्, तथैवानने पट्टवेष्टनेन समुपचितो वायुर्नासिकायाः सवेगं निस्सृत्य जीवान् सविशेषं दुनोति। तस्मान्मुखपिधातृभ्यस्तथाऽकुर्वाणा धर्मात्मानः। अपि चैवं वर्णा यथायथं स्थानप्रयत्नपूर्वकमुच्चारयितुं न शक्यन्ते। निरनुनासिकवर्णानां सानुनासिकतयोच्चारणेन दोषभागिनोऽपि यूयं सञ्जायध्वे। किञ्चानने पट्टवेष्टनेन भूयान् दुर्गन्धः सम्पद्यते दुर्गन्धपरिपूर्णं हि देहाभ्यन्तरम्। देहान्निस्सरन् पवनो दुर्गन्धमयो भवतीति प्रत्यक्षमेव। तन्निरोधेन दुर्गन्धोऽपि भूयान् प्रवर्धेत। यथा हि संवृतः शौचालयोऽपावृतापेक्षयाधिकं दुर्गन्धेन सम्पूर्यते। तथैव वदनपट्टवेष्टनेन दन्तधावनमुखप्रक्षालनस्नानादीनामननुष्ठानेन, वसनापरिक्षालनेन च स्वदेहाद् भूयांसं दुर्गन्धमुत्पाद्य लोके प्रभूतव्याधिभिर्जीवान् यावन्निपीडयथ तावदेव वृजिनं युष्माभिरवाप्यते यथा पुरीषादिषु दुर्गन्धाधिक्येन विशूचिकाप्रभृतयो रोगाः समुत्पद्य जीवान्दुःखयन्ति। दुर्गन्धस्य न्यूनतया च व्याधीनामल्पतया जीवैर्नाधिकं दुःखमवाप्यते। तस्माद्दुर्गन्धप्रवर्धकतया यूयमतितरामपराध्यथ। अपरिहितवदना ये वै दन्तान् धावन्ति मुखं प्रक्षालयन्ति स्नानादिना स्वावासवाससी च संशोधयन्ति, अन्त्यजैर्दुर्गन्धसहवासेन पृथग्निवासिन इव ते युष्मदपेक्षया नूनमतिप्रशस्ताः। दुर्गन्धसहवासेनान्त्यजानामिव युष्माकं युष्मत्सहचराणां च बुद्धिर्नैर्मल्यं नासादयति। यथा व्याधेराधिक्येन मतेश्चाप्रकर्षतया धर्मानुष्ठानं प्रतिहन्यते तथैव यूयं युष्मद्वयस्याश्च दुर्गन्धबहुलत्वाद् धर्ममाचरितुं न शक्नुथ।

**प्र०**—संवृतागारे प्रदीप्तपावकार्चिषो बहिर्निस्सृत्य बहिःस्थजीवान्

दुःखयितुं न प्रभवन्ति, एवमाननपट्टबन्धेन वयमपि वायुं निरुध्य तान्नाधिकं निपीडयामो नह्येवं बहिःवायुनिकायात्मानो विनिपीडयन्ते। सम्मुखे प्रज्वलितोऽपि वह्निस्तिर्यग्हस्तगृहीतो नाधिकमनुभूयते। वायुस्थितजीवा देहवत्तयाऽसंशयं यातनामनुभवन्ति।

उ०—बालप्रलपितमिदं युष्माकम्। प्रथमं तावन्निश्छिद्रे—यत्र किल बाह्यवायुरान्तरेण नभस्वता न संयुज्येत वह्निः समिन्धितुमेव न शक्नोति। एतत्प्रत्यक्षं दिदृक्षुर्भवान् काचपात्रे दीपिकां निधाय तस्य कृत्स्नविवराणि संवृणोतु? तत्क्षणमेव दीपिकार्चिर्निर्वाणमेष्यति। यथा वै बाह्यवायुसम्पर्कमन्तरेण भूनिवासिनो मनुष्यादिप्राणिनः प्राणितुं न प्रभवन्ति तथैवाग्निरपि सन्दीपितुं न शक्नोति। एकतः सन्निरुद्धोऽनलवेगोऽपरतो महता रयेण निस्सरिष्यति। अपि च पाणिना व्यवहिताऽनलार्चिर्वदनेऽल्पतयाऽनुभूयमानापि हस्ते समधिकमनुभूयते। तस्मान्नास्ति साधीयसी युष्माकमियमुपपत्तिः।

प्र०—"महता (आदरणीयेन) जनेन तच्छ्रवणस्यान्तिकेन वा संलपन्नपकृष्टो नरः स्वानने वसनाञ्चलं हस्तं वा निदधाति येन मुखोद्गतो निष्ठीवो दुर्गन्धो वा मा तं स्प्राक्षीदिति" सर्वं एव विदन्ति ननु? ग्रन्थवाचनवेलायाञ्च मुखान्निसृतनिष्ठ्यूतिसम्पातेनोच्छिष्टतां गतो कलुषितः सञ्जायते ग्रन्थ इत्यत्र नास्ति मनागपि संशयः। तस्मान्मुखे पट्टबन्धनं प्रशस्यते।

उ०—एतेन "जीवरक्षायै निरर्थकमानने पट्टवेष्टनमिति" सिध्यत्येव। अपि चान्येन संलपता केनचित् "मा कोऽपि रहस्यमिदं शृणुयादिति" वदने वसनाञ्चलः पाणिर्वा सन्निधीयते नहि खल्वभिव्यक्तवार्तामाचक्षाणास्तथा विचेष्टन्ते दन्तधावनाद्यननुष्ठानेन युष्माकं मुखाद्यवयवेभ्योऽतितरां दुर्गन्धः समुदेति। यदा च यूयं कस्याप्यन्तिकेऽन्यो वा युष्मत्समीप उपविष्टः स्यात्तदा दुर्गन्धं विना किमन्यत्तेन लभ्येत? एवमानने हस्तवस्त्राञ्चलनिधाने भूयांसि प्रयोजनानि सम्भवन्ति तथा च यदि नाम बहुजनसमक्षं रहस्याख्याने पाणिरञ्चलो वा न सन्निधीयेत तदन्याभिमुखं वायोः प्रसारेण सा वार्ताऽपि प्रसरेत्। विजने चालपन्तौ नास्त्यत्र कोऽप्यपरस्तृतीयः समाकर्णयितेति मुखं पाणिनाञ्चलेन वा न पिधत्तः। अपि च महतामेवोपरि निष्ठीवनं न पतेत् तर्हि किं लघीयस्सु तत्पातनीयम्? सत्यप्येवं निष्ठीवपातेन कश्चिन्मोक्तुमर्हति? यदि वयं दूरदेशस्थिता अपि संलपेम परं पवनप्रवाहोऽस्मत्तदभिमुखो भवेत्तदा सूक्ष्मीभूय निष्ठीवनत्रसरेणवस्तदीयशरीरेऽवश्यं निपतिष्यन्ति। तद्दोषपरिसंख्यानञ्चाज्ञानविलसितम्। मुखोष्मणा जीवा म्रियेरन् यातनां वा चेल्लभेरँस्तद् वैशाखज्येष्ठमासयोर्भानोः प्रचण्डतापेन वायुकायेष्वखिलजीवेषु कोऽप्यनुपरतो नावशिष्येत। परं तदौष्ण्येनापि ते जीवा न म्रियन्ते। तस्माद्

वितथः खलु युष्माकमयं सिद्धान्तः। यदि पूर्णविद्वांसो युष्माकं तीर्थङ्कराः कथमेव व्यर्थप्रलापानालपेयुः। किञ्च त एव किल जीवात्मानः पीडामनुभवन्ति येषां वृत्तिः सर्वावयवैः सह संसृष्टा भवेत्। तथा चोक्तम्—

**पञ्चावयवयोगात्सुखसंवित्तिः।**—सांख्य० अ० ५। सू० २७

पञ्चेन्द्रियाणां पञ्चविषयैः सह सम्बन्ध एव जीवः सुखं दुःखं वा समवाप्नोति। यथा खलु बधिरेण गालिप्रदानम्, अन्धेन रूपमग्रतः सर्पव्याघ्रादिभयावहप्राणिनां गमनं वा, त्वगिन्द्रियशून्येन स्पर्शः, पीनसामयाक्रान्तेन गन्धः, रसनेन्द्रियविवर्जितेन रसश्च नानुभूयत एवमेव तेषामपि जीवानां व्यवस्था समवगन्तव्या। अवधीयताम्—सुषुप्तिदशामापन्नो मानवीयजीवः सुखं दुःखं वा नाप्नुते। स हि देहान्तर्विद्यमानोऽपि बाह्यावयवैः सम्बन्धाभावात् सुखं दुःखं वा किमप्यनुभवितुं न शक्नोति।

अपि च—यथैदानीन्तनचिकित्सका रुजावन्तं कमपि मादकद्रव्यं समाश्य घ्रापयित्वा वा तदङ्गानि शल्ययन्ति तदानीं तेन किमपि दुःखं नानुभूयते, एवं वायुकायैरन्यस्थावरदेहिभिर्वा जीवैः सुखं दुःखं वा न लभ्यते। किञ्च—मूर्च्छितप्राणीव वायुकायादिजीवा अपि नितरां मूर्च्छिततया सुखदुःखे न विभावयन्ति। पुनः "इमे यातनादिभ्यो विरक्षणीयाः" इति वचः कमर्थं पोषयेत्? तत्सुखदुःखलाभे प्रत्यक्षस्यैवाभावादनुमानादीनि कथं युज्यन्ते?

प्र०—ननु यदा ते जीवाः कथं पुनस्तेषां सुखदुःखे न जायेताम्?

उ०—अयि मुग्धा भ्रातरः? श्रूयताम्—सुषुप्तिदशायां यूयं कथं सुखादिकं न प्रपद्यध्वे सुखदुःखानुभवस्य प्रत्यक्षतया सम्बन्ध एव हेतुः। अनुपदमेवास्माभिः समाहितं यथा वै मादकद्रव्यं घ्रापयित्वा चिकित्सकैः शल्यमाना अपि दुःखं न प्रतिपद्यन्ते तथैवातितरां मूर्च्छितात्मानः सुखं दुःखं वा कथङ्कारमधिगच्छेयुः? नहि तत्र किमपि प्राप्तिसाधनं वर्तते।

प्र०—वयं हरितशाकपत्राणि, कन्दमूलानि च न भक्षयामो यतः खलु हरितकेषु भूयांसः कन्दमूलेषु चानन्ता जीवाः सन्ति तद्भक्षणेन तेषां घातेन यातनया च वयं पापभाजो भवेम।

उ०—इदं युष्माकं महदज्ञानविचेष्टितम्। हरितपर्णसमाशने जीवानां व्यापादनं पीडनं च कथमभ्युपगच्छथ? नहि युष्माभिस्तेषां यातना प्रत्यक्षं समीक्ष्यते, अथ चेदवलोक्यतेऽस्मानपि दर्शयत। न खलु यूयं प्रत्यक्षतया द्रष्टुमस्मान् वा दर्शयितुं शक्ष्यथ। प्रत्यक्षाभावे चानुमानोपमानशब्दप्रमाणान्यपि कर्हिचिन्न संगच्छन्ते। अपि चास्मात्पूर्वोदितं समाधानमत्रापि संघटते। महान्धकारसुषुप्तिमदसंमग्नजीवैः सुखदुःखलाभाभ्युपगमो हि युष्मत्तीर्थङ्कराज्ञानविलसितं यैरेवमविद्यापूर्णोपदेशः प्रादायि। ननु सत्यन्त-

वति सद्मनि तदन्तर्वर्तिनः कथमनन्ता भवेयुः। यदा च वयं कन्दस्यान्तं समीक्षामहे तदा तन्निवासिनो जीवाः कथं नान्तवन्तः ? तस्माद् युष्माकमियमुपपत्तिः सर्वथैव भ्रमपूर्णा।

प्र०—यूयमसन्तप्तं जलं पिबथ तदिदं महत्पापम्। यथा वयमुष्णजलं पिबामस्तथैव युष्माभिरपि पातव्यम्।

उ०—अयमपि युष्माकं भ्रमः। यदा हि भवन्तो वारि क्वाथयन्ति तदा तत्रत्या निखिलजीवा मृताः स्युः। किञ्च तच्छरीराणामपि तत्र रन्धनात् शतपुष्पारससन्निभं तद्देहाम्लं (तेजाब) पिबन्ति, अतश्च महत्पापभाजो भवन्ति। ये तु शीतलं जलं पिबन्ति न ते तत्पापभाजः सञ्जायन्ते प्रपीतशीतपयसो ह्युदरगमनेनेषदुष्णतां प्राप्य ते जीवाः श्वासेन सह बहिर्निर्यास्यन्ति। विधिना चानेन जलकायजीवाः सुखं दुखं वा न किमप्यासादयन्ति। एवं च कोऽपि पापभाग् न भविष्यति।

प्र०—ननु यथा जाठराग्निना जीवा बहिर्निर्यान्त्येवमुष्णतामासाद्याम्भसः कथं न निर्यास्यन्ति ?

उ०—वस्तुतस्ते निर्यान्ति परं युष्माभिर्वदनपवनोष्मणापि जीवानां मरणमभ्युपेयते तदा जलक्वाथेन युष्मन्मतानुसारेण ते परैष्यन्ति। पीडातिशयमासाद्य वा निर्यास्यन्ति। तद्देहाश्चाम्भसि रधिष्यन्ति तेन यूयमेव पापिनो भविष्यथ नतु ते (शीतपयःपायिनः)।

प्र०—न वयं स्वयं जलं क्वाथयामो नापि कमपि गृहमेधिनमादिशामो येन दुरितभाजो भवेम।

उ०—यदि नाम भवन्त उष्णजलं नाग्रहीष्यन्नाप्यपास्यन् किमिति गृहस्थैरुष्णं क्रियेत तस्माद् भवन्त एव तत्पापभुजः। प्रत्युत महत्पापवन्तः। यूयं चेत् कमप्येकं गृहमेधिनं जलमुष्णं सम्पादयितुमादेक्ष्यन् तदेकत्रैव जलं क्वाथ्येत। अनादिष्टाः पुनर्गृहमेधिनः "न जाने साधुमहाभागः कस्य गृहं समेयादिति संदिग्धाः सर्व एव स्वस्वनिकेतने जलं क्वाथयन्ति। अतो यूयमेव प्राधान्येन तत्पापभाजः। अपि च काष्ठाग्न्यतिशयप्रज्वालने च पूर्वोक्तप्रकारेण यूयमेव पाककृषिव्यापारादिषु भूयांसः पापिनो निरयगामिनश्च सञ्जायध्वे। जलौष्ण्यसम्पादनस्य प्रधानहेतवः शीतं जलं न पातव्यमपि तु सन्तप्तमिति परोपदेष्टारश्च यूयमेव परं पापिनः। ये च युष्मदुपदेशमनुरुध्य तथाचरन्ति तेऽपि पापभुजः। अपि च किञ्चिदवधीयताम्, यूयं महाविद्यासागरे निपतिता न वा ? क्षुद्रजन्तुषु दयाप्रकाशः परमतावलम्बिनां तु विगर्हणमनुपकारश्च किमल्पीयः पापम् ? युष्मत्तीर्थङ्कराणामेव मतमवितथं चेत्कथं परमेश्वरो जगत्येतावतीं वृष्टिं सरितां प्रवाहमियदम्भश्च ससर्ज ? नापि तेन भानुरप्युत्पाद्यः समभवत्। एतेषु हि नैककोटिजीवा युष्मन्मतानु-

कूलमुपरमन्त्येव। युष्माभिरीश्वरत्वेनाभ्युपगतास्तीर्थङ्करा जीवन्तोऽनुकम्पया सूर्यातपं मेघाँश्च कथं न न्यवारयन्? किञ्च पूर्वोदितवर्त्मना (देहवतः) प्राणिनो विना कन्दमूलादिपदार्थेषु निवसद्भिर्जीवैः सुखदुःखे नानुभूयेते। अपि च—सर्वजीवेषु दयाप्रकाशोऽपि दुःखहेतुः सञ्जायते।

यदि सर्व इमे प्राणिनो युष्मन्मतानुकूलं मानवा भवेयुः, तस्करा दस्यवो वा दण्डं नाप्नुयुः कियद् महापापं प्रवर्धेत। तस्माद्दुष्टानां यथावद् दण्डविधाने श्रेष्ठानाञ्च परिपालने दया अन्यथा तु दयाक्षमारूपधर्मस्य विनाशो विज्ञेयः। कियन्तः खलु जैनाः पण्यव्यवहारं कुर्वते (पण्येन जीवन्ति) तद्व्यवहारेष्वलीकभाषणं, परधनापहरणं, निर्धनप्रतारणादिदुष्कर्मजातमनुतिष्ठन्ति। तन्निवारणाय कथं सप्रयत्नं नोपदिशथ? कथं चाननपट्टवेष्टनादिछलनामाचरथ? शिष्यान् शिष्याश्च कुर्वाणा यूयं केशलुञ्चनदीर्घोपवासाभ्यां कथं परान्निपीड्य दुःखयथ? स्वयञ्च क्लेशमनुभवन्तः किमर्थमात्महत्यां दुःखप्रदानेनात्मनो विहिंसनं विधत्थ?

अपि च—किंनिमित्तं जैना हस्त्यश्वोष्ट्रवृषारोहणे मानवैःश्रमकृत्यसम्पादने च न विगणयन्ति पापम्? यदि हि युष्मच्छिष्याः सर्वथानर्थककार्याणि सत्यत्वेनापादयितुं न शक्नुवन्ति तर्हि तीर्थङ्करा अपि तथा विधातुं न क्षमन्ते। यदा वै यूयं कथां वाचयथ तदाऽसंशयं युष्मन्मतानुकूलं मार्गेषु श्रोतारो यूयं च जीवान् विहिंसथ कथं र्तांह पापस्यामुष्य भाजनतां न गच्छथ? अल्पीयसैव खल्वेतेन वचसा पृथिवीजलवायुनिकायैः स्थावरकायै रत्यन्तमूर्छितजीवैः सुखं दुःखं वा कथंचिदपि नावाप्यत इति बहु विज्ञेयम्।

जैनानामन्यदपि किञ्चिदसम्भवाख्यानं वर्ण्यते तत्सावहितेन चेतसा श्रोतव्यम्। सार्धत्रयहस्तपरिमितं धनुर्भवतीति च न विस्मर्तव्यम्। कालसंख्यानं च पूर्वोदितप्रकारेणैव समवगन्तव्यम्।

रत्नसारस्य प्रथमभागे-(पृ० १६६-१६७ तमे)-ऽभिहितम्—

| तीर्थङ्करनामानि | शरीरपरिमाणम् | आयुःपरिमाणम् |
|---|---|---|
| १ ऋषभदेवः ... | ५०० धनुः ... | ८४,००,००० वर्षाणि |
| २ अजितनाथः ... | ४५० ,, ... | ७२,००,००० ,, |
| ३ सम्भवनाथः ... | ४०० ,, ... | ६०,००,००० ,, |
| ४ अभिनन्दनः ... | ३५० ,, ... | ५०,००,००० ,, |
| ५ सुमतिनाथः ... | ३०० ,, ... | ४०,००,००० ,, |
| ६ पद्मप्रभः ... | १४० ,, ... | ३०,००,००० ,, |
| ७ पार्श्वनाथः ... | २०० ,, ... | २०,००,००० ,, |
| ८ चन्द्रप्रभः ... | १५० ,, ... | १०,००,००० ,, |
| ९ सुविधिनाथः ... | १०० ,, ... | २,००,००० ,, |

| तीर्थङ्करनामानि | शरीरपरिमाणम् | आयुःपरिमाणम् |
|---|---|---|
| १० शीतलनाथः ... | ९० धनुः ... | १,००,००० वर्षाणि |
| ११ श्रेयांसनाथः ... | ८० ,, ... | ८४,००,००० ,, |
| १२ वासुपूज्यः ... | ७० ,, ... | ७२,००,००० ,, |
| १३ विमलनाथः ... | ६० ,, ... | ६०,००,००० ,, |
| १४ अनन्तनाथः ... | ५० ,, ... | ३०,००,००० ,, |
| १५ धर्मनाथः ... | ४५ ,, ... | १०,००,००० ,, |
| १६ शान्तिनाथः ... | ४० ,, ... | १,००,००० ,, |
| १७ कुंथुनाथः ... | ३५ ,, ... | ९५,००० ,, |
| १८ अमरनाथः ... | ३० ,, ... | ८४,००० ,, |
| १९ मल्लीनाथः ... | २५ ,, ... | ५५,००० ,, |
| २० मुनिसुव्रन्तः ... | २० ,, ... | ३०,००० ,, |
| २१ नाभिनाथः ... | १४ ,, ... | १,००० ,, |
| २२ नेमिनाथः ... | १० ,, ... | १,००० ,, |
| २३ पार्श्वनाथः ... | ९ हस्त ... | १०० ,, |
| २४ महावीरस्वामी ... | ७ ,, ... | ७२ ,, |

स०—एते चतुर्विंशतितीर्थङ्करा जैनमतप्रवर्तका आचार्या गुरवश्च। एतानेवार्हताः परमेश्वरं मन्यन्ते सर्वे चेमे मोक्षमधिगताः। एतावद्बृहन्ति शरीराणि एतावन्मानवीयदेहायुः-परिमाणञ्च कथञ्चित् सम्भवति न वेति धीमद्भिरेव विचिन्तनीयम्। एतादृशा दीर्घकायाः कतिचिदेव मानवा भूमण्डलेऽस्मिन्निवस्तुं शक्नुवन्ति। जैनाननुसरद्भिः पौराणिकैर्वर्णितं लक्षदशसहस्रादि-वर्षपरिमितमायुरपि कथमपि न सम्भवति। जैनानान्तु कथमिदं सम्भवेत्।

अन्यदपि श्रूयताम्—नागकेतुराकारेण ग्राममनुकुर्वाणां शिलामङ्गुलौ सन्दधे (कल्पभाष्ये० पृ० ४ तमे) महावीरः खल्वङ्गुष्ठेन भुवं पीडयामास तेन च शेषनागश्चकम्पे (कल्पभा० पृ० ३५ तमे)। ददंश भुजंगो महावीरम्, रक्तस्थाने च ततः क्षीरं निरगादुरगश्चाष्टमं स्वर्गमियाय (कल्पभा० पृ० ४६ तमे)। महावीरचरणयोः पायसं श्रथितं तथापि पादौ न प्रदग्धौ (कल्पभा० पृ० ४७ तमे)। नितरां लघीयसि पात्रे क्रमेलकः सन्निधापितः (कल्पभा० पृ० १६ तमे)। देहमलं न परिमार्जयेत् नापि कण्डूयेत् (रत्नसार-प्रथमभागे १४)। महावीरतीर्थङ्करस्यातिप्रियः दमसारनामा कश्चन जैनसाधुः क्रुद्धः सन्नाभिचारिकसूत्राण्युच्चार्य नगरमेकं ददाह (विवेकसारप्रथमभागे पृ० १५ तमे)। राजनिदेशोऽवश्यमनुविधेयः (विवे० प्रथमभागे पृ० १२७ तमे)। कोशा नाम वारवधूर्भाजने सर्षपान् राशीकृत्य तत्र च कुसुमाच्छादितोर्ध्वीकृत-सूचिकां संस्थाप्य तदुपरिष्टान्ननर्त, सूचिः पदं न बिभेद नापि सर्षपराशि-

र्व्यशीर्यत (विवेक० प्रथमभागे पृ० २२७ तमे)। अमुयैव कोशावेश्यया स्थूलमुनिर्द्वादशवर्षाणि भोगान् निर्विशन् तदनु दीक्षितः सद्गतिमवाप। सा च कोशापि जिनधर्ममनुपालयन्ती शोभनां गतिमविन्दत (तत्त्ववि० पृ० २२८ तमे)।

सिद्धस्यैकस्य कंथा—या हि कण्ठे परिधीयते—प्रत्यहमेकस्मै वणिजे पञ्चाशतं निष्कानददात् (विवेकसारप्रथमभागे पृ० १८५ तमे)। बलवतः पुरुषस्य देवस्य चोपदेशेन, कान्तारेषु सकृच्छ्रनिर्वाहेण, गुरुमातृपितृकुलाचार्यबन्धुधर्मोपदेशकानां षण्णां प्रत्यादेशेन सम्यगपरिपालितोऽपि धर्मो न परिहीयते (विवेक० प्रथमभागे पृ० २२८ तमे)।

**स०**—इदानीं खल्वेषामलीकवार्तासु मनागवधीयताम्। अपि कश्चन मानवो ग्रामसमानां पाषाणशिलामङ्गुलौ धर्तुं पादाङ्गुष्ठेन वा भुवं निपीडयितुमीष्टे ? शेषनागस्यैवाभावे कः खल्वकम्पत ? दंशेन देहात्क्षीरनिस्सरणमपि दृष्टं केनापि ? इन्द्रजालातिरिक्तं नान्यत् किञ्चिदेतत्। तद्दंशकः सर्पस्तु स्वर्गमारुरोह महात्मानः श्रीकृष्णप्रभृतयश्च तृतीयनिरयमासेदुरिति कियन्मृषाभूतम्। महावीरचरणयोः क्षीरपाकेनापि तदीयपादौ कथं न प्रदग्धौ ? लघीयसि पात्रे क्रमेलकोऽपि शक्नोति मातुम् ? ये वै देहमलं न परिमार्जन्ति नापि कण्डूयन्ते नूनं ते दुर्गन्धमयं महानरकमुपभुञ्जते। नगरप्रदाहकस्य साधोः क्षमादये क्व पलायिते ? यदा च महावीरसाहचर्येणापि तस्यात्मा पावित्र्यं न लेभे तदा दिवङ्गते महावीरे तदाश्रयेणाधुना जैनाः कर्हिचिदपि पूता न भविष्यन्ति। राजनिदेशः पालनीयः परं वैश्यैरार्हतै राज्ञो बिभीयेदं लिखितं भवेत् ? कोशावेश्यायाः शरीरं कामं कियदपि भवेल्लघुभारं तथापि सर्षपराशौ सूचिकां स्थापयित्वा तदुपरि नर्तनं सूचिकाच्छेदः सर्षपाविशरणं चातिमात्रमलीकमेव। धर्मः खलु कस्यामप्यवस्थायां केनचिन्न परित्यक्तव्यः। वसननिर्मिता हि कन्था कथं प्रत्यहं ५०० निष्कान् प्रदास्यति ?

यदि नाम वयमेषामीदृशासंभवगाथा विलिखेम तदस्माकमप्ययं ग्रन्थो जैनानामसारग्रन्था इव विस्तीर्णो भवेत्। तस्मादधिकं न विलिखामः। जैनानां काँश्चिदुपदेशान् परित्यज्यावशिष्टं सर्वमेव मृषाजालम्।

**दो ससि दो रवि पढमे। दुगुणा लवणंमि धायई संडे।**
**वारस ससि वारस रवि। तप्पमि इं निदिठ ससि रविणो॥**
**तिगुणा पुब्बिल्लजुया। अणंतराणंतरं मिखित्तमि।**
**कालो ए बयाला। बिसत्तरी पुस्कर द्वंमि॥**

—प्रकरण० भा० ४ संग्रहणीसूत्रम् ७७-७८

लक्षयोजनपरिमितो जम्बूद्वीपः (चतुर्लक्षक्रोशपरि०)समुपवर्णितः। अयं महाद्वीपेषु प्रथमो द्वीपः। अत्र द्वौ सूर्यौ द्वौ च चन्द्रौ। तथैव लवणसमुद्रे ततो

द्विगुणौ सूर्याचन्द्रमसौ—चत्वारश्चन्द्रमसश्चत्वारश्च भानवः। धातकीखण्डे द्वादश हिमाँशवस्तावन्त एव च तिग्मदीधितयः। एतत्त्रिगुणितैः षट्त्रिंशद्भिः संकलिता जम्बूद्वीपस्य द्वौ, लवणसागरस्य च चत्वारो द्वाचत्वारिंशद् भवन्ति, तावन्तः सूर्याः शिशिराँशवश्च कालोदधिसागरे वर्तन्ते। एवमेवोत्तरोत्तरद्वीप-सागरेषु विज्ञेयम्। द्वाचत्वारिंशतां त्रिरावर्तनेन षड्विंशत्यधिकशतं भवन्ति। तत्र धातकीखण्डस्य द्वादशानां, लवणसागरस्य चतुर्णाम्, जम्बूद्वीपस्य च द्वयोः संकलनेन चतुश्चत्वारिंशदधिकैकशतं सूर्याश्चन्द्रमसश्च पुष्करद्वीपे सन्ति। इदं किलार्धमानवीयक्षेत्रस्य परिगणनम्। निर्मानुषप्रदेशे तु भूयाँसश्चन्द्रमसः प्रभूताश्च भानवः। पश्चार्धपुष्करद्वीपे स्थिराः बह्वो भानुचन्द्रमसः चतुश्चत्वारिंशदधिकशतं त्रिः संख्यानेन द्वात्रिंशदुत्तरचतुःशतं भवन्ति। तत्र जम्बूद्वीपस्य द्वयोः, लवणसमुद्रस्य चतुर्णाम्, धातकीखण्डस्य द्वादशानां कालोदधेश्च द्वाचत्वारिंशतां संकलनेन ४९२ सूर्याः, एतावन्त एव चन्द्रमसश्च सन्ति पुष्करसागरे। सर्वमिदं श्रीजिनभद्रगणीक्षमाश्रमणः "बृहत्संघयणौ" समुवाच। तथैव योतीसकरण्डकपयन्ना–चन्द्रपन्नति–सूरपन्नतिप्रमुखसिद्धान्त-ग्रन्थेष्वभिहितम्।

स०—अयि भू-खगोलविद्याविदः! जैनाः खल्वेकस्मिन्भूमण्डले द्विनवत्यधिकचतुःशतं प्रकारान्तरेण चासंख्येयसूर्याचन्द्रमसो मन्वते। भवन्त एव भाग्यवन्तो यैर्हि वेदमतानुसारिसूर्यसिद्धान्तादिज्योतिषग्रन्थाध्ययनेन यथावद् भू-खगोलविज्ञानमधिगतम्। जैनानां संतमसि पतिता यूयमपि यावज्जन्माऽन्धकार एव विलीनाऽभविष्यत। यथाह्यद्यत्वे सन्ति जैनाः। मूर्खैरेतत् शङ्कितं यत्—जम्बूद्वीपे एकः सूर्य एकश्च चन्द्रोऽपर्याप्तः। एतावदतिमहत् भूमण्डलं त्रिंशद्घटिकास्वेकः सूर्यश्चन्द्रश्चैकः कथं प्रकाशयेत्? ये वै मानवा भुवमिमां सूर्यादिभ्योऽपि विशालामवगच्छन्ति ते ईदृश एव भ्रमे सम्पतन्ति।

**दो ससि दो रवि पंती एगंतरिया छसठि संखाया।**
**मेरुं पयाहिणंता। माणुसखित्ते परिअडंति॥**

—प्रकरण० भा० ४ संग्रहसू० ७९

मनुष्यलोके चन्द्रसूर्यपंक्तिसंख्यानं वर्णयति—तत्र खल्वस्ति चन्द्रसूर्याणां पंक्तिद्वयम्। तद्वच्चैकलक्षयोजनान्तरेण परिभ्रमति। चन्द्रपंक्तिसमनन्तरं भानुश्रेणी, भानुपंक्तिसमनन्तरञ्च चन्द्रश्रेणी। एवं चतस्रः श्रेणयस्तत्रैकस्यां चन्द्रपंक्तौ ६६ चन्द्रमसः सूर्यपंक्तौ च ६६ भानुमन्तः सन्ति। चतस्रोऽपि ताः परम्पराः जम्बूद्वीपस्य मेरुपर्वतं प्रदक्षिणीकृत्य मनुष्यक्षेत्रे परिभ्रमन्ति।

यदा ह्येकः सूर्यो जम्बूद्वीपस्य मेरोर्दक्षिणस्यां दिशि परिभ्रमति तदैवापर उदीच्यां विहरति। तथैव लवणसमुद्रस्य प्रतिदिशं द्वौ द्वौ, धातकी-

खण्डस्य षट् कालोदधेरेकविंशतिः, पुष्करार्धस्य षट्त्रिंशत्, एवं सर्वे सङ्कलिताः षट्षष्टिः सूर्या दक्षिणस्यां दिशि, तावन्तश्चोत्तरस्यां स्वानुक्रमेण परिभ्रमन्ति। दिग्द्वयस्यापि समाहृताः सकलसूर्या द्वात्रिंशदधिकैकशतं भवन्ति। तथैव उभयदिग्व्यवस्थितस्य षट्षष्टिचन्द्राणां पंक्तिद्वयस्यापि सङ्कलनया १३२ चन्द्रमसो मनुष्यलोकं परितो भ्रमन्ति। इत्थमेव चन्द्रमस इव नक्षत्रादेरपि प्रभूताः श्रेणयः समधिगन्तव्याः।

**स०**—जगत्यस्मिन् जैनानामेव गृहान् १३२ सूर्याश्चन्द्रमसश्च तापयन्ति। अथ चेदेवं कथमिमे जीवन्ति? रात्रावपि शीतबाहुल्येन जैना निपीडिता भविष्यन्ति? ईदृशासम्भवव्यवहारेषु भू-खगोलविज्ञानविवर्जिता एव विमुह्यन्ति न त्वन्ये केचन। यदा एक एव भानुमानेतद्भूगोलसन्निभानेकभूगोलमण्डलानि संप्रकाशयति तदा का कथा नितरां लघीयसोऽस्य भूवलयस्य। यदि नाम पृथिवीयं न भ्रमेदपि तु सूर्य एव भुवं परितो भ्राम्येत्तर्हि भवेद्रात्रिर्दिनञ्च कतिचन संवत्सराणाम्। हिमालयव्यतिरिक्तो नास्ति सुमेरुरपरः कश्चन, स च सूर्येण तुलनायां घटसम्मुखे राजिकावीजमिवास्ति नास्ति। तन्मतमास्थिता हि जैनाः कर्हिचिदप्येतान् विज्ञानव्यवहारान् विज्ञातुं न शक्नुवन्ति अपि तु नित्यं तमःपतिता भविष्यन्ति।

**सम्मत्तचरण सहिया सव्वं लोगं फुसे निरवसेसं।**
**सत्तय चउदसभाए पंचय सुयदेसविरईए॥**

—प्रकरण० भा० ४। संग्रहसू० १३५

सच्चारित्र्यवन्तः केवलिनो निखिलचतुर्दशभुवनेष्वात्मप्रदेशेष्विव स्वच्छन्दतया विचरिष्यन्ति।

**स०**—इमे खलु जैनमतावलम्बिनश्चतुर्दशराज्यानि मन्यन्ते तेषां चतुर्दशतमलोकशिखरे किञ्चिदुपरिष्टात्सर्वार्थसिद्धिविमानपताकायाः सिद्धशिलां, दिव्याकाशं च शिवपुरं प्रतिपादयन्ति। तं हि लोकं केवलिनः—प्राप्तकेवलज्ञानाः समधिगतसर्वज्ञभावा लब्धपूर्णपावित्र्याश्च प्रतिगच्छन्ति।

अत्रेदमधिगन्तव्यम्—प्रदेशवान् विभुः, अविभुश्च सर्वज्ञः केवलज्ञानी कर्हिचिदपि भवितुं नार्हति। आत्मना खल्वेकदेशी हि यात्यायाति च बद्धो मुक्तः ज्ञानवानज्ञानी वा सम्पद्यते न जातु सर्वज्ञः सर्वव्यापी। अत एव जैनतीर्थङ्करा—ये हि अल्पस्वरूपा अल्पज्ञाश्च जीवात्मान एव पुराऽभवन्—सर्वव्यापकाः सर्वज्ञाः कर्हिचिन्न भवितुं शक्नुवन्ति। किन्तु परमात्मैवानाद्यनन्तः सर्वव्यापकः सर्वज्ञो ज्ञानस्वरूपश्च। तं चैते जैना नाभ्युपयन्ति यत्र किल सर्वज्ञादयो गुणा याथार्थ्येन संगच्छन्ते।

**गब्भनर तिपलियाऊ। तिगाउ उक्कोस ते जहन्नेणं।**
**मुच्छिम दुहावि अन्तमुहु। अङ्गुल असंख भागतणू॥२४१॥**

द्विविधाः खलु मानवा गर्भसम्भूतागर्भासम्भूताश्च । तेषु गर्भजानां पल्योपमत्रयमायुषः क्रोशत्रितयं च देहस्य परिमाणं विज्ञेयम् ।

**स०**—पल्योपमत्रयायुषः क्रोशत्रितयदेहवन्तश्च मानवा भूवलयेऽस्मिन् स्तोका एव मातुं शक्नुयुः । पूर्वमभिहितपरिमाणपल्योपमं यावज्जीविनां तेषामपत्यान्यपि तादृशान्येव भवेयुः । तत्परिमाणाश्च पुमांसो मुम्बापुरी-सन्निभे द्वौ, कलिकातासमाने च नगरे त्रयश्चत्वारो वा निवस्तुमर्हन्ति । एवञ्च "एकस्मिन्नगरे लक्षाणि मानवानां निवसन्तीति जैनाभ्युपगमो विरुध्येत । यतो हि तेषां निवासनिकेतनमपि लक्षक्रोशपरिमाणं भवेत् । तथाविधं चैकमपि नगरं विश्वस्मिन्नपि भूमण्डले न सम्भवति ।

**पणयाल लरकजोयण । विरकंभा सिद्धिसिल फलिह विमला ।**
**तदुवरि गजोयणंते लोगन्तो तच्छ सिद्धठिई ॥२५८॥**

सर्वार्थसिद्धिविमानध्वजातः समूर्ध्वं द्वादशयोजनेष्ववस्थितसिद्धशिला-क्षेत्रफलं पञ्चचत्वारिंशल्लक्षयोजनपरिमितम् । सा च सकलापि सिद्धशिला-भूमिर्धवलार्जुनहाटकस्फटिकनिर्मला । तां केचिद् "ईषत्प्राग्भरा" इति नाम्ना संचक्षते । इयं सिद्धशिला सर्वार्थसिद्धिविमानतो द्वादशयोजनमलोकाऽपि । इदं हि परमार्थकेवली श्रुतः समधिगच्छति । सिद्धशिलेयं च मध्यभागेऽष्ट-योजनस्थूला । ततश्चतसृषु दिक्षूपदिशासु च क्रमेण क्षीयमाणा मक्षिकापतत्र-मिव नितरां तनीयसी । आकारेण चोत्तानछत्रमिव व्यवस्थिता । तामधि-शिलामेकयोजनान्तरे लोकान्तप्रदेशस्तत्र सिद्धा निवसन्ति ।

**स०**—जैनानामिदं मुक्तिस्थानं—सर्वार्थसिद्धिविमानपताकाया उप-रिष्टात्पञ्चचत्वारिंशल्लक्षयोजनव्यायता सिद्धशिला—भवेन्नाम कियत्यपि निर्मला सुप्रशस्ता च तथापि तन्निवासिनो मुक्तात्मानः प्रकारान्तरेण बद्धा एव । तच्छिलाबहिर्भूता हि ते मोक्षसुखात् प्रच्युता भवन्ति । अन्तःस्थिताश्च पवनं न लभन्ते । अविदुषां विमोहाय हीदं केवलं कल्पनाप्रसूतं भ्रमजालम् ।

**जोयण सहस्स महियं । एगिंदियदेह मुक्कोसं ॥**
**वि ति चउरिंदिस सरीरं । वारस जोयणं तिकोस चउकोसं ॥**
**जोयण सहसपर्णि दिय । उहे वुच्छन्त विसेसंतु ॥**

—प्रकरण० भा० ४ । संग्रहसूत्र० २६६-६७

साधारण्येनैकेन्द्रियजन्तोः शरीरं सहस्रयोजनपरिमितम्, इन्द्रियद्वयवतः शंखादेर्द्वादशयोजनपरिमाणं भवति । चतुरिन्द्रियस्य भ्रमरादेः क्रोशचतुष्टयम्, पञ्चेन्द्रियस्य च सहस्रयोजनानि देहपरिमाणं विज्ञेयम् ।

**स०**—चतुःसहस्रक्रोशपरिमाणाश्चेद्देहिनो भवेयुर्नूनमल्पैरेव मानवैर्भू-गोलः परिपूर्येत । कस्यचिद् गमनायापि स्थानं नावशिष्येत । एवं सति यदि नाम ते जैनानावासस्थलं पन्थानं च पृच्छेयुः तत्किमुत्तरं प्रदास्यन्ति । एतद्-

विलेखका इमे स्वसद्मस्वेव वासयेरन्नि—(ति साधु पश्यामः) परं चतुःसहस्र-क्रोशदेहिनः कृते द्वात्रिंशत्सहस्रक्रोशपरिमितं तु गृहं भवेदेव। तादृशगृहनिर्माणं तु जैनानां सर्वस्वव्ययेनापि न सम्भवेत्। एतावतोऽतिमहतोऽष्टसहस्रक्रोश-परिमितस्य छदिषो निर्माणाय स्थूणाः कुतो लप्स्यन्ते ? तत्रोपयोक्ष्यमाणः स्तम्भस्तु कथञ्चिदपि प्रवेशयितुं न शक्यते। तस्मात्सर्वमिदमलीकमेव।

**ते थूला पल्ले विहु संखिज्जाचे वहुंति सव्वेवि।**
**ते इक्किक्क असंखे। सुहुमे खंडे पकप्पेह॥**

—प्रकरण० भा० ४ लघुक्षेत्रसमासप्रकरण० सूत्रम् ४

पूर्वोदितैकाङ्गुललोमखण्डैः परिपूर्णः चतुःक्रोशपरिमितः समचतुरस्र-स्तावानेव खातः कूपो भवेत्। समाहृतान्यङ्गुलप्रमाणलोमखण्डाः द्विपञ्चा-शदधिकैकशतोत्तरसप्तपञ्चाशत्सहस्राणि भवन्ति। अन्ततः (३३०,७६२-१०४,२४६५६२५,४२१९९६०,९७५३६००,००००००० ) स्थूलरोम्णां खण्डाः क्रियेरँस्तथापि कालः संख्यात एव किन्तु यदा लोमखण्डस्यासङ्ख्यात-सङ्ख्या मनसा कल्प्येत तदाऽसङ्ख्याताः सूक्ष्मरोमाणवो भवेयुः।

स०—दृश्यतां साम्प्रतमेषां गणनासरणिः—एकाङ्गुलपरिमितलोम्नः कियन्ति खण्डानि विहितानि अपि तानि केनचित्सङ्खयातुं शक्यन्ते ? एते-नाप्यपरितुष्यन्तो मनसा कल्पयन्ति। एतेनेदमपि सिद्धं भवति यत् पूर्व-खण्डानि हस्तेन सम्पादितानि भवेयुरिति। हस्ताभ्यां विधातुमपारयन्तश्चेतसा कल्पयामासुः। एकाङ्गुलबालस्यासङ्ख्येयखण्डसम्भवोऽपि सम्भाव्यः केनापि ?

**जंबूद्वीपपमाणं गुलजोयणलरक वट्टविरकंभी।**
**लवणाई यासेसा। बलयाभा दुगुण दुगुणाय॥**

—प्रकरणर० भा० ४। लघुक्षेत्रसमा० सू० १२

जम्बूद्वीपो लक्षयोजनेषु विस्तीर्णः शून्यगर्भश्च। अस्यां चैकस्यां भुवि जम्बूद्वीपादयः सप्तद्वीपाः क्षीरसागरप्रमुखाश्च सप्ताम्बुधयो वर्तन्ते। तत्रोत्त-रोत्तरस्य तदनन्तरापेक्षया द्विगुणं प्रमाणम्।

स०—एवं सति जम्बूद्वीपादनन्तरो द्वीपः प्रमाणेन लक्षद्वययोजनम्, तृतीयः लक्षचतुष्टययोजनम्, चतुर्थोऽष्टलक्षयोजनम्, पञ्चमः षोडशलक्षयोज-नम्, षष्ठो द्वात्रिंशल्लक्षयोजनम्, सप्तमश्च चतुःषष्टिलक्षयोजनं भविष्यति। तत्रैतावत्प्रमाणा द्वीपाः सागराश्च पञ्चदशसहस्रक्रोशपरिधिमति भूमण्डले कथं मातुं शक्नुवन्ति ?

**कुरु नइ चुलसी सहसा। छच्चेवन्तरनईउ पइ विजयं।**
**दो दो महा नईउ। चउदस सहसाउ पत्तेयं॥**

—प्रकरणरत्ना० भा० ४। लघुक्षेत्रसमा० सू० ६३

कुरुक्षेत्रे ८४००० सरितः प्रवहन्ति ।

**स०**—कुरुक्षेत्रं किलाल्पीयान् जनपदः । तदसमीक्ष्यैवालीकाख्याविलेखने मनागप्येते न व्रीडिता अभवन् ।

**जामुत्तराउ ताउ । इगेग सिंहासणाउ अइपुब्बं ।**
**चउसुवितासु नियासण, दिसि भवजिण मज्जणं होई ॥**

प्रकरणरत्नाकर भा० ४ । लघुक्षेत्रसमा० सू० ११९

तस्याः शिलाया दक्षिणोत्तरयोरेकैकं सिंहासनं सुशोभते । शिलाञ्च तां दक्षिणस्याम् "अतिपाण्डुकम्बलेति" उत्तरस्यां च "अतिरिक्तकम्बलेति" नाम्ना संचक्षते । सिंहासने च ते तीर्थङ्कराः समधितिष्ठन्ति ।

**स०**—ईदृशानि खलु सन्त्यमीषां स्थानानि यत्र तीर्थङ्कराणां जन्मोत्सवादिकं विधीयते । मोक्षशिलाप्येषामेतद्विधैव वरीवर्ति ।

ईदृशानर्गलोपाख्यानैः परिपूर्णं जैनमतम्, कियद् विलिखेम । जैनमते वस्तुत्रयमस्ति समीचीनम्—

(१) वस्त्रशोधितपयःपानम् ।

(२) क्षुद्रजन्तूनामुपरि दयाप्रकाशः (यद्यप्येषां दया तेषु नाममात्रैव भवति) ।

(३) रात्रावनशनम् ।

एतदतिरिक्तमन्यत्सर्वमेषामुपदेशवचोऽसम्भवदोषसंग्रस्तम् । एतावतैव धीमन्तो बहु विज्ञास्यन्ति, केवलमियमुदाहरणदिक् प्रपञ्चिता । यद्येषां सर्व एवासम्भववृत्तान्ता विलिख्येरँस्तर्हि मानवेन पुरुषायुषेणाप्यध्येतुमशक्यानि पुस्तकानि जायेरन् । विपश्चितो ह्येतावतैव स्थाल्यां पच्यमानतण्डुलानामेकस्यैव परीक्षया सकलपक्वापक्वतण्डुलपरिज्ञानमिव निखिलं वृत्तजातमवगमिष्यन्ति । बुद्धिमतां पुरतो बहु विलेखनं नापेक्ष्यते । तेह्यल्पीयसैव वचसा सर्वमभिप्रायमवगच्छन्ति ।

**इति श्रीमद्दयानन्दसरस्वतीस्वामिकृते सत्यार्थप्रकाशे शङ्करदेवपाठकेन देवगिरालङ्कृते नास्तिकमतान्तर्गतचारवाकबौद्धजैनमतखण्डनमण्डनविषये द्वादशः समुल्लासः सम्पूर्णः ॥१२॥**

# अनुभूमिका

## ( ३ )

इदं बाइबिलमतं न केवलं ख्रीस्टीयानामेवापि त्वेतेन यहूदीयप्रमुखा अपि संगृहीता भवन्ति। त्रयोदशेऽस्मिन् समुल्लासे ख्रीस्टीयमतविषयोल्लेखस्यायमेवाभिप्रायो यदद्यत्वे बाइबिलधर्मावलम्बिन: ख्रीस्टीया: प्रधाना:, यहूदीयाश्चाप्रधाना:। मुख्यग्रहणेन चाप्रधानमपि संगृहीतं भवत्येवेति तस्माद्यहूदीया अपि संग्राह्या:। एतन्मतविषये च सर्वमपि बाइबिलग्रन्थात् समुद्धृतं यं ख्रीस्टीया यहूदीयाश्च सर्व एव मन्यन्ते। अमुमेव च ग्रन्थं स्वीयधर्मस्यादिमूलमभिप्रयन्ति। ग्रन्थस्यास्य भूयांसोऽनुवादा एतद्धर्मोपदेशकै: (पादरी) अकारिषत। तेषामार्य्यभाषादेवगिरोरनुवादं वीक्ष्य बाइबिलग्रन्थविषये महान्त: सन्देहा: समजायन्त मे चेतसि। तेषु केचन सर्वेषां विचाराय त्रयोदशेऽस्मिन्समुल्लासे समुपन्यस्ता:। अयं लेख: केवलं सत्यवृद्ध्यै, असत्यनाशाय च विलिखितो नतु कस्यचित्पीडनाय, हानिकरणाय मृषासंदूषणाय वा। समीक्षालेखेन कीदृशमिदं पुस्तकं कीदृशं वैषां मतमिति सर्व एवावबोत्स्यन्ते। सर्वे मानवा: ख्रीस्टीयमतविषयेऽनायासेनैव विचारादिकं कृत्वा वादिप्रतिवादिरूपेण तन्मतान्दोलनं कर्तुं पारयेयुरित्येवैतल्लेख-प्रयोजनम्। अपि चैतेन धर्मसम्बन्धिविज्ञानपरिवृद्ध्या यथायोग्यं सत्यासत्यमतानां कर्तव्याकर्तव्यकर्मणाञ्च ज्ञानेन मानवै: सत्यकर्तव्यकर्मणां परिग्रहोऽलीकाकर्तव्यकर्मणाञ्च परित्याग: सुकरो भविष्यति। सर्वेषां मतसम्बन्धीनि पुस्तकानि विलोक्यावबुद्ध्या चात्मन: सम्मतिमसम्मतिं वा प्रदद्युर्विलिखेयुर्वा, अथवा केवलं शृणुयु:। यथाध्ययनेन पण्डित: सञ्जायते तथैव श्रवणाद्बहुश्रुत: सम्पद्यते। परान् बोधयितुमशक्तोऽपि श्रोता स्वयं बुध्यत एव। पक्षपातेन परच्छिद्रमन्विष्यन्तो नात्मनो नापि परेषां गुणदोषौ वीक्षन्ते। यथायथं सत्यासत्ये विनिर्णेतुं प्रभवति खल्वयमात्मा। सर्व एव च यथाधीतं यथाश्रुतञ्च विनिश्चेतुमर्हन्ति। यदि नाम केचिदेकस्य मतं विजानीयुर्नत्वपरेषां तदा यथावत्संवदितुं न शक्नुयु:। तत्राज्ञानिनो भ्रमगर्ते निपतन्ति। अतस्तद्दोषपरिहारायात्र ग्रन्थे साम्प्रतं लब्धप्रचारमतानां विषये संक्षेपतो विलिखितम्। एतावतैवावशिष्टविषयेष्वप्यनुमातुं शक्यते सत्या असत्या वा त इति। सर्वमान्या: सत्यविषया: सर्वेष्वपि धर्मेषु समाना एव केवलमलीकविषयेष्वेव विवाद: सञ्जायते। अथवैकस्य सत्यत्वेऽपरस्यासत्यत्वेऽप्यल्पीयान् विवाद: समुत्तिष्ठति। यदि नाम वादिप्रतिवादिनौ सत्यासत्यनिर्णयाय वादं कुर्वीयातां तदाऽसंशयं निश्चय: सञ्जायेत। अधुनाहं त्रयोदशेऽस्मिन् समुल्लासे समासतो ख्रीस्टीयमतविषये विलिख्य सर्वेषां पुरो निदधे, विचारयन्तु भवन्त: कीदृगिदं मतमिति।

**अलमतिलेखेन विचक्षणवरेषु।**

# अथ त्रयोदशसमुल्लासारम्भः

## अथ कृश्चीनमतविषयं समीक्षिष्यामः

अतः परं क्रिश्चीनमतविषये लेखिष्यामः। येन "अप्यस्ति तेषां मतं निर्दोषम् ? एषां बाइबिलपुस्तकमीश्वरप्रणीतं नवेति" ? सर्वैरधिगम्येत।

प्रथमं वयं पुरातनधर्मग्रन्थमालोचिष्यामहे—

### सृष्ट्युत्पत्तिः

(१) आदौ परमेश्वरः पृथिवीमाकाशं चासृजत्। (तदानीं) पृथिवी विकृताकारा शून्याचाभवन्निम्नप्रदेशे चान्धकार आसीत्। परमात्मन आत्माऽपामुपरि परिभ्रमति स्म।—तौ० उत्प० पर्व० १। आ० १। २

**स०**—आरम्भशब्देन किमभ्युपेथ ?

**क्रि०**—जगतः प्राथमिकी समुत्पत्तिः (आरम्भशब्देनाभ्युपेमः)।

**स०**—अप्ययमेव सर्गः प्रथमं बभूव, पूर्वमितः कदाचिदपि सर्गारम्भो नाभवत् ?

**क्रि०**—न वयं विजानीमः प्रथमं सर्गारम्भोऽभवन्नवेति। केवलं परमात्मैव तद्वेत्ति।

**स०**—कथं तर्ह्यविजानन्तो ग्रन्थमिमं विश्वसिथ—यो वै ग्रन्थो नितरां संशयोच्छेदाक्षमः ? एतद्विश्वासेनैव परानुपदिशन्तः कथं संशयबहुलेऽस्मिन् स्वमते जनान् विमोहयथ। किञ्च सकलसन्देहक्षोदक्षमं वैदिकं मतं कथङ्कारं नाङ्गीकुरुथ ? परमेश्वरविनिर्मितसर्गोदन्तमनवगच्छन्तः खलु यूयं कथमीश्वरं वेदितु प्रभविष्यथ ?

**स०**—आकाशशब्देन किं गृह्णीथ ?

**क्रि०**—शून्यस्थानमूर्ध्वञ्च।

**स०**—तच्छून्यस्थानं कथमुदपादि ? यतो हि तद्विभुरतिसूक्ष्मोऽधस्तादुपरि च सर्वत्र समानाकारः पदार्थः। आकाशनिर्माणात्पूर्वमेतत् शून्यस्थानमाकाशमासीन्नवा ? अथ चेन्नासीत्तदेश्वरो जगतः कारणं (प्रकृतिः) जीवाश्च क्व न्यवसन् ? आकाशमन्तरेण कस्यापि पदार्थस्य स्थितिर्न

सम्भवति तस्माद् युष्मद्बाइबिलग्रन्थस्य कथनं सर्वत्रैव न सङ्गच्छते। परमेश्वरस्तदीयज्ञानकर्माणि च विसदृशानि उत संगतानि ?

क्रि०—संगतानि।

स०—एवञ्चेत्कथमत्र "परमात्मना विरचितेयं मही विकृताकारासीत्" इत्यभिहितम्।

क्रि०—विकृताकारशब्देन निम्नोन्नता असमरूपासीदित्यभिप्रेयते।

स०—कः पुनरेनां समीकृतवान् ? साम्प्रतमपि नास्ति किमुच्चावचा ? परमात्मनः किमपि कार्यमसंगतं न भवति स हि सर्वज्ञः, नहि तस्य कार्येषु भ्रमोऽज्ञानं वा सम्भवति। बाइबिलग्रन्थे च सृष्टेर्विकृताकारत्वं प्रतिपादितं तस्मादेतत्पुस्तकमीश्वरनिर्मितं न भवितुमर्हति ?

प्रथमं तावत् "परमेश्वरस्यात्मा" इति शब्देन भवान् किमभिप्रैतीत्युच्यताम् ?

क्रि०—चेतनम् (परमेश्वरश्चेतन इत्यभिप्रेमः)

स०—स साकारो निराकारो वा ? तथा व्यापकः परिच्छिन्नो वा ?

क्रि०—स निराकारश्चेतनो व्यापकश्च तथापि स प्रायेण सनाईगिरिचतुर्थाकाशादिस्थलेषु निवसति।

स०—निराकारं तं को न्वपश्यत् ? व्यापकस्याप्सु भ्रमणं न जातु सम्भवति। यदा च परमेश्वरस्यात्माऽप्सु विसर्पति स्म तदेश्वरः कुत्रासीत् ? एतेन परमात्मनः शरीरं क्वचिदन्यत्र स्थितं भविष्यति, अथवा स्वात्मनः कोऽप्यंशो जले भ्रामितो भवेत्। एवञ्च परमेश्वरो विभुः सर्वज्ञो वा कर्हिचिन्न भवितुमर्हति। अविभुश्च जगतः सर्जनधारणपालनानि, जीवात्मनां कर्मफलव्यवस्थां प्रलयं च न जातु कर्तुमीष्टे। एकदेशिनो हि वस्तुनो गुणकर्मस्वभावा अप्येकदेशिनो भवन्ति। एकदेशिगुणकर्मस्वभावश्चेश्वरो न भवति यतो वै परमेश्वरो वेदेषु सर्वव्यापकोऽनन्तगुणकर्मस्वभावसंयुतः सच्चिदानन्दस्वरूपो नित्यशुद्धबुद्धमुक्तस्वभावोऽनाद्यनन्तादिलक्षणलक्षितश्च समुपवर्णितः। यूयमपि तमेव मन्यध्वं तदैव युष्माकं कल्याणं नत्वन्यथा।

(२) परमेश्वरोऽब्रवीत्। भवतु प्रकाशः। प्रकाशश्चाभवत्। परमेश्वरः प्रकाशमद्राक्षीत् प्रशस्त इति।—तौ० उत्प० प० १। आ० ३। ४

स०—अप्यचेतनस्वरूपः प्रकाशः परमात्मनो वाचमश्रौषीत् ? अथ चेत् श्रुता कथं तर्ह्यद्यत्वेऽपि भानुदीपाग्नीनां प्रकाशोऽस्मदादीनां वचो नाकर्णयति ? प्रकाशः खल्वचेतनो भवति नहि स कस्यापि वार्तां श्रोतुमर्हति ? अपि परमेश्वरः प्रकाशं सम्प्रेक्ष्यैव व्यजानात् "साधीयानयमिति" ? पूर्वं न विजानाति स्म कथमन्यथा विलोक्य "सुप्रशस्तोऽयम्" इति ब्रुवीत। एवञ्च पूर्वमविदित ईश्वर एव भवितुं नार्हति तस्माद् युष्मद्-"बाइबिल"-

पुस्तकमीश्वरप्रणीतं नास्ति नापि तत्र वर्णितः परमेश्वरः सर्वज्ञोऽस्ति ॥२॥

(३)—परमेश्वरः समुवाच—अपां मध्ये जायतामाकाशं तच्च वारीणि वारिभ्यो विभजताम्। ततः परमेश्वर आकाशमवासृजत्, तदधस्तनाम्भांस्याकाशोर्ध्वादद्भ्यो व्यभजत। तथा चाभवत्। परमेश्वरश्चाकाशं स्वर्ग इत्याह। संध्यासमयः प्रातःकालश्चापरो दिवसः समभवत्।

—तौ० उत्प० प० १ आ०। ६। ७। ८

स०—किमाकाशवारिणी अपि परमात्मनो वाचमश्रौष्टाम्? आकाशशून्यगर्भा आपो ननु क्व न्यवत्स्यन्? प्रथमोपदेश एव व्योमासृजदिति श्रूयते पुनरत्रापि "आकाशं विनिर्मितमिति" वर्णनं निष्फलमेव। आकाश एव स्वर्गश्चेत्तर्हि तस्य सर्वव्यापकत्वात्स्वर्गोऽपि सर्वत्राभवत् "पुनस्स्वर्ग उपरिष्टाद् वर्तते" इति वचो निरर्थकम्। अनुत्पन्ने खलु सूर्ये कुतो नु रात्रिर्दिवसश्च समभवत्? अग्रिमायतेष्वसम्भवोपदेशा उपदिष्टाः सन्ति ॥३॥

(४)—ततः परमेश्वरोऽब्रवीत्। अहमादमं स्वस्वरूपं आत्मनः समानं सृजानीति। तदनु परमेश्वर आदमं स्वस्वरूपे ससर्ज। स च तं परमात्मनः प्रतिच्छन्दकेनासृजत्। परमेश्वरस्तौ पुरुषाङ्गनारूपेण व्यरचयत्। परमेश्वरस्तावाशीभिर्वर्द्धयामास।—तौ० उत्प० पर्व १, आ० २६, २७, २८

स०—परमेश्वरश्चेदादमं निजस्वरूपे निरमात् कथं तर्हि तस्य परमात्मवत् स्वरूपं नाभवत्? परमेश्वरो हि पवित्रो ज्ञानस्वरूप आनन्दमयादिलक्षणलक्षितश्च वर्तते। अतथाभूतश्चादमः परमात्मनो रूपे नोत्पन्नः। किञ्चादमं विरचयन् परमेश्वरः स्वात्मानमेवोत्पत्तिमन्तं व्यधात् कथं पुनः सोऽनित्यो न समजायत? कुतश्चादमं समुदपादयत्?

क्रि०—मृदः समुदपादयत्।

स०—मृत्तिकां कुतो निरमात्?

क्रि०—स्वसामर्थ्येन।

स०—परमात्मनः सामर्थ्यं साद्यनादि वा?

क्रि०—अनाद्यस्ति।

स०—अनादौ (परमात्मनः सामर्थ्ये) जगतः कारणमपि (क्रिश्चियनमतावलम्बेन तदेव परमात्मनः सामर्थ्यं जगत्कारणम्) सनातनं सिद्ध्यति कथं पुनरभावाद्भावः समुत्पन्न इत्यूरीक्रियते?

क्रि०—सृष्टेः प्राक् परमेश्वरव्यतिरिक्तं किमपि नासीत्।

स०—नासीच्चेत् जगदिदं कुतः समुत्पन्नम्? परमात्मनः सामर्थ्यं द्रव्यं गुणो वा? द्रव्यञ्चेत् "परमेश्वरव्यतिरिक्तं पदार्थान्तरमा—(सृष्टेः प्राक्)—सीत्" इति सुतरां सिद्धम्। अथ चेद्गुणः, गुणाद् द्रव्यं नोत्पत्तुमर्हति? किञ्च यदि जगदिदं परमात्मनः (कारणभूतात्) उदपत्स्यत

परमात्मनो गुणकर्मस्वभावा अप्यत्राभविष्यन् । न च तद्गुणा अत्र संलक्ष्यन्ते अतः "परमेश्वरान्नेदं समुत्पन्नमपि तु परमाण्वादिनामधेयाज्जडवस्तुनो जगतः कारणभूतादिति निश्चयः । यदा वै वेदादिशास्त्रेषु समुपवर्णितं "परमेश्वरः सर्गस्यास्य निमित्तकारणमिति" तथैव युष्माभिरप्यभ्युपेतव्यम् । अथ चेदादमस्यान्तःस्वरूपं जीवात्मना बाह्यञ्च मानवेन तुल्यं कथं पुनः परमेश्वरस्य स्वरूपं तादृशं नास्ति ? यतो हि यदा आदमः परमात्मसदृशः समुदपादि तदेश्वरेणापि आदमसमानेनावश्यं भवितव्यम् ।

(५) ततः सकलाधिपतिः परमेश्वरो भुवो रजःकणेभ्य आदमं व्यसृजत् । तदीयनासापुटयोश्च जीवनश्वासमास्यत्, आदमश्च जीवित आत्मा समभवत् । अधिपतिः परमेश्वरः "अदने" पूर्वत उद्यानमेकमारोपयत् । निजनिर्मितमादमं च तत्रातिष्ठिपत् । तत्रोद्यानमध्ये च जीवनतरुं सदसद्विज्ञानानोकहं च भुव उत्पादयामास ।—प० १ आ० ७।८।९

स०—यदा खलु परमेश्वरः "अदनप्रदेशे उद्यानं निर्माय तत्रादमं स्थापयामास किं तदानीं भूयोऽप्ययमितो निःसारणीयो भविष्यति" इति न विजानाति स्म ? परमात्मना रजसा विनिर्मित आदमः परमेश्वरसमानाकृतिर्नाभवत् । अस्ति चेन्नूनं परमेश्वरोऽपि रजोविनिर्मितो भविष्यति ? आदमनासापुटयोः परमात्मनास्तः श्वासः परमेश्वरस्वरूप आसीत्तदतिरिक्तो वा ? अतिरिक्तश्चेत् आदमः परमात्मनः स्वरूपे नोत्पन्नः । अथ चेदभिन्नः (श्वासः) ईश्वरादमयोः साम्यं सञ्जातम् । एवञ्चादमस्य जन्ममरणवृद्धिक्षयक्षुत्तृषादयो दोषाः परमेश्वरेऽपि परापतन्ति । एतादृशश्च (जन्ममरणादिसंयुक्तः) कथङ्कारं परमेश्वरो भवितुमर्हति ? तस्मात्पुरातनग्रन्थस्य (तौरेतस्य) इदं वचो यथार्थं न प्रतीयते । नापि पुस्तकमिदं परमेश्वरप्रणीतं वर्तते ।

(६) अपि चाधिपतिः परमेश्वर आदमं गाढमसूषुपत् स चास्वाप्सीत् । ततः स तदीयपर्शुकानामेकां पर्शुकामुदहरत् तत्स्थाने च मांसं न्यक्षिपत् । अधिपतिः परमेश्वरस्तया पर्शुकयैकां योषितं निर्मायादमस्यान्तिकमानिनाय ।

—तौ० उत्प० प० १ । आ० २१, २२

स०—यदि नाम परमेश्वरेण आदमो रजसा विनिर्मितः कथं तर्हि तद्भार्यापि तेनैव न विरचिता ? अथवा योषितं चेदस्थिभिर्निरमादादममपि तैरेव कथं न निरमात् ? अपि च यथा नरान्निसार्यमाणतया नारीति नाम समजनि तथैव नार्या "नरः" इति नामापि जायताम् । मिथश्च तेष्वनुरागोऽपि भवेत् । यथा च पुमान् योषितमनुरज्यति एवं योषापि पुमांसमनुरज्येत् । अयि विपश्चितः ! वीक्ष्यतां परमात्मनः कीदृशं पदार्थविज्ञानम् ? आदमस्यैकां पर्शुकां निःसार्य चेन्नारी विनिर्मिता कथं तर्हि मानवानामेकं पार्श्वास्थि न भवति न्यूनम् ? किञ्च योषितां देह एकैव पर्शुका भवेत् यतो

हि सैकयैव पर्शुकयोद्भूता । अपि कृत्स्नजगदुपस्करणेन योषाशरीरं निर्मातुं न शक्यते स्म ? तस्मादयं बाइबिलग्रन्थप्रतिपादितः सृष्टिक्रमः सृष्टिविद्यया विरुद्धचते ।

(७) सर्पः खलु परमात्मविरचितात्प्रत्येकस्मात्पशोर्विदग्धतर आसीत् । स तां नारीमब्रवीत्—"त्वयास्योद्यानवर्तिनः कस्यापि तरोः फलं न भक्षणीयमिति" किं सत्यमेवेश्वरः प्राह । ततो योषित्सर्पमब्रूत "वयमेतदुद्यानानोकहफलानि भक्षयामः परमुद्यानमध्यवर्तितरुफलसमशनाय परमात्मना प्रतिषिद्धाः स्म । तद्धि युष्माभिर्न भक्षणीयं नापि स्प्रष्टव्यम्, मा भूत्कदाचित्किञ्चिदत्याहितं" (मारणम्) इत्यस्मानुक्तवान् । ततः सर्पः "असंशयं युवां न मरिष्यथो जानाति हि परमेश्वरस्तत्फलभक्षणेन युवयोः चक्षुषी (बुद्धिनेत्रे) विकसिते भविष्यतः, सदसद्विज्ञाने च युवां परमात्मनः समानौ भविष्यथः" इति प्रमदां समभाषत । यदा च योषिदद्राक्षीत् यदयं तरुर्भक्षणे मधुरोऽवलोकने मनोहरो मतिप्रदानक्षमश्च इति तदा तत्फलमादाय बुभुजे, भर्त्रे च प्रादात् सोऽपि तद् भक्षयामास । ततस्तयोर्ज्ञानचक्षुषी विकसिते । तौ चावां स्वयं नग्नाविति विविदतुः । तदनु ताभ्यामञ्जीरपर्णानि प्रसीव्य स्वात्मने प्रावरणं विनिर्मितम् । ततः प्रभुरीश्वरः सर्पमब्रवीत्—"यतः खलु त्वमेतद् व्यधा अतः कृत्स्नपशुभ्यः प्रत्येकस्माच्च वन्यजन्तोरधिकः शप्तो भविष्यसि । त्वमुरसा प्रसर्प्स्यसि यावज्जीवं च मृदं भक्षयिष्यसि किञ्चाहं तव योषितश्चान्तरे युवयोर्वंशे च विरोधं जनयिष्यामि सा तव शिरो मर्दयिष्यसि त्वञ्च तस्याः (तद्वंशस्य च) पार्ष्णिं दंक्ष्यसि" । किञ्च परमेश्वरः नारीं शशाप "अहं तव व्यथां गर्भधारणञ्च भूयसा प्रवर्धयिष्यामि । त्वं सकष्टं प्रसोष्यसि । तवाभिलाषो भर्तारमवलम्बिष्यते । स च त्वां प्रशासिष्यति । पुनरादमं समुवाच—"येन त्वमात्मनो भार्याया वाचमङ्गीकृत्य मत्प्रतिषिद्धतरोः फलमभक्षयः, अतो भुवस्त्वं शप्तोऽसि । यावज्जीवं क्लेशेनात्मानं ततो भरिष्यसि सा च त्वदर्थं कण्टकानि गोक्षुरकाँश्चोत्पादयिष्यति, त्वञ्च क्षेत्रसमृद्धानि शाकहरितकानि भक्षयिष्यसि ।

—तौरे० उत्प० पर्व० ३ । आ० १-७ । १४-१८

**स०**—यदि नाम क्रिश्चियनधर्मावलम्बिनामीश्वरः सर्वज्ञोऽभविष्यत्किमर्थं तर्हि धूर्तसर्प—दियावलं निरमास्यत् ? निर्मितश्चेत्स एव तदपराधभाक् समजनि परमात्मना ह्यसम्पादितदौर्जन्यः स कथं दौरात्म्यमाचरिष्यत् ? अनङ्गीकृतप्राग्जनुषा च (क्रिश्चीनानां) परमेश्वरेण निरपराधमेव किमर्थं शैतानः पापः कृतः ? वस्तुतः स वै नासीत्पन्नगोऽपितु मानवोऽभवत्, कथमन्यथा मनुष्यवाचमुदीरितुमशक्ष्यत् । किञ्च यः स्वयमसत्यं ब्रुवाणः परानलीकमार्गे प्रवर्तयेत्स एव शैतानोऽत्र शैतानस्तथ्यमेव समभाषत

तां स्त्रियमपि न प्रतारयामास। "एतद्भक्षणेन युवां पञ्चत्वमुपैष्यथः" इति परमात्मनैव आदममरियमौ विप्रलब्धौ। यदा किल स तरुर्ज्ञानामरत्वप्रद आसीत् कथं तदा तत्फलभक्षणं न्यषेधीत् ? प्रतिषेधँश्चेश्वरो मृषाभिधायी विप्रलब्धा च समजनि। तत्तरोर्हि फलानि मानवेभ्यो ज्ञानसुखप्रदान्यासन्नत्व-ज्ञानगर्तपातयितृणि मृत्युजनकानि वा समभवन्। अथ यदि फलाशनं निषिद्धं किमर्थं पुनस्तं तरुमुदपादयत् ? आत्मनः कृत इति चेत् किं स स्वयमज्ञानशीलो मरणधर्मा वाऽभवत् ? परार्थं इति चेत्किमपराद्धं तत्फलाशनेन ? नाप्यद्यत्वे कोऽपि महीरुहो ज्ञानसम्पादको मृत्युनिवारकश्चावलोक्यते। अपि परमेश्वर-स्तद्बीजमपि कथाशेषतां निनाय। इत्थं व्यवहरन् मानवो यदि छाद्मिको गीयते कथं पुनरीश्वरो दाम्भिको नाभूत् ? परान् प्रतारयन् हि छाद्मिकः कथं न भवेत् ? निरपराधानेव त्रीनप्येतान् शपन् परमेश्वरोऽन्यायाचारोऽपि समभवत्। वस्तुतः शापोऽयं परमात्मना भोक्तव्य आसीत् स ह्यलीकं ब्रुवाण आदममरियमौ विमोहितवान्। अहह ! क्रिश्चियनपरमात्मनः कीदृशं चारुविज्ञानम्। किं पीडां विनैव गर्भधारणं प्रसवो वा भवितुमर्हति ? निरायासमेव वा कोऽप्यात्मनो जीविकां निर्वोढुमर्हति ? अपि पूर्वं नासन् कण्टक्यादयः पादपाः ? किञ्च यदा परमात्मनो निदेशेन सर्वमानवानां शाक-मूलभक्षणं समुचितं पुनः बाइबिलग्रन्थस्य मांसभक्षणानुज्ञानविलेखः कथमसत्यो नाभवत् ? तस्य च याथार्थ्ये अयमलीकः। अनयोरेकतरो निःसंशयमयथार्थः। इत्थं च यदा खल्वादमस्य कोऽप्यपराधो न सिध्यति किमर्थं तर्हि क्रिश्चियन-मतावलम्बिन आदमस्यापराधेन मानवानपराधिनः संचक्षते ? अहो किमेतादृशं पुस्तकमीश्वरो वा बुद्धिमतां समक्षे मान्यो भवितुमर्हति ?

(८) प्रभुः परमेश्वरोऽब्रवीत्। आदमः खलु सदसत्परिज्ञाने आवयो-रन्यतरेण साम्यमभजत्। साम्प्रतं स निजहस्ताभ्यां जीवनवृक्षादपि फलमादाय न भक्षयेदमरत्वं वा न प्रतिपद्येत इति आदमं बहिर्निस्सारयामास। अदनोद्यानात् पूर्वतः समन्तात्परिभ्रमदसिलताधृतपाणिदिव्यदूतान् जीवनानो-कहवर्त्म विरक्षितुं नियोजयामास।—तौ० उत्प० पर्व० ३ आ० २२। २४

स०—"विज्ञानेऽस्मत्समानोऽभवदिति" परमेश्वरः कथमीर्ष्यां चकार कथं वा बभ्राम ? अपीदमभद्रमभूत् ? शङ्कैव चैषा कथं प्रादुर्बभूव ? नहि कोऽपि परमात्मनस्तुल्यः शक्नोति भवितुम्। एतेनेदमपि सिद्धचति यत् "नासीत्स परमेश्वरोऽपितु मनुष्य एवासीदिति"। बाइबिलग्रन्थे यत्र यत्र परमात्मनो वर्णनं तत्र तत्र स मनुष्यवदेव वर्ण्यते। वीक्ष्यतामादमस्य ज्ञानाभ्युदये परमेश्वरः कियद् दुःखं विवेद। अमरतरोश्च फलास्वादे कियत्पस्पर्द्धे। पूर्वमेव स यदोद्याने वासितस्तदानीमेव किं परमेश्वरः "अयमितो भूयो बहिर्निस्सारयितव्यो भविष्यति" इति भाविनमर्थं न जानीते

स्म। तस्मात् खीस्टीयानां प्रभुर्नासीत् सर्वज्ञ इति सुव्यक्तं भवति। चकासच्चन्द्रहासानां प्रहरबन्धोऽपि मानवानामेव व्यवहारो नतु परमेश्वरस्य।

(९) व्यतीतेषु कतिपयदिवसेषु कायिनः परमात्मने कानिचिद् भूमिफलान्युपजहार। हावीलश्चापि स्वयूथात्सक्तप्रसूताः स्थूलस्थूला अवीरूपानिन्ये। प्रभुरपि हावीलं तदुपायनञ्च सादरं जग्राह। कायिनं तदुपहारञ्च नाद्रियत। ततः कायिनो भृशं चुकोप स्वाननं च विकृतं व्यधात्। अनन्तरं परमेश्वरस्तमब्रवीत्—कथं त्वं कुप्यसि कथं च निजवदनं विकृतिं नयसि।

**स०**—यदि खीस्टीयानां प्रभुर्मांसाशी नाभविष्यत्तर्ह्यवेरुपहारं हावीलञ्च कथमादृत ? कायिनं तदुपायनञ्च कथं न समादद्रे ? इत्थमुपद्रवं विधाय परमात्मैव हावीलनिधनकारणतां जगाम। यथा च मानवा मिथः संलपन्ति तथैवं खीस्टीयानां प्रभुरप्याचरति। उपवनेषु गमनागमनं तन्निर्माणञ्च मनुष्याणामेव कार्यम्। एतेन "अयं बाइबिलग्रन्थो मनुष्य-प्रणीतो नतु परमेश्वरस्येति" प्रतीयते॥९॥

(१०) यदा परमेश्वरः कायिनमपृच्छत्—"क्वास्ति तव भ्रातेति" तदा स प्रतिभाषमाणस्तमब्रवीत्—"नाहं वेद्मि किमहं भ्रातू रक्षकोऽस्मि" ? ततः प्रभुस्तमुवाच—"त्वं किमकार्षीः ? तव भ्रातृरक्तध्वनिर्मां भुव आह्वयति साम्प्रतञ्च त्वं पृथिव्या शप्तोऽसि"।

—तौ० उत्प० प० ४। आ० ९।१०।११

**स०**—परमेश्वरः किं कायिनमपृष्ट्वा हाविलवृत्तं नावगच्छति स्म ? अपि रुधिरशब्दः कमपि भुवो जातु शक्नोति समाकारयितुम्। सर्वोऽप्ययमविदुषां व्यवहारः। तस्मान्नैतत्पुस्तकं परमात्मनो विदुषो वा कृतिर्भवितु-मर्हति ?॥१०॥

(११) किञ्च हनूको मतूसिलहस्य जनुषोऽनन्तरं वर्षाणां शतत्रयं यावत् सार्धं परमात्मना परिभ्रमति स्म।—तौ० उत्प० प० ५। आ० २२

**स०**—खीस्टीयानां परमेश्वरश्चेन्मानवो नाभविष्यत्कथं तर्हि हनूकस्तेन सह पर्याटिष्यत् ? अतः वेदप्रतिपादितनिराकारपरमेश्वरस्याभ्युपगमेनैव खीस्टीयानां कल्याणं भविष्यति॥११॥

(१२) अपि च तेभ्यो दुहितरः समजायन्त। परमात्मनः पुत्रा आदमतनूजा निरैक्षन्त सन्ति ताः सुन्दर्य इति ताँश्च यथाकामं पर्यणयन्। तदानीमस्यां भुवि दानवा न्यवसन्। ततः प्रभुपुत्राणामादमदुहितृभिः सङ्गमेन सूनवः समुत्पन्ना ये हि बलवन्तो विख्याताश्चासन्। आदमस्य दौरात्म्यं पृथिव्यामाधिक्यं गतं तदीयमानसी प्रवृत्तिर्भावना च प्रत्यहं विनिन्दितैव

भवतीतीश्वरः समालुलोकत् । तदा पृथिव्यां मानवसमुत्पादने प्रभुणानुशिश्ये शुशुचे च। तदा प्रभुरब्रूत—अहं खलु मानवं—यमहमजनयम्, पशून्, रिङ्गकान् व्योमपतङ्गाँश्च भुवो नाशयिष्यामि तन्निर्माणेन ह्यहमनुशये ।

—तौ० उत्प० प० ६ । आ० १।२।४-७

स०—"के नाम परमात्मनः पुत्राः ? के च तस्य भार्याश्वश्रूश्वशुर-श्यालादिसम्बन्धिनः" इति ख्रीस्टीयाः प्रष्टव्याः । यतो हि(तत्पुत्राणां)मानव-दुहितृभिः सहोद्वाहेनेश्वरः खल्वेषां सम्बन्धी समजनि, ताभ्यो लब्धजन्मानश्च पौत्रप्रपौत्राः । अप्ययं लेखः परमात्मनस्तद्ग्रन्थस्य वा भवितुमर्हति ? नहि, नहि, पुस्तकमिदं वनेचराणां कृतिः प्रतीयते । असर्वज्ञस्य भविष्यदनवगच्छतश्च परमेश्वरत्वमेव न संघटते । एतादृशो वै जीवः सम्भवति । अपि परमेश्वरः सृष्टिं विरचयन्नग्रे पुमाँसो दुरात्मानो भविष्यन्तीति न वेत्ति स्म । शोकाद्यनु-भवोऽज्ञानेन किंचित्कार्यमनुष्ठायानुशयश्च ख्रीस्टीयानामेवेश्वरे संगन्तुमर्हति । स हि न सम्पूर्णज्ञानवान् योगयुक्तो वाऽऽसीत् अन्यथा तु शान्तिविज्ञानाभ्यां शक्नोति स्म शोकादिभ्यो मोक्तुम् । किं पशुपक्षिणोऽपि दुष्टचेतसोऽभवन् ? वस्तुतस्तेषां परमेश्वरः सर्वज्ञो नासीत्कथमन्यथैवं विषादमन्वभविष्यत् ? तस्मात्सुव्यक्तमेतत् यत् स परमेश्वरो नासीन्नापि बाइबिलग्रन्थस्तन्निर्मितः इति । यदि नाम ख्रीस्टीयाः सर्वपापविनिर्मुक्तं क्लेशदुःखशोकादिविवर्जितं सच्चिदानन्दस्वरूपं वेदोक्तं परमात्मानमभ्युपागच्छन्निदानीं वाङ्गीकुर्यु-स्तर्ह्यात्मनो जन्म सफलं कर्तुमर्हेयुः ।।१२।।

(१३) सा च नौर्हस्तशतत्रयदीर्घा, पञ्चाशत्करव्यायता त्रिंशद्ध-स्तोच्छ्राया च भवेत्, नावि त्वं गच्छेः । त्वया च तव सूनवो दाराः स्नुषाश्च सकलदेहवतां द्वौ द्वौ जीवन्तौ पुंयोषितौ प्राणिनौ चादाय सहात्मना नेतव्या येन त्वया सह तेऽपि जीवन्तस्तिष्ठेयुः । सर्वविधपक्षिणां, सर्वविधचतुष्पदानां भुवः सर्वविधतिरश्चां च द्वौ द्वौ त्वामुपतिष्ठतां येन जीवेताम् । त्वञ्चात्मनः कृते निखिलं भोजनोपकरणं स्वान्तिके समाहर तदेव तव तेषाञ्च भोजनाय भविष्यति । नूहश्च परमात्मनो निदेशं यथावदन्वतिष्ठत् ।

—तौ० उत्प० पर्व० ६ । आ० १५, १८-२२

स०—अपि कोऽपि विपश्चिदेवं विज्ञानविरुद्धासम्भवोपदेष्टारं परमेश्वरं मन्तुं शक्नोति ? न ह्येतावद्दीर्घव्यायतोत्सेधायां नावि करिकरणी-क्रमेलकादयो नैककोटिप्राणिनः तेषां भोजपानसामग्री च मातुं शक्यते, अत एवेदं मनुष्यप्रणीतं पुस्तकम् । एतद्विरचयिता नासीद् विद्वानपि ।।१३।।

(१४) ततो नूहेन प्रभवे वेदिकैका निर्मिता कृत्स्नपवित्रपशूनां पक्षिणाञ्च काँश्चित्तत्र वेद्यां जुहाव । परमेश्वरस्तद्गन्धमाघ्राय चेतसि समकल्पयत् । नाहं भूयः कर्हिचिदपि मनुजेभ्यो भुवं शप्स्ये । यतो हि तेषां

भावनं तद्बाल्येन विनिन्दितम्। यथा च मया सर्वे प्राणिनो विहिंसिता न तथा भूयः कदाचन निहनिष्यामि।—तौ० उत्प० प० ८। आ० २०।२१

स०—वेदिनिर्माणयज्ञानुष्ठानलेखेन "एतत्सर्वं बाइबिलग्रन्थे वेदेभ्यो गतम्" इति निश्चीयते। किं परमेश्वरो नासिकामपि संधत्ते येन सुगन्धमघ्रासीत्? अप्ययं खीस्टीयानामीश्वरो नर इव नास्त्यसर्वज्ञः? यो हि कदाचिच्छपते, कर्हिचिदनुशेते, कदाचन शप्स्य इति ब्रूते। पूर्वमशपत भूयोऽपि च शप्स्यते। पूर्वं सर्वानवधीत्साम्प्रतं "कदाचिदपि न व्यापादयिष्यामीति" व्यातिष्ठते। व्यवहाराः खल्विमे बालोचिता न तु परमात्मनो नापि कस्यचिद् विदुषः। विचक्षणोऽपि हि स्ववाक्येषु स्थिरमतिः सत्यसन्धश्च भवति॥१४॥

(१५) तदनु परमेश्वरो नूहं तत्तनयाँश्चाशीर्भिर्युयोजाब्रवीच्च सर्वे जीवन्तो गतिमन्तश्च जन्तवो युष्मद् भोजनाय भविष्यन्ति। मया निखिलवस्तूनि हरितकानीव युष्मभ्यं प्रादायिषत। केवलं मांसं तज्जीवेन—रक्तेन समेतं नाशनीयम्।—तौ० उत्प० प० ९। आ० १, ३-४

स०—ननु कस्यचिदेकस्य प्राणेषु प्रहृत्यापरानन्दनेन खीस्टीयानां परमेश्वरो नास्ति निष्कृपः? ये हि पितरस्तनयमेकमभिघात्यापरं भोजयेयुः किं ते न भवन्ति पापीयांसः? इत्थमेवात्रावगन्तव्यं यतः सर्वे प्राणिनः परमात्मनः पुत्राः। एवमाचरन्नेषामीश्वरः शौनिकायते। अनेनैव च निखिलमानवा हिंसकाः सम्पादिताः। तस्मात् खीस्टीयानामीश्वरोऽकारुण्येन कथं नास्ति पापिष्ठः?॥१५॥

(१६) कृत्स्नायां भुवि एकैव भाषा एकैव चासीद् गीरपि। पुनस्ते अब्रुवन्—वयं किल नगरमेकमाकाशस्पर्शमट्टं चात्मकृते विरचयेम स्वयशश्च ख्यापयेम माभूत् कदाचिद् "वयमशेषवसुन्धरायां विच्छिन्ना भवेमेति"। ततः परमेश्वर आदमसन्ततिप्रारब्धनिर्माणं तन्नगरमट्टञ्च निरीक्षितुमवततार। परमेश्वरः प्राह "पश्यत इमे मानवा मिथोऽभिन्ना, वाक् चापि तेषामेकैव। आगच्छत वयमवतीर्य तेषां वाचं सम्मिश्रयेम येनाऽन्योन्यगिरं नावगच्छेयुः। ततः परमात्मना ते सकलभुवि विच्छेदमापादितास्तन्नगरनिर्माणाद् व्यरंसिषुः।—तौ० उत्प० प० ११। आ० १, ४-८

स०—यदा किलाशेषभुवि एकैव भाषाऽभविष्यत्तदानीं सर्वमनुजैरतितरामानन्दो लब्धोऽभविष्यत्। परं किं क्रियेत खीस्टीयानामीर्ष्यकः परमेश्वरः सर्वेषां भाषां संकीर्य सर्वनाशमकुरुत। महदिदमपराद्धं तेन। अप्येतत् शैतानकर्मणोऽपि नास्ति विगीतं कर्म? एतेन "खीस्टीयानामीश्वरः सनायिप्रमुखपर्वतेषु निवसति स्म। जीवानामभ्युदयञ्च नाभिलषति स्मेति" प्रतीयते। इदं हि कस्यचिदविदुषो व्यवहारो नतु परमात्मनः, कथञ्चैतत्पुस्तकमीश्वरप्रणीतं भवितुमर्हति?॥१६॥

(१७) ततः स भार्यां सरीमब्रवीत्। अवधेहि—त्वमसि सुन्दरी। अतो मिश्रवासिनस्त्वामवलोक्य वक्ष्यन्ति "इयं तस्य भार्या" इति ते च मां व्यापादयिष्यन्ति त्वां च जीवन्तीं रक्षिष्यन्ति तदा त्वया "अहं तस्य भगिनीति" वाच्यम्। येन त्वन्निमित्तेन मम भद्रं भवेत् तव हेतोश्च मम प्राणाः सुरक्षिता भवेयुः।—तौ० उत्प० प० १२। आ० ११-१३

स०—समीक्ष्यताम्—अब्राहिमः ख्रीस्टीयानां यवनानाञ्च महान् पैगम्बरः कीर्त्यते। तस्यैवालीकभाषणादिदुष्कर्माणि। अहो नु येषामीदृशाः पैगम्बराः कथं ते विद्यां श्रेयःपथं वाधिगच्छेयुः? ॥१७॥

(१८) परमेश्वरोऽब्राहिममब्रूत। त्वं त्वामनु त्वद्वंश्याश्च मम नियमं प्रतिपालयन्तु। स च नियमो यो वै आवयोरन्तरे समजायत, युष्माकं प्रत्येकस्य जनस्य वंठत्वं कारयितव्यम्। यूयमात्मनो देहस्याग्रत्वचं कृन्तत। युष्मान् माञ्चान्तरा तन्नियमचिह्नं व्यवस्थास्यति। युष्माकमष्टाहजातोऽर्भकोऽवश्यं वंठो भवेत्। कामं स गृहोत्पन्नस्त्वद्वंशासम्बद्धवैदेशिको द्रव्येण वा क्रीतो भवेत्। अथवा युष्मद्गृहोत्पन्नस्तव द्रव्येण वा लब्धो भवेत्। मदीयनियमश्च नियमार्थं सर्वदा युष्मन्मांसेषु स्थास्यति। अवण्ठो दारको (यस्याग्रिमा त्वगच्छिन्ना) आत्मजनेभ्यो विच्छिद्येत। तेन हि मम नियमः समुल्लङ्घित इति।—तौ० उत्प० प० १७। आ० ९। १०

स०—साम्प्रतं परमात्मनोऽस्वाभाविकनिदेशो निरीक्ष्यताम्—यदि हि नामेदं वण्ठत्वं परमात्मनेऽभीष्टमभविष्यत्तर्हि सर्गारम्भ एव तत्त्वचं न निरमास्यत्। सा चेश्वरेण नेत्रच्छद इव संगुप्त्यै विनिर्मिता। यतः खलु नितरां मृदुलं तत्स्थानम्। चर्मणाऽसंवृते हि तत्र पिपीलिकादंशेन लघ्वाघातेन वा महत्कष्टमनुभूयेत। लघुशङ्कासमनन्तरञ्च मूत्रांशेन वासांसि क्लिद्येरन्। तस्मादस्य (चर्मणः) कर्तनं विगीयते। कथं च साम्प्रतं ख्रीस्टीया एतदनुशासनं नानुतिष्ठन्ति? एष हि सार्वकालिको निदेशः। अपि चैतदननुष्ठानेन यीशोः साक्ष्यं "व्यवस्थाग्रन्थस्य लवमात्रमपि मृषा नास्ति" इत्यलीकमभवत्। ख्रीस्टीया अत्र मनागपि नावदधति ॥१८॥

(१९) अब्राहिमेणावसितसंलापः परमेश्वर ऊर्ध्वं जगाम।

—तौ० उत्प० प० १७। आ० २२

स०—एतेन "परमेश्वरः कोऽपि मानवः पतत्री ऐन्द्रजालिको वासीत् यो ह्युपरिष्टादधः, अधस्ताच्चोर्ध्वं यातायातं कुरुते स्म" इति प्रतीयते ॥१९॥

(२०) भूयश्चेश्वरो समरस्थलीषु तन्नयनपथं गतः। (तदानीं) स दिवससूर्यातपे पटमण्डपद्वारमध्यास्ते स्म ऊर्ध्वनयनः स पुरःस्थितान् मानवत्रितयानद्राक्षीत्। तानवलोक्योपकार्याद्वारात् तैः संगन्तुं प्राधावीत्। साष्टाङ्गपातञ्च प्राणंसीत्। अब्रूत च—अयि मम प्रभवः! इदानीमहं

भवदनुगृहीतः समजनि। भवन्तो निजकिङ्करसकाशाद् मापसरन्तु" इत्यहं सप्रश्रयं भवतोऽभ्यर्थये। किञ्चिज्जलमानयामि निजचरणान् प्रक्षालयन्तु भवन्तः। ततः क्वचित्प्रस्थातव्यम्। एतदर्थमेव भवन्तोऽत्र निजदासान्तिकमुपातिष्ठन्। तदनु तेऽब्रुवन्—"यथोक्तमाचरेति" एवमुक्तोऽब्राहिमः ससम्भ्रमं सरः समीपं पटमण्डपमुपाद्रवत्। तामुवाच च—शीघ्रतां विधेहि। मुष्टित्रयपरिमितं चूर्णमादाय कराभ्यां मृद्नीहि पूपाँश्च (रोटिकाः) श्रीणीहि। ततोऽब्राहिमो यूथमुपेत्य प्रशस्तं कोमलं वत्समादाय दासाय प्रायच्छत् सोऽपि शीघ्रमेव तमपाक्षीत्। अब्राहिमो नवनीतं पयः पक्ववत्सञ्च तेषां पुरः सन्निधाय तदन्तिके तरुतलेऽतिष्ठत्। ते चाभुञ्जन्त।

—तौ० उत्प० प० १८। आ० १-८

स०—निरीक्ष्यतां भद्राः! यदीयेश्वरो वत्सपिशितं भक्षयेत् कथं तदुपासका गोवत्सादिपशून् त्यजेयुः? निष्करुणः पिशिताशनलुब्धश्चैष हिंसक एव नतु परमेश्वरः। अपि च परमात्मना सह न जाने द्वौ मानवौ कावास्ताम्? अनेन "वन्यमानवानामासीदेका मण्डली, तस्याः प्रमुख एव बाइबिलग्रन्थे परमेश्वरनाम्ना व्यपदिष्टः" इति प्रतीयते। एतादृशैरेव व्यवहारैर्बुद्धिमन्त एतत्पुस्तकमीश्वरनिर्मितं न मन्यन्ते नाप्येतादृशमीश्वरमवगच्छन्ति।

(२१) परमेश्वरोऽब्राहिममब्रवीत्। सरः "स्थविराप्यहं बालकं जनयिष्यामि" इत्युक्त्वा कथमस्मयत अपि परमात्मनोऽसाध्यं किमपि?

—तौ० उत्प० प० २८। आ० १३। १४

स०—मनाक् ख्रीस्टीयेश्वरं प्रति अभिसमीक्ष्यताम् यो वै योषेव (शीघ्रमेव) प्रकुप्यति अधिक्षिपति च॥२१॥

(२२) ततः परमेश्वरः सदूमामूरानगरयोः परमात्मनः सकाशात् गन्धकं जातवेदसञ्चापातयत्। कृत्स्नास्ताः पुरः, समभागान्, नगरवासिनः, यत्किञ्चिच्च भुवि प्ररोहति स्म तत्सर्वं पर्यवर्तयत्।

—तौ० उत्प० प० १९। आ० २४, २५

स०—बाइबिलग्रन्थस्येश्वरे किञ्चिदवधीयताम्। यो हि बालप्रमुखेष्वपि मनागपि नादयत। अपि सर्वं एव तेऽपराधमकार्षुः? येन सर्वे भूमिं विपर्यस्य विनाशिताः। इदं हि न्यायदयाविरहितं विवेकशून्यञ्च। येषामीश्वर एवमनुतिष्ठेत् कथं तदुपासकास्तथा नाचरेयुः?॥२२॥

(२३) आगच्छत। आवां स्वजनकं द्राक्षारसं पाययेवहि तेन समं चात्मवंशप्रवर्तनाय शयीवहि। तदनु ताभ्यां तन्निशि स्वजनको द्राक्षारसं पायितः। अग्रजा च जनकेन सममस्वपीत्। आवामद्यापि निशि द्राक्षारसं पाययेवहि। त्वञ्चोपेत्य स्वपिहि। अतः लूतस्योभावपि दुहितरौ पितुर्गर्भमाधत्ताम्। —तौ० उत्प० १९। आ० ३२-३४, ३६

**स०**—यत्पानमदसंमूढा दुहितरो जनकाश्चापि कुकृत्येभ्यो न विप्रमुच्यन्ते तन्मद्यपानप्रसक्तानां ख्रीस्टीयानां दुश्चरितस्य कः खलु पारावारः ? अतः साधुभिर्मद्यपानस्य नामापि न ग्राह्यम् ॥२३॥

(२४) स्ववचोऽनुसरन् परमेश्वरः सरः समगात्। यथाप्रतिज्ञं च तथाऽकरोत् सरः गर्भवती बभूव।—तौ० उत्प० २१। आ० १,२

**स०**—पाठकाः ! किञ्चिदत्रावधीयताम्। परमेश्वरेण सरः द्रष्टुमभ्यागत्य गर्भं ग्राहिता सा। कीदृशमभूत्कर्मेदम् ? परमेश्वरसरःव्यतिरिक्तः कश्चिदन्यो गर्भस्थितिहेतुर्दृश्यते किमु ? परमात्मनः कृपया सरः गर्भवती बभूवेति प्रतीयते ॥२४॥

(२५) तदाब्राहिमः प्रत्यूषसि समुत्थायापूपं काचपात्रे जलञ्चादाय हाजिरः स्कन्धयोर्निधापितवान्। बालकञ्च तस्यै समर्प्य तां प्रातिष्ठिपत्। सा च दारकं क्षुपतलेऽपातयत्। तत्सम्मुखे चोपविश्याक्रन्दीत्। ततः परमेश्वरस्तस्य बालकस्य ध्वनिमश्रौषीत्।—तौ० उ० प० २१। आ० १४-१७

**स०**—(पाठकाः !) निभाल्यतां किञ्चित् ख्रीस्टीयपरमात्मनो लीला। प्रथमं तावत् सरः पक्षपातेन हाजिरं निष्कासयामास। तदनु हाजिरक्रन्दीत् शब्दञ्चार्भकस्य शुश्राव। अहो कियदद्भुतमेतत् ? असौ बाल एव रोदिति" इति परमेश्वरोऽभ्रमीदिति प्रतीयते। अपीयं परमात्मनस्तद्ग्रन्थस्य वा वाक् भवितुमर्हति ? प्राकृतजनातिरिक्तेन नान्येन केनचिदिदं लिखितं भवेत् ? अस्मिन्ग्रन्थेऽल्पीयः सत्यं विहाय सर्वमसारम् ॥२५॥

(२६) एतदनन्तरं कदाचिदीश्वरोऽब्राहिमं परीक्षाञ्चक्रे। तमब्रूत "अयि अब्राहिम ! त्वमेकमात्रं प्रियतममात्मनस्तनयमिजहाकं होमायोपायनीकुरु" इति। स च स्वसूनुमिजहाकं बद्ध्वा वेद्यां काष्ठेषु निहितवान्। अनन्तरञ्चासिपुत्रिकामादाय तनयव्यापादनाय हस्तं प्रासारयत्। ततः परमात्मनो दूतः स्वर्गात्तमाजुहाव। अब्राहिम ! अब्राहिम ! मा स्वकरं बाले प्रसारय नापि किञ्चित्कुरु यतो ह्यहं वेद्मि "त्वं परमात्मनो बिभेषि" इति।

—तौ० उत्प० प० २२। आ० १,२, ९-१२

**स०**— बाइबिलग्रन्थवर्णितः परमेश्वरोऽल्पज्ञो ननु सर्वज्ञ इति साम्प्रतं सुव्यक्तमभवत्। अब्राहिमोऽपि नितरां सरल आसीत्कथमन्यथेत्थं कर्त्तुमुद्यतोऽभूत् ? अपि च यदि नाम बाइबिलपरमेश्वरः सर्वज्ञोऽभविष्यत् तर्हि निजसर्वज्ञतया तदीयां भाविनीं श्रद्धामपि व्यज्ञास्यत्। एतेन ख्रीस्टीयानामीश्वरो नास्ति सर्वज्ञ इति प्रतीयते ॥२६॥

(२७) भवानस्माकं समाधिषु स्वेच्छया कञ्चिदेकं संवृत्य तत्र निजशवं निगहताम्।—तौ० उत्प० प० २३। आ० ६

**स०**—शवनिखननेन जगतो महदनिष्टं भवति, स हि पूतीभूय वायुं सन्दूष्य च रोगान् जनयति।

**खी०**—प्रेमास्पदस्य दाहो न प्रशस्यते। निखननन्तु स्वापकल्पमतो भूमौ निगूहनं वरम्।

**स०**—यदि यूयं मृतमपि स्निह्यथ तदा तं निजसद्मन्येव कथं न स्थापयथ? भूमावपि कथं निखनथ? येन जीवात्मना सह प्रीतिरासीत् स बहिर्निःसृतः। दुर्गन्धमयमृदा तु का नाम प्रीतिः? अथ चेत्तस्मायपि स्निह्यथ तत्कथं भूमौ निधध्वे? यतो हि यदि कश्चित् कमपि वदेत् "त्वां भूमौ निदधामि" इति स एतत् श्रुत्वा न कर्हिचित्प्रसीदति। अपि शवस्य चक्षुषोः काये च धूलिप्रस्तरेष्टिकाकर्करा—(चूना)—दिप्रक्षेपः, उरसि पाषाणस्थापनञ्च प्रीतिकर्म? पेटके संस्थाप्य निधानन्तु महता दुर्गन्धेन पवनं सन्दूष्य दारुणान् रोगानुत्पादयति। अपि चैकस्मै शवाय न्यूनातिन्यूनं षड्हस्तदीर्घा चतुर्हस्तव्यायता च भूरपेक्ष्यते। एवञ्च शतसहस्रलक्षकोटिमानवेभ्यः कृते मुधैव कियती भूमिरवरुद्धा भवति न तत्र क्षेत्रमुद्यानारोपो वा शक्यते विधातुम्, तस्माद् भूमौ स्थापनं सर्वतो गर्हितम्। ततः पयसि प्रक्षेपः किञ्चिदुत्कृष्टम्। यतो हि तं तदानीमेव जलजन्तवो विदार्य भक्षयन्ति परं यत्किञ्चिदस्थिमलादिकमम्भस्यवशिष्यते तद् दुर्गन्धमुत्पाद्य लोकं पीडयति। ततोऽपि किञ्चिद् वरं कानने विसर्जनम्। तत्र हि मांसाशिनः पशुपक्षिणस्तमत्स्यन्ति। तथापि तदस्थिमज्जामलादिकं विगलितं सद् यावद् दुर्गन्धमुत्पादयिष्यति तावानेव लोकस्यानुपकारो भविष्यति। दाहस्तु सर्वतः प्रशस्यते यतो हि तेन सर्वे पदार्थाः सूक्ष्मीभूय वायौ प्रसरन्ति।

**खी०**—दाहेनापि दुर्गन्धः सञ्जायते।

**स०**—अविधिना दाहे भवति मनाग् दुर्गन्धः, यो वै भूमिस्थापनादिजनितदुर्गन्धादल्पीयान् भवति, विधिना पुनः—यथाहि वेदेषु प्रतिपादितं तथा—दाहेनाल्पीयानपि दुर्गन्धो न सञ्जायते। वेदप्रतिपादितश्चायं प्रकारः—

हस्तत्रयखाता सार्धत्रयहस्तव्यायता हस्तपञ्चकदीर्घा तलप्रदेशे च सार्धवितस्तिमिता वेदी निर्मातव्या या हि आरोहावरोहक्रमेण निर्मिता भवेत् तस्यां न्यूनातिन्यूनमर्धमनमितानि चन्दनकाष्ठानि (अधिकग्रहणे तु यथाकामं वर्तितव्यम्) कृष्णागुरुपलाशादिसमिधश्च संस्थाप्य तदुपरि शवं निधापयेत्। शवदेहभितमाज्यं समादाय एकस्मिन् प्रस्थे रत्तिका परिमितकस्तूरी प्रक्षिप्य दाहयेत्। इयमेवान्त्येष्टिक्रिया नरमेधयज्ञः पुरुषमेधो वा। अकिञ्चनोऽपि विंशतिप्रस्थादूनमाज्यं चितायां न प्रक्षिपेत्कामं तद् भिक्षाचर्यया सजातीयप्रदानेन राज्ञा वा लब्धं भवेत् परं तथापि (घृतेनैव) दहेदथ चेत्कथञ्चिदपि घृतं न लभ्येत तथापि दहेदेव यतो हि काष्ठादिभिरपि दाहो भूमिस्थापना-

दिभ्यः प्रशस्तः। एकस्यां 'विस्वा'-परिमितायां भूमौ वेद्यां वा लक्षकोटिमानवा दग्धुं शक्यन्ते। एतेन भूरपि तथा दुष्पूतिपूर्णा न भवति यथा शवान्तर्निक्षेपेण। समाधिदर्शनेन कामं चेतसि ग्लानिरपि भवति। अतएव भूनिक्षेपः सुतरां गर्हितः ॥२७॥

(२८) धन्यः खलु मम स्वामिनोऽब्राहिमस्य प्रभुः परमेश्वरः, येन मम स्वामी स्वदयया सत्येन च न परित्यक्तः। परमेश्वरः पथि मम प्रभोर्भ्रातृगृहान् प्रति मां प्रत्युदतिष्ठत्।

—तौ० उत्प० प० २४। आ० ॥ २७ ॥

स०—अपि अब्राहिमस्यैव स ईश्वर आसीद् यथाद्यत्वेऽध्वदर्शिनो (पुरोगाः) पुरो गच्छन्तो मार्गमुपदिशन्ति, तथैवेश्वरेणापि चेष्टितम्। कथं पुनः साम्प्रतमध्वानं न दर्शयति? कथं वा मनुष्यान् न सम्भाषते? तस्मादीदृशा व्यवहाराः परमात्मनस्तद्ग्रन्थस्य वा न कर्हिचिद्भवितुमर्हन्ति अपि त्वरण्यवासिनामेव ॥२८॥

(२९) इस्रायेलस्य तनयानामिमानि नामानि। अग्रजो नबीतः, अपरे—कीदारः, अदबियेलः, मिबसामः, मिसमायः, दूमः, मस्सः, हदरः, तयमः, यितूरः, नफीसः, किदमश्चेति।

—तौ० उत्प० प० २५। आ० १३—१५

स०—असाविस्रायेलोऽब्राहिमेण हाजिरनाम्न्यां निजदास्यां जनितोऽभवत् ॥२९॥

(३०) अहं तव पितू रुचिसमनुकूलं स्वादु भोजनं पक्ष्ये तच्च त्वया पितुरन्तिकं नेयम्। येन स तदशित्वा मरणात्पूर्वं त्वामाशीभिर्वर्धयेत् (तुभ्यमाशिषः प्रदद्यात्)। तदनु रिबकः स्वगृहाज्ज्येष्ठसूनोरेसो नामकस्य सुप्रशस्यं नेपथ्यमादाय कनीयांसं पुत्रं याकूबं परिधापितवती। अपि च छागशिशोश्चर्म तस्य हस्तयोः स्निग्धग्रीवायाञ्च संवस्त्रयामास। ततो याकूबः स्वजनकमुवाच—अहं भवतो ज्येष्ठसुनुरेसोरस्मि। भवद्वचोऽनुरूपमहमकरवम्। उत्थीयताम्, मम मृगपिशितञ्च भक्ष्यतां येन भवत्प्राणा मह्यमाशिषः प्रदद्युः।—तौ० उत्प० प० २७। आ० ९। १०। १५। १६

स०—दृश्यतां पाठकाः! पूर्वमीदृशच्छद्मव्यवहारेणाशिषः प्रगृह्य तदनु सिद्धा पैगम्बराश्च जायन्ते। अप्येतन्नास्ति आश्चर्यप्रदम्? सत्स्वेतादृशेषु खीस्टीयानामध्वदर्शकेषु एषां मतं भ्रमपूर्णमित्यत्र कः सन्देहः? ॥३०॥

(३१) किञ्च याकूबो महति प्रत्यूषसि समुत्थाय स्वोपधानीकृतं प्रस्तरं स्तम्भरूपेण स्थापयामास तस्मिन् तैलं न्यषिञ्चत्। तत्स्थानञ्च नाम्ना वैतलहेमेति चकार। मया स्तम्भरूपेण निवेशितोऽयं प्रस्तरः परमात्मनो गृहं भविष्यति।—तौ० उ० प० २८। आ० १८, १९-२२

स०—वन्यानां कार्येषु किञ्चिदवधीयताम्। एभिरेव पाषाणाः स्वयमन्यैश्च पूजिताः। अमुमेव यवनाः पवित्रं वैतलंहेमेति संचक्षते। अप्ययमेव प्रस्तरः परमेश्वरनिकेतनम्? किमस्मिन्पाषाण एवेश्वरो निवसति स्म? अहह! किमु वक्तव्यम्। अयि ख़्रीस्टीयाः! यूयमपि महाप्रतिमा-पूजकाः स्थ ॥३१॥

(३२) परमेश्वरो राखिलां सस्मार। तस्याञ्चावदधे, तस्याः कुक्षिमावव्रे सा च गर्भवती बभूव, पुत्रमसूत, परमेश्वरञ्चाब्रवीत् अयि परमात्मन्! त्वया ममाऽपवादः परिहृतः।—तौ० उत्प० ३०। आ० २२-२३

स०—अहह ख़्रीस्टीयानामीश्वर! त्वया साधु कृतं नूनं महावैद्योऽसि। ननु कान्यासन् स्त्रीणां कुक्ष्यपावरणसाधनानि शस्त्राण्यौषधानि वा? वस्तुतः सर्वमिदमन्धपरम्परा ॥३२॥

(३३) किञ्च परमेश्वरो निशीथे स्वापेषु लावानकमुपाजगाम उवाच च "सावहितो भव। प्रभुं याकूबं भद्रमभद्रं वा किमपि मा वादीः त्वं हि स्वपितुः सद्मप्रकाशमभिलषसि। किमर्थं त्वं मम देवानचूचुरः।

—तौ० उ० ३१। आ० २४। ३०

स०—अस्मदुद्धृतमेतद्वचः केवलमुदाहरणमात्रम्, बाइबिलग्रन्थे हि नैकत्र "सहस्रशो जनान् स्वापेषूपातिष्ठत् परमेश्वरः, तैः सह समालपत्, प्रत्यक्षं समागतः, तेन भुक्तम्, पीतम्, स यातायातञ्चाकरोदिति" विन्यस्तम्। न जाने साम्प्रतं स क्व गतः? नहीदानीं स्वापेषु जागरितावस्थायां वा परमेश्वरः कञ्चिदुपतिष्ठते। एतेनेदमपि प्रतीयते "यदेत आरण्याः पाषाणादिप्रतिमा देवधियार्चन्ति स्म" इति। परं तदेवात्राश्चर्यं यदेषा-मीश्वरोऽपि पाषाणानेव देवान् मनुते कथमन्यथा तेषां चौर्यं सङ्गच्छेत?

(३४) याकूबः स्वपथमगच्छत् परमात्मनो दूताश्च तेन समगंसत। याकूबस्तानभिसंप्रेक्ष्याब्रवीत् "इदं परमात्मनः सैन्यमिति"।

—तौ० उ० प० ३२। आ० १। २

स०—साम्प्रतं ख़्रीस्टीयानामीश्वरस्य मनुष्यत्वे मनागपि सन्देहो नावशिष्टः। स हि सैन्यं विरक्षति। सति च सैन्ये शस्त्राण्यपि भविष्यन्ति यत्र तत्र चाक्रम्य युद्धमपि तेन कृतं भवेत्। अन्यथा किं नाम सैन्य-प्रयोजनम्?॥३४॥

(३५) किञ्च याकूब एकाकी समतिष्ठत। अथचाप्रभाते तेनैको नरो मल्लयुद्धमकार्षीत्। "नाहमिमं विजेतुं क्षमः" इति विभाव्य तस्योरु-मस्प्राक्षीत्। तदा याकूबस्योरुनाडिस्तेन सह मल्लयुद्धेन समारूढः। ततः स तमवादीत् "अनुजानीहि मां गन्तुम् (विसृज मां प्रयातुम्) "सन्निहिता प्रभातवेला" इति। सोऽब्रवीत्—"ऋते आशिषः प्रदानात्त्वां नाहं

विमोक्ष्यामि । तदा स तमब्रूत किं तव नामधेयमिति ? स उवाच–"याकूब:" इति तदा सोऽब्रवीत्—अत: परं तव याकूब इति नामधेयं न भविष्यति अपि तु यिस्रायेल:, यतस्त्वं राजवत् परमात्मना मानवैश्चायुद्धयत विजेता चाभवत् । ततो याकूबस्तमप्राक्षीदुवाच च । "किं तव नामधेयमित्यहमभ्यर्थये" । सोऽत्रादीत्—"किमर्थं त्वं मन्नाम पृच्छसि ?" इदमुक्त्वा तस्मा आशिष: प्रादात् । याकूबस्तत्स्थानं नाम्ना फनूयेल इति चकार । यतोऽहमत्र परमेश्वरं प्रत्यक्षमद्राक्षम्, प्राणाश्च मे सुरक्षिता अभवन्निति । यदा च स फनूयेलमुल्लङ्घ्यागच्छत् तदा सूर्यस्तस्मिन्प्राकाशत स च स्वोरुणा लङ्गति स्म । अत एव यिस्रायेलवंशसम्भूता अद्यापि तमूरुनाडिं नाश्नन्ति । यतो वै स याकूबस्योरुम् (यो हि समारूढोऽभवत्) अस्प्राक्षीत् ।

—तौ० उत्प० प० ३२ । आ० २४-३२

**स०**—यतो वै ख्रीस्टीयानामीश्वरो मल्ल: अत एव सरहं राखिलाञ्च पुत्रप्रदानेनान्वकम्पत । किमयं कर्हिचिदपीश्वरो भवितुमर्हति ? अन्याप्यस्य लीलाभिसमीक्ष्यताम् । कश्चनैको नामधेयं पृच्छेदपरस्तन्न ब्रूयात् ? परमात्मना तदीयनाडि: समायोजिता जितोऽपि च परं यदि स वैद्योऽभविष्यत् तर्हि नाडिं यथावस्थितामप्यकरिष्यत् । एतादृशपरमात्मनो भक्त्या याकूब इवान्येऽपि भक्तजना विलङ्गिता: स्यु: । परमात्मन: साक्षात्कारो मल्लयुद्धञ्च तस्य देहित्वं विना कथं शक्नोति भवितुम् ? केवलमिदं बालविलसितम् ।।३५।।

(३६) ईश्वरस्य । मुखमद्राक्षीत् ।–तौ० अल्प० पर्व ३३ । अ० १०

**स०**—यदा ईश्वरस्य मुखमस्ति तदान्या अवयवा अपि भविष्यन्ति तथा च स जन्म-मरणयुक्तोऽपि अभविष्यत् ।

(३७) येरो यहूदाहस्याग्रजस्तनय: परमात्मन: समक्षे दुर्वृत्त आसीदत: प्रभुस्तं जघान । ततो यहूदाहो योनानमब्रवीत्—"त्वं भ्रातृजायामुपगम्य परिणीय च तस्यां भ्रातुर्वंशं प्रवर्तयेति" । योनान:—"अयं वंशो मम न भविष्यतीति" विवेद । इदञ्चाभवत् । यदा स भ्रातृजायामुपातिष्ठत तदा शुक्रं भुवि समपातयत् । तस्यैतत्कार्यमपि परमात्मनो दृष्टावनादरणीयमासीत् । अतो मारित: सोऽपि प्रभुणा ।

—तौ० उत्प० प० ३८ । आ० ७-१०

**स०**—अवधीयताम्—मानवानां कर्माणीमान्युत परमात्मन: ? यदा च येरोजायया सह नियोगोऽभवत् कथं पुनस्तं व्यापादयामास ? कथं वा तद्बुद्धिं न पर्यशोधयत् ? एतेनायं वैदिको नियोग: पुरा सर्वत्र लब्धप्रचारोऽभवदिति सम्यक् सिद्ध्यति ।।३७।।

## पुरातनयात्रापुस्तकम्

(३८)—कदाचिदित्थं बभूव। यदा वै मूषो यौवने पदमादधौ तदैकदा स मिश्रदेशीयेन केनचित् ताड्यमानं इबरानीनामानं भ्रातरमपश्यत्। स इतस्ततः समवलोकयत् कञ्चिदनवलोक्य तं मिसरं व्यापादयामास सिकतासु चान्तर्धापयामास। अन्येद्युर्यदा स बहिर्गतवान् तदा तेन मिथो विवदमानौ द्वौ यिब्रीयौ समवलोकितौ 'कथं त्वमात्मनः प्रतिवेशिनं हंसि'' इति जगाद च। सोऽप्येनं प्रत्यभाषत कस्त्वामस्मास्वध्यक्षं स्थेयं वाऽकार्षीत्। यथा च त्वं मैसरं निहतवान् तथैव मामपि हन्तुं किल वाञ्छसि। ततो मूषो बिभाय पलायाञ्चक्रे च।—तौ० या० प० २। आ० ११-१५

स०—पाठकाः। अवधीयतां किञ्चित्। बाइबिलग्रन्थस्य प्रधानसिद्धः खीस्टधर्मस्यादिप्रवर्तको मूषः क्रोधादिदुर्व्यसनेषु संसक्तो मानवानां घातकः प्राकृततस्करवद् राजदण्डाद् भीतश्चासीत्। यदा च स्वापराधं गोपायति स्म तदा नूनमलीकवाद्यपि भविष्यति। मूषसदृशोऽपि परमात्मानं साक्षाच्चकार महासिद्धश्च समजनि आश्चर्यमेतत्। यहूदीयप्रमुखान् धर्मांश्च प्रवर्तयामास। ते धर्मा अपि तमेवानुकुर्वते। खीस्टीयानां मूषप्रमुखाः सर्वे मूलपुरुषा वनेचरा आसन् न तु विद्यावन्तः ॥३८॥

(३९) यदा परमेश्वरोऽपश्यत्, यत् स किञ्चिद् द्रष्टुमेकपार्श्वेऽक्रामत् तदेश्वरस्तं क्षुपान्तरात् "हे मूसा ! हे मूसेति आजुहाव। तत "इतोऽहमिति" स उवाच। तदेश्वरोऽवदत्, "न समीपमुपयाहि, स्वपादाभ्यामुपानहौ च पृथक् कुरु, यतो यत्र (यस्मिन्स्थाने) स्थितस्त्वम् पवित्रभूमिरेषा।

—तौ० या० पु० प० ३। आ० ४-५

स०—विचारयत, मानवं हत्वा बालूरेणुषु (सिकतासु) निखातयन्तं नृशंसं नरमीश्वरो निजमित्रं कृश्चीनजनाश्च तमीश्वरावतारं (पैगम्बरम्) मन्यन्ते। अपि च यदा युष्माकमीश्वरो मूसामहोदयं पवित्रभूमावुपानहावानेतुं न्यषेधीत् तदा कथं यूयं (कृश्चीनजनाः) तदादेशविरुद्धमाचरथ ?

प्र०—वयमुपानह्स्थाने शिर-उपवस्त्रमवतारयामः (दूरीकुर्मः)।

उ०—अयमपरोऽपराधो युष्माभिराचरितः, यतः—शिर-उपवस्त्रदूरीकरणाय-(शिर-उपवस्त्रावतारणाय) नहीश्वरादेशः, नाऽपि युष्मद्धर्मपुस्तके विलिखितम्। अतः समादिष्टवस्तुनोऽनवतारणमनादिष्टस्य चावतारणमित्युभयमपि युष्मद्धर्मपुस्तक-(बाइबिल)-विरुद्धम्।

प्र०—अस्माकं यूरोपदेशे शैत्याधिकं वर्तते, अतो वयं नह्युपानहाववतारयामः ?

उ०—किं शीतं शिरो न बाधते। यद्येतत्तदा यदा यूरोपदेशं गच्छत

तदैवमाचरत, परं यदाचास्मद्गृहे—आस्तरणे वा समायात तदा तूपानहव-तारणमेव कुरुत, अन्यथा यूयं बाइबिलपुस्तकविरुद्धमाचरत, यच्च युष्माभिर्नानुष्ठेयम् ।।३९।।

(४०) "किं तव करे ?" इति परमेश्वरो मूसामहाभागमपृच्छत् । "यष्टिकैका" इति स प्रत्युदतरत् । ईश्वरस्तां यष्टिकां भूमौ प्रक्षेपणाय समादिशत् । भूमौ पतन्त्येव सा सर्पतां गता, मूसा च तदग्रेऽभ्यधावत् ।" स्वहस्तेनैतत्पुच्छं गृहाण" इति परमेश्वरस्तं पुनरादिदेश । यदा स हस्तं प्रसार्य तं सर्पमग्रहीत्, सर्पः पुनस्तद्धस्ते यष्टिका बभूव । पुनस्तमीश्वरः "स्वहस्तं निजोत्संगे कुरु" इत्यादिदेश । एवं कुर्वत एव तस्य हस्तो हिमवच्छ्वेतवर्णः कुष्ठरोगाक्रान्तश्चाभवदीश्वरस्तं पुनरपि हस्तमुत्संगे कर्तुमादिशत् । यदा स पुनस्तथैवाकरोत्तदाऽपश्यत् यदङ्काद्बहिरागतस्तस्यकरोऽन्यदेहाङ्गानीव पूर्णस्वस्थो जातः । तदेश्वरस्तमुवाच "त्वं नीलनदीजलं गृहीत्वा ऊषरे (शुष्क-अनुर्वर-भूमौ) निपातय । तत्र निपातनेनैव तज्जलं रक्तरूपं-(रुधिरं) सम्पत्स्यते ।" —तौ० या० प० ४ । आ० २-४, ६-७,९

**स०**—पश्यत सम्प्रति, कियती विचित्रेयमैन्द्रजालिकलीला । ऐन्द्र-जालिकोऽयमीश्वरः तत्सेवको मूसा, तदनुयायिनश्च सर्वे एवाद्भुतमति-धारिणः । किमद्यत्वेऽपि ऐन्द्रजालिका एवंविधं चमत्कारजालं न रचयन्ति ? कीदृशोऽयमीश्वरः ?

वस्तुतस्तु—ऐन्द्रजालिक एव प्रतीयते ।

कथं विद्वांसः स्वीकरिष्यन्ति एवंविधं वाग्जालम् ?

प्रतिवारञ्च "ईश्वरोऽहम्" अबिरहाम, इजहाक, याकूब आदीना-मीश्वरोऽहम् इति सर्वसमक्षं स्वमुखेनैव प्रख्यापयति (प्रशंसति) । नैषोत्तम-जनानां सरणिः । दम्भिलघुजनानामेव पद्धतिरेषा ।।४०।।

(४१) अजशिशुं व्यापादयत् । मुष्टिमितं यूफस्तवकमादाय भाजन-स्थितरक्ते तमार्द्रीकृत्य द्वारोर्ध्वदारु द्वारमभितश्च तेन मुद्रयत । युष्माकं कोऽपि आप्रभातं गृहान्न निःसरतु । यतो वै परमेश्वरः मिसरदेशीयान् हन्तुं प्रयास्यति । यदा च स द्वारोर्ध्वदारुणि द्वारस्योभयपार्श्वयोश्च रुधिरं विलोक-यिष्यति तदा द्वारमुल्लङ्घ्य यास्यति । युष्मान्हन्तुं युष्मद्गृहेषु घातकान् न प्रेरयिष्यति नापि स्वयमागमिष्यति ।—तौ० या० प० १२ । आ० २१-२३

**स०**—अहो नु यः किल कुहकवद्विचेष्टते स कर्हिचित्सर्वज्ञः परमेश्वरो भवितुमर्हति ? स हि रक्तमुद्रां वीक्ष्यैव यिस्रायेलकुलं परिचिनोति । कार्यमिदं क्षुद्रबुद्धेर्मानवस्य वर्तते । एतेन इमा वार्ताः केनचिदारण्यकेन विलिखिताः" इति प्रतीयते ।।४१।।

(४२) ततश्चैवं समजनि यत्–निशीथे परमेश्वरो मिसरदेशोद्भवान्

सकलप्रथमजानवधीत्। फिराह्यूनस्य प्रथमगर्भसम्भवात्—यः स्वसिंहासनमधितिष्ठति स्म—कारागुप्तस्याग्रजपर्यन्तान् पशूनाञ्च प्रथमजान् जघान। रात्रौ फिराह्यून उत्तस्थौ, स, सर्वे तत्परिचारकाः, कृत्स्नमिसरदेशीयाश्चोत्तस्थुः। मिसरदेशे च महानाक्रन्द आसीद् यतो हि तत्र नासीत्तादृशं गृहं यस्यैको जनो मृतो न भवेत्।—तौ० या० प० १२। आ० २९, ३०

**स०**—शोभनं खलु यत्—ख्रीस्टीयानामीश्वरेण दस्युनेवार्धरात्रे निष्कृपेणापराधं विनैव शिशवो वृद्धाः पशवश्चापि व्यापादिताः। मनागपि दया न समुत्पन्ना। मिसरदेशे महताक्रन्देनापि ख्रीस्टीयानामीश्वरस्य चेतसो नैष्ठुर्यं न व्यपगतम्। ईदृशं कृत्यं प्राकृतस्यापि नरस्य न भवति परमात्मनस्तु किमु वक्तव्यम्। वस्तुतो नात्र किमप्याश्चर्यं यतः खलु "मांसाहारिणः कुतो दयेति" विद्यते कस्यचिदभियुक्तस्य सत्यं वचः। ख्रीस्टीयानामीश्वरो मांसाशी किं तस्य दयया प्रयोजनम्॥४२॥

(४३) परमेश्वरो युष्मत्कृते योत्स्यते। ब्रूहि यिस्रायेलवंशजान् तेऽग्रे प्रतिष्ठन्तामिति (तेऽभिमुखं गच्छन्त्विति) त्वं तत्र वेत्रमुत्थापय स्वहस्तञ्च समुद्रोपरि प्रसारय द्वेधा च तं विभजस्व। यिस्रायेलस्य सन्ततयश्च सागरस्य मध्येन शुष्कवर्त्मना प्रयास्यन्ति।—तौ० या० प० १४ आ० १४-१६॥

**स०**—अयि महानुभाव! पुरा किल परमेश्वरो यिस्रायेलकुलमविपालोऽजावृन्दमिवानुगच्छति स्म न जाने साम्प्रतं क्वान्तर्हितः। अथ चेत्सोऽधुनापि अभविष्यत्तर्ह्युदन्वतो मध्येतो विश्वतो वाष्पशकटीनां पथो निरमापयिष्याम येन कृत्स्नं जगदुपकृतं नौकादिनिर्माणश्रमतो विमुक्तञ्चाभविष्यत्। परं किं विदधीमहि? न जाने ख्रीस्टीयानामीश्वरः क्वान्तर्हितः सन्नास्ते? एवमादीन् भूयसो व्यवहारान् बाइबिलपरमेश्वरो मूषेन साकमन्वतिष्ठत्। अतएव यादृशः ख्रीस्टीयानामीश्वरस्तादृशा एव तत्सेवकास्तन्निर्मितपुस्तकञ्च वर्तते। ईदृशं पुस्तकमेवंविधः परमेश्वरश्चास्मत्तो यदि पृथगवतिष्ठेत तदैव शोभनम्॥४३॥

(४४) यतः खल्वहं परमेश्वरस्तवाधिपतिरुद्दीप्तः सर्वशक्तिमानस्मि। ये मां विद्विषन्ति तत्पित्रपराधदण्डेन तृतीयचतुर्थवंशश्रेणिपर्यन्तं तेषां पुत्रान् दण्डयितास्मि।—तौ० या० प० २०। आ० ५।

**स०**—अहो नु कीदृशोऽयं न्यायः, यत्र जनकापराधेन चतुर्थवंशश्रेणिपर्यन्ताः सूनवो दण्डयन्ते। अपि श्रेष्ठस्य पितुर्दुरात्मानो दुर्जनस्य च साधवस्तनया न भवन्ति? यदि नामैतत्सत्यं कथं तर्हि चतुर्थवंशश्रेणिं यावत् दण्डं प्रदास्यति? अपि चैवं ततः परभवासु वंशश्रेणीषु समुत्पन्नान् दण्डयितुं नार्हति। विनापराधं कस्यचिद् दण्डनमन्यायकारिणः पन्थाः॥४४॥

(४५) अधीहि विश्रामवासरस्य तत्पावित्र्यविरक्षणाय। षडहानि

विधेहि परिश्रमम्। सप्तमश्च दिवसस्तव प्रभोः परमेश्वरस्य विश्रामवासरः। परमेश्वरो विश्रामदिवसमाशीर्भिर्युयोज।

—तौ० या० प० २० आ० ८—११

**स०**—अपि केवलो रविवार एव पवित्रोऽन्यानि च षडहान्यपवित्राणि? अपि परमेश्वरः षड् वासरान् महापरिश्रमं चक्रे? येन क्लान्तः सन् सप्तमेऽहनि संविवेश। आदित्यवारायाशिषश्चेत् प्रादात् सोमवारादिषड्वासरेभ्यः किं प्रायच्छत्? नूनं शापो दत्तो भवेत्। परमीदृशानि कर्माणि विदुषोऽपि न भवन्ति किमुत परमेश्वरस्य। ननु रविवारे के गुणाः सोमवारादिषु च के दोषा आसन् येनैकं पवित्रीकृत्य वरं प्रादात्, इतरे च वृथैवापवित्राः सम्पादिताः ॥४५॥

(४६) आत्मनः प्रतिवेशिनि मृषा साक्ष्यं माऽदाः। निजप्रतिवेशिनो भार्यां दासं दासीमनडुहं रासभमन्यद्वा प्रतिवासिनः किञ्चिद् वस्तु मा गृधः।

—तौ० या० प० २० आ० १६—१७

**स०**—अहो नु! अत एव ख्रीस्टीया वैदेशिकानामर्थेषु पिपासिता इव जलेषु बुभुक्षिता इवान्नेषु परापतन्ति। यथायं केवलं स्वार्थपक्षपातयोर्व्यवहारस्तथैव ख्रीस्टीयानामीश्वरोऽपि भविष्यति "वयं सर्वमानवान् प्रतिवेशिनो मन्यामहे" इति चेत्कैश्चिदुच्येत के नाम तर्ह्यन्ये (मनुष्यव्यतिरिक्ताः) सभार्या दासीमन्तश्च यानप्रतिवासिनो विभावयेम? तस्मात्सर्वमिदं स्वार्थिनां विचेष्टितं न तु परमेश्वरस्य ॥४६॥

(४७) यदि कश्चित्कमपि मनुजं हन्यात् स च पञ्चत्वमियात् तर्ह्यसंशयं स व्यापादयितव्यः। अथ चेत् स स्वयं हननकर्मण्यग्रसितः परं परमेश्वरेण तद्धस्तयोः समर्पितः स्यात् तदाहं त्वां पलायनस्थानं निर्देक्ष्यामि।

—तौ० या० प० २१। आ० १२, १३

**स०**—परमात्मनोऽयं न्यायः सत्यश्चेत् किमिति मूषं—यो वै जनमेकं निहत्य निचखान पलायाञ्चक्रे च—नादण्डयत्। परमेश्वरस्तद्धातायैव तं मूषाय समर्पितवानिति चेत्प्रत्युच्येत एवमपीश्वरः पक्षपाती समभवत् कथं हि मूषस्य नरपतिना न्यायो न कारितः ॥४७॥

(४८) किञ्च कुशलार्थं परमात्मनः कृते वृषभैः शान्तिहोममचीकरत्। तदनु मूषो रक्तार्धं पात्रेषु न्यधासीत्, अर्धञ्च वेद्यामसिञ्चत्। किञ्च मूषः तदसृग्जनेषु सिक्तवानब्रवीच्च—"रक्तमिदं तन्नियमस्य यो वै परमात्मना आभिरेव वार्ताभिर्युष्माभिः सह कल्पितः" इति। "पर्वते ममान्तिकमुपैहि तत्रैव चावासं कुरु। त्वामहं प्रस्तरशिलाः, व्यवस्थाः, आदेशान्—ये मया विलिखिताः—प्रदास्ये" इति परमेश्वरेण मूष आज्ञप्तः।

—तौ० या० प० २४। आ० ५, ६, ८, १२

स०—समीक्ष्यताम्—इमे व्यवहारा आरण्यकानां सन्ति न वा ? किञ्च परमेश्वरोऽनडुहां बलिमादत्ते वेद्याञ्च रुधिरं निषिञ्चति । अहो नु कीदृशोऽयमारण्यकानामसभ्यानाञ्च व्यवहारः । यदा ख्रीस्टीयानां परमेश्वरः स्वयं वृषभाणां बलिमाददीत कथं तद्भक्ता गोबलिदानप्रसादेनोदरं न बिभृयुः ? कथं वा जगतः हानिं न कुर्वीरन् । एतादृशैरेवासदुपदेशैर्बाइबिल-ग्रन्थः परिपूर्णः । अस्यैव कुवासनाभिर्वेदानपि मृषादोषैर्दूषयितुं कामयन्ते । परं वेदेष्वीदृशवार्तानां नामापि न विद्यते । "ख्रीस्टीयानामीश्वर आसीत्-कश्चन पर्वतीयस्तत्रैव च निवसति स्म" इत्यपि सुनिश्चितम् । ख्रीस्टीयाना-मीश्वरो मसिलेखनीपत्रादिनिर्माणमजानन्नप्राप्ततद्वस्तुश्चैव प्रस्तराणां शिलासु विलिख्य ददाति स्म । वनेचराणामेव च समक्षमात्मनः परमेश्वरत्वं प्रतिष्ठापितं तेन ।।४८।।

(४९) अपि चाह त्वं मे रूपं द्रष्टुं न शक्नोषि यतो मां प्रेक्ष्य कोऽपि नरो न जीविष्यति । परमेश्वरो भूयः समुवाच—अस्त्येकं ममान्तिके स्थानम्, त्वञ्च तत्र शैले सन्तिष्ठस्व । तत एवं भविष्यति—यदा मम प्रतापः प्रसरिष्यति तदाहं त्वां गिरिकन्दरायां निधास्यामि । यावदहं निष्क्रमिष्यामि तावत्त्वां मम हस्तेनाच्छादयिष्यामि । मम करञ्चोत्थापयिष्यामि । त्वं केवलं मम पृष्ठदेशमवलोकयिष्यति नतु मम रूपं द्रक्ष्यसि ।

—तौ० या० प० ३३ । आ० २०—२३

स०—निभाल्यतां पाठकाः ! ख्रीस्टीयानां परमेश्वरो मनुष्यवद्देहवान् वर्तते । कथञ्च मूषेण सह प्रपञ्चमारचय्य स्वयमीश्वरः समजनि । केवलं पृष्ठदेशं द्रक्ष्यसि नतु रूपमिति सत्यञ्चेत् स्वहस्तेन स नाच्छादित इत्यपि सुनिश्चितम् । यदा परमेश्वरेण मूषः स्वहस्तेनान्तर्हितः किं तदानीं तेन तत्कररूपं नावलोकितं भविष्यति ? ।।४९।।

## लयव्यवस्थापुस्तकम्

(५०) प्रभुः मूषमाजुहाव । मण्डल्याः पटमण्डपतश्चेदं वचनमब्रवीत् । यिस्रायेलस्य सन्तानानाकारय तांश्च प्रब्रूया यदि युष्मासु कश्चन प्रभवे उपायनमुपयच्छेत्तर्हि स स्वोपहारं पशूनाम्-गवश्वाव्यजानाम्—उपयच्छेत् ।

—तौ० लयव्य० प० १ । आ० १, २

स०—अवधीयतां किञ्चित् । गवश्वादीनामुपहारग्रहीता ख्रीस्टीया-नामीश्वरो यो ह्यात्मने बलिं प्रदातुमुपदिशति गोवृषभादिपशूनां रुधिरस्य पिपासुर्मांसस्य च बुभुक्षुरस्ति नवा ? अतएव सोऽहिंसकेष्वीश्वरकोटौ वा परिसंख्यातुं न शक्यते स हि मांसाशी प्रपञ्ची मानव इव विचेष्टते ।।५०।।

(५१) स च तमनडुहं परमात्मनः पुरस्ताद् व्यापादयेत्, याजकाः—हारूनसूनवो रुधिरमन्तिकमुपानयन्तां मण्डल्याः पटमण्डपस्य द्वारि स्थितां यज्ञवेदीं परितश्च तन्निषिञ्चन्तु। तदनु स तदुपहारचर्माच्छिनत्तु तस्य शकलानि च विदधातु। हारूनतनया याजका यज्ञवेद्यामग्निं निधाय तत्र काष्ठानि चिन्वताम्। पुनस्ते हि तानि शकलानि, शिरः चिक्कणद्रव्यञ्च यज्ञवेदिवह्निस्थितकाष्ठेषु विधिपूर्वकं निदधताम्। येनोपहारोऽस्य बलिर्भवेत्। यो हि वह्निना परमात्मने गन्धग्रहणायोपायनीकृतः।

—तौ० लयव्य० प० १। आ० ५—९

**स०**—मनाग् विचिन्त्यताम्—परमात्मनः पुरस्तात् तद्भक्ता वृषं हन्युः, स च घातयेत्, रुधिरमभितः सिञ्चेयुः, अग्नौ तं जुहुयुः, ईश्वरो गन्धं जिघ्रेत्, अपीदं नास्ति सौनिकगृहादन्यूनम्? अतएव बाइबिलग्रन्थो नेश्वरप्रणीतो नापि तत्र वर्णितो वनेचरमानव इव विचेष्टमानः परमेश्वरो भवितुमर्हति ॥५१॥

(५२) भूयोऽपि परमेश्वरो मूषमिदं ब्रुवन्नाह—यद्ययमभिषिक्तो याजकः प्राकृतजनवत्पापमाचरेत् तत्स्वानुष्ठितपापनिमित्तेन निजपापोपहाराय निष्कलङ्कां वत्सतरीं परमेश्वराय समानयेत्। वत्सतर्याः शिरसि स्वकरं निदध्यात्। वत्सतरीञ्च परमात्मनः समक्षमुपहरेत्।

—तौ० लयव्य० प० ४। आ० १, ३, ४

**स०**—पाठकाः! समीक्ष्यन्तां पापविमोकप्रायश्चित्तानि। स्वयं पापमाचरन् गवाद्युत्तमपशून् निहन्यात्, परमेश्वरश्च घातयेत्। धन्याः खलु ख्रीस्टीया ये हीदृशकर्मणामनुष्ठातारमनुष्ठापयितारञ्च परमेश्वरं मन्यमानाः स्वमोक्षादीनाशासते ॥५२॥

(५३) यदा कश्चनाध्यक्षः पापमनुतिष्ठेत्तदा स निजदुरितोपहाराय निर्दोषमजशावकमुपानयेत्। तस्य च परमात्मनः सम्मुखे बलिदानं कुर्यात्। इदं हि पापोपहरणम्।—तौ० ल० प० ४। आ० २२—२४

**स०**—अहह! एवं सति एषामध्यक्षाः—न्यायाधीशाः सेनापतिप्रमुखाश्च पापेभ्यः किमर्थं भीताः स्युः। स्वयं यथाकामं पापान्याचरन्तस्तत्प्रायश्चित्ताय गोवत्सतरीछागादिपशूनां प्राणानपहरन्ति। अतएव यीशवीयाः कस्यापि पशोः पतत्रिणो वा प्राणापहरणे मनागपि न बिभ्यति। अयि ख्रीस्टीयाः! श्रूयताम्—अधुनापि असभ्यं मतमिदमनादृत्य सुसभ्यं धर्ममयं वैदिकं मतं स्वीकुरुत यतो यूयं कल्याणभाजो भवेतः ॥५३॥

(५४) अथ चेत्सोऽकिञ्चनत्वान् मेषवत्समानेतुमक्षमो भवेत् तदा स्वानुष्ठितपापेभ्यः पिण्डुकयुग्मं पारावतशावकद्वयञ्च परमात्मने समुपनयेत्। तच्छिरश्च तदीयकन्धरादकुञ्चयेत् (निष्पीडयेत्) परं तत् पृथक् न कुर्वीत।

ततः स्वानुष्ठितपापानां कृते प्रायश्चित्तमनुविदध्यात् स क्षान्तो भविष्यति। अथ यः कपोतवत्सद्वयमप्यानेतुमसमर्थः स्यात् स प्रस्थमात्रं गोधूमचूर्णं पापोपहाराय समानयेत्[1] परं तत्र तैलं मा सिचः। स च क्षमितः स्यात्।

—तौ० लयव्य० प० ५। आ० ७, ८, १०, १३

स०—श्रूयतां साम्प्रतम्—खीृस्टीयानां कोऽपि समृद्धो दरिद्रो वा पापाचरणाद् भीतो न भवेत् यतो ह्येषामीश्वरेण पापानां प्रायश्चित्तं नितरामयत्नसाध्यतां नीतम्। खीृस्टीयानां वाइबिलग्रन्थे महदद्भुतमिदं यदनायासेन पापेनैव पापं मुच्यते। तथा च किञ्चित् पापमनुविधायापरे प्राणिनो विशसिताः सानन्दं तन्मांसेन स्वोदरं परिपूरितं पापञ्चापि विमुक्तम्। पारावतशिशुः कन्धरामोटनेन नूनं सुदीर्घकालं तीव्रव्यथामनुभवति तथापि खीृस्टीया न दयन्ते। अथवा कथमिमे दयेरनेषामीश्वरोपदेश एव हिंसापरः। किञ्च यदा कृत्स्नपापानामेतत्प्रायश्चित्तं तदा यीशुं प्रति विश्वासेन पापानि मुच्यन्त इति किमर्थं महत्कैतवं विदधति ?॥५४॥

(५५) तद्वलिदानकृत्तिस्तस्यैव याजकस्य भविष्यति येन स उपहृतः। कृत्स्नश्चापि भोजनोपहारः कामं स चुल्लिकायां (तन्दूरे) कटाहे तवानामकभाजने वा श्रपितः स्यात्—तस्यैव याजकस्य भविष्यति।

—तौ० लयव्य० प० ७। आ० ८, ९

स०—इदानीं यावद् "अत्रत्यदेवीनां मन्दिरयाजकानामेव लीला विचित्रेति" वयमवेदिष्म परं खीृस्टीयानामीश्वरस्य तद्याजकानाञ्च लीला तां सहस्रगुणमतिशेते। कृत्तेर्मूल्यं भोजनपदार्थाश्चाशनाय प्राप्ता भवेयुः। खीृस्टीयैर्महानानन्द उपभुक्तो भवेत्। इदानीमपि चोपभुञ्जते। कश्चिन्नरः तनयमेकं घातयित्वा तन्मांसमपरं भोजयेदिति कर्हिचित्सम्भवति ? सर्वे मनुष्याः पशवः पतत्रिप्रभृतयः परमात्मनः पुत्रकल्पा एव। नहि परमेश्वरः

---

१. धन्यः स ईश्वरः, येन—अजाविकपोतशावकस्वादुगोधूमचूर्णान्यप्यानेतुं नियमो निर्धारितः। एतच्चाद्भुतम्—यत् कपोतशावकान्मर्दितग्रीवानेवाग्रहीत्, येन ग्रीवामर्दनस्यापि श्रमो न विधेयः स्यात्। एतेन प्रतीयते यन्नायमीश्वरः, अपि तु वनवासिषु कश्चिच्चतुरो धूर्तो वा जनः। यो गिरिस्थितमात्मानमीश्वरमुदघोषयत्। अज्ञानिनो हि वनवासिनश्च तमेवेश्वरं स्वीचक्रुः। स च निजयुक्तिभिरेव पर्वतस्थितोऽपि—स्वभोजनाय पशुपक्षिशावकान्नादिकञ्चानाय्य प्रमोदनिर्भरोऽवसत्। तस्य दूतजनाश्च सर्वं कार्यजातं निरवाहयन्। सज्जना विवेचयन्तु क्वायं बाइबिलवर्णितोऽजाविकपोतशावकस्वादुचूर्णाशनः स्वमीश्वरम्मन्यो धूर्तजनः, क्व च सर्वज्ञः, सर्वव्यापकः, अजन्मा, न्यायकारी, निराकारः, परमोत्तमगुणनिधानो वेदप्रवर्त्तकः सर्वशक्तिमान् सर्वेश्वरः ?

कर्हिचिदप्येतं विधातुमीष्टे। अतएव नायं बाइबिलग्रन्थ ईश्वरप्रणीतः, अत्र वर्णितः परमेश्वरश्च परमेश्वरो भवितुं नार्हति। नाप्येतदनुयायिनः कदाचनापि धर्मज्ञा भवितुमर्हन्ति। लयव्यवस्थादिग्रन्था ईदृग्विधाभिरेव वार्ताभिः परिपूर्णाः कुतो यावत् परिसंख्यायेत ॥५५॥

## गणनापुस्तकम्

(५६) तदनु रासभी उद्यतासिपाणिं परमात्मनो दूतं पथि स्थितमद्राक्षीत्। तदा गर्दभी पन्थानं विमुच्य पार्श्वतः परावृत्य क्षेत्रं प्रविवेश। मार्गे समानयनाय बलयामस्तां रासभीं यष्टिकया प्राहरत्। ततः परमेश्वरस्तस्या मुखमपवृणोत् सा च बलयामं प्रतिभाषमाणा अब्रवीत्। किमहं तवाकार्षं यत्त्वं मां त्रिः प्राहरत्। —ग० पु० प० २२। आ० २३, २८

**स०**—पुरा तु रासभा अपि परमात्मनो दूतानीक्षन्ते स्म परं साम्प्रतं महायाजकप्रमुखमहीयसां प्राकृतानां वा जनानां दृष्टिपथं परमेश्वरस्तदीयदूता वा नावतरन्ति। अप्यद्यत्वे परमेश्वरस्तद्दूताश्च सन्ति न वा ? सन्ति चेत्किं गाढनिद्रावशं गताः ? व्याधिना निपीडिता उत भूगोलान्तरं गताः ? आहोस्वित् कार्यान्तरे व्यापृताः ? खीस्टीयेभ्यो रुष्टा वा ? अथवा पञ्चत्वमिताः ? न जाने किमभवत्। वयन्त्वेवमनुमिमीमहे यत् साम्प्रतमविद्यमाना अनवलोक्यमानाश्च पुरापि नासन् नाप्यदृश्यन्त केवलमिमेऽनर्गलप्रलापा एव खीस्टीयैरकारिषत इति ॥५६॥

(५७) अतः सम्प्रति प्रत्येकं पुत्रं प्राप्तपुरुषसंसर्गां स्त्रियञ्च प्राणैर्वियोजयन्तु, परन्तु पुरुषसंसर्गाप्राप्ताश्च सुताः स्व प्रयोजनार्थं (कामवासनापूर्त्यर्थं) जीविता ह्येव सुरक्षन्तु।

—तौ० गणना० प० ३१ आ० १७, १८

**स०**—धन्य रे युष्माकं पैगम्बरो मूसा, ईश्वरश्चापि धन्यः। यः स्त्रीबालवृद्धपशूनां हत्ययाऽपि न विरमेत् (विरराम) स्पष्टञ्चानेन यत् मूसा हि महान् विषयी पुरुषः। नो चेत्—अक्षतयोनीरपुरुषसम्पृक्ताः कन्याश्च निजार्थं—(निजवासनापूर्त्यर्थं) कथं कामयेत्, वासनमहाभागञ्चैवंविधं नृशंसं वासनापूरकञ्चादेशं कथमादिशेत् ? ॥५७॥

## समुयलस्य द्वितीयं पुस्तकम्

(५८) तस्यामेव यमिन्यामेवं सञ्जातम्—परमात्मनो वचो ब्रुवदिदं नातनं समुपस्थितम् "याहि मम सेवकं दायूदं ब्रूष्व च—परमेश्वरस्त्वां कथयति यन्मन्निवासाय गृहमेकं निर्मापय यतोयावत् खल्वहं यिस्रायेलसन्तानान्

मिसरदेशाद्बहिः समानयं तत इदानीं यावत् नाहं सद्मन्यवसमपितूपकार्यासु पर्याटिषम्" ।—तौ० समु० द्वि० पु० प० ७ । आ० ४-६

**स०**—ख्रीस्टीयानामीश्वरो मनुष्यवच्छरीरी वर्तत इति मनागपि सन्देहो नावशिष्टः । उपालभते च यत् "अहं भूयसा परिश्रमं व्यतनोम्, इतस्ततः पर्यभ्रमम्, साम्प्रतं दायूदो गृहञ्चेन्निर्मापयेत् तत्र विश्रामं लभेय" इति । अपि ख्रीस्टीयाः एतादृशपरमात्मन एवंविधग्रन्थस्य चाभ्युपगमे न लज्जन्ते ? अथवा किं कुर्वन्तु वराकास्तत्र मग्ना एव । ततो निःसर्तुं महान् परिश्रमोऽपेक्ष्यते ॥५८॥

## राज्ञां पुस्तकम्

(५९) बाबुलनगराधिपतेः नबूखुदनजरस्य राज्यारम्भत एकोनविंश-संवत्सरे पञ्चममासस्य सप्तम्यां तिथौ तस्यैव कश्चनानुचरो वरूथिनीपतिः नबूसरयद्दाननामा येरुशेलमुपातिष्ठत् । स च परमात्मनश्चैत्यं, राजप्रासाद-मन्यानि येरुशेलमनगरस्य भवनानि एकैकञ्च हर्म्यमधाक्षीत् । तत्सेनापतेः सहचारिणी कसदीयानां वरूथिनी च येरुशेलमस्य प्राकारं परितोऽभाङ्क्षीत् ।
—तौ० रा० प० २५ । आ० ८-१०

**स०**—अहो किं नु क्रियेत ख्रीस्टीयानामीश्वरस्तु स्वविश्रान्तिहेतोः दायूदप्रमुखैर्भवनं निरमापयत् तत्र च सानन्दमुषितः स्यात् परं नबूसरयद्दानः परमात्मनो निकेतनं दध्वसे । ईश्वरस्तद्दूतसैन्यञ्च किमपि कर्तुं न शेके । पुरा खल्वेषामीश्वरो बहुतरं जन्यमनुतिष्ठति विजयते स्म च । परमिदानीं निजसद्मनो ध्वंसेऽपि कथं तूष्णीमास्थितः ? तद्दूताश्च पलायन्त ? एवं कष्टमये समये कोऽपि साहाय्यं नाकरोत् । परमात्मनः शौर्यमपीदानीं न जाने क्व विलीनम् ? अथ यद्ययं वृत्तान्तस्तथ्यस्तर्हि पूर्ववर्णिताः सर्वे विजयोदन्ता निष्फलतां गताः । अपि मिसरवासिनां शिशूनां घात एव विक्रान्त आसीत्, साम्प्रतं शूरवीराणां पुरतः तूष्णीं बभूव । ईदृशानाचारेण ख्रीस्टीयेश्वरे-णात्मनो निन्दा अप्रतिष्ठा च कारिता । ग्रन्थेऽस्मिन्नीदृशान्येव शतश उपाख्यानानि परिपूर्णानि ॥५९॥

# जबूरद्वितीयो भागः

## समयवृत्तान्तस्य प्रथमं पुस्तकम्

(६०) स मम प्रभुः परमेश्वरो यिस्रायेलेषु मारीं प्राहिणोत, यिस्रायेल-वंश्यानाञ्च सप्ततिसहस्रपुरुषा व्यनश्यन् ।—ज० द्वि० प० २१ । आ० १४

स०--वीक्ष्यतामिदानीं यिस्रायेलखीस्टीयेश्वरलीला। यस्मा एव यिस्रायेलकुलाय पूर्वं भूयसो वरान् प्रादात् नक्तन्दिवञ्च यत्परिपालने व्यासक्तोऽभूत्, साम्प्रतं क्रुद्धः सन् तत्रैव मारीं सम्प्रेष्य सप्ततिसहस्रमानवान् व्यापादयामास ॥६०॥

कस्यचित्कवेरिदं वचः सर्वथा यथार्थमेव—

**क्षणे रुष्टः क्षणे तुष्टो रुष्टस्तुष्टः क्षणे क्षणे ।**
**अव्यवस्थितचित्तस्य प्रसादोऽपि भयङ्करः ॥**

## ऐयूबस्य पुस्तकम्

(६१) एकदैवं संयोगः समजनि यदीश्वरतनयाः प्रभोः समक्षमुपसेदुः । शैतानश्चापि तन्मध्ये प्रभोः पुरः समुपतस्थौ। परमेश्वरः शैतानमब्रवीत्—"कुतस्त्वमागतोऽसीति" । तदा शैतानः परमेश्वरं प्रतिभाषमाणः समुवाच—"भुवि परिभ्रमन्नितस्तत आगच्छामीति"। प्रभुः शैतानमप्राक्षीत्—"किं त्वया मम भक्त एयूबः परीक्षितः । नास्त्यपरस्तत्समानो भुवि, स हि सिद्धः समुन्नतचेताश्च वर्तते। परमेश्वराद् बिभेति पापेभ्यश्च सुदूरमवतिष्ठते । इदानीं यावच्चात्मनः सत्यं तेन परिरक्षितम् । त्वन्तु मां मुधैव तद्विनाशायाचूचुदः" । ततः शैतानः प्रतिब्रुवन्नीश्वरं जगाद् "कृत्तये कृत्तिः, आम् यत्किञ्चिन्मनुजस्य तदात्मनः प्राणेभ्यः (कृते) प्रदास्यति। परमिदानीमात्मकरं प्रसारय तदीयास्थीनि मांसञ्च संस्पृश, असंशयं स त्वां त्वत्पुर एव त्यक्ष्यति"। तदनु परमेश्वरः शैतानमब्रूत "पश्य, स त्वदधीनः, केवलं तत्प्राणान् परिरक्ष"। ततः शैतानः परमेश्वरसम्मुखादपासरत्। एयूबञ्च आशिखाग्रपादतलं कृच्छ्रव्रणैर्व्यापादयामास ।—ऐ० प० २। आ १-७

स०—वीक्ष्यतां साम्प्रतं ख्रीस्टीयपरमात्मनः सामर्थ्यम्--शैतानः पश्यतस्तस्य तद्भक्तान् दुनोति परमीश्वरः शैतानं दण्डयितुं न प्रभवति न स्वभक्तान् परिरक्षितुं क्षमते नापि दूतानां कश्चन तत्सांमुख्यं कर्तुमर्हति। एकेनैव शैतानेन सर्वे भयं प्रापिताः। ख्रीस्टीयानामीश्वरः सर्वज्ञोऽपि नास्ति कथमन्यथा एयूबस्य शैतानेन परीक्षां कारितवान् ? ॥६१॥

## उपदेशग्रन्थः ।

(६२) वाढम्, ममान्तःकरणेन बुद्धिज्ञानयोर्महाननुभवोऽधिगतः। अहञ्च बुद्धिं चित्तविप्लवं मूढताञ्च वेदितुं मनः अकरवम्, अवेदिषञ्च "अयमपि मनसः केवलमायास" इति। यतो बुद्धयतिशये महान् शोकः । यच्च ज्ञाने प्रवर्धते तद् दुःखे प्रवर्धते ।—उप० प० १। आ० १६-१८

स०—दृश्यताम्, पर्यायवाचिनौ बुद्धिज्ञानशब्दौ, एते पृथक् स्वीकुर्वते ? मतिप्रकर्षे च दुःखमविद्वद्भिर्विना केनाऽन्येन मन्तुं शक्यते ? तस्मादयं बाइबिलग्रन्थः कस्यचिद् विदुषोऽपि कृतिर्नास्ति किमुत परमात्मनः ॥६२॥

समासत इदं तौरेतजबूरविषये विलिखितम्, अतः परं मत्तिरचितादिमेञ्जीलविषये विलिख्यते यां ख्रीस्टीयाः प्रमाणभूतां मन्यन्ते याञ्चेञ्जीलशब्देन व्यवहरन्ति सा संक्षेपतः परीक्ष्यते कीदृशी सेति ॥

## मत्तीरचित-इञ्जीलग्रन्थः

(६३) यीशोः ख्रीष्टस्य जन्मेत्थमभूत्। तस्य मातुर्मरियमभिधाया योषेफाय वाग्दानमभूत् परं तयोः सङ्गमात् प्रागेव सा पवित्रेणात्मना गर्भवतीत्याविष्कृता। (तस्मै त्वैतच्चिन्तयते) प्रभोदूतः स्वप्ने दर्शनं दत्वाऽवादीत्—भो दाऊदस्य सुत योषेफ! स्वभार्याया मरियमः पाणिग्रहणान्मा भैषीर्यतस्तस्या गर्भफलं पवित्रादात्मनः सम्भूतम्।

—इ० म० प० १। आ० १८, २०

स०—प्रत्यक्षादिप्रमाणैः सृष्टिक्रमेण च विरुद्धा अमूर्वार्ता न कोऽपि विश्वसितुमर्हति केवलं मूढधिय आरण्यका एव प्रत्येतुं शक्नुवन्ति। अपि परमात्मनो नियमान् कोऽप्युल्लङ्घयितुं शक्नोति ? यदि हि नाम परमेश्वरोऽपि निजनियमान् विपर्यस्येन्न तर्हि केनापि तदीयाज्ञा परिपाल्येत। स हि सर्वज्ञत्वान्निर्भ्रमत्वाच्च न जातु स्वीयनियमान् विभनक्ति। यस्यां कस्यांचिदपि ससत्वायां कुमारिकायां "परमात्मनः सकाशादियं गर्भवत्यभवदिति" सर्वैरेव वक्तुं शक्यते। मिथ्यैव च कथयेत् "प्रभोर्दूतः स्वप्ने मां समादिशत् "यदयं गर्भः परमात्मनोऽस्तीति"। यथायमसम्भाव्यः प्रपञ्चो निर्मितस्तथैव पुराणेष्वपि सूर्यात् कुन्त्या गर्भधारणं समुपवर्णितम्। विद्याशून्या धनवन्त एतादृशीर्वार्ता विश्वस्य भ्रमगर्ते सम्पतन्ति। अत्रेदं वस्तुतत्त्वं प्रतीयते—मरियं कस्यचित् पुंसः समागमेन गर्भवती अभवत् तयाऽन्येन वा केनचिदियमसम्भाव्या वार्ता सर्वत्र प्रसारिता "अस्या गर्भः परमात्मनोऽस्तीति" ॥६३॥

(६४) तदानीं यीशुर्दियावलेन परीक्षासहनार्थमात्मना वनं नीतः। ततः स चत्वारिंशद्दिनानि, चत्वारिंशद्रात्रींश्चोपोषितः, ततः परं चुक्षोध। तदा परीक्षकस्तमुपागम्य जगाद "भवाँश्चेदीश्वरस्य पुत्रस्तर्हीमे प्रस्तरा यथा पूपा भवेयुस्तथाज्ञापयतु।—इ० म० प० ४ आ० १—३

स०—अनेन सुस्पष्टं प्रतीयते। यत् क्रिश्चियनानामीश्वरो नास्ति सर्वज्ञः। सर्वज्ञश्चेत्सोऽभविष्यत्, न तर्हि तस्य दियावलेन परीक्षामकारयि-

ष्यत्, स्वयमेव ज्ञातुं समर्थत्वात् । अपीदानीं चत्वारिंशद्दिनानि चत्वारिंशद् रात्रीरुपोषितः कश्चन किश्चियनः प्राणितुं शक्नोति? एतेनेदमपि सिद्धं भवति यद् यीशुर्नासीत् परमात्मनः सूनुः नापि तस्मिन् कापि सिद्धिरासीदिति । इतरथा हि स दियावलस्य पुरतः प्रस्तरान् पूपान् कर्तुं कथं न प्राभवत् । स्वयञ्च कथं बुभुक्षितोऽतिष्ठत् । अयमत्र सिद्धान्तः "परमात्मना निर्मितान् प्रस्तरान् पूपान् कर्तुं न कोऽपि प्रभवति । परमेश्वरोऽपि पूर्वनिर्मितनियमान् परिवर्तयितुं नेष्टे, स हि सर्वज्ञो वरीवर्त्ति तस्य सर्वाण्यपि कार्याणि निर्भ्र-माणि भवन्ति ॥६४॥

(६५) स तौ (पित्रामिधं शिमोनं तस्य सहोदरमान्द्रियञ्च) मम पश्चादागच्छतमहं युवां मनुष्यधारिणौ धीवरौ विधास्यामि । ततस्तौ तूर्णं जालानि विहाय तमन्वगच्छताम् ।

—इ० म० प० ४। आ० १९, २०

स०–अनेनैव पापेन अर्थात्पुरातनधर्मसङ्ग्रहे वर्णितस्य पञ्चमनिदेशस्य भङ्गेन (यत्र हि सूनवः स्वीयजनकौ परिचरेयुः सम्मानयेयुश्च तेन तेषामायुः परिवर्धेत इति समाज्ञप्तम्) यीशुर्न स्वजनकौ परिचचार नापि तथाकर्तु-मन्यानुपदिदेशेत्यपराधेन यीशुर्न चिरमजीवदिति मन्यामहे । यीशुर्मानवान् विमोहयितुं धर्ममेकं प्रवर्तितवान् । जाले मत्स्यानिव स्वमते मानवान् प्रवेश्य स्वार्थं साधयेयमिति स ऐच्छत् । यदा हि यीशुरेवैतादृशः समभवत् तदा आधुनिकाः ख्रीस्टधर्मप्रचारकाः स्वमतेऽन्यान् विलोभ्य समानयन्तीत्यत्र किमाश्चर्यम् । यथा महतः प्रभूतान् मत्स्यान् जाले विपातयिता धीवरः स्ववर्गे प्रतिष्ठां जीविकासौकर्यञ्च लभते तथैव यः खलु धर्मोपदेशको बहून् मानवान् स्वमते प्रवेशयति स एवादरं जीविकां च संलभते । अत एव एते (धर्मोपदेष्टारः) अनधीतशास्त्रान् वेदानभिज्ञान् मुग्धजनान् स्वमतानये सम्पात्य तज्जननी-जनकाभ्यां कुटुम्बिभ्यश्च वियोजयन्ति । तस्मात् सर्वविदुषामार्याणामिदं कर्तव्यम् "स्वयमेषां गर्तेभ्यो विमुच्य स्वीयाज्ञान् भ्रातॄन् ततो विमोचयेयुः" इति ॥६५॥

(६६) अनन्तरं यीशुः कृत्स्नं गालीलदेशं परिभ्राम्यन् तत्रत्यानां समाजगृहेषु शिक्षामददात् । राज्यस्य सुसंवादञ्चाघोषयत् जनानां प्रत्येकम रोगं सर्वविधदौर्बल्यञ्चोपाशमयत् । अस्वस्था विविधै रोगैर्व्यसनैश्च क्लिष्टा भूताविष्टा अपस्मारिणः पक्षाघातिनश्च सर्वे मनुष्यैस्तस्यान्तिकमानीतास्तेन स्वस्थीकृताश्च ।

—इ० म० प० ४। आ० २३, २४

स०–यथा ह्यद्यतनीन पोपानामाडम्बरः मन्त्र-पुरश्चरणआशीर्वादैः, बीजभस्मनोर्वा कूर्च-(चुटकी)-प्रदानेन भूतापसारो रोगनिर्मुक्तिर्वा सत्या

स्वीक्रियते तदा सुसंवादस्यापि वार्ताः सत्या भवेयुः। सर्व इमे व्यवहारा अज्ञान् स्वपाशे विपातयितुं प्रवर्तिताः। क्रिश्चियना भारतीयपोपानां वार्तासु कथं न विश्वसन्ति ? उभयत्रापि प्रचुरं सादृश्यम् ॥६६॥

(६८) दीनात्मानो धन्याः, यतः स्वर्गराज्यं तेषामेव। यतोऽहं युष्मान् सत्यं ब्रवीमि। यावद् व्योममेदिन्योरत्ययो न भविष्यति तावद् व्यवस्थाया एका मात्रैको विन्दुर्वा नैवात्येष्यति। अतो यः कश्चिदेतासां क्षोदिष्ठानामाज्ञानामेकां मुञ्चति मनुष्याँश्च तदनुरूपं शिक्षयति। स स्वर्गराज्ये क्षोदिष्ठोऽभिधायिष्यते।—इ० म० प० ५ आ० ३, १८, १९

**स०**—स्वर्गस्यैकत्वे तत्र राज्ञाप्येकेनैव भवितव्यम्। यदि सर्व एव दीनात्मानः स्वर्गमेष्यन्ति तर्हि स्वर्गराज्याधिकारः कस्मै प्रदास्यते। राज्याधिकारिणां बाहुल्येन मिथस्ते कलहायिष्यन्ते, राज्यव्यवस्थापि विनङ्क्ष्यति। अपि चात्र दीनपदेन निःस्वानां ग्रहणं नोचितम्, नापि निरभिमानिनां ग्रहणं युज्यते दीनाभिमानपदयोर्भिन्नार्थत्वात्। मनोदैन्यसंयुक्तो न जातु सन्तोषमवाप्नोति तस्मान्नेदं युज्यते। व्योममेदिन्योरत्यये तद्व्यवस्थाऽप्यत्येष्यति। एतादृगनित्यत्वं मानवानां व्यवस्थासु सम्भवति न तु सर्वज्ञपरमात्मनः। आसामाज्ञानामुल्लङ्घकः स्वर्गराज्ये सर्वेभ्यः क्षोदीयान् मंस्यत इति केवलं प्रलोभनं विभीषिकामात्रं वा प्रादायि ॥६७॥

(६८) श्वस्तनं भक्ष्यमद्यास्मभ्यं देहि। आत्मकृतेऽत्र मेदिन्यां धनानि मा सञ्चिनुत।—इ० म० प० ६। आ० ११, १९

**स०**—अनेन स्पष्टं विदितं भवति यद् यीशुसमसामयिकास्तत्रत्या मानवा आरण्यका निर्धनाश्चाभवन्। यीशुरपि तथैवाकिञ्चनोऽभवद्, अस्मादेव कारणाद् दैनिकभक्ष्यप्राप्तये परमेश्वरं प्रार्थयतेऽन्याँश्च तथा कर्तुं शिक्षयति। एवं सति कथं क्रिश्चियना धनं संचिन्वन्ति। यीशोर्वचनमनुरुध्य सर्वस्वमात्मीयं दानपुण्याभ्यां वितीर्याकिञ्चनैस्तदनुयायिभिर्भवितव्यम् ॥६८॥

(६९) ये मां प्रभुरित्यभिभाषन्ते न ते स्वर्गराज्यं प्रवेक्ष्यन्ति।

—इ० म० प० ७। आ० २१

**स०**—महान्तो धर्माध्यक्षाः धर्मोपदेशका अन्ये च क्रिश्चियनमतावलम्बिनो यीशोर्वचनमिदं सत्यं मन्वाना यीशुं प्रभुं न कथयेयुः, अन्यथैतदादेशमुल्लङ्घयन्तो न जातु पापात् परिमोक्ष्यन्ते ॥७०॥

(७०) अमुष्मिन् दिने बहवो मां वक्ष्यन्ति। ताँस्तु तदाहं स्पष्टं वदिष्यामि। युष्मानहं न कदाचिज्ज्ञातवान्, अधर्माचारिणो यूयं मत्तोऽपसरत।—इ० म० प० ७। आ० २२, २३

**स०**—पाठकाः! अवधत्त। यीशुरारण्यकमानवान् प्रत्याययितुं स्वर्गे

न्यायाधीशपदमधिगन्तुमियेष। सर्वमिदं मुग्धजनान् विमोहयितुं प्रवञ्चनामात्रम् ॥७०॥

(७१) पश्य चापरो नर एकः कुष्ठी आगत्य तस्य समक्षं प्रणिपत्य जगाद। प्रभो! भवान् यदीच्छति तर्हि मां शुचीकर्तुं शक्नोति। ततो यीशुर्हस्तं प्रसार्य तं स्पृष्ट्वा जगाद, इच्छामि, शुचिर्भव। अनेनैव तस्य कुष्ठं शुचित्वं गतम्।—इ० म० प० ८। आ० २, ३

स०—सर्वा अपीमा वार्ता सरलजनान् प्रलोभयितुमेव, यतः क्रिश्चियनधर्मावलम्बिनो विद्यासृष्टिक्रमविरुद्धानिमानर्थान् सत्यान् मन्यमानाः शुक्राचार्य-धन्वन्तरि-कश्यपादीनां पुराणमहाभारतादिषु वर्णिता गाथा वितथा मन्यन्ते। तथाच पुराणेषु वर्ण्यते—शुक्राचार्यो दैत्यानां बह्वीर्मृतपृतना अजीवयत्। बृहस्पतेः सूनुं कचं तिलशः खण्डयित्वा सत्वान् मत्स्याँश्चाभोजयत्। भूयोऽपि शुक्राचार्यस्तं प्राणिणत्। ततोऽपि कचं निहत्य शुक्राचार्यमभ्यवहारयत्, पुनरप्युशनास्तमुदरे जीवयित्वा बहिर्निस्सारयामास स्वयं च मृतस्तं कचोऽजीवयत्। कश्यपो मुनिः समानवं तक्षकेण निर्दग्धं तरुं पुनरजीवयत्। धन्वन्तरिर्लक्षाणि मृतपुरुषान् प्राणिणत्। बहून् कुष्ठादिरोगिणः स्वस्थीकृतवान्। लक्षशोऽन्धवधिरमानवेभ्यो नेत्रकर्णं व्यश्राणयत्" इति? यदि हि नाम इमे वृत्तान्ता असत्याः सन्ति कथं तर्हि यीशोरिमान्युपाख्यानानि वितथानि न सन्ति? कथं न नामान्येषामतथ्यान् वृत्तान्तानिव स्वकीयानृतान् सत्यान् प्रतिपादयन्तः क्रिश्चियनमतावलम्बिनो दुराग्रहिणः न सन्ति? तस्मात् यीशोरनुयायिनामुपाख्यानानि दुराग्रहाविष्टानि बालप्रलपितसन्निभानि च वर्तन्ते ॥७१॥

(७२) अनन्तरं नरौ द्वौ भूताविष्टौ शवागारेभ्यो निर्गत्य तत्समक्षमुपस्थितौ, तयोरतिप्राचण्डचान्मार्गेण तेन गन्तुं केनापि नाशक्यत। पश्यत च तावुत्क्रोशन्तौ जगदतुः—भो ईश्वरस्य सुत यीशो! भवता सहावयोः कः सम्बन्धः? भवान् किं समयात्प्रागेवावयोर्यातनां चिकीर्षुरत्रागतवान्? ततस्तौ भूतौ तं प्रसादयन्तौ जगदतुः। यद्यावामितो निःसार्यौ तर्ह्यावाममुष्मिन् शूकरव्रजावेष्टुमनुजानातु। स तौ जगाद—यातम्। ततस्तौ निःसृत्य प्रविविशतुस्तं शूकरव्रजम्। पश्य, तदा कृत्स्नः शूकरव्रजो वेगेन धावन् पतित्वा शैलाग्रतः समुद्रतीरमियाय तत्र च तोये पञ्चत्वं जगाम।

—इ० म० प० ८। आ० २८, २९, ३१, ३२

स०—मनागपि विचारेण सर्वमिदमसत्यं प्रतीयते न हि कुणपाः शवागारान्निःसतुं शक्नुवन्ति केनचित्संलपन्ति, कस्यचित्सविधे वा गच्छन्ति। महाज्ञानिनो वनेचरा एवंविधविषयेषु विश्वसन्ति। यीशुरेव तस्य शूकरव्रजस्य हत्यायाः कारणम्, अतः स एव शूकराधिपतीनां क्षतेः पापभाग्

भविष्यति। क्रिश्चियनमतावलम्बिनो यीशुं पापानां क्षन्तारं पावकं च मन्यन्ते कथं न स भूतौ पवित्रयितुं शशाक ? शूकरस्वामिनाञ्च क्षतिं पूरयामास ? अपि अद्यतनीनाः सुशिक्षिता यूरोपवासिन ईदृशानर्गलप्रलापेषु विश्वसन्ति ? ओमिति चेन्नूनमज्ञानगर्ते पतिताः सन्ति ॥७२॥

(७३) पश्य च तदा खट्वायां शयानो नर एकोऽवशाङ्गस्तत्समीपमानीयत। यीशुश्च तेषां विश्वासं दृष्ट्वा तमवशाङ्गं जगाद—"आश्वसिहि पुत्र ! तव पापानि विमोचितानि।" यतो न धार्मिकान् अपि तु पापिनो पश्चात्तापाय आह्वातुमहमागतः।—इ० म० प० ९। आ० २, १३

स०—इदमपि पूर्ववदेवासम्भाव्यम्। पापानां क्षमाप्रदानवर्णनञ्च नूनं सरलान् मानवान् वशीकर्तुं प्रलोभनं प्रकल्पितम्। यथैकेन पीतयोर्मद्यभंगयोर्भक्षितस्याहिफेनस्य (अफीमस्य) वा मदो नान्यं संक्रामति, तथैव केनचित् कृतपापानां फलानि नान्येन भुज्यन्त अपि तु कर्त्रैव भुज्यन्ते। अयमेव परमात्मनो न्यायः। यद्यन्येनानुष्ठितयोः पापपुण्ययोः फलमन्येन लभ्येत, न्यायाधीश एव वा तत्फलमाददीत, पापपुण्ययोः कर्तृभ्य एव वा यथायथं फलमीश्वरो न प्रयच्छेत् तर्हि सोऽन्यायकारी सम्पद्येत। पश्यत—धर्म एव कल्याणकरो न यीशुर्नाप्यन्यः कश्चित्। पुण्यात्मभिर्यीशुप्रभृतयो नापेक्ष्यन्ते। नाप्येनस्विभिस्त अपेक्ष्यन्ते नहि कस्यचित्पातकं विप्रमुच्यते ॥७३॥

(७४) अनन्तरं स आत्मनो द्वादशशिष्यान् स्वसमीपमाहूय ददौ तेभ्यः सामर्थ्यं निस्सारणायात्मनामशुचीनां भूतानां प्रतीकाराय च सर्वरोगस्य सर्वामयस्य च। यतो न यूयं वक्तारः, वक्ता तु युष्मदन्तर्भाषमाणो युष्मत् पितुरात्मा। मानुमिमीध्वं यदहं पृथिव्यामैक्यमवतारयितुमागत इति। अपि त्वसिमवतारयितुमागतोऽस्मि। यतो पुत्रं पितुर्विरुद्धं दुहितरं मातुर्विरुद्धं पुत्रवधूं श्वश्र्वा विरुद्धं भेदयितुमहमागतः स्वगृह्याश्च मनुष्यस्य शत्रवो भविष्यन्ति।—इ० म० प० १०। आ० १, २०, ३४—३६

स०—एते त एव शिष्या येष्वेकेन त्रिंशद्रूप्यकाणां प्रलोभेन यीशुः शत्रुकरेष्वर्पयिष्यते। अन्ये च तमपहाय पृथक् पृथक् पलायिष्यन्ते। भूतानामागमनं निःसारणं वा, पथ्यौषधीभ्यामन्तरेणापि व्याधीनां प्रशमनम्, एवमादयः सर्व इमे अर्था विद्यासृष्टिक्रमविरुद्धत्वादसम्भवा एव। एतादृशेषु अज्ञानिन एव विश्वासमाप्तुमर्हन्ति। यदि नात्मानो वदन्ति अपि त्वीश्वरो भाषते किं तर्हि जीवः समनुतिष्ठति ? सत्यासत्यभाषणस्य फलं सुखदुःखमपि परमात्मैव लप्स्यते। इदमपि सर्वथाऽसत्यमेव। यथा यीशुर्मानवान् मिथो भेदयितुं वैराययितुं चात्र समागच्छत् तथैवाद्यात्वे जनेषु कलहः सम्प्रवृत्तः। पश्यत—कीदृगिदमसत्कर्म। मिथो वैमत्येन मानवा नितान्तं दुःखं लभन्ते।

क्रिश्चियनधर्मावलम्बिनोऽमुमेव स्वादर्शं गुरुमन्त्रं मन्यन्त इति प्रतीयते। युज्यत अप्येतद् यतो हि यदा यीशुरेव मिथो विरोधमाद्रियतेस्म कथं न नामैते समाद्रियेरन्। स्वगृह्यानां मानवानां मिथो शात्रवापादनं यीशुरेव कर्त्तुं शक्नोति। नैष सन्निषेवितः पन्थाः ॥७४॥

(७५) यीशुस्तान् पप्रच्छ—कति पूपा युष्माकं विद्यन्ते। ते जगदुः सप्त, लघु मत्स्याश्च क्षुद्राः। ततः स जननिवहानां भुव्युपवेशनमाज्ञापयामास, ताँश्च सप्तपूपान् मत्स्याँश्चादाय धन्यवादवाचनपूर्वकं भङ्क्त्वा स्वशिष्येभ्योऽददात्। ते च मनुष्येभ्योऽददुः। ततः सर्वे भुङ्क्त्वा तृप्तवन्तो भग्नाशानां शेषेण च सप्तपेटिकान् पूरयित्वा ददिरे योषितो बालकाँश्च विहाय भोक्तारस्ते पुरुषाश्चतुःसहस्राण्यासन्।

—इ० म० प० १५। आ० ३४-३८

स०—विचार्यतां ननु! किमिमे वृत्तान्ता अद्यतनीनकपटसिद्धानामैन्द्रजालिकानां वा छद्मानीव न विद्यन्ते? तेषु पूपेषु अन्ये पूपाः कुतः समाययुः? यदि हि यीशावीदृशाश्चमत्कारा आसन् कथं नाम स स्वयं बुभुक्षितः सन्नुदुम्बरफलानि भोक्तुमितस्ततः परिबभ्राम। स्वकृते मृत्-जल-प्रस्तरादिभ्य आस्वादवन्ति मिष्टान्नानि पूपाँश्च कुतो न निष्पादयामास? सर्वमिदं शिशूनां खेलावत् प्रतीयते। यथा कियन्तः साधवः सरलजनान् प्रतारयितुं छलान्याचरन्ति तथैवेदमपि सर्वं विद्यते ॥७५॥

(७६) तदा च स प्रत्येकस्मै तदाचारानुरूपं फलं दास्यति।

—इ० म० प० १६। आ० २७

स०—यदा कर्मणामानुरूप्येण फलं प्रदास्यते तदा यीशवीयानां पापक्षमोपदेशप्रदानं मुधैव। तस्य च सत्यत्वाङ्गीकारेऽस्यासत्यत्वमापादितं भवति। कश्चिदत्रेत्थमभियुञ्जीत चेत् "क्षन्तुमर्हाणि क्षाम्यन्ते क्षन्तुमनर्हाणि च न मृष्यन्ते" इति। एतदपि न समीचीनं यतो निखिलकर्मणां यथायोग्यफलप्रदानेनैव न्यायदये संसिद्ध्यतः ॥७६॥

(७७) रे अविश्वासिन उन्मार्गगामिनश्च मानवाः? युष्मान् सत्यं ब्रवीमि सति विश्वासे युष्माकं सर्षपबीजमिते यूयं चेदमुं पर्वतं वदथ, त्वमतोऽपसरंस्तत्र याहीति तर्हि सोऽपसरन् यास्यतीति किमपि च न भविष्यति युष्माभिरशक्यम्। —इ० म० प० १७। आ० १७, २०

स०—साम्प्रतं यदीशवीयाः (ईसाई) सर्वत्रोपदिशन्तः परिभ्रमन्ति "आगच्छत, स्वीकुरुतास्मन्मतम्, क्षमयत निजपापानि, लभध्वं च मुक्तिमिति" सर्वमिदमसत्यमेव यतो यीशौ चेत् पापमोचनस्य, परेष्वात्मनः प्रत्ययाधानस्य, पवित्रीकरणस्य च सामर्थ्यमभविष्यत् तर्हि कथं न स स्वीयशिष्यात्मनो विगतकल्मषान् विश्वासिनः पूताँश्च समपादयिष्यत्? यीशुर्यदा

आत्मना सह परिभ्राम्यत एव शुद्धान् विश्वासिनो निष्पापाँश्च विधातुं नाशकत् तर्हि साम्प्रतमुपरतोऽज्ञातनिवासभूमिनं कमपि पवित्रयितुं न प्रभविष्यति। यदा च यीशवन्तेवासिषु सर्षपमितोऽपि विश्वासो नाभवत्, तैरेव चायं धर्मग्रन्थो (बाइबिल) निर्मितस्तदायं मनागपि प्रामाण्यं नार्हति यतोऽविश्वासिनामधर्मात्मनां लेखेष्वात्महितेच्छवो जना न जातु विश्वसन्ति। एतेनेदमपि सिद्धं भवति यदि यीशोर्वचनं सत्यमस्ति यत् "कस्मिन्नपि यीशवीये सर्षपबीजमितोऽपि विश्वासो नास्तीति"। यदि कश्चिद् "अस्मासु न्यूनातिरेको विश्वासो विद्यते" इति भाषेत तर्हि स "भवानमुं पर्वतमस्मात् प्रदेशात् प्रदेशान्तरमपसारयतु" इति वक्तव्यः। तदपसारणेन चेदपसरेत् तथापि पूर्णविश्वासो नाधिगन्तव्योऽपि तु सर्षपबीजमितः समधिगन्तव्यः। अन्यथा तु यीशवीयेषु विश्वासस्य धर्मस्य च लवोऽपि नास्तीति विज्ञेयम्। अत्र पर्वतशब्देनाहङ्कारादिदोषा अभिधीयन्त" इति चेत्केनचिदुच्येत तदपि न समीचीनमेवं हि शव-अन्ध-कुष्ठिभूतग्रस्तमानवान् स्वस्थानकरोदस्यापि "अलसानज्ञानिनो विषयप्रसक्तान् भ्रान्ताँश्च परिबोध्य सचेतसः कुशलानकरोदित्यभिप्रायः" इत्यपि वक्तुं शक्येत। परमेवमभ्युपगमोऽपि न साधीयान् यतो ह्येवं सति कथं न स स्वीयशिष्याणामज्ञानादीनपाकर्तुं शशाक? अत ईदृशासम्भववचोभिर्यीशोरज्ञत्वं प्रकाशितं भवति। यदि हि यीशुर्मनागपि कृतविद्योऽभविष्यन्न तर्ह्येवमारण्यक इवासम्बद्धं प्रालपिष्यत्। तथापि यथा "निरस्तपादपे देशे एरण्डोऽपि द्रुमायते" तथैव यत्र देशे केवलमज्ञानिनो वनेचरा निवसन्ति तत्र यीशोर्महापुरुषत्वेन परिगणनमुचितमेव, परमद्यत्वे बुद्धिमतां कृतविद्यानां समाजे यीशोः का परिगणितिः? ॥७७॥

(७८) युष्मानहं सत्यं ब्रवीमि, यूयं यदि न परावर्तध्वे बालका इव च न भवथ, स्वर्गराज्यं तर्हि कथञ्चन न प्रवेक्ष्यथ।

—इ० म० प० १८। आ० ३

**स०**—यदा स्वेच्छयैव मनसः परावर्तनं स्वर्गकारणमपरावर्तनञ्च नरकहेतुः तदा स्पष्टं प्रतीयते न कोऽपि कस्यचित्पापपुण्ये समादातुं शक्नोतीति। किञ्च "बालका इव न भवथ" इति लेखेन विदितं भवति यद् यीशोरुपदेशेषु भूयाँस उपदेशा विद्यासृष्टिक्रमाभ्यां विरुद्धा आसन्, स इदमप्यैच्छद् यत् "मानवा बाला इवानुयोगमन्तरेण ममोपदेशानङ्गीकुर्युः—चक्षुषी निमील्याभ्युपेयुः। यीशवीयेषु प्रभूता बालवत् विचेष्टन्ते कथमन्यथा युक्तिशून्यानीदृशानुपदेशानुररीकुर्युः? यीशुश्चेत्स्वयं विद्याशून्यो बालमतिर्नाऽभविष्यत् कथं तर्ह्यन्यान् बाला इव भवथ इत्युपादेक्ष्यत्? दृश्यते हि लोके सर्वोऽपि जनोऽन्यानात्मवत्सम्पादयितुं काङ्क्षतीति ॥७८॥

(७९) युष्मानहं सत्यं ब्रवीमि, दुष्करो हि धनवतः स्वर्गराज्यप्रवेशः।

पुनश्च युष्मान् ब्रवीमि धनवतः स्वर्गराज्यप्रवेशात् सूचीच्छिद्रेणोष्ट्रगमनं सुसाध्यम् ।—इ० म० प० १९ । आ० २३, २४

स०—इदं यीशोरकिञ्चनत्वं व्यनक्ति । धनवन्तस्तं नाद्रियन्ते स्म । अत एव तेनेदं लिखितं परं नैतद् युज्यते यतो धनवत्सु दरिद्रेषु च सर्वत्रापि साधवो दुर्जनाश्च भवन्त्येव । धनाढ्यो निःस्वो वा साध्वाचारः सत्फलं दुर्वृत्तश्च गर्ह्यं फलं लभते । अनेनेदमपि स्पष्टं प्रतीयते "यीशुः परमात्मनो राज्यं कस्मिँश्चिद्देशविशेष एवाभ्युपैति ननु सर्वत्र" इति । एवञ्चेश्वरस्य-इश्वरत्वं नश्यति । यः खलु परमेश्वरस्तस्य राज्यं सर्वत्रैव विद्यते पुनस्तस्मिन् "कश्चित्प्रवेक्ष्यति कश्चन न प्रवेक्ष्यति" इति वचनं बालिश्यम् । पुनश्च—अपि धनवन्तो यीशवीया निरयं दरिद्राश्च स्वर्गं समेष्यन्ति ? यीशुना मनागपि विचारः कर्त्तव्य आसीत् यावन्त्युपकरणानि (परोपकारादिसत्कर्मानुष्ठातुम्) धनवतां समीपे भवन्ति न तावन्ति निर्धनानाम् । यदि धनिनो विवेकेन निजधनं धर्म्ये कर्मणि नियुञ्जीरँस्तर्हि त उत्तमां गतिं विन्देरन् निर्धनाश्च स्वोन्नतिसाधनव्यतिरेकेण दुरवस्थासु निवसेयुः ।।७९।।

(८०) यीशुस्तान् जगाद युष्मानहं सत्यं ब्रवीमि पुनर्जन्मनि यदा मनुष्यपुत्रः निजैश्वर्यसिंहासन उपविष्टो भविष्यति तदा मामनुव्रजन्तो यूयमपि द्वादशसिंहासनेषूपविष्टा इस्रायेलस्य द्वादशवंशानां विचारं करिष्यथ । अपरं यः कश्चिन्मम नाम्नः कृते गृहाणि वा भ्रातॄन् वा भगिनीर्वा पितरं वा मातरं वा जायां वा सन्तानान् वा भूम्यधिकारान् वा त्यक्तवान् स तच्छतगुणं लप्स्यते दायांशरूपमनन्तजीवनञ्च प्राप्स्यति ।

—म० प० १९ । आ० २८, २९

स०—साम्प्रतं निरीक्षन्तां भवन्तो यीशोरन्तर्लीलाम् "उपरतेऽपि मयि मदीयपाशान्मानवा न विमुच्येरन्" इति । येन त्रिंशद्रूप्यकाणां लोभेन निजाचार्यः शत्रुकरेष्वर्पितस्तादृशाः पापीयांसोऽप्यस्य पार्श्वसिंहासनेषूपवेक्ष्यन्ति । अपरञ्च तैर्न केवलमिस्रायेलस्य कुलानां विचार एव करिष्यत अपि तु तेषां निखिलं दुरितजातं क्षंस्यते, अन्येषां च विचारः करिष्यते । अनुमीयते अत एव यीशवीयाः स्वमतावलम्बिषु पक्षपातेन व्यवहरन्ति । बहुधा हि दृश्यते यदि कश्चिद् श्वेताङ्गः कृष्णाङ्गं कमपि व्यापादयति तदा सापराधमपि तं न्यायाधीशा निरपराधिनं सम्पाद्य विमुञ्चन्ति । ईदृश एव यीशोः स्वर्गस्यापि न्यायो भविष्यति । अयञ्चापरो महान् दोषः समुपैति—कश्चनैकः सर्गारम्भे पञ्चत्वमियादपरश्च प्रत्यासन्ने विचारदिन उपरतः, तत्राद्यः प्रारम्भादावसानं "कदा विचारो भविष्यतीति" प्रतीक्षमाणस्तस्थौ । अपरस्य च तदानीमेव विचारः समभवत् । कीदृशोऽयं महानन्यायः । किञ्च यो निरयं स्वर्गं वा समुपैष्यति स सर्वदा तत्रैव स्थास्यतीत्ययमपरो महानन्यायः । यतः परि-

मितसाधनानां कर्मणाञ्च फलैरपि तथैव भवितव्यम्। नापि द्वयोर्जीवयोः कर्हिचिदपि पुण्यपापे समाने भवितुमर्हतः। अतो यदि न्यूनातिरेकसुखदुःखवन्तोऽनेके स्वर्गनरका भवेयुस्तदैव निजकर्मणामानुरूप्येण सुखदुःखमुपभोक्तुं क्षमेरन्। न चैवं क्वापि क्रिश्चियनानां धर्मग्रन्थेषूपवर्णितम्। तस्मात्पुस्तकमिदं नेश्वरप्रणीतं नापि यीशुः परमेश्वरस्य सूनुर्वर्त्तते। यच्चाप्यत्रैकस्य पित्रादेः परित्यागे तच्छतगुणप्राप्तिर्वर्णिता सोऽयं महाननर्थः। नहि कस्यचित्कदापि शतं मातरो जनका वा भवन्त्यपि तु एकस्य एकैव जननी एक एव च जनकः सम्भवति। अनुमीयते यद् यवनधर्मपुस्तके (कुराने) स्वर्गे प्रत्येकेन द्विसप्ततिरप्सरसो लभ्यन्त इत्युपन्यस्तं तदत एव आदत्तमिति ॥८०॥

(८१) प्रभाते तु नगरं गच्छन् सोऽक्षुध्यत् तत्पथपार्श्वे उदुम्बरवृक्षं दृष्ट्वा स तत्समीपं जगाम तस्मिंस्तु पत्रेभ्योऽन्यत् किमपि नादृश्यत। सोऽतस्तं जगाद इतः परं कदापि त्वत्तः फलं नोत्पद्यताम्। अनेनोदुम्बरवृक्षः सद्यः शुष्कतामियाय।—इ० म० प० २१। आ० १८, १९

**स०**—सर्वे यीशवीयधर्मोपदेशका ब्रुवते यदसौ शान्तचेताः शमान्वितः क्रोधादिदोषशून्यश्चासीदिति परमेतद्वृत्तान्तनिरीक्षणेन यीशुरमर्षणो ऋतूनां ज्ञानशून्यश्चासीदिति सुव्यक्तं भवति। स हि वनेचर इव व्यवहरति स्म। अवधीयतां ननु अचेतनविटपेन किमपराद्धं येन तं शशाप। स च शुष्कतां गतः। वस्तुतस्त्विदं प्रतीयते तस्याभिशापेन स तरुर्नाशुष्यत् परं नात्र किमप्याश्चर्यं यदि तादृशविषप्रयोगेणाशुष्यदिति ॥८१॥

(८२) तेषान्तु दिनानां क्लेशादव्यवहितपरं सूर्यः सान्धकारो भविष्यति, चन्द्रश्च स्वज्योत्स्नां न प्रदास्यति, नक्षत्राणि च नभसः पतिष्यन्ति। गगनस्य बलानि च विचलिष्यन्ति।—इ०म० प० २४। आ० २९

**स०**—साधु यीशो साधु ? नभसो नक्षत्राणां च पतनं केन विज्ञानेनाधिगतं भवता ? का नाम विहायसः पृतना या विचलिष्यति ? यीशुश्चेद् मनागप्यध्यैष्यत तर्ह्यवश्यं व्यज्ञास्यत् सर्वाण्यपीमानि नक्षत्राणि महीवद् भूमण्डलानि वर्तन्त इति। सर्वमिदं व्यनक्ति यत् "यीशुस्तक्षणः कुले समुत्पन्नो नित्यं काष्ठानां वर्तनं, तक्षणं, लवनं, मिथः सन्धानं च विदधाति स्म। यदा तु तस्य चेतसि अहमप्यत्रारण्यकानां प्रदेशे सिद्धो (पैगम्बरः) भवितुमर्हामीति समीहया पदं कृतं तदोपदेष्टुमारेभे। स बहूनि शोभनानि वचनान्युदीरयामास भूयांसि च गर्ह्याणि। तत्रत्या वनेचरास्तान्यङ्गीचकार्षुः। यथाद्यत्वे यूरोपदेशो ज्ञानेनोद्भासते, यदि तदापि तादृशोऽभविष्यत् नूनमयं मनागपि कृतार्थो नाभविष्यत्। साम्प्रतं प्रतिबोधवन्तोऽपि यूरोपदेशीया दुराग्रहेण निःसारममुं धर्मं परित्यज्य सर्वथा सत्यं वेदमार्गं नाभ्युपयन्तीतीयमेव तेषां धृष्टता ॥८२॥

(८३) द्यावापृथिव्यावत्येष्यतो मम वाक्यानि तु नैवात्येष्यन्ति ।

—इ० म० प० २४ । आ० ३५

**स०**—इदमप्यज्ञानजाड्यविजृम्भितम् । क्व नु नभः कम्पित्वा गमिष्यति । यदातिसूक्ष्मत्वाद् विहायो लोचनाभ्यां द्रष्टुं न शक्यते तदा कः खलु शक्नोति तस्य कम्पनं निरीक्षितुम् ? नापि महात्मान आत्मानं श्लाघन्ते ॥८३॥

(८४) ततः परं स वामे स्थितानपीत्थमालपिष्यति । रे शप्ता ! यूयं मत्तो दूरमपगच्छतानन्तमग्निमुपकल्पितं दियावलस्य तदीयदूतानां च कृते ।

—इ० म० प० २५ । आ० ४१

**स०**—आत्मशिष्याणां स्वर्गं प्रति प्रेषणमन्येषां चानन्ताग्नौ पातनं कियाननर्थः । यदाऽऽकाश एव नावस्थास्यते तदा स्वर्ग—अनन्ताग्नि—नरकादय क्व स्थास्यन्ति ? दियावलं तदीयदूतांश्चेश्वरश्चेन्न निरमास्यत् कथं तर्ह्येतावदायोजनं नरकस्य संविधातुमभविष्यत् ? कीदृशः स परमेश्वरो यतः केवलो दियावल एव न विभाय स तस्यैव दूतः सन् तस्मा एताभिदुद्रोह । स च परमेश्वरस्तमादावेव धृत्वा कारायां निक्षेप्तुं हन्तुं च न शशाक । कीदृशं तस्य सामर्थ्यम् ? यद् यीशुं परमेश्वरस्य सूनुमपि दियावलश्चत्वारिंशद्दिनानि पीडयामास ? यीशुश्च तस्य किमपि कर्तुं न शशाक तस्माद् यीशुर्नेश्वरस्य सूनुर्नापि बाइबिलवर्णितः परमेश्वरः ॥८४॥

(८५) तदा द्वादशशिष्याणामेक इस्करियोतीयो यहूदा इत्यभिधो मुख्ययाजकानां समीपं गत्वा जगाद यद्यहं तं युष्मासु समर्पयेयं तद्यूयं मह्यं किं दातुं सम्मताः ? ततस्ते त्रिंशद्रौप्यमुद्रास्तोलयामासुस्तस्य कृते ।

—इ० म० प० २६ । आ० १४, १५

**स०**—पश्यत इदानीम्, यीशोः सर्वश्चमत्कारः परमेश्वरत्वञ्चात्रापावृतम्, यतस्तस्य पट्टशिष्य एव यदा तत्सङ्गेन पवित्रो न सम्पन्नस्तदा स मरणानन्तरमन्यान् पावयिष्यतीति दूरापास्तम् । अपि च ते नरा ये तं सर्वतोभावेन विश्वसन्ति कियन्नाम प्रतार्यन्ते । यो हि जीवन्नेव सततमनुव्रजन्तमपि शिष्यं पावयितुं न शशाक उपरतः स किमन्यमनुग्रहीष्यति ।८५।

(८६) तेषां भोजनकाले यीशुः पूपमादायाशीर्वादं कृत्वा तं भङ्क्त्वा शिष्येभ्यो ददौ बभाषे च, गृह्णीत भुँग्ध्वम्, एतन्मम शरीरम् । ततः स पानपात्रमादाय धन्यवादं कृत्वा तेभ्यस्तद् ददौ बभाषे च, पिबतानेन सर्वे यूयम् । एतन्मम शोणितम्, नूतननियमस्य शोणितमिति यावत् ।

—इ० म० प० २६ । आ० २६—२८

**स०**—अपि कश्चिदपि सभ्यो जनः प्रभवत्येवमनुष्ठातुम् ? केवलमारण्यकोऽशिक्षित एवं शक्नोति कर्तुम् । नहि कश्चित् प्रबुद्धमनाः स्वान्ते-

वासिनां भक्ष्यमात्मनो मांसं पेयञ्च रुधिरं वक्तुं पारयति। इदमेवाद्यतनीयैः-र्क्रीश्चीनैः "प्रभुभोजनमिति" व्यपदिश्यत ते हि भोज्यपेयवस्तुषु यीशोर्मांस-रक्तभावनां भावयन्तो भुञ्जते पिबन्ति च। अपि नेदं भीषणं कर्म ? ये निजगुरोरपि मांसरुधिरं भक्ष्यपेयभावनया न परित्यक्तुमर्हन्ति ॥८६॥

(८७) अनन्तरं स पितरं (पितरसं) सिवदियस्य पुत्रौ च सङ्गतान् कृत्वा शोचितुं चारेभे तांश्च जगाद, प्राणा मम मृत्यवे शोकापन्नाः, ततः स किञ्चिदग्रे गत्वाधोमुखो निपत्य प्रार्थयन्नब्रवीत्—भो मम पितः ! यदि शक्यं स्यात्तर्हि पानीयपात्रं मत्तोऽपसरत्।

—इ० म० प० २६, आ० ३७-३९

स०—यीशुश्चेदीश्वरस्य सूनुः न तु प्राकृतो जनो, त्रिकालदर्शी विद्वांश्चाभविष्यत् नैवं तर्हि जात्वचेष्टिष्यत। अनेन स्पष्टं प्रतीयते यद् "यीशुः परमेश्वरस्य तनयः, अतीतानागतयोः परिवेत्ता अंहसां क्षन्ता च विद्यत इति तेन तच्छिष्यैर्वार्थं प्रपञ्चो मुधैव परिकल्पितः" इति। तत्स्मात् स केवलं प्राकृतः सरलः सत्यशीलो अनधीतविद्यश्चासीन्नतु विद्वान् योगी सिद्धश्चाभवदिति सर्वैर्विज्ञेयम् ॥८७॥

(८८) पश्य ! स यावदित्थमभाषत, आगमत् तावद् द्वादशानामेकोऽर्थतो यिहूदास्तेन सार्धञ्च मुख्ययाजकानां जनप्राचीनानाञ्च सकाशाद् असियष्टिधारी महान् जननिवहः। तस्य समर्पयिता तेभ्यः सङ्केतं दत्तवान्, यथा—अहं यं चुम्बिष्यामि स एव सोऽस्ति यूयं तमेव धरतेति। अतः स तत्क्षणं यीशोरन्तिकमुपस्थायावोचत्—गुरो ! प्रणमामि इत्युक्त्वा तं चुचुम्ब। जनास्ते तदोपागम्य यीशौ हस्तार्पणं कृत्वा तं दधुः अन्ये च शिष्यास्तं परित्यज्य पलायन्त। पश्चात्तु द्वौ मृषासाक्षिणावुपस्थायोचतुः "असौ व्याहृतवान्—अहमीश्वरस्य मन्दिरं भङ्क्त्वा दिनत्रये निर्मातुं शक्नोमीति। महायाजकोऽनेनोत्थाय तमब्रवीत्, किमपि त्वं किं न प्रतिभाषसे ? इमौ तव प्रतिकूलं किं साक्ष्यं दत्तः ? यीशुस्तु मौनमवलम्ब्याऽतिष्ठत्। अनन्तरं महायाजकस्तं प्रतिबभाषे, अहं त्वां जीवनमयेनेश्वरेण शपयामि त्वमीश्वरस्य पुत्रः ख्रीस्टो नवेत्यस्मान्वद। यीशुस्तं जगाद, त्वं व्याहार्षीः। महायाजकस्तदा स्ववासांसि विदार्य बभाषे—स ईश्वरनिन्दां चकार, साक्षिणामधिकानां किं प्रयोजनम् ? पश्यताधुनाश्रावि युष्माभिरीश्वरनिन्दा। युष्माभिः किं मन्यते ? ते प्रत्यवदन् स प्राणदण्डमर्हति। ते तदा तस्यास्ये न्यष्ठीवन् मुष्टिभिश्च तमाघ्नन् केचित्तु तं प्राहरन्नवदंश्च ख्रीस्ट ? अस्मान् भविवाचं वद कस्त्वां ताडितवान् ? पितरसस्तु बहिः प्राङ्गण आसीनोऽतिष्ठत्। दासी तदैका तस्यान्तिकमागत्याब्रवीद् यीशो ! त्वमपि गालीलीयेन सहासीः। स तु सर्वेषां समक्षमनङ्गीकुर्वन् जगाद, न बुध्यते मया त्वया किं गद्यते। तस्मिंश्च

पुनर्गोपुरं गते काचिदन्या तं दृष्ट्वा जनाँस्तत्र विद्यमानानवदत्, अयमपि यीशुर्नासरीनामधेयेन साहासीत्। स ततः शप्त्वा पुनरनङ्गीकुर्वन् जगाद, अहं मनुष्यं तं न जानामीति।—इ० म० प० २६ आ० ४७–५०,६१–७२,७४

**स०**—यीशावियदपि सामर्थ्यं प्रतापो वा नासीद् येन स्वान्तेवासिनो विश्वासयितुं शक्नुयात्। तच्छिष्यैः प्राणात्ययेपि निजगुरुर्लोभेन शत्रुषु न समर्पणीयः, नापलपनीयः, न मृषा वाच्यं नापि मिथ्या शप्तव्यम्। यीशुरपि नासीदाश्चर्यभूतः। यथा तौरेतग्रन्थे वर्णितं लूतसद्मनि अतिथीन् संहन्तुं प्रभूतमानवा आचक्रमुस्तत्र परमेश्वरस्य द्वौ दूतावास्तां तौ तानेव नष्टदृशोऽकार्ष्टाम्। यद्यपि गाथैषा नितरामसम्भवा तथापि यीशौ त्वियदपि सामर्थ्यं नासीत्। अद्यश्वः कियानाडम्बरः ख्रीस्टैस्तन्नाम्ना परिकल्पितः। इत्थमवज्ञया प्राणपरित्यागाद् यदि यीशुः स्वयमात्मवधेन समाधिना प्रकारान्तरेण वा प्राणानत्यक्ष्यत्तदा साध्वभविष्यत्। परमन्तरेण विद्यामेषा मतिः कुतः समेयात्? ॥८८॥

(८९) इदानीमेवाहं स्वपितरं याचितुं शक्तोऽस्मि, स च मह्यं द्वादशभ्यो वाहिनीभ्योऽप्यधिकान् स्वर्गदूतान् वितरिष्यतीदं त्वया किमसम्भवं मन्यते?—इ० म० प० २६। आ० ५३

**स०**—स परान् भर्त्सयति, आत्मनः पितुश्च महत्त्वं ख्यापयति परं किमपि कर्तुं न शक्नोति। यदा प्रधानयाजकोऽप्राक्षीदमे जनास्तव प्रतिकूलं साक्ष्यं ददति, एषामुत्तरं देहि, तथापि यीशुर्मौनमवातिष्ठत नैतत्तेन साध्वनुष्ठितम्। वस्तुतस्तु सत्यप्रकाशनमेव समुचितमासीत्। एवमात्मश्लाघां नार्हति स्म। येऽपि तं मुधैव संदूष्य समाघ्नन् तैरपीत्थं न कर्तव्यमासीत्। नहि यीशोस्तादृशः कोऽप्यपराधः समभवत् येन तादृशं दण्डं लभेत, परं तेऽपि वराकाः किं कुर्वन्तु, आरण्यकास्ते न्यायं कथं विज्ञातुमर्हन्ति। यीशुश्चेदात्मानमीश्वरस्य सूनुं नोपदेक्ष्यत् ते चापि तेन सहेत्थं न व्यवहरिष्यंस्तर्ह्युभयोरपि कृते साधु अभविष्यत्। परन्ते वराका एतावतीं विद्यां धर्मशीलतां न्यायपरायणतां च कुतः संलभरेन्? ॥८९॥

(९०) अनन्तरं यीशुर्देशाधिपतेः समक्षमतिष्ठत्। स तु देशाधिपतिस्तं पप्रच्छ त्वं किं यहूदीयानां राजा? यीशुस्तमवादीत्, भवान् व्याहरति। मुख्ययाजकेन प्राचीनैश्च समारोपिताभियोगे स किमपि न प्रत्यभाषत। तदा पीलातस्तं ब्रवीति, न किं शृणोषि तव विरुद्धमिमे कति साक्ष्यवचांसि वदन्ति? स तु तस्मै नैकस्यापि वचनस्योत्तरमदादनेन देशाधिपतिरतीवाश्चर्यं मेने। पीलातस्तानब्रवीत्, ख्रीस्टाभिधं तर्हि तं यीशुं प्रति मया किं कर्तव्यम्? सर्वे तमब्रुवन् स क्रुशमारोप्यताम्। यीशुन्ततः कशाभिः प्रहार्य क्रुशारोपणार्थं समर्पयामास। देशाधिपतेः सैनिकनरा यीशुं तदा राजहर्म्यं-

स्यानन्तरं नीत्वा सैन्यदलं कृत्स्नं तस्य परितः समागमयामासुः। वस्त्राणि तस्य च मोचयित्वा तं लोहितवर्णं प्रावारं परिधापयामासुः कण्टकैश्च स्रजं निर्माय तस्य शिरसि न्यदधुः तस्य दक्षिणहस्तोपरि च नलं समर्पयामासुरनन्तरं तस्य समक्षं जानुपातं कुर्वन्त उपहासेन तमवदन्, यहूदीयानां राजन् प्रणमामः। पुनश्च तस्मिन् निष्ठीव्य तं नलमादाय तस्य शिरोऽताडयन्। इत्थं तमुपहस्य तं प्रावारं मोचयित्वा तस्य स्ववासांसि परिधाप्य च क्रुशमारोपयितुं तमुपनिन्युः। अनन्तरं गलितमर्थतः कपालस्य स्थलमित्यभिधं स्थानमुपस्थाय पानीयार्थं ते तस्मै पित्तमिश्रितमम्लरसं ददुः। स तु तमास्वाद्य पातुं नाङ्गीचक्रे। तस्य शिरसश्चोर्ध्वं ते बबन्धुरिदं तस्याभियोगलेख्यं यथा यहूदीयानां राजा यीशुरयम्। तदा च दस्यू द्वौ तेन सार्धं क्रुशे आरोप्येताम्, एकतस्तस्य दक्षिणे वामे चान्यतरः।

अनन्तरं ये मनुष्या मार्गेण तेनाव्रजंस्ते शिराँसि चालयन्तस्तमित्थमनिन्दन् यथा, मन्दिरभञ्जक ! आत्मानं तारय। त्वञ्चेदीश्वरस्य पुत्रोऽसि क्रुशादवरोह। शास्त्राध्यापकैः प्राचीनैश्च सार्धं तमुपहसन्तो मुख्ययाजका अपि तमवदन्, योऽपरानवतारयत्, आत्मानं तारयितुं न शक्नोति। स चेत् इस्रायेलस्य राजास्ति तर्हीदानीं क्रुशादवरोहतु तथा कृते तस्मिन् वयं विश्वसिष्यामः। स ईश्वरे विश्वासं कृतवान् ईश्वरश्चेत्तमभिरोचयति तर्हि तमुद्धरतु। यतः स कथितवान् "ईश्वरस्य पुत्रोऽहम्।" तेन सार्धं क्रुशारोपितौ दस्यू तावपि तथैव तमपवदताम्। आमध्याह्नात्तु तृतीयप्रहरं यावत् कृत्स्ने भूतलेऽन्धकारोऽभूत्। तृतीये प्रहरे च यीशुरुत्क्रोशन्नुच्चस्वेरण बभाषे—"एली, एली, लाम्मा शबक्तनी", अस्यार्थोऽयम्—

हे मदीश ! मदीश ! त्वं मां परित्यक्तवान्, कुतः। तत्श्रुत्वा तत्र स्थितानां नराः केचिदवदन् असावेलियमाह्वयति। तत्क्षणं च तेषामेको द्रुतमा स्पञ्जमादायाम्लरसेन पूरयित्वा नलाग्रे बद्ध्वा तस्मै पातुमदात्। ततः परं यीशुः पुनरुच्चैरुत्क्रुश्य प्राणाँस्तत्याज।

—इ० म० प० २७ आ० ११-१४, २१, २३, २६-३१, ३३-३५, ३७-४८,५०

**स०**—यीशुना सह दुर्वृत्तैस्तैः सर्वथा दुर्व्यवहृतम्। परमत्र यीशुरपि किञ्चिदपराध्यति। न हि परमेश्वरस्य कश्चित्तनयो नापि स कस्यचिज्जनकः। यदि स कस्यचिज्जनको भवेत् तर्हि कस्यचित् श्वशुरः श्यालः सम्बन्ध्यपि भवेत्। अपि च यदाऽध्यक्षोऽप्राक्षीत् तदा तेन यथायथं सत्यं वाच्यमासीत्। इदञ्च यथार्थमेव—यीशुना पूर्वमनुष्ठितेषु साश्चर्येषु सत्येषु साम्प्रतमपि क्रुशादवरुह्य सर्वान् निजान्तेवासिनो व्यधास्यत्। अपि च यीशुश्चेदीश्वरस्य पुत्रोऽभविष्यत्तर्हि ईश्वरोऽपि तमुदहरिष्यत्। तस्य च त्रिकालदर्शित्वे कथं स पित्तमिश्रमम्लरसमत्याक्षीत् पूर्वत एव कथं न व्यज्ञासीत् ?

अपरञ्च यदि नाम स लोकोत्तरोऽभविष्यत् कथं तर्ह्युत्क्रुश्य प्राणानत्यक्ष्यत्, अतः सर्वैर्विज्ञेयं कोऽपि मानवः कियदपि चातुर्यं विदध्यात् परमन्ततः सत्यं प्रकाशितं भवत्येव। तस्मादिदमपि सिद्धं भवति यीशुस्तदानीन्तनेषु वनेचरेषु मनाक् चतुरोऽभवत्। नासीत् स लोकोत्तरः, नेश्वरस्य सूनुर्न च विद्वान्। एवं हि चेदभविष्यत् कथं तर्हि स दुःखमुपाभोक्ष्यत् ॥९०॥

(९१) पश्य च तदा महान् भूकम्पोऽभूत्, यतः प्रभोरेको दूतः स्वर्गादवरुह्य समीपमागत्य प्रस्तरं तं द्वाराल्लोठयित्वा तदुपर्युपविवेश। स त्वत्र न विद्यते यतः स यथोक्तवाँस्तथैवोत्थितः। शिष्येभ्यस्तयोः संवादं दातुं गच्छत्यौ यीशुस्ते साक्षात्कृत्याब्रवीत्। युवयोर्मङ्गलं भूयात् ते चोपागत्य तस्य चरणौ धृत्वा वन्दनामकार्ष्टाम्। तदा यीशुस्तेऽवादीत्, मा भैष्टं गत्वा तु मम भ्रातॄन् ममैनमादेशं ज्ञापयतं यत्तैर्गालीलं गन्तव्यं, तत्रैव ते मां द्रक्ष्यन्तीति। एकादशशिष्यास्तु गालीलं गत्वा यीशुना निर्दिष्टे गिरावुपतस्थिरे तञ्च दृष्ट्वा तस्य वन्दनां चक्रुः। केचित्तु समशेरत। यीशुः समीपमागत्य तान् संलपन् बभाषे। स्वर्गमेदिन्योर्निखिलं मह्यं सामर्थ्यं प्रादायि। पश्यत युगान्तं यावत् सर्वदिनान्यहं युष्माभिः सार्धमासे।

—इ० म० प० २८। आ० २,६,९,१०,१६—१८,२०

(स०) सर्वमप्येतत् सृष्टिक्रमविद्ययोः प्रतिकूलत्वात् न शक्यते मन्तुम्। अपि यीशवीयैः परमेश्वरः तह्सीलदारः कलक्टरो वा सम्पादितः ? ते हि विश्वसन्ति परमेश्वरस्य सविधे दूता विद्यन्ते यानितस्ततः प्रेषयति, स्वर्गादवरोहयति। किं तेनैव देहेन स स्वर्गमारुरोह मृत्योश्चोत्थितः। यतस्ते योषितौ तस्य चरणौ धृत्वा वन्दनामकार्ष्टामित्युपन्यस्तं तदानीं तदेव शरीरमासीत्। तच्च दिनत्रये कथं न विगलितम्। स्वमुखादेव 'स्वर्गमेदिन्योर्निखिलं सामर्थ्यमदायीति, भाषणमात्मनो गर्वं द्योतयति। सर्वमेतदसम्भाव्यम्, यत् स शिष्यैः सम्मिल्य संललाप इति, यतो यदीदं सत्यं भवेत्तर्ह्यद्यापि केचन शवागारान्निष्क्रम्य कथं नोत्तिष्ठन्ति ? एतच्छरीरेणैव च कथं न स्वर्गमारोहन्ति ? ॥९१॥

इदं मत्तीरचितसुसंवादविषये किमपि लिखितम्। साम्प्रतं मार्करचितसुसंवादविषये लेखिष्यामः।

## मार्कलिखितः सुसंवादः

(९२) नासौ किं तक्षा ?—मार्क० प० ६ आ० ३

स०—वस्तुतो योषेफस्तक्षाऽऽसीत्। अतो यीशुरपि स एव। कियन्ति वर्षाणि यावत् निजकर्म विदधाति स्म। अनन्तरं सिद्धो भवितुमारेभे। शनैः शनैश्च परमेश्वरस्य सूनुरेवाभवत्। वनेचरैश्च तैस्तस्मिन् तथा विश्वासः

संमकारि। तदैवात्मनश्चातुर्यं ख्यापयामास। मानवेषु भेदविरोधयोः प्रतिपादनं तस्य स्वाभाविकं कर्म, तक्षा हि सततं काष्ठानि छिनत्ति विदारयति च यीशुश्च तक्षाऽऽसीत्। अतो मानवेष्वपि स छेदनभेदनादिकं विरोध-प्रतिपादनं करोति स्म ॥९२॥

## लूकरचितः सुसंवादः

(९३) यीशुस्तमवादीत् किमर्थं मां परमोत्तमं वदसि परमोत्तमः कोऽप्यन्यो नास्ति केवलमीश्वरः।—इ० लूक० प० १८। आ० १९

**स०**—यदा यीशुरेवैकमद्वितीयमीश्वरं वदति तदा यीशवीयैः पवित्रात्मा पिता पुत्रश्चैतत् त्रयं कुतो निर्मितम् ? ॥९३॥

(९४) स तं हेरोदस्य समीपं प्राहिणोत्। यीशुं दृष्ट्वा हेरोदोऽतीव जहर्ष। यतः सुदीर्घकालात् स तमदिदृक्षत यतः स तमधि (तद्विषयिणीः) बह्वीः कथा अशृणोत्। तेन प्रदर्शितं किञ्चनाभिज्ञानं द्रक्ष्यामीत्याशापि तस्य सञ्जाता। तस्मात् स तं बहुप्रश्नानपृच्छत्। स तु तं न किमपि प्रत्यभाषत।

—इ० लूक० प० २३ आ० ७-९

**स०**—मत्तीरचिते सुसंवादे नेदं दृश्यते तस्मादत्र विषये साक्षिणो (मत्तिलूकसंवादयोः) मिथो विरुद्ध्यन्ते, साक्षिभिर्हि समान एवार्थः प्रति-पादनीयः। यदि यीशुश्चतुरश्चमत्कारी चाभविष्यत् तर्हि हेरोदं प्रत्यवक्ष्यत् किमप्याश्चर्यप्रदं कर्म चादर्शयिष्यत्। अनेन प्रतीयते यत् यीशुर्नापि विचक्षणः न च लोकोत्तर आसीत् ॥९४॥

## योहनलिखितः सुसंवादः

(९५) आदौ 'वचनं' आसीत्, स च 'वचनं' ईश्वराभिमुख आसीत्। स च 'वचनं' ईश्वर आसीत्। येन सर्वमुद्भूतं तन्मध्ये च तं विना न किमप्युद्-भूतम्। तस्मिन् जीवनमासीत् तज्जीवनं च मनुष्याणां ज्योतिरासीत्।

—यो० प० १। आ० १—४

**स०**—आदौ वचनं वक्तारमन्तरेण न सम्भवति तद्वचनमीश्वरा-भिमुखमासीच्चेदयं "वचनमादौ आसीत्" इति व्यर्थम्। न च वचनं कर्हिचित् ईश्वरो भवितुमर्हति यतः स यद्यादावीश्वरेण सह आसीत् तर्हि ईश्वरस्य वचसो वा पूर्वत्वं दुर्घटम्। केवलं वचनेनैवेयं सृष्टिर्नोत्पत्तुं शक्या यावत् तस्या उपादानकारणं न भवेत्। अपि च वचनं विनापि मौन्येनैव सृष्टेः स्रष्टा तामुत्पादयितुं प्रभवति। किमासीत् जीवनं कस्मिंश्चासीत् ? अनेन वचनेन (तस्मिन् जीवनमासीत् इत्यादिना) जीवाननादीन् मंस्यध्वे ?

जीवानामनादित्वे परमेश्वर आदमस्य नासारन्ध्रे श्वासमारुतमक्षैप्सीदिति वचनमसत्यम् । अपि जीवनं मनुष्याणामेव ज्योतिर्न तु पश्वादीनाम् ?।९६।

(९६) अपि च रात्रिभोज्यसमये शत्रुषु तत् समर्पणस्य बीजं दियावलः शिमोनसुतस्य यहूदेष्करियोतीयस्य हृदि निचिक्षेप ॥

—यो० प० १३ आ० २

स०—नेदं सत्यं भवितुमर्हति यदि कश्चित् यीशवीयान् पृच्छेद् दियावलः सर्वान् प्रलोभयति कस्तर्हि दियावलं प्रलोभयति ? दियावलः स्वयमेव विलुभ्यत इति चेन्मानवा अपि तर्हि स्वत एव विप्रलोब्धुं शक्नुवन्ति । पुनः किं कृत्यं दियावलस्य ? परमेश्वर एव दियावलस्य प्रलोभक इति चेदङ्गीक्रियते तर्हि तेषामीश्वर एव महादियावलः सम्पन्नः, स एव तन्मुखेन सर्वान् प्रलोभयति । अपीदृशानि कर्माणि परमेश्वरस्य भवितुमर्हन्ति ? वस्तुतस्तु एतद्ग्रन्थनिर्मातारो ये च यीशुं परमेश्वरस्य सूनुं मन्यन्ते, ते भवन्तु नाम दियावलाः । परं नाप्येतत् पुस्तकमीश्वरप्रणीतं नाप्यत्र वर्णितः परमेश्वरो वस्तुतः परमेश्वरो नापि यीशुः परमात्मनस्तनयो भवितुमर्हति ॥९६॥

(९७) युष्माकं हृदयं मैवोद्विजताम्, ईश्वरे विश्वसित, मय्यपि विश्वसित, मम पितुर्निकेतने वहवो वासाः सन्ति । नोचेद् युष्मभ्यमकथयिष्यम्, युष्मदर्थं हि स्थानं सज्जीकर्तुं गच्छामि । यदि च गत्वा युष्मदर्थं स्थानं सज्जीकरोमि तर्हि पुनरागत्य मत्समीपं युष्मान् ग्रहीष्यामि । यत्राहं वर्ते तत्र यूयमपि तथा वर्तिष्यध्वे । यीशुस्तं वदति, अहमेव पन्थाः सत्यं जीवनञ्च, नान्येनोपायेन मनुष्यः पितुः समीपमायाति केवलं मया । माञ्चेदज्ञास्यत तर्हि मत्पितरमप्यज्ञास्यत ।—यो० प० १४ आ० १-३, ६-७

स०—पाठकाः ! यीशुवचनेष्ववधीयताम्, अपीमानि पोपानां वचनेभ्यो न्यूनानि ? यीशुश्चेदिदं कैतवं न व्यरचयिष्यत् कस्तर्हि तन्मतमग्रहीष्यत् ? अपि यीशुः स्वजनकमेकाधिकारेणागृह्णात् ? यस्य च यीशोर्वश्यत्वे पराधीनतयेश्वरत्वमेव अपहृतं भवति यतः परमेश्वरः कस्यापि माध्यस्थ्यं न शृणोति । अपि यीशोः पूर्वं कोऽपि परमेश्वरं नालभत । सर्वमिदं—स्वपितुर्विषयेऽभिमननम्, स्थानसज्जीकरणार्थमुद्योगादिकथनम्, स्वमुखेनैवात्मनः सत्यजीवनयोः ख्यापनम्—तस्य दाम्भिकतां द्योतयति । तस्मादिदं नार्हति सत्यं भवितुम् ॥९७॥

(९८) सत्यं सत्यं युष्मानहं ब्रवीमि मयि यो विश्वसिति, मया क्रियमाणानि कर्माणि तेनापि कारिष्यन्ते, तेभ्यो महत्तराणि च कारिष्यन्ते ।

—यो० प० १४ । आ० १२

स०—ननु यदि यीशवीया यीशौ पूर्णतो विश्वसन्ति तर्हि तथैव तेऽपि शवोत्थापनादिकर्मजातं कथन्नानुष्ठातुं शक्नुवन्ति ? यदि च यीशौ विश्वा-

सेनापि त आश्चर्याणि कर्तुं न प्रभवन्ति तर्हि यीशुरपि तानि न व्यधादित्यसंशयं प्रत्येतव्यम् । यतः स स्वयमेवाचष्टे "यूयमपि मयि विश्वासेन आश्चर्यकर्माणि करिष्यथ इति"। तथाप्यद्यत्वे कश्चनापि यीशवीयस्तथा कुर्वाणो नावलोक्यते। कस्य ज्ञानचक्षुर्विनष्टं यो यीशुं शवोत्थापनाद्याश्चर्यकर्मणामनुष्ठातारं मन्येत ॥९८॥

(९९) य एकः सत्य ईश्वरः ।—यो० प० १७ । आ० ३

स०—यदैकः सत्य ईश्वरस्तदा यीशवीयानां परमेश्वरत्रयप्रतिपादनं (पितुः पुत्रस्य पवित्रात्मनश्चेति) सर्वथा मिथ्या वर्तते ॥९९॥

इदानीं श्रूयतां योहनस्याद्भुतवार्ता एवंविध इञ्जीलाख्ये पुस्तके बहुषु स्थलेषु अन्यथा वार्ता सन्ति ।

## योहन-प्रकाशितवाक्यानि

(१००) तेषां शिरांसि च सुवर्णकिरीटैस्सुभूषितानि तस्य सिंहासनस्यान्तिके च सप्तदीपा ज्वलन्ति त ईश्वरस्य सप्तात्मानः। अपरं सिंहासनस्यान्तिके स्फटिकतुल्यः काचमयो जलाशयो विद्यते। अन्यञ्च अग्रतः पश्चाच्च बहुचक्षुष्मन्तश्चत्वारः प्राणिनः सिंहासनस्य मध्ये चतुर्दिक्षु च विद्यन्ते ।—यो० प० ४ । आ० ४—६

स०—साम्प्रतमवधीयताम्—अप्ययं नास्ति यीशवीयानां स्वर्गो नगरसन्निभः ? एषां परमेश्वरश्च दीपकाग्नितुल्यः ? अपि च हेम्नो मुकुटाद्यलङ्कारधारणमग्रतः पश्चाच्च चक्षुषां सद्भावः सर्वथैवासम्भवः। किञ्चैते प्राणिनः सिंहादयश्चत्वारो जन्तव इति उपन्यस्तम् । कः पुमानिमानसम्भवगाथान् सम्मन्तुं शक्नोति ॥१००॥

(१०१) अनन्तरं तस्य सिंहासनोपविष्टजनस्य दक्षिणहस्ते अन्तर्बहिश्च लिखितं पुस्तकमेकं मया दृष्टं तत् सप्तमुद्राभिरङ्कितमासीत् । कः पुस्तकमेतद् विवरीतुं तन्मुद्रां मोचयितुं चार्हति ? किन्तु स्वर्गमर्त्यपातालेषु तत् पुस्तकं विवरीतुं निरीक्षितुञ्च कस्यापि सामर्थ्यं नाभवदहं बहुरुदितवान् यस्तत् पुस्तकं विवरीतुं निरीक्षितुञ्चार्हति तादृशजनस्यात्राभावात् ।

—यो० प्र० प० ५ । आ० १—४

स०—कीदृशं यीशवीयानां स्वर्गस्य मनोहरं चित्रं तत्र सिंहासनानां मानवानाञ्च कीदृशं रामणीयकम् । सप्तमुद्राभिश्चिह्नितमेकं पुस्तकं यद् विवरीतुं निरीक्षितुञ्च स्वर्गमेदिन्योः कस्यापि सामर्थ्यं नाभवत् । अनन्तरं प्राचीनानामेकेनागादि "स एव यीशुः पत्राणां मोचकः"। यस्य विवाहः तस्यैव गीतानीति जनप्रवादवदिदं भाति सर्वमिदं माहात्म्यं यीशोरेव विषये गीयते परं सर्वमप्येतत् कल्पनामात्रम् ॥१०१॥

(१०२) अपरं सिंहासनस्य चतुर्णां प्राणिनां प्राचीनवर्गस्य च मध्ये एको मेषशावको मया दृष्टः स छेदित इव तस्य सप्तशृङ्गाणि सप्तलोचनानि च सन्ति तानि कृत्स्नां पृथिवीं प्रेषिता ईश्वरस्य सप्तात्मानः।

—यो० प्र० ५। आ० ६

स०—अधुना अस्य योहनस्वप्नस्य मनोव्यापारं पश्यत—तस्मिन् त्रिदिवे केवलं यीशवीयाश्चत्वारः प्राणिनः यीशुश्च विद्यते नान्यः कश्चन। इदं महदाश्चर्यंभूतं यदत्र यीशोः केवलं नेत्रद्वयमासीत् शृङ्गाणाञ्च चिह्नमपि नासीत्, स्वर्गे पुनः सप्तशृङ्गः सप्तनेत्रश्चाभवत् ते च परमेश्वरस्य सप्तात्मान आसन्। अहो ! यीशवीयैः कथमेतादृश्यो वार्ता अमन्यन्त ! एतैः स्तोकन्तु विचारणीयमासीत् ॥१०२॥

(१०३) पुस्तके गृहीते चत्वारः प्राणिनः चतुर्विंशतिप्राचीनाश्च तस्य मेषशावकस्याग्रे प्रणिपतन्ति तेषामेकैकस्य करयोर्वीणा सुगन्धिद्रव्यैः परिपूर्णं स्वर्णमयपात्रञ्च तिष्ठति तानि पवित्रलोकानां प्रार्थनास्वरूपाणि।

—यो० प्र० प० ५। आ० ८

स०—यदा यीशुः स्वर्गे नासीत् तदैते वराकाश्चत्वारः प्राणिनः चतुर्विंशतिप्राचीनाश्च सुगन्धिद्रव्यदीपनैवेद्यादिभिः कम्पूजयन्ति स्म ? साम्प्रतं केचन क्रिश्चियनमतावलम्बिनो मूर्तिपूजां निराकुर्वन्ति एषां स्वर्गश्च प्रतिमार्चननिकेतनं विद्यते ॥१०३॥

(१०४) अनन्तरं मयि निरीक्षमाणे मेषशावकेन तासां सप्तमुद्राणामेका मुद्रा मुक्ता ततस्तेषां चतुर्णामेकस्य प्राणिनः "आगत्य पश्येति" वाचको मेघगर्जनतुल्यो रवो मया श्रुतः। ततः परमेकः शुक्लाश्वो दृष्टः, तदारूढो जनो धनुर्धारयति तस्मै च किरीटमेकमदायि ततः स विजयमानो विजेष्यमाणश्च निर्गतवान्, अपरं द्वितीयमुद्रायां तेन मोचितायां ततोऽरुणवर्णोऽश्व एको निर्गतवान् तदारोहिणे पृथिवीतः शान्त्यपहरणस्य सामर्थ्यं समर्पितम्। तृतीयमुद्रायां तेन मोचितायां ततः कालवर्णो एकोऽश्वो मया दृष्टः। तदा अनन्तरं चतुर्थमुद्रायां, तेन मोचितायां ततः पाण्डुरवर्ण एकोऽश्वो मया दृष्टः। रोहिणो नाम मृत्युरिति।—यो० प्र० प० ६। आ० १—५, ७—८

स०—अपि नेमान्युपाख्यानानि पुराणाख्यायिकाभ्योऽप्ययुक्ततराणि ? पुस्तकानां मुद्रासु अश्वा अश्ववाराश्च कथमवस्थातुं प्रभवन्ति। यैरयं स्वापोत्स्वप्नः सत्यत्वेनाङ्गीकृतः नूनं ते नितरां मूढधियः ॥१०४॥

(१०५) त उच्चैरिदं गदन्ति, हे पवित्र सत्यमय प्रभो ! कुतो यावत्त्वया न्यायो न विधास्यते। अस्माकं रक्तपातस्य पृथिवीनिवासिभ्यः प्रतिशोधं पूरयितुं कतिकालं विलम्बसे ? ततस्तेषामेकैकस्मै शुभ्रः परिच्छदोऽदायि वाचिकञ्चाकथ्यत यूयमल्पकालं स्थ, अतो युष्माकं ये सह दासाः भ्रातरो

यूयमिव घातिष्यन्ते तेषां संख्या यावत् सम्पूर्णतां न गच्छति तावद् विरमत ।
—यो० प० ६ । आ० १०, ११

स०—यीशवीयाः स्वन्यायं कारयितुं स्थानात् स्थानं परिभ्रमन्तो रोदिष्यन्ति, ये केचिच्च वेदपथमवलम्बिष्यन्ते तेषां न्यायविचारेऽल्पीयानपि विलम्वो न भविष्यति। यीशवीयाः प्रष्टव्या अपि साम्प्रतं परमात्मनो न्यायसभा समाप्तिमिता ? न्यायकार्यञ्च साम्प्रतं नानुष्ठीयते ? अधिकारिणश्च निरुद्यमास्तिष्ठन्ति ? एवं पृष्टा ह्येते जोषमासते। एषां प्रभुः परमेश्वरः परिमुह्यत्यपि यत एषां प्रार्थनया एतच्छत्रुभ्यो झटिति वैरं निर्यातयितुं प्रवर्तते ते च तथा क्रोधपूर्णस्वभावा यन्मरणानन्तरमपि स्ववैरं निर्यातयन्ति तेषु मनागपि क्षान्तिर्नास्ति यत्र च सहनशीलता न भवति तत्र दुःखस्य कः पारावारः ॥१०५॥

(१०६) गगनस्थताराश्च प्रबलवायुना चलितादुदुम्बरवृक्षान्निपतितान्यपक्वफलानीव भूतले न्यपतन्। आकाशमण्डलञ्च सङ्कुच्यमानपत्रमिवान्तर्धानमगमत्।—यो० प्र० प० ६। आ० १३, १४

स०—यत एव भविष्यसूचको योहनो निर्विद्यस्तत एव ईदृशीमनर्गलां गाथामगायत। नक्षत्राणि कृत्स्नानि भूमण्डलानि कथं तानि पृथिव्यां पतितुं शक्नुवन्ति, सूर्यादीनामाकर्षणञ्च कथं तानीतस्ततो गमयिष्यति। अपि स गगनं कटमिवावबुध्यते ? नेदं व्योम साकारं वस्तु यत् कश्चित् परिवेष्टितुं समाहर्तुं वा शक्नुयात् सर्वमिदं योहनप्रभृतीनां वनेचरत्वं व्यनक्ति कथं ते विषयानिमान् ज्ञातुं शक्नुवन्ति ॥१०६॥

(१०७) ततः परं मुद्राङ्कितलोकानां संख्या मयाश्रावि। इस्रायेलस्य सर्ववंशीयाश्चतुश्चत्वारिंशत्सहस्राधिकलक्षलोकाः मुद्रयाङ्किता अभवन्, यहूदावंशे द्वादशसहस्राणि।—यो० प्र० प० ७। आ० ४, ५

स०—बाइबिलग्रन्थे वर्णितः परमेश्वरोऽपि केवलमिस्रायेलप्रभृतिवंशानामधिपतिरुत कृत्स्नस्य जगतः ? केवलं तेषामेव प्रभुश्चेन्नाभविष्यत् कथं तर्हि तत्पक्षमेवाग्रहीष्यत् ? स तेषामेव साहाय्यं करोति स्म अन्यवंशानां जातीनां वा नामापि न गृह्णाति स्म। इस्रायेलवंशादिमानवानां मुद्रयाङ्कनमल्पज्ञत्वं योहनस्य वा मिथ्या कल्पना विद्यते ॥१०७॥

(१०८) तत्कारणात् त ईश्वरस्य सिंहासनस्यान्तिके तिष्ठन्तो दिवारात्रं तस्य मन्दिरे तं सेवन्ते।—यो० प्र० प० ७। आ० १५

स०—अपि नेदं महत् प्रतिमार्चनम् ? तेषामीश्वरश्च विग्रहवान् जन इव परिच्छिन्नो नास्ति ? अपि च यीशवीयानामीश्वरः रात्रौ न स्वपिति अन्यथा कथं तं नक्तं सेवितुं प्रभवेयुः ? तस्य निद्राभङ्गोऽपि भविष्यत्येव। यश्चाहर्निशं जागर्ति सोऽसंशयं विक्षिप्तो व्याधिनिपीडितश्च सञ्जायते।१०८

(१०९) ततः परमन्य एको दूत आगतः स स्वर्णधूपाधारं गृहीत्वा वेदिमुपातिष्ठत् प्रचुरधूपाश्च तस्मै दत्ताः। ततस्तस्य दूतस्य करात् पवित्र-लोकानां प्रार्थनाभिः संयुक्तधूपानां धूम ईश्वरस्य समक्षमुदतिष्ठत्। पश्चात् स दूतो धूपाधारं गृहीत्वा वेद्या वह्निना तं पूरयित्वा पृथिव्यां निक्षिप्तवान् तेन रवमेघगर्जितानि विद्युतो भूमिकम्पश्चाभवन्।

—यो० प्र० प० ८। आ० ३-५

**स०**—तेषां स्वर्गेऽपि, वेद्यो, धूपाः, दीपाः, नैवेद्यञ्च विद्यन्ते तूरीशब्दश्च तत्र सञ्जायते। अप्येषां स्वर्गः वैरागिमन्दिरेभ्यः काञ्चिदपि न्यूनतामा-वहति ? तदपेक्षयापि तत्र महानाडम्बरः समवलोक्यते ॥१०९॥

(११०) प्रथमेन तूर्यां वादितायां रक्तमिश्रितौ वह्निवर्षोपलौ पृथिव्यां निक्षिप्तौ तेन पृथिव्यास्तृतीयांशो दग्धः।—यो० प्र० प० ८। आ० ७

**स०**—साधु यीशवीयानां भविष्यवादिन्! अयं परमेश्वरः, तस्य दूताः, तूरीध्वनिः, प्रलयलीला च सर्वमिदं बालानां क्रीडा प्रतीयते ॥११०॥

(१११) ततः परं पञ्चमदूतेन तूर्यां वादितायां गगनात् पृथिव्यां निपतित एकस्तारको मया दृष्टः, तस्मै रसातलकूपस्य कुञ्चिकादायि तेन रसातलकूपे मुक्ते महाग्निकुण्डस्य धूमः इव धूमस्तस्मात् कूपादुद्गतः। तस्माद् धूमात् पतङ्गेषु पृथिव्यां निर्गतेषु नरलोकस्य वृश्चिकवद्बलं तेभ्योऽदायि। येषां भालेष्वीश्वरस्य मुद्राया अङ्को नास्ति केवलं तेषां मानवानां पञ्चमासान् यावत् यातनादानाय तेभ्यः सामर्थ्यमदायि।—यो० प्र० प० ९। आ० १-५

**स०**—अपि तूरीशब्दमाकर्ण्य नक्षत्राणि तेष्वेव दूतेषु तत्रैव च स्वर्गे न्यपतन् ? यतस्तानि नात्र पृथिव्यां न्यपतन्। ते कूपाः शलभाश्च परमेश्वरेण प्रलयवासराय पालिता भविष्यन्ति ते च मुद्रां सम्प्रेक्ष्य वाचयितुं प्रभवन्त्यपि "मुद्रयाङ्कितान् मा दशत इति"। सर्वमिदं सरलमानवान् भीषयितुं स्वमतं ग्राहयितुञ्च प्रवञ्चनामात्रम्। यदि यूयं क्रिश्चियनमतं न ग्रहीष्यथ तर्हि युष्मान् शलभाः दंक्ष्यन्ति। एतादृश्यो वार्ता निर्विद्येषु प्रचलन्ति न त्वार्यावर्ते। अपि स प्रलयवृत्तान्तो भवितुमर्हति ? ॥१११॥

(११२) अपरम्, अश्वारोहिसैन्यानां संख्या विंशतिकोटिरासीत्।

—यो० प्र० प० ९। आ० १६

**स०**—एतावन्तोऽश्वाः स्वर्गे क्वातिष्ठन् ? कुत्राचरन् ? कुत्र न्यवसन् ? कियद् वा तेषां पुरीषमभवत् ? तस्य च कियान् दुर्गन्धः स्वर्गे समुत्थितः ? वयमार्या एतादृशं स्वर्गमीदृशं परमेश्वरं मतञ्च दूरतो नमस्कुर्मः। सर्वशक्तिमतः परमात्मनो दयया यीशवीयैरप्ययं मतस्त्यज्येत चेत्तर्हि साधु भवेत् ॥११२॥

(११३) अनन्तरं स्वर्गादवरोहन् अपर एको महाबलो दूतो मया

दृष्टः स परिहितमेघस्तस्य शिरश्च मेघधनुषा भूषितं मुखमण्डलं च सूर्यतुल्यं चरणौ च वह्निस्तम्भसमौ। दक्षिणचरणेन सागरे वामचरणेन च स्थले तिष्ठति।—यो० प्र० प० १०। आ० १, २

**स०**—अमीषां दूतानामुपाख्यानं पुराणानां वन्दिनां वा कथामप्यधरीकरोति॥११३॥

(११४) अनन्तरं परिमाणदण्डवद् एको नलो मह्यमदायि स च दूत उपतिष्ठन् मामवदत्—उत्तिष्ठ! ईश्वरस्य मन्दिरं वेदिं तत्रत्यसेवकाँश्च मिमीष्व।—यो० प्र० प० ११। आ० १

**स०**—यीशवीयानां मन्दिराणि न केवलमत्रैवापितु स्वर्गेऽपि निर्मीयन्ते मीयन्ते च। भवतु, यादृशस्तेषां स्वर्गस्तथैव तद्वर्णनम्। अत एव ते अत्र प्रभुभोजने यीशोर्देहावयवमांसरुधिरभावनां भावयन्तो भुञ्जते पिबन्ति च। अपि धर्ममन्दिरे क्रुशाकारनिर्माणं नास्ति मूर्तिपूजनम्?॥११४॥

(११५) अनन्तरमीश्वरस्य स्वर्गस्थमन्दिरस्य द्वारं मुक्तम्, तन्मन्दिरमध्ये च नियममञ्जूषा दृश्याऽभवत्।—यो० प० ११। आ० १९

**स०**—स्वर्गस्थमन्दिरं प्रायशः संवृतं तिष्ठति कदाचिदेवापावृतं भवति। परमात्मनोऽपि मन्दिरं किं शक्नोति भवितुम्? वेदप्रतिपादितसर्वगतस्य ब्रह्मणो मन्दिरं न सम्भवति। किन्तु यीशवीयानां साकारस्य परमात्मनस्तद्भवितुमर्हति तद्धि स्वर्गे पृथिव्यां वा क्वापि भवेत्। यथा चात्र मन्दिरेषु तूर्यशंखादिनिःस्वनाः श्रूयन्ते। नियममञ्जूषा चापि कदाचित्तैर्दृश्यते, किं प्रयोजनं तया साधयन्तीति नो विद्मः। वस्तुतः सर्वमिदं मानवान् लोभयितुं तैः कल्पितम्॥११५॥

(११६) ततः परं स्वर्गे महदाश्चर्यं दृष्टम्—योषिदेकासीत् सा परिहितसूर्या चन्द्रश्च तस्याश्चरणयोरधो द्वादशताराणां किरीटञ्च शिरस्यासीत्। सा गर्भवती सती व्यथितार्तरावमकरोत्। यतः प्रसवपीडाग्रस्ता सा प्रसवितुं प्रवृत्ता ततः स्वर्गेऽपरमेकं चित्रं दृष्टं महानाग एक उपातिष्ठत् स लोहितवर्णस्तस्य सप्त शिरांसि सप्त शृङ्गाणि शिरःसु च सप्त किरीटान्यासन्। स स्वलाङ्गूलेन गगनस्य नक्षत्राणां तृतीयांशमवमृज्य पृथिव्यां न्यपातयत्।

—यो० प्र० प० १२। आ० १—४

**स०**—साम्प्रतं योहनस्य वृथालापेष्ववधीयताम्, एषां स्वर्गेऽपि भृशमार्तिरवेणोत्क्रोशन्त्यास्तपस्विन्या योषितो दुःखे न कोपि दयते न च तद्दुःखमुपशमयितुं यतते। किञ्च तस्य लाङ्गूलं कियद्दीर्घमासीत् यन्नक्षत्राणां तृतीयभागं पृथिव्यामवपातयत्। दीर्घतमताराणां समक्षमियं मेदिनी नितरां लघीयसी। अत्र पृथिव्यामेकमपि नक्षत्रं मातुं नेष्टे। अत्रैतदेवानुमेयं—अयं नक्षत्राणां तृतीयांशो बाइबिलप्रणेतुः सद्मनि पतितो भविष्यति। स महा-

नागोऽपि यः स्वलाङ्गूलेन कृत्स्ननक्षत्राणां तृतीयभागमवमृज्य पृथिव्यां न्यपातयत्तस्यैव (ग्रन्थप्रणेतुः) निकेतने निवसति स्म इति ॥११६॥

(११७) ततः परं स्वर्गे संग्राम उपतिष्ठत् । मीखायेलस्तस्य दूताश्च तेन नागेन सहायुद्धचन्त तथा स नागस्तस्य दूताश्च संग्राममकुर्वन् ।

—यो० प्र० प० १२ । आ० ७

**स०**—यः कोऽपि यीशवीयानां स्वर्गमुपैति सोऽपि संग्रामे दुःखं लभते । एतादृशस्वर्गाय स्वस्तिभूयात् न वयं तं कामयामहे । यत्र शान्तिः पदं नादधाति, नित्यं च कलहः प्रवर्तते तत्स्थलं यीशवीयानां योग्यम् ॥११७॥

(११८) अपरं स महानागोऽर्थतो दियावलः (अपवादकः) शैतानश्च (विपक्षः) इति नाम्ना विख्यातो यः पुरातनः सर्पः कृत्स्नं नरलोकं भ्रामयति स पृथिव्यां निपातितः ।—यो० प्र० प० १२ । आ० ९

**स०**—अपि स दियावलो यदा स्वर्ग आसीत् तदा मानवान् न भ्रामयति स्म ? स च यावदायुः कारायां कथं न निक्षिप्तः कथं वा न हतः ? स पृथिव्यां किमर्थं निपातितः ? यदि कृत्स्नं जगद् दियावलो भ्रामयति कस्तर्हि तं विमोहयति । दियावलः स्वयञ्चेद् भ्रान्तस्तर्हि मानवा अपि तत्साहाय्यमन्तरेण स्वयमेव प्रलोप्स्यन्ति । परमेश्वरश्चेत्तस्य भ्रान्ति जनयति तर्हि स परमेश्वर एव नास्ति । एतदनुमीयते यदेषां परमेश्वरोऽपि दियावलाद् बिभेति कथमन्यथा दियावलात्प्रबलस्सन्नपराधसमय एव तं नादण्डयत् ? अत्र जगति दियावलस्य यावत् सामर्थ्यं विद्यते तस्य सहस्रतमांशोऽपि यीशवीयानामीश्वरस्य प्रभावो नास्ति तस्मात्प्रतीयते यत्तेषामीश्वरस्तमपराधविधानाद् रोद्धुं न पारयति । एतेन सिद्धं भवति—यथाद्यत्वे शासकाः कृतापराधान् दस्युप्रमुखानञ्जसैव दण्डयन्ति न तथा तेषामीश्वरः । पुनः कः खलु तादृक् मूढधीर्मानवो यः परिहाय वैदिकं धर्मं यीशवीयानां कपोलकल्पितं मतमभ्युपेयात् ॥११८॥

(११९) हा ! भूमिसागरवासिनः ? (यूयं शोच्यन्ते) यस्माद् युष्माकं समीपे दियावलोऽवतीर्णः ।—यो० प्र० प० १२ । आ० १२

**स०**—किमयं यीशवीयानामीश्वरः तत्स्थानस्यैव (स्वर्गस्य) रक्षकोऽधिपतिश्चास्ति ? न तु पृथिव्यास्तत्रत्यमानवानाञ्च ? भुवोऽपि चेदधिपतिः कथं न दियावलं हन्तुमपारयत् ? पश्यत एवेश्वरस्य दियावलो जनान् भ्रामयति तथापि तं न प्रतिषेधति । इदं त्वनुमीयते—एकः साधुः परमेश्वरोऽपरश्च महाबलो दस्युः परमेश्वरो विद्यत इति ॥११९॥

(१२०) अनन्तरं तस्मै द्विचत्वारिंशन्मासान् यावद् योद्धुं सामर्थ्यमदायि । ततः स ईश्वरनिन्दनार्थं मुखं व्यादाय तस्य नाम तस्यावासं स्वर्गनिवासिनश्च निन्दितुमारभत । अपरं धार्मिकैः सह योधनस्य तेषां पराजयस्य

चानुमतिः सर्वजातीयानां सर्वभाषावादिनां सर्वदेशीयानाञ्चाधिपत्यमपि तस्मा अदायि ।—यो० प्र० प० १३ । आ० ५-७

**स०**—यो जगतीतलनिवासिनो जनान् विमोहयितुं दियावलं पश्वादि-प्राणिनश्च प्रेषयेत्, धार्मिकैः सह युद्धं कारयेदपि स दस्यूनामधिपतेः सादृश्यं नार्हति ? नेदृशानि कर्माणि परमेश्वरस्य तदीयभक्तानाञ्च भवितु-मर्हन्ति ॥१२०॥

(१२१) ततः परं निरीक्षमाणेन मया मेषशावको दृष्टः स सियोन-पर्वतस्योपर्यतिष्ठत् । अपरं येषां भालेषु तस्य नाम तत्पितुश्च नाम लिखित-मास्ते तादृशाश्चतुश्चत्वारिंशत्सहस्राधिका लक्षलोकास्तेन सार्धमासन् ।

—यो० प्र० प० १४ । आ० १

**स०**—पाठकाः ! पश्यन्तु भवन्तः—यत्र सियोनपर्वते यीशोः पिता न्यवसत्तत्रैव यीशुरपि । चतुश्चत्वारिंशत्सहस्राधिकलक्षलोकाः कथं परि-संख्याताः ? एतावन्त एव स्वर्गे स्थानमलभन्त । अवशिष्टानेककोटिशिरांसि मुद्राङ्कितानि नाभवन् ? किमिमेऽवशिष्टसकलमानवा निरयं प्राप्नुवन् ? यीशवीयैः सियोनगिरिमासाद्य द्रष्टव्यम्—यत्तत्र यीशोः पिता तत्सैन्यञ्च विद्यते नवेति ? अस्ति चेत्तर्ह्ययं लेखः प्रमाणमितरथा तु मृषैव । कुतश्चित्तत्र समागत इति चेत्तर्हि कुतः समायातः ? "त्रिदिवादिति" चेदुच्येत तर्हि किन्ते गरुत्मन्तो येन एतावन्महत्सैन्यं स्वयञ्चोपर्यध उड्डीयन्ते ? परमेश्वरश्चेदुपर्यधो गतागतं कुरुते तर्हि नूनं स न्यायाधीश इव सम्पन्नः यो ह्यजस्रमितस्ततः परिभ्रमति । एवञ्चैकेन द्वाभ्यां त्रिभिर्वा कार्यं न सेत्स्यति अपि तु न्यूनाति-न्यूनमेकैकस्मिन् भूमण्डले एकैकेनेश्वरेण भवितव्यं यत एतावन्तोऽनेक-ब्रह्माण्डानां न्यायमनुष्ठातुं सर्वत्र यौगपद्येन परिभ्रमितुं न शक्नुवन्ति ।१२१।

(१२२) आत्मा भाषते स्वश्रमेभ्यस्तैर्विरामः प्राप्तव्यः परं तेषां कर्माणिताननुगच्छन्ति ।—यो० प्र० प० १४ । आ० १३

**स०**—अवधत्त वाचकाः ! यीशवीयानामीश्वरो भाषते तेषां कर्माणि ताननुगमिष्यन्ति—कर्मणामानुरूप्येण सर्वेभ्यः फलानि प्रदास्यन्त इति । एते च वदन्ति 'यीशुः सर्वेषां पापान्यादास्यते क्षंस्यते' इति । अत्रेश्वरस्य यीशवी-यानां वा वचनं सत्यमिति धीमद्भिर्विभावनीयम्, न ह्येकस्मिन्विषये उभावपि सत्यौ भवितुमर्हतः । अनयोरेकतरेणावश्यमलीकभाषिणा भवितव्यम् । किं न एतेन यीशवीयास्तेषामीश्वरो वा मृषाभिधायको भवतु ॥१२२॥

(१२३) तत्फलानि चेश्वरस्य क्रोधस्वरूपस्य महारसकुण्डमध्ये निर-क्षिपत् । रसकुण्डस्य नगराद् बहिर्मर्दनं कृतम्, ततः कुण्डमध्यान्निर्गतं क्रोशशतपर्यन्तमश्वानां खलीलान् यावद् रुधिरं व्याप्नोत् ।

—यो० प्र० प० १४ । आ० १९, २०

स०—किमेते मृषाप्रलापाः पुराणगाथाभ्योऽपि नातिरिच्यन्ते ? यीशवीयानामीश्वरः संक्रुध्यन् नितरां दूयते। अपि तस्य कोपो जलमन्यद् वा द्रव वस्तु येन तत्पूरितानि कुण्डान्यासते ? क्रोशशतपर्यन्तं च रक्त-निस्यन्दनं नितरामसम्भवं यतस्तत् वायोः स्पर्शमात्रेणैव घनीभावमापद्यते पुनः कथमेतत्सम्भवति। अत ईदृश्यो वार्ता मिथ्यैव भवन्ति ॥१२३॥

(१२४) तदनन्तरं स्वर्गे साक्ष्यावासस्य मन्दिरस्य द्वारं मुक्तम्।
—यो० प्र० प० १५। आ० ५

स०—यदि यीशवीयानामीश्वरः सर्वज्ञो भवेत् किन्तर्हि तत्र साक्षिणां प्रयोजनम् ? यतः स स्वयमेव सर्वं ज्ञातुं प्रभवेत्। अनेनेदमेव सर्वथा निश्चीयते यदेषामीश्वरो नास्ति सर्वज्ञोऽपि तु मनुष्यवदल्पज्ञो वर्तते। स परमात्मनः किं कार्यमनुष्ठातुं सक्षमः ? नो, नो, न कर्हिचित्। अत्रैव प्रकरणे दूतानां भूयस्योऽसम्भाव्या वार्ताः समुपन्यस्ताः। न ताः केनापि सत्यत्वेन परिग्रहीतुं शक्यन्ते। प्रकरणमिदं सर्वथा ईदृशासङ्गतवार्ताभिरेव परिपूर्णमतः कृतमेतादृशासम्बद्धकथाप्रसङ्गेन ॥१२४॥

(१२५) तस्या अधर्मक्रियाश्चेश्वरेण संस्मृताः। परान् प्रति तया यथा व्यवहृतं तथा तां प्रति व्यवहरत। तस्याः कर्मणां द्विगुणफलानि तस्यै दत्त।—यो० प्र० प० १८। आ० ५—६

स०—अनेन यीशवीयानामीश्वरस्यान्यायकारित्वं सुतरामभिव्यक्तं भवति यतो येन यादृशं यावच्च कर्म कृतं तादृशं तावदेव च फलप्रदानं न्यायः, अतो भिन्नं च कृतकर्मापेक्षयाधिकं न्यूनं वा फलप्रदानमन्यायः। ये चान्याय-पथप्रवृत्तं समुपासते कथं न तेऽपि भवन्त्यन्यायकारिणः ? ॥१२५॥

(१२६) यन्मेषशावकस्यैव विवाहसमयोऽभवत् (वाग्दत्ता चाभवत्) तस्मै या कन्या सा सुसज्जिता।—यो० प्र० प० १९। आ० ७

स०—श्रूयतां साम्प्रतम् ? यीशवीयानां स्वर्गे परिणीयन्त अपि। (परिणया अपि भवन्ति) यतो यीशुमीश्वरस्तत्रैव परिणीतवान्। अत्रैतत्-प्रष्टव्यम् यत्तस्य (यीशोः) श्वशुर—श्वश्रू—श्यालादयः केऽभवन् ? कियन्तो वा दारकाः प्रसूताः ? रेतसः संक्षयाच्च बल-बुद्धि-पराक्रम-आयुः प्रभृतीनां परिक्षीयमाणतया यीशुरनेन समयेनासंशयमुपरतो भविष्यति संयोगजन्य-पदार्थस्यावश्यं विनाशशालित्वात्। इदानीं यावद् यीशवीयास्तस्मिन् (यीशौ) विश्वासेनात्मानं वञ्चयामासुः, न ज्ञायते अतः परमपि कियन्तं कालमात्मानं प्रतारयिष्यन्ति ॥१२६॥

(१२७) अपरं नागोऽर्थात् यो बद्धः सर्पोऽपवादकः शैतानश्चास्ति तं धृत्वा वर्षसहस्रं यावद् बद्धवान्। गहनरसातले तं निक्षिप्य तदुपरि द्वारं

रुद्ध्वा मुद्रयाङ्कितवान् यस्मात् तद् वर्षसहस्रं यावत् सम्पूर्णं न भवेत् तावत् परजातीयास्तेन न भ्रमयितव्याः।—यो० प्र० प० २०। आ० २।३

स०—पूर्वं महताऽऽयासेन दियावलं धर्तुं शशाक, वर्षाणां सहस्रं यावदेव च कारायां निक्षिप्तवान्। अपि स पुनरपि मुक्तः सन् जनान् न भ्रामयिष्यति? एतादृशा दुर्जना यावज्जन्म बन्धनागारेषु निक्षेप्तव्याः प्राणैर्वा वियोक्तव्याः। परं दियावलोऽपि कश्चिदस्तीति तेषां भ्रममात्रमेव। वस्तुतो नास्त्येतत् किमपि केवलं मानवान् भीषयित्वा स्वमतानयनस्यान्यतमः प्रकारः। यथा कश्चिद् धूर्तः काँश्चिन्मुग्धजनानभाषत—"आगच्छत युष्मान् देवतां दर्शयामीति"। प्रागेव च क्वचिन्निर्जनप्रदेशे जनमेकं चतुर्भुजाकारं निर्माय कस्मिंश्चित् क्षुपनिवहे स्थापयामास। पुनश्च तान् जगाद नेत्रे निमीलयत मम वचनेनैवोन्मीलयितव्ये, यश्चैवं न विधास्यति नियतं सोऽक्षिविकलः संपत्स्यते। यदा च स चतुर्भुजाकारो जनो दृष्टिपथमुपगतस्तदा स तान् पश्यत इत्यभाषत, पुनश्च झटित्येव निमीलयत इत्यादिदेश। यदा च चतुर्भुजो मानवः क्षुपैरात्मानमन्तर्धापितवान् तदा स तान् चक्षुष्युन्मीलयितुमाह जगाद च "अपि दृष्टो युष्माभिर्नारायणः? इति"। इत्थमेवैतन्मतानुयायिनां लीला विद्यते। ते हि वदन्ति "योऽस्माकं मतं न गृह्णीयात् स दियावलेन भ्रामितोऽस्तीति विज्ञेयम्"। अन्येऽपि मतावलम्बिन इत्थमेव जनान् भ्रामयन्ति नैषां कपटजालं केनापि प्रवेष्टव्यम् ॥१२७॥

(१२८) यस्य वदनान्तिकात् (सम्मुखात्) भूनभोमण्डले पलायेतां पुनस्ताभ्यां स्थानं न लब्धम्। अपरं, क्षुद्रा महान्तश्च सर्वे मृता मया दृष्टाः, ते सिंहासनस्यान्तिकेऽतिष्ठन् ग्रन्थाश्च व्यस्तीर्यन्त, जीवनपुस्तकाख्यमपरमेकं पुस्तकमपि विस्तीर्णम्। तत्र ग्रन्थेषु यद्यद् लिखितं तस्माद् मृतानामेकैकस्य स्वक्रियानुयायी विचारः कृतः।—यो० प्र० प० २०। आ० ११—१२

स०—पश्यत अपि नेदं बालोपमम्? कथं द्यावापृथिव्यौ पलायिष्येते? यस्यान्तिकात् ते पलायेतां स, तत् सिंहासनञ्च क्व अवातिष्ठत? अपि च यदा मृताः परमेश्वरस्य सम्मुखे समुपस्थितास्तदा सोऽप्युपविष्टः स्थितो वा भविष्यति। अपि परमात्मनो व्यवहारो न्यायालयसदृशः विपणिसन्निभो वा? यत्र व्यवहारान् निर्णेतुं आयव्ययौ संख्यातुं वा पुस्तकान्युपयुज्यन्ते। कृत्स्नात्मनां वृत्तान्तः परमेश्वरेण तत्प्रतिहस्तैर्वा (गुमाश्ता) प्रतिलिखितः? एतादृशीभिरेव वार्ताभिर्यीशवीयैरीश्वरोऽनीश्वरः, अनीश्वरश्चेश्वरः सम्पादितः ॥१२८॥

(१२९) तेषामेक आगत्य मां सम्भाष्यावदत्। आगच्छाहं तां कन्यामर्थतो मेषशावकस्य भाविभार्यां त्वां दर्शयामि।

—यो० प्र० प० २१। आ० ९

**स०**—अहो यीशुः स्वर्गेऽपि कान्तामलभत, आनन्दमुपभुङ्क्ते। ये च यीशवीयास्तत्र गच्छन्ति तैरपि भार्या अधिगम्यन्ते। तत्र बाला अप्युत्पद्यन्ते, बहुजनसमवायाच्च व्याधिभिर्म्रियन्त अपि। एतादृशं स्वर्गं दूरत एव नमस्कुर्मः ॥१२९॥

(१३०) ततः परं स तेन परिमाणदण्डेन तां नगरीं परिमितवान् तस्याः परिमाणं द्वादशसहस्रनल्वाः। तस्या दैर्घ्यं प्रस्थमुच्चत्वं च समानानि। अपरं स तस्याः प्राचीरं परिमितवान् तस्य मानवस्यार्थतो दूतस्य परिमाणानुसारतस्तत् चतुश्चत्वारिंशदधिकशतहस्तपरिमितम्। तस्य प्राचीरस्य निर्मितिः सूर्यकान्तमणिभिर्नगरी च निर्मलकाचतुल्येन शुद्धसुवर्णेन निर्मिता। नगर्याः प्राचीरस्य मूलानि च सर्वविधमहार्घमणिभिर्भूषितानि प्रथमं भित्तिमूलं सूर्यकान्तस्य, द्वितीयं नीलस्य, तृतीयं ताम्रमणेः, चतुर्थं मरकतस्य, पंचमं वैदूर्यस्य, षष्ठं शोणरत्नस्य, सप्तमं चन्द्रकान्तस्य, अष्टमं गोमेदस्य, नवमं पद्मरागस्य, दशमं लशुनीयस्य, एकादशं पेरोजस्य, द्वादशं मर्टीष्मणेश्चास्ति। एकैकं गोपुरं एकैकया मुक्तया कृतं नगर्य्या महामार्गश्चाच्छकाचवत् निर्मलसुवर्णेन निर्मितम्।—यो० प्र० प० २१। आ० १६—२१

**स०**—यीशवीयानां स्वर्गस्य मनोहरं वर्णनं श्रूयताम्। यदि यीशवीया उत्पद्यन्ते म्रियन्ते च तर्हि कथमेतावति महत्यपि नगरे मातुं शक्ष्यन्ति। यतस्तत्र केवलं मानवानां प्रवेश एवास्ति न तु निर्गमः। अपि च येयं महार्घमणिभिः खचिता सुवर्णमयी पूरूपकल्पिता सापि मुग्धजनान् प्रलोभ्य प्रतारयितुं लीलामात्रम्। भवेन्नाम यथालिखितं तस्य नगरस्य दैर्घ्यं प्रस्थञ्च परमुच्चत्वं कथं द्वादशसहस्रनल्वाः सम्भवन्ति। सर्वमिदं मिथ्याकल्पनामात्रम्। एतावदतिमहत्यो मुक्ताः कुतः समायन्? अस्य लेखस्य लेखितुर्गृहकुम्भात् किमु? अयं मृषाप्रलापः पुराणगाथानप्यतिशेते ॥१३०॥

(१३१) परन्त्वपवित्रं घृण्यकृदनृतकृद्वा किमपि तन्मध्यं न प्रवेक्ष्यति।
—यो० प्र० प० २१। आ० २७

**स०**—नन्वेवं चेत् किमिति तर्हि क्रिश्चीनाः "पापीयांसोऽपि क्रिश्चियनधर्मावलम्बनेन स्वर्गं प्रवेष्टुमर्हन्तीति" भाषन्ते। नेदं सत्यम्। सत्यञ्चेद् भवेत् तर्हि धर्मोपदेशको योहनो न कर्हिचित् दिवमारुरोह स हि स्वापेषु नितरां मिथ्याभिधत्त। यीशुरपि स्वर्गमारोढुं नाशकत्, यतो यदा केवलः पापीयान् दिवमारोढुं न शक्नोति कथं पुनर्नैकपापकर्मणामेनोभाराक्रान्तः प्रवेष्टुमर्हेत्।

(१३२) अपरं, किमपि शापग्रस्तं न भविष्यति तस्या (नगर्याः) मध्य ईश्वरस्य मेषशावकस्य च सिंहासनं स्थास्यति तस्य दासाश्च तं सेविष्यन्ते। तस्य वदनदर्शनं प्राप्स्यन्ति तेषां भालेषु च तस्य नाम लिखितं भविष्यति। तदानीं पुना रात्रिर्न भविष्यति तेषां दीपस्य सूर्यस्य वा तेजसा प्रयोजनं न

भविष्यति यतः प्रभुः परमेश्वरस्तान् दीपयिष्यति ते चानन्तकालं यावत् राज्यं करिष्यन्ते ।—यो० प्र० प० २२ । आ० ३—५

**स०**—यीशवीयानां स्वर्गस्य कीदृशं मनोहरं चित्रम् ? अपि परमेश्वरो यीशुश्च स्वीयसिंहासनं नित्यमधिष्ठास्यति ? किं तेषां दासाः सततं तयोर्मुखं द्रक्ष्यन्ति ? कृपया इदन्तु भवद्भिः शंसनीयं यद् युष्माकं परमेश्वरो यूरोपवासिन इव शुभ्रमाननं धत्ते उत अफ्रीकावास्तव्या इव कृष्णवर्णमाहोस्विदन्यदेशवासिन इवान्यरङ्गम् ? युष्माकमयं स्वर्गोऽपि नूनं बन्धनमेव यतस्तत्र निवासिनां नास्ति मिथः समानभावः । तत्र हि वर्णेष्वसादृश्यं विद्यते । तत्रैव चैकत्र स्थातुमावश्यकं कथं पुनस्तत्र दुःखं न भविष्यति । साननश्च न कर्हिचित् सर्वज्ञः परमेश्वरः सर्वाधिपतिश्च भवितुमर्हति ।।१३२।।

(१३३) पश्याहं तूर्णमागच्छामि, एकैकस्मै स्वक्रियानुयायिफलदानार्थं मद्दातव्यफलं मम पार्श्वे समवर्ति ।—यो० प्र० प० २२ । आ० १२

**स०**—"सर्वैः स्वकर्मणामानुरूप्येण फलं लभ्यत इति चेत्सत्यम् तर्हि न कदाचन दुरितानि क्षाम्यन्ते, चेत्क्षाम्यन्ते—धर्मपुस्तकस्या-(इंजीलस्य)-स्य वचनानि मृषात्वमापद्यन्ते । कलमषां क्षमासम्पादनमप्यत्र पुस्तके समुपन्यस्तमिति चेत् कैश्चित्प्रतिभाष्येत तर्ह्यपि वचनद्वयस्य मिथो विसंवादितयाऽसत्यत्वमेव । अतो युष्माभिरत्र विश्वासः परित्याज्यः ।।१३३।।

कियद् वयं लिखेम ? एषां धर्मपुस्तके प्रत्याख्यातुं योग्यान्यनेकानि वस्तूनि विद्यन्ते, अत्र तु केवलं दिङ्मात्रं प्रदर्शितम् । एतावतैव सुधीभिर्बहु विज्ञेयम् । एषां धर्मपुस्तके कतिपयार्थान् परित्यज्य सर्वं मिथ्याकल्पितमेव । यथा चानृतसंयुक्तं तथ्यमपि शुद्धं नावतिष्ठते तथैव यत्किञ्चित् सत्यं प्रतिपादयतोऽपि—असत्यबहुलत्वादेषां धर्मग्रन्थस्य प्रामाण्यं न भवितुमर्हति अपि च तद् याथार्थ्यं वेदानामभ्युपगमेनैवाभ्युपगतं भवति ।

**इति श्रीमद्दयानन्दसरस्वतीस्वामिकृते सत्यार्थप्रकाशे शङ्करदेवपाठकेन देवगिरालङ्कृते क्रिश्चीनमतविषये त्रयोदशः समुल्लासः सम्पूर्णः ।।१३।।**

# अनुभूमिका

## ( ४ )

यवनमतविषयेऽयं चतुर्दशः समुल्लासः केवलं कुराणाभिप्रायेण विलिखितो नत्वन्यग्रन्थमतेन यतो यवनाः कुराणमेव सर्वतोभावेन विश्वसन्ति। यद्यप्यस्त्येष्वपि शाखाबाहुल्यात् क्वचित्-क्वचित् शब्दार्थेषु मतभेदस्तथापि कुराणं सर्व ऐकमत्येन विश्वसन्ति। आरब्यभाषायां विलिखितः कुराणग्रन्थः प्रसिद्धयवनपण्डितैरुर्दूभाषायां व्याकृतः। तद्व्याख्यानं देवनागरीवर्णेषु परिवर्त्यार्य्यभाषायामनूद्य चारब्यभाषाया विपश्चिद्वरैः संशोध्य अत्रोपन्यस्तम्। अशुद्धोऽयमनुवाद इतिवादिना केनचित्प्रथमं यवनपण्डितानामनुवादं सन्दूष्य पुनरत्र विलेखनीयम्। अयं लेखः केवलं मनुजानामभ्युदयाय सत्यासत्यविनिश्चयाय च विलिखितो येन सकलधर्माणामंशतः परिज्ञानेन मानवा मिथो विचारावसरं लभेरन् अन्योऽन्यदूषणानि निराकृत्य गुणान् गृह्णीयुः। धर्मस्यान्यस्य वा कस्यचिन्मुधैव विगर्हणं नास्त्यस्माकमभिप्रायः। सर्वेषां गुणदोषा यथावद्विज्ञायेरन्। न कश्चित्कमपि मृषाभियुञ्जीत नापि सत्यमपलपेत्। प्रकाशितेष्वपि सत्यासत्यविषयेषु यथाकामं सर्वो जनोऽङ्गीकुर्यान्नवा कुर्वीत, न कश्चिद्बलात्कारेण स्वमतं ग्राह्यते। अयमेव साधुजनसेवितः पन्था यदा "आत्मनः परेषां वा गुणदोषा याथार्थ्येनावगम्य गुणा समादेया दोषाश्च परिहेयाः" इति। निर्बन्धजुषां निर्बन्धञ्च त्याजयेयुर्यतः पक्षपातेन जगति के नामानर्था नाभवन् भवन्ति वा? वस्तुतः क्षणभङ्गुरेऽस्थिरेऽस्मिन् जीवने परज्यानिं सम्पाद्य परस्यात्मनश्च लाभप्रणाशो नास्ति मनुजोचितं कर्म। यदत्र किञ्चिदन्यथा विलिखितं भवेत्साधवः सूचयन्तु, ततो यथोचितं विधास्यते यतः खल्वयं लेखो निर्बन्धेर्ष्याद्वेषवादविवादादीनां परिहाराय नतु तेषां वर्धनाय। कस्यचिज्ज्यानिमसम्पाद्य सर्वेषां हितसम्पादनमेवास्माकमभिप्रायः।

चतुर्दशेऽस्मिन् समुल्लासे यवनमतविषयः साधुजनानां पुरो निधीयते ते सुविचार्य्याभिमतं गृह्णन्तु परित्यजन्तु चानभिप्रेतम्।

**अलमतिविस्तरेण बुद्धिमद्वर्य्येषु ।।**

**इत्यनुभूमिका।**

# अथ चतुर्दशसमुल्लासारम्भः

## अथ यवनमतविषयं समीक्षिष्यामहे

(१) (अहं ग्रन्थममुं) परमात्मनो नाम्ना प्रारभे (यः) क्षमाशीलः, दयालुश्च ।—सूरत० १

**स०**—यवनैः कुराणग्रन्थस्य परमात्मनो वाक्यत्वमजस्रमुद्घोष्यते, परमुपरितनसमुद्धरणेनास्य अन्यप्रणेतृत्वं सुतरामभिव्यज्यते यतो हि यदि नाम परमात्मनैवैतद् रचितं भवेत्तर्हि 'परमात्मनो नाम्ना प्रारभे' इति नैवावक्ष्यत्, अपि तु 'मानवानां समुपदेशाय मयायं ग्रन्थो विरचितः' इत्यवदिष्यत् । स्वीयग्रन्थमित्थं प्रारभ्य परमेश्वरः यूयमप्येवमाचरतेति मानवान् शिक्षयतीति चेदुच्येत, तन्न चारु । एवं हि दुष्कर्मणामपि परमात्मनो नामधेयेनैव प्रारभ्यमाणतया तस्य नाम्नोऽवमानना सम्पद्येत । अपि च (यवनानां) परमेश्वरो दयालुश्चेद् विद्यते कथं तर्हि स स्वीयसर्गे मानवान् सत्त्वान्तराणि विहत्य तेषां मांसमत्तुमादिदेश । अपि नैते प्राणिनः सन्त्यनागसस्तन्निर्मिता वा ? किंच तेनैतदपि जनाः समुपदेष्टव्या यत् सुकर्मण्येव केवलं परमात्मनो नाम्ना समारब्धव्यानि न तु दुष्कृत्यान्यपि । वचनमिदं सर्वथैव सन्दिग्धार्थम्, अपि चौर्यव्यभिचार-मिथ्याभाषणाद्यपुण्यान्यपि तन्नाम्ना प्रारब्धव्यानि ? पूर्वोक्तवचसः सन्दिग्धार्थतयैव शौनिकप्रमुखा यवनाः परमात्मनो नाम्नैव निषूदयन्ति गवादिकम् । एवञ्च यवनानां परमेश्वरे दयालुत्वं नावतिष्ठते नह्येवं तस्य सत्त्वेषु दया जातु तिष्ठति । अनेन यवना दुष्कृत्यान्यपि परमात्मनो नाम्ना विदधतीति सुव्यक्तम् । यवनैर्न चेदस्य वचनस्यार्थोऽवबुध्यते कोऽर्थस्तर्ह्यस्य वचस आविष्करणेन ? अन्यथैव चेद्यवना वचनमिदं व्याचक्षते कस्तर्ह्यस्य सरलोऽभिप्रायः ?

(२) सर्वमपि स्तवजातं परमेश्वरस्यैव यः खलु कृत्स्नस्य जगतो रक्षकः, क्षमाशीलो दयालुश्च वर्तते ।—सू० १ । आ० १, २

**स०**—कुराणवर्णितः परमेश्वरः सर्वेषां पालकः क्षन्ता दयालुश्चाभविष्यच्चेन्न तर्हि स कर्हिचित् परमतावलम्बिनो जनान् प्राणिनश्च व्यापादयितुं यवनानादेक्ष्यत् । सर्वत्र सदयश्चेदपि पापेष्वप्यात्मनः कारुण्यं प्रकटयिष्यति ? तत्रापि दयत इति चेत्प्रत्युच्येत, तन्न भवितुमर्हति यतस्तत्रैव

(कुराणे) किञ्चिदग्रे समुपन्यस्तम् "निषूदयत नास्तिकान्" इति। अर्थतो यः कश्चन कुराणं यवनानां प्रेरितान् (पैगम्बरान्) नो विश्वसिति स एव नास्तिकः (काफिरः) (स च हन्तव्यः)। (यतः कुराणपुस्तकमेतादृशैः क्रूराचारैः परिपूर्णमतो) नैतत्पुस्तकं परमेश्वरोक्तं भवितुमर्हति।

(३) प्रभुर्न्यायवासरस्य। त्वामेव वयं भक्त्या समुपास्महे, त्वत्त एव साहाय्यमभीप्सामः। दर्शयास्मानृजुपथम्।—सू० १। आ०३—५

**स०**—अपि परमेश्वरः प्रत्यहं नानुतिष्ठति न्यायम्? यदि स कस्मिंश्चिन्नियतवासर एव तमनुतिष्ठति नूनं सोऽन्यायमाचरति। तस्यैव भक्त्या समुपासनं तत एव च साहाय्ययाचनं वरम्, परं किं साधुकार्येष्विव दुष्कृत्येष्वपि साहाय्यमपेक्षणीयम्? केवलं यवनानामेव सरलः पन्थाः, अपि नान्येषाम्? कथं न यवनाः सरलां पदवीं प्रतिपद्यन्ते?

निखिलधर्मेषु समान एव चेत्सदाचारः कस्तर्हि विशेषो यवनधर्मे? ते चात्मधर्ममिवान्येषां धर्मं न चेन्न्याय्यमनुमन्यन्ते पक्षपातिनः खलु ते निजपक्षपातित्वमभिव्यञ्जयन्ति?

(४) तेषां पन्थानं येषु त्वमनुकम्पां व्यधात् मास्मान् दर्शय। नापि तेषां येभ्यस्त्वमकुप्यः, नापि विपथगामिनाम्।—सू० १। आ० ६, ७

**स०**—यतो हि यवनैः पूर्वजन्म, पूर्वकृतानि पापपुण्यानि वा नाभ्युपेयन्ते, अतः केषुचित् करुणाप्रकाशनेन केषुचिच्चान्यथा व्यवहारेण तदीयपरमेश्वरस्य पक्षपातित्वं सुतरां व्यक्तं भविष्यति। पापपुण्याभ्यामन्तरेण हि सुखदुःखप्रदानमन्यायाचारः। निर्निमितञ्च कस्यचित् सानुकम्पावलोकनमपरस्य च क्रोधदृशा समीक्षणं परमात्मनः स्वभावाद्विरुध्यते नहि स कामचारितया व्यवहरति। यदा चायमात्मा पूर्वजन्मनि (यवनमतानुसारेण पूर्वजन्मनोऽभावात्) न व्यधात् सुकृतदुष्कृते कथं तर्ह्ययं (परमेश्वरः) कस्मिंश्चित् सदयः क्वचिच्च क्रुद्धो भवितुमर्हेत्। अस्य टीकाकारः खल्वेवमाह "आयतमिमं स्वयं परमेश्वरो मानवानां मुखैरवीवदद् येन ते सर्वदा तथैवानुतिष्ठेयुरिति"। एवञ्च अलिफ, बे इत्यादयो वर्णा अपि तेनैव स्वयं पाठिता भविष्यन्ति कथमन्यथा वर्णज्ञानं विना आयतमिमं पठितुमशक्नुवन्? अपि मुखद्वारेणैवा—(लिपिप्रयोगमन्तरेण)—ध्यापयामास? यद्येवम्, सर्वं एव कुराणग्रन्थो वाचैव पाठितो भविष्यति।

एवं खलु वेदितव्यं यत्र पुस्तके पक्षपातगन्धः समवलोक्येत न तज्जातु ईश्वरोक्तं भवितुमर्हति। यथा कुराणग्रन्थस्यारब्यभाषायां प्रणयनेन अरबवासिनां तदध्ययनसौकर्यं भाषान्तरवेदिनान्तु काठिन्यं जायते तेन परमेश्वरः पक्षपातितादोषेण सन्दूष्यते। यदा तु यवनानां परमेश्वरः कुराणं सर्वदेशभाषाभ्यो विलक्षणायां संस्कृतवाचि—या हि कृत्स्नदेशवासिभिः समान-

श्रमेणाधिगम्यते यत्र च करुणामयो जगदीश्वरो वेदान् प्राकाशयत्—प्राकाशयिष्यत्तर्हि नैतद्दोषेण कर्हिचिदस्प्रक्ष्यत् ।

(५) नात्र कश्चित्संशयो यदयं ग्रन्थस्तान् पुण्यात्मनो मार्गं दर्शयति ये भक्तेर्गहनतत्त्वेषु विश्वसन्ति, परमात्मनः प्रार्थनां विदधति, अस्मत्प्रदत्त-वित्तेन च व्ययन्ते । (अयि भविष्यवादिन्) यत् पुस्तकं त्वयि (त्वन्मुखेन) त्वत्तः पूर्वं वाऽवातरत् तत्र पुस्तके प्रलये वा ये विश्वसन्ति त एव प्रभोरा-देशमनुपालयन्ति, त एव च कृतार्थतामनुभवन्ति । ये च तन्न मन्यन्ते तेषां तव भर्त्सनमभर्त्सनं वा समानमेव । न ते कर्हिचिद् विश्वासमाप्स्यन्ति, परमेश्वरस्तेषां हृदयं श्रोत्रे च मुद्रयाङ्कितवान् । तेषां चक्षूंषि च तिमिरा-ऽऽच्छन्नानि । ते च महद्दण्डं प्राप्स्यन्ति ।—सू० २ । आ० २—७

स०—स्वमुखेनैव निजग्रन्थस्य प्रशंसनमपि नास्ति परमात्मनो-ऽवलेपः ? धार्मिकाः स्वत एव सन्मार्गमनुरुध्यन्ते उन्मार्गगामिनं पुनर्नायं कुराणग्रन्थो मार्गं दर्शयितुं प्रभवति । कः खलु पुनरस्योपयोगः ? अपि ऋते पापपुण्याभ्यां पुरुषार्थञ्च विनैव परमेश्वरः स्वीयकोषादेव व्येतुं धनं प्रयच्छति ? प्रयच्छति चेत् कथन्न सर्वेभ्यः प्रददाति ? किमर्थञ्च यवनाः परिश्रमं विदधति ? यदि नाम बाइबिलप्रमुखेषु धर्मग्रन्थेषु विश्वास आवश्यकः कथन्न तर्हि यवनास्तत्रापि कुराणवद् विश्वासमानयन्ति ? आनयन्ति चेत् किं निमित्तं तर्हि कुराणग्रन्थावतारः ? कुराणपुस्तकं बाइबिलग्रन्थापेक्षया बहु विस्तीर्णं—(भूयांसो विषयास्तत्र समुपन्यस्ताः)—मितिचेदुच्येत तर्हि किं परमेश्वरः प्रथमपुस्तके काँश्चिद् विषयान् लेखितुं व्यस्मरत् ? यदि नो व्यस्मरत् तर्हि नास्ति किमपि कुराणग्रन्थस्य प्रयोजनम् ? अपि चास्माभि-र्बाइबिलकुराणग्रन्थयोरल्पीयानेव भेदः समवलोक्यते, तौ हि प्रायशो मिथः संवदेते, तत्र वयं पृच्छामः "किमर्थं वेदानिव सर्वतः पूर्णमेकमेवग्रन्थं न व्यरचयत्" ?

अपि प्रलय एव विश्वस्तव्यं नान्यत्र ? अपि केवलाः कृश्चीनयवन-धर्मावलम्बिन एव प्रभोरादेशमनुरुध्यन्ते ? न सन्ति केऽपि तत्र पापिनः ? अधार्मिका अपि कृश्चीनयवनाः विप्रमुच्येरन् नान्ये पुण्यात्मानोऽपि । अपि नैतत् परमात्मनि न्यायविरहं व्यञ्जयति । ये च यवनधर्मं न मन्यन्ते त एवानीश्वरवादिन इति भाषणं नास्ति पक्षपातः ? यदा परमेश्वर एव तेषामन्तःकरणानि श्रोत्रे च मुद्रयाङ्कितवान्—अत एव च ते पापमनु-तिष्ठन्ति, नास्त्यत्र तेषामपराधोऽपि तु परमेश्वर एवात्रापराध्यति कथं पुनस्तान् पापपुण्याभ्यामन्तरेणैव दण्डयति ? नहि ते स्वातन्त्र्येण किमपि पापं पुण्यं वा व्यधुः ।

(६) तेषामन्तःकरणेषु व्याधिर्वर्तते, परमेश्वरश्च तेषामामयमवर्धयत् ।—सू० २ । आ० १०

स०—निरपराधानां तेषां रोगप्रवर्धनेन परमेश्वरः किं समौचित्यं व्यधात् ? स तेषु मनागपि सदयो नाभवत्, नूनं तपस्विनस्ते नितरां पीडिता भविष्यन्ति ? अपि नेदं दियावलतोऽपि महत् पैशाचिकं कर्म ? कस्यचिदन्तःकरणस्य मुद्रयाङ्कनं कस्यचिद् रोगप्रवर्धनञ्च न कर्हिचित् परमेश्वरस्य कर्म भवितुमर्हति यतो हि रोगाणां प्रवर्धनं फलमात्मनः कर्मणाम् ।

(७) यो युष्मभ्यं पृथिवीमास्तरणं गगनञ्च वितानमिवापप्रथत् ।

—सू० २ । आ० २२

स०—अपि गगनं कस्यचिद् आच्छादनं भवितुमर्हति ? एतद्धि (कुराणग्रन्थप्रणेतुः) निर्वैदुष्यं दर्शयति । उपहासास्पदं हि व्योम्न आवरणत्वकल्पनम् । यदि हि नाम ते काञ्चिन्महीमाकाशं मन्यन्ते तत्तेषां मनःकल्पनम् ।

(८) यूयञ्चेत् कुराणग्रन्थस्याविर्भावविषये संशेध्वे यमहमात्मनोऽनुचरद्वारेणावातारयं तर्हि तदाकृतिमिवापरामाकृतिं विरचयन्तु । परमेश्वरव्यतिरिक्तान् सुसाक्षिणश्चाकारयन्तु । यद्येतावदपि कर्तुं न शक्नुथ न च कदापि शक्ष्यथ तर्हि बिभीत निरयजातवेदसः । मानवाः प्रस्तराश्च यस्येन्धनं यश्चाविश्वासवतां कृते निर्मितः ।—सू० २ । आ० २३, २४

स०—अप्यसम्भवं तदाकृतेरिवाकृतिनिर्माणम् ? अपि सम्राजोऽकबरस्य समये मौलविफैजिः बिन्दुशून्यं कुराणं न सङ्कलयामास ? कीदृशः स निरयवह्निः ? अप्यमुष्मात् (भूलोकस्य) जातवेदसो न भेतव्यम् ? अयमपि वह्निर्यत् किञ्चित् तत्र पात्यते तत्सर्वं दहति । यथाचात्र कुराणग्रन्थे "अविश्वासकानां कृते प्रस्तरा निर्मिताः" इति वर्णितं तथैव "म्लेच्छेभ्यो निरयो निर्मितः" इति पुराणेषु वर्ण्यते तत्र भवद्भिरेवोच्यतां कं सत्यं मन्यामहे ? उभावपीमौ स्वस्ववचनेन स्वर्गगामिनावपरमतेन च निरयगामिनौ सम्पद्येते । तस्मादुभावपीमौ मृषावादिनौ, वस्तुतस्तु धार्मिकाः सुखं पापिनश्च दुःखं यत्र तत्रापि मते लप्स्यन्त एव ।

(९) विश्वासमापन्नेभ्यः पुण्यवद्भ्यश्चायं शुभसन्देश आह्रियतां "यत्तदर्थं स्वर्गोद्यानानि विद्यन्ते येषामधः कृत्रिमाः सरितः प्रवहन्ति । यदा च तेभ्यो भक्षणार्थं किमपि फलं प्रदास्यते तदा ते वक्ष्यन्तीदं त्वस्माभिः पूर्वमेवाधिगतम् । स्वर्गे च तेषां कृते नित्यं पवित्रभार्याः स्थास्यन्ति ।

—सू० २ । आ० २५

स०—नन्विदं कुराणवर्णितं त्रिदिवमस्मात् भूलोकात् कतमया वार्तया विशिष्यते ? यतो यानि वस्तून्यत्र विद्यन्ते तान्येव यवनानां स्वर्गे ।

केवलमियानेव भेदो यथात्र मानवा जायन्ते म्रियन्ते च न तथा तेषां स्वर्गे, अपि चात्रत्या योषितो न नित्यं प्राणन्ति स्वर्गस्थाः पुनर्मत्तकाशिन्यस्तत्र नित्यं संनिहिता भवन्तीति, परमेतदेवात्राश्चर्यं कथन्तास्तपस्विन्यः प्रलयपर्यन्तं समयं व्यत्यापयिष्यन्ति। यदि परमेश्वरो दयेत, तदाश्रयेणैव च ताः समयं व्यत्यापयेयुस्तर्हीदं सम्भवति। यवनानामयं स्वर्गो गोकुलवासिगोस्वामिनां गोलोक इव प्रतिभाति यतो यथा तत्राङ्गनाः समाद्रियन्ते न तु पुरुषास्तथैव यवनानां परमात्मनो निकेतनेऽपि योषितो भूयसा समाद्रियन्ते भूयाँश्च तासु परमात्मनोऽनुरागः। परमेश्वरो हि अप्सरस एव नित्यं स्वर्गे स्थापयति नतु मानवान्नेतच्च परमात्मन इच्छामन्तरेण कथं सम्भवति। एवञ्च यवनानां परमेश्वरोऽप्सरसां प्रेमपाशबद्धो भवेदित्यपि नाश्चर्यम्।

(१०) स आद्यमानवं सर्ववस्तूनां नामधेयानि अशिक्षयत्। तदनु तानि देवदूतानां समक्षे प्रस्तुत्य अवदत् "यदि यूयं सत्यवादिनस्तर्ह्यमीषां वस्तूनां नामानि ब्रूत माम्" इति। परमेश्वरोऽवादीत् अयि आदम ! एषां नामानि स्वर्गदूतान् ब्रूहि यदा च स तेषां नामानि स्वर्गदूतानाचचक्षे तदा परमेश्वरः पुनरवदत्—"अप्यहं युष्मान् नाकथयं यदहं द्यावापृथिव्योः प्रच्छन्नानि वस्तूनि, युष्माकं गुह्यं प्रकाश्यकर्माणि च वेद्मीति।

—सू० २। आ० ३१, ३३

**स०**—अप्येवं देवदूतान् प्रतार्यात्मनः श्लाघनं परमात्मनः कर्म भवितुमर्हति ? इदं खलु तस्य दम्भमात्रं न ह्येतत् केनापि विदुषा मन्तुं शक्यते नाप्येवं केनाप्यभिमन्यते। किमेवं परमेश्वरः स्वसिद्धतां प्रसारयितुमभिवाञ्छति ? ईदृशं पाखण्डजालं केवलं वनचरेष्वेव प्रसारयितुं शक्यते न तु सभ्यमानवेषु।

(११) यदा वयं देवदूतानवादिष्म "आदममभिवादयध्वमिति तदा शैतानव्यतिरिक्ताः सर्व एव प्राणमन् स ह्यवलिप्तस्सन् ममादेशं नाङ्गीचक्रे, यतः सोऽप्येको नास्तिक आसीत्।—सू० २। आ० ३४

**स०**—इदं यवनानां परमात्मनोऽसर्वज्ञतां द्योतयति। अर्थतो स भूतं भवद्भविष्यदिति कालत्रयं न वेत्ति स्म। कथमन्यथा दियावलमुदपादयत्। अपि च एषां परमात्मनि मनागपि प्रभावो नाभिलक्ष्यते। यतः स स्वादेशसमुल्लङ्घकदियावलस्य किमपि कर्तुं न शशाक। यदा खल्वेकेनापि नास्तिकेन (शैतानेन) परमेश्वरः कृच्छ्रमापादितः तदा यत्र असंख्याता नास्तिकाः (यवनमतानुसारेण) विद्यन्ते तत्र यवनास्तत्परमेश्वरश्च किमपि कर्तुं न प्रभविष्यन्ति। कदाचित् परमेश्वरोऽपि कस्यचिद्रोगं वर्धयति ? अपरं भ्रामयति ? असंशयं सर्वमिदं परमेश्वरो दियावलतोऽशिक्षत दियावलश्च परमेश्वरात्, नहि तद्व्यतिरिक्तोऽन्यः कश्चन दियावलस्य गुरुर्भवितुमर्हति।

(१२) अस्माभिश्चोक्तम्—अयि आदम ! त्वं त्वत्प्रेयसी च स्वर्गे निवसतं यथेच्छञ्च यतः कुतश्चित् निरन्तरायं फलानि भक्षयतं परं कदापि वृक्षममुं नोपसर्पतं (गमिष्यथश्चेत्) पापिनौ भविष्यथः। परं शैतानस्तौ प्रतार्य स्वर्गानन्दात् प्रभ्रंशयामास तदास्माभिरुक्तमधोऽवतरतम्, युवयोः कश्चनापरः शत्रुर्विद्यते। युवयोर्निवासाय महीतलं वर्तते। तत्र च सर्वमुपकरणजातं सन्निहितं वर्तते। तत आदमः स्वप्रभोः किञ्चित् प्रशिक्ष्य महीमवातरत्।—सू० २। आ० ३५—३७

स०—इदानीं परमात्मनोऽल्पज्ञत्वं समीक्ष्यताम्, इदानीमेव स आद्यमानवं स्वर्गे निवस इत्याशिषं प्रादात् क्षणानन्तरमेव च तं बहिर्निष्कासयामास। यदि हि नाम स भविष्यतोऽप्यर्थान् व्यज्ञास्यत् नैवं तर्हि पूर्वं वरमदास्यत्। प्रविमोहकदियावलस्य दण्डप्रदानेऽक्षमोऽपि परिलक्ष्यते। तञ्च वृक्षं कस्मा उदपादयत् ? आत्मनः परेषां वा कृते ? परार्थञ्चेत् किमर्थमादमं तत्पत्नीञ्च न्यषेधीत् ?

तस्मादेवंविधा वार्ताः परमात्मनस्तद्ग्रन्थस्य वा न भवितुमर्हन्ति। नन्वादमः प्रभोः कियतीर्वार्ता अशिक्षत ? कथञ्च स पृथिवीमवातरत् ? अपि स त्रिदिवः कस्मिंश्चित् पर्वते व्योम्नि वा वर्तते ? तत आदमः पक्षिवदुड्डीय समागतः शिलावद्वाऽधस्ताद् न्यपतत्। अनेनेदं प्रतीयते यदेषां स्वर्गेऽपि रजस्सञ्चयो भविष्यति यतः खल्वाद्यमानवस्तेनैव निर्मितोऽभवत्। तत्रत्याः सर्वं एव देवदूतप्रभृतयोऽपि तेनैव निर्मिता भविष्यन्ति। नहि पार्थिवशरीरं विनेन्द्रियाणि भवितुमर्हन्ति। देहस्य पार्थिवत्वे च मृत्युरपि तेषामवश्यं भावी। उपरताश्च ते ततः कुत्र गच्छन्ति ? देवदूतप्रभृतयः स्वर्गस्था न जातु म्रियन्त इति चेदङ्गीक्रियते तेषां जन्मापि नोररीक्रियतां जन्मवतामवश्यं मृत्युयोगात्। एवञ्चाप्सरसस्सदैव स्वर्गे निवसन्तीति कुराणवर्णनं मिथ्यात्वमापद्येत यतोऽप्सरसामपि मृत्युरवश्यं भविष्यति। एवञ्च स्वर्गगतानामपि ध्रुवो मृत्युः।

(१३) बिभीत तद्दिवसात् यत्र दिने कोऽपि जीवो नापरेण समं परितोक्ष्यति, न कस्यचित् परार्थवादः स्वीकरिष्यते, न तेभ्यः प्रतिफलं ग्रहीष्यते, नापि ते साहाय्यं लप्स्यन्ते।—सू० २। आ० ४८

स०—किमेषु दिवसेषु न बिभीयुः ? वस्तुतः पापाचारेषु सर्वदैव भेतव्यम्। यदा च कस्यापि माध्यस्थं नाङ्गीक्रियते तदा पैगम्बरस्य साक्ष्येण स्वर्गं प्रदास्यतीति वचः कथं सत्यं भवेत् ? अपि परमेश्वरस्त्रिदिवौकसामेव सहायो ननु निरयवासिनाम् ? एवञ्चेत्स पक्षपाती वर्तते।

(१४) वयं मूषाय पुस्तकमाश्चर्य्यशक्तिञ्च प्रादाम।

—सू० २। आ० ५३

स०—मूषाय प्रदत्ते ग्रन्थे कुराणस्य वैयर्थ्यं सञ्जायते। "तस्मा आश्चर्यशक्तिः प्रादायि" इति कुराणग्रन्थे बाइविलग्रन्थे चोभयत्रापि समुपवर्णितम्। परं नेदं सत्यं यतः खल्वस्य सत्यत्वाङ्गीकारे साम्प्रतमपि तथैव दृश्येत। इदानीमभावात् पुरापि नासीदिति युक्तमेव। अद्यापि केचन मानवा अविदुषां पुरो विद्वांसो भवन्ति तथैव तदानीं छद्माचरितं भवेद् यतः परमेश्वरस्तत्सेवकाश्चाधुनापि वर्तन्ते पुनः किमिति तेभ्य आश्चर्य्यसामर्थ्यं न प्रयच्छति ? मूषाय पुस्तकं पुरा प्रदत्तमेव पुनः कुराणग्रन्थः किमर्थं प्रादायि ? पुण्यपापयोरनुष्ठानाननुष्ठानसमुपदेशस्य सार्वत्रिकत्वे विभिन्नग्रन्थप्रदाने पुनरुक्ततादोषः समापतति। अपि मूषादिभ्यः प्रदत्तग्रन्थेषु परमेश्वरो व्यस्मरत् ?

(१५) अपि च कथयत क्षमां याचामह इति। युष्माकं पापानि वयं क्षंस्यामहे प्रशस्तकारिणाञ्च।—सू० २। आ० ५८

स०—अप्ययं परमेश्वरोपदेशः सर्वान् पापमाचरितुं नोत्साहयति ? यतो हि यदा मानवैः पापमोक्षस्याश्रयः संलभ्यते तदा न कोऽपि पापाचारेभ्यो बिभेति। तस्मान्न कर्हिचिदेवंवादिनः परमेश्वरत्वं कुराणग्रन्थस्य च तन्निमितत्वं भवितुमर्हति। न्यायाचारी हि परमेश्वरो न जात्वन्यायमनुतिष्ठति। पापमोक्षे चान्यायकारित्वं सर्वथैव समापतति।

(१६) यदा मूषः स्वीयमानवेभ्यो जलमयाचत तदास्माभिरुक्तं स्वीयदण्डेन प्रस्तर आहन्यतामिति तथानुष्ठिते च ततो द्वादशस्रोतांसि प्रावहन्।—सू० २। आ० ६०

स०—निरीक्ष्यतामिदानीम्—अपि ऋते यवनपरमात्मनोऽन्यः कोऽप्येवमसम्भवार्थान् व्याहरिष्यति ? दण्डाघातेन कस्याश्चिच्छिलाया द्वादशस्रोतसामाविर्भावः सर्वथैवासम्भवः। तच्छिलागर्भमन्तरुत्खायाद्भिश्च प्रपूर्य्य तत्र द्वादशविवरसम्पादनेन कथमप्येतत्सम्भवेन्नान्यथा।

(१७) विनिन्दितवानरा यूयं भवत इत्यस्याभिरुक्तमेतत्केवलं तेषां सम्मुखवर्तिभ्यः पश्चाद्वर्तिभ्यश्च भयप्रदर्शनार्थं, विश्वस्तेभ्यः (शुचिस्वभावेभ्यः) प्रशिक्षणार्थञ्च।—म० १ सि० १ सू० २। आ० ६५, ६६

स०—यदिनाम खुदा नामको युष्माकमीश्वरः केवलं भयप्रदानार्थमेव तान् विनिन्दितवानरान्—भवितुमादिशत्, तदा खुदा-आदेशो मिथ्या—प्रपञ्चश्छलछद्ममयं कृत्यं वा ? य एवंविधं वाग्जालं विस्तारयति नहि स खुदा नामधेयः परमेश्वरो नापि चैतत्प्रपञ्चविलिखितं पुस्तकमिद-(कुरआन)-मीश्वरप्रणीतम्।

(१८) एवं परमेश्वरः शवान् प्राणयति स्वाभिज्ञानानि च युष्मान् दर्शयति येन यूयमवगच्छेत।—सू० २। आ० ७३

स०—यदि नाम परमेश्वरः पूर्वं शवान् प्राणिणत् किमिति साम्प्रतं न प्राणयति ? अपि नाम ते प्रलयरात्रिपर्यन्तं शवागार एव स्थास्यन्ति ? किमेषु दिवसेषु युष्माकं परमेश्वरस्तान् परिभ्रमयति ? अप्येतावन्त्येव (शवानां प्राणनप्रमुखानि) परमात्मनोऽभिज्ञानानि । पृथिवी-सूर्यचन्द्रादयोऽपि किन्न विद्यन्ते तल्लिङ्गानि ? अप्येतस्मिन् जगति प्रत्यक्षतस्समवलोक्यमाना विविधेयमद्भुता सृष्टिः परमात्मनो लिङ्गत्वेऽपर्याप्ता ?

(१९) ते सर्वदैव वैकुण्ठे निवसन्ति ।—सू० २ । आ० ८२

स०—परिमितशक्तिरयमात्मा नानन्तपापकर्माणि कर्तुं पारयति अत एव नायं शक्नोति स्वर्गनरकयोः शश्वत् स्थातुम् । यदि नाम परमेश्वर एवमाचरेत् सोऽन्यायकार्यविद्वाँश्च सम्पद्येत । सकलात्मनां प्रलयवासर एव न्यायश्चेद् भविष्यति तर्हि तेषां पापपुण्यैः समानैर्भवितव्यम् । सान्तकर्मणाञ्च फलं कथमनन्तं भवितुमर्हति ? "सर्गस्यास्य समुत्पत्तौ सप्ताष्टौ वा सहस्र-अब्दानि व्यतीतानि" इति यवनैर्विश्वस्यते किमतः पूर्वं तेषां परमेश्वरो निश्चेष्टोऽभवत् ? प्रलयानन्तरमपि च निर्व्यापारः स्थास्यति ? सर्वमिदं बालविलसितं यतः परमेश्वरो न कर्हिचिद् निर्व्यवसायस्तिष्ठति । पापपुण्यानुसारेणैव च सर्वेभ्यस्तत्फलं प्रयच्छति तस्मात् कुराणग्रन्थस्यायमुपदेशो मृषैव ।

(२०) (स्मरत तस्य समयस्य) यदाहं युष्मान् प्रत्यज्ञापयं "यद् युष्माभिर्मिथः रक्तपातो न करणीयः; नापि स्वीयमानवास्तदालयेभ्यो निर्वासनीयाः । पुनरपि युष्माभिः समयः कृतः तस्य यूयमेव साक्षिणः । परं यूयमेव स्वीयपुरुषान् व्यापादयथः स्वीयमानवानाञ्च कञ्चिद्भागं तन्निलयेभ्यो निर्वासयथ ।"—सू० २ । आ० ८४-८५

स०—नन्वेतत्समयसम्पादनमल्पधियां मानवानां कर्म उत सर्वज्ञस्य परमात्मनः ? सर्वज्ञः परमेश्वरः कथं संसारी जन इवेत्थं व्यवहरिष्यति । कीदृशी खल्वियं साधुता यत् स्वीयमतावलम्बिनामसृजोऽपातनं स्वालयेभ्यश्चानिर्वासनम्, परमतावलम्बिनाञ्च रुधिरस्रावो गृहेभ्यश्च निर्वासनम् । एतादृशेषु विषयेषु विश्वासः केवलं मौर्ख्यं पक्षपातश्च । अपि परमेश्वरः पूर्ववद् एव न जानाति स्म यदिमे संविदो विरुद्धमाचरिष्यन्तीति ? एतेन "यवनपरमेश्वरोऽपि ख्रीष्टीयेश्वरं भूयसानुकरोतीति प्रतीयते" । अपि चायं कुराणग्रन्थो नास्ति निरपेक्षो यतो ह्यस्मिन् काँश्चिद् विषयान् परित्यज्य प्रायशो बाइबिलवर्णिता एव विषया दरीदृश्यन्ते ।

(२१) त एव इमे मानवा ये खलु प्रलयजीवनं परित्यज्य सांसारिकं जीवनं क्रीतवन्तस्तेषां यातना न कर्हिचिद् लघूकरिष्यन्ते नापि तेभ्यः साहाय्यं दास्यते ।—सू० २ । आ० ८६

स०—अपि नाम परमेश्वरः कदाचनापि एवं साभ्यसूयं सदुष्टभावञ्च व्यवहरति । येषां पापानि लघूनि करिष्यन्ते येभ्यश्च साहाय्यं प्रदास्यते ननु के नाम ते मानवाः ? यदि नाम ते पापिनः दण्डप्रदानमन्तरेणैव च तेषां पापानि क्षंस्यन्ते तर्ह्यन्यायः सम्पत्स्यते । दण्डोपभोगेन चेल्लघूकरिष्यन्ते तथा सति येषामत्र प्रकरणे वर्णनं तेऽपि दण्डमुपभुज्य लघूभविष्यन्त्येव । दण्डोपभोगेनापि तेषां पापानि चेन्न क्षंस्यन्ते तथाप्यन्यायो भविष्यति । उपशमितपापैर्धर्मात्मानश्चेद् गृह्यन्ते ननु स्वत एव तेषां पापानि क्षान्तानि, किं तत्र परमेश्वरो विधास्यति ? तस्मादयं लेखो न कस्यचित् विचक्षणस्य प्रतीयते । वस्तुतस्तु तत्तत्कर्मानुसारेण पुण्यवद्भ्योऽपुण्यवद्भ्यश्च सुखदुःखे प्रदातव्य एव ।

(२२) सुनिश्चितमहं मूषाय पुस्तकं प्रादाम्, तदनुक्रमेण परमेश्वरप्रेरितान् (पैगम्बरान्) प्राहिणवम्, मरियमस्तनयाय यीशवे प्रकटिता दैवीः शक्तीः प्रायच्छम् । पवित्रात्मना च तं सामर्थ्यवन्तमकरवम् । यदा यदा कश्चित् सन्देशहरो युष्माकमन्तिके युष्मन्मनःप्रतिकूलं सन्देशमादाय समागमत् तदा युष्माभिरभिमेने । तेषामेकतरेण सह वञ्चकेनेव व्यवहृतम्, अपरश्च घातितः ।—सू० २ । आ० ८७

स०—यदा कुराणग्रन्थे मूषाय पुस्तकं प्रादायीति स्पष्टमभिहितं तदा यवनैस्तस्याङ्गीकारः सुतरामावश्यकः । ये च तत्र दोषाः संलक्ष्यन्ते सर्व एव ते यवनधर्मेऽपि सम्पतन्ति । अपि च चमत्कारप्रदानादिकं सर्वमेवानर्थकम् । एतद्धि मुग्धजनान् मोहयितुं मिथ्यैव कल्पितम्, यतः खलु सृष्टिक्रमविज्ञानविरुद्धं सर्वमपि मिथ्यैव भवति । यदि नाम तदानीमद्भुतान्यासन् कुतः पुनः साम्प्रतं न विद्यन्ते ? इदानीमभावाच्च पूर्वमपि नासन्नित्यत्र नास्ति कश्चन सन्देहलवोऽपि ।

(२३) अपि च तेऽतः पूर्वं नास्तिकेषु विजयलाभाय वरमयाचन्त । यदा च तेषां परिचितः कुराणग्रन्थस्तेषामन्तिकमुपातिष्ठत् तदा ते तं नाभ्यज्ञासिषुः ? नास्तिकेषु (काफिरेषु) परमेश्वरस्याभिशापः ।—सू० २ । आ० ८८

स०—यथा यूयं परमतावलम्बिनो नास्तिकान् वदथ तथैव तेऽपि युष्मान् नास्तिकानाचक्षते । एवं तत्परमेश्वरस्याभिशापा युष्मासु पतन्ति । यूयमेवात्र पृष्टाः कथयत "कमत्र सत्यवादिनं कञ्चालीकभाषिणं मन्महे" ? इति । सूक्ष्मधिया विचारणेन पुनः सर्वमतेषु किञ्चिदतथ्यमुपलभ्यते तथ्ये तु सर्वत्र समानमेव ।

(२४) विश्वस्तेभ्यः (शुचिरुचिभ्यः) आनन्दस्य सन्देशः । यो हि परमात्मनो देवदूतानां इस्रायेलस्य मीखायेलस्य च शात्रवमाचरति परमेश्वरोऽपि तादृग्नास्तिकानां शत्रुर्वर्तते ।—सू० २ । आ० ९७, ९८

**स०**—ननु यदा यवनैः परमात्मनो नास्त्यन्यः कोऽपि भागहर इति समाख्यायते तर्हि भाग्भुजामियं वरूथिनी कुतः समागता ? यः खल्वन्येषां शत्रुः स किं परमात्मनोऽपि शत्रुः ? न ह्येवं जातु सम्भवति यतः परमेश्वरः कस्यचिच्छत्रुर्भवितुं नार्हति।

(२५) परमेश्वरो यं कामयते तमात्मनो दययाऽसाधारणं कुरुते।

—सू० २। आ० १०५

**स०**—अप्यतद्योग्येष्वपि परमेश्वरो नैजामसाधारणीमनुकम्पां दर्शयति ? दर्शयति चेन्नूनं महानर्थमनुतिष्ठति। यतः को नाम पुरुषस्तथा सति सत्कर्माण्याचरिष्यति ? कश्च पापकर्माणि हास्यति ?

(२६) कदाचिदेतन्न स्यात् यन्नास्तिकमानवा युष्मानीर्ष्यया युष्मद्धर्मतः परावर्तयेयुः। सन्ति हि तेषु विश्वस्तानां भूयांसः सखायः।

—सू० २। आ० १०६

**स०**—अवधीयतां किञ्चित्—परमेश्वरः स्वयमेव तान् प्रबोधयति यन्नास्तिका युष्मद्धर्मतो वश्चेतसि संशयं नापादयेयुः। अपि नास्ति परमेश्वरः सर्वज्ञः ? नेदृशा व्यवहाराः परमेश्वरस्य सम्भवन्ति।

(२७) यत्र दिशि यूयं स्वाननानि परिवर्त्स्यथ तत्रैव परमेश्वरस्यापि मुखं वर्तते।—सू० २। आ० ११५

**स०**—सत्यमिदं चेत् किमिति यवनाः किबलाभिमुखं (मक्काप्रदेशे यावनधर्ममन्दिरं) मुखानि कुर्वते ? तथानुष्ठातुं वयमादिष्टा इति चेदुच्येत तर्हि यथाभिलाषं यत्र कुत्रापि हरिति मुखानि कुरुत इत्यपि तत्रादेशो विद्यते। अप्यनयोरेकतरः सत्योऽपरश्चासत्यो भविष्यति ? अपि च परमेश्वरः साननश्चेन्न तन्मुखं सर्वतोमुखं भवितुमर्हति। नहि कस्यचिदाननमेकदैव सर्वदिक्षु जातु सम्भवति।

(२८) द्यावापृथिव्योरुत्पादको यदा किमपि वस्तु निर्मिमासति तदा स केवलं "जायताम्" इत्यादिशति तदादेशेनैव च तदुत्पद्यते।

—सू० २। आ० ११७

**स०**—"जायतामिति" परमेश्वरादेशः केन श्रुतः ? कश्च तेन श्रावितः ? कः समुत्पन्नः ? कस्माच्च कारणान्निर्मितः ? ननु यदा कुराण-ग्रन्थे स्पष्टमुक्तं सर्गात् पूर्वं परमात्मनो व्यतिरिक्तं नासीत् किमपि वस्तुजातमिति कुतः पुनरयं संसारः समुत्पन्नः ? यदा च कारणं विना किमपि कार्यं नोत्पद्यते कथं पुनरिदं जगदतिमहत् समुत्पन्नम् ? युष्माभिरेकोऽपि पादो मक्षिकाया निर्मातुं न शक्यते कथं पुनरिदं परमात्मनः स्वेच्छयैव जगदुत्पन्नमिति विश्वसिथ ?

**पूर्वपक्षी**—सर्वशक्तिमत्वात् परमेश्वरः सर्वं कर्तुमर्हति।

**उत्तरपक्षी**—कोऽर्थः "सर्वशक्तिमान्" इति शब्दस्य ?

**पू०**—यथाभिलाषमनुष्ठानसामर्थ्यं सर्वशक्तिमत्त्वम् ।

**उ०**—अपि परमेश्वरो द्वितीयमपि परमेश्वरं निर्मातुमीष्टे ? स्वयञ्च शक्नोति प्राणान् हातुम्, मूर्खः सामयोऽज्ञानी च भवितुम् ?

**पू०**—नेदृशः कर्हिचिदपि भवितुमर्हति ।

**उ०**—ततः परमेश्वरः स्वात्मनः परेषाञ्च गुणकर्मस्वभावविरुद्धं किमपि कर्तुं न शक्नोति । अस्मिञ्जगति कस्यचिद्वस्तुन उत्पादे निर्माणे च पदार्थत्रयमावश्यकम् । तथा च—

पदार्थानां रचयिता निमित्तकारणम्—यथा घटनिर्माणे कुम्भकारः । येन घटो निर्मीयते (उपादानकारणं मृत्तिका) । तृतीयञ्च येन साधनजातेन घटपदार्थस्य समुत्पत्तिर्भवति दण्डचक्रादिस्वरूपं साधारणकारणन्तत् । तदेतत्कारणत्रयं घटात् पूर्वमेव विद्यमानं तिष्ठति तथैव जगन्निर्माणात् पूर्वमेव अनादिगुणकर्मस्वभावपरमेश्वरप्रकृती सन्तिष्ठेते । तस्मादिदं कुराण-वर्णनं सर्वथैवासम्भवम् ।

(२९) अस्माभिर्मानवेभ्यः सुखप्रदं मेध्यञ्च काबानामकं स्थानं विरचितं तद् युष्माभिः प्रार्थनायै अब्राहमस्य स्थले गन्तव्यम् ।

—सू० २ । आ० १२५

**स०**—अपि परमात्मना काबास्थाननिरूपणतः पूर्वं किमप्यन्यत्पवित्र-स्थलं न निरूपितम् ? निरूपितञ्चेन्नास्ति काबास्थाननिर्माणे किमपि प्रयोजनम् ? अथ चेन्न निरूपितं तर्हि प्राचीनास्तपस्विनः पवित्रस्थान-मन्तरेणैव स्थापिताः । पूर्वं परमेश्वरः काबासदृशं पवित्रस्थलनिर्माणं व्यस्मरदित्यनुमिमीमहे ।

(३०) के ते मानवा येऽब्राहमधर्मं न मन्यन्ते । केवलं त एव तद्धर्मं न मंस्यन्ते येषां बुद्धिरुन्मार्गगामिनी । यतोऽसंशयं सर्वेष्वपि जनसमाजेषु स एव वृतोऽसंशयञ्च स एव प्रलयेऽपि साधुरस्ति ।—सू० २ । आ० १३०

**स०**—ये खलु अब्राहमधर्मं न मन्यन्ते सर्व एव ते मूर्खा इति कथमेतत्सम्भवेत् । परमेश्वरेणाब्राहमस्यैव वरणे को हेतुः ? पुण्यत्वञ्चेदन्ये-ऽपि भूयांसः पुण्यात्मानः सम्भवन्ति । यदि पुनर्धर्मात्मत्वव्यतिरेकेणापि वृतस्तर्ह्यन्यायः समनुष्ठितः । धर्मात्मान एव परमात्मनः प्रिया भवन्ति नत्वपुण्यात्मान इति तु निर्विवादम् ।

(३१) वयमसंशयं तवाननं स्वर्गे सर्वदिक्षु परिभ्रमत्पश्यामः । परं वयं तवाननं किबलाभिमुखं परिवर्तयिष्यामः । ततो यूयं स्वाननं मेध्यधर्म-मन्दिराभिमुखं परिवर्तयत । यत्र कुत्रापि च स्थिताः सन्तस्तदभिमुखमेव परिवर्तयत ।—सू० २ । आ० १४४

स०—अपीदमल्पीयः प्रतिमार्चनम् ? वयन्त्विदं महत्प्रतिमार्चनमिति मन्महे।

पू०—यवना वयं न स्मो मूर्तिपूजका अपि तद्भञ्जकाः स्मः। नहि वयं यावनधर्ममन्दिरं परमेश्वरं मन्यामहे।

उ०—तेऽपि यान् हि यूयं प्रतिमार्चकान् मन्यध्वे तास्ता देवप्रतिमाः परमेश्वरं न मन्यन्ते, अपि तु तेषां पुरतः परमात्मनो भक्ति विदधति। यदि च यूयं प्रतिमाभञ्जकाः स्थ किमिति र्तहि युष्माभिः किवलाभिधो महान् देवलो न निराकृतः ?

पू०—साधु साधु, किवलाभिमुखं वदनपरिवर्तनस्य वर्तते खल्वादेशः कुराणग्रन्थे परं वेदेषु प्रतिमापूजनं नादिश्यते कुतः पुनरमी न सन्ति प्रतिमापूजकाः ? अस्माकन्तु परमेश्वरादेशस्य पालनं सर्वथैवावश्यकम्।

उ०—यथा युष्मभ्यं कुराणग्रन्थे समादेशस्तथैवैषां पुराणेष्वादेशो वर्तते। यथा च यूयं कुराणग्रन्थं परमात्मनो वाक्यत्वेन प्रतीथ तथैवैतेऽपि पुराणान् परमेश्वरावतारभूतव्यासमुनेर्वचनत्वेन प्रतियन्ति। युष्मासु पौराणिकेषु च केवलमियानेव भेदो यद् यूयं महाप्रमाणां प्रतिमां पूजयथ ते च लघीयसीम्। यथा स्वगृहात् बिडालिकां निस्सारयतो जनस्य गृहं क्रमेलकः प्रविशेत् तथैव युष्माकं मुहम्मदेन यवनधर्मल्लिघुप्रतिमार्चनं विलोप्य पर्वतसन्निभस्य मक्काप्रदेशीययवनदेवायतनस्य पूजनं तन्मते प्रवर्तितम्। अपीदं सामान्यं प्रतिमार्चनम् ? यदि भवन्तोऽपि वैदिकाः सन्तोऽस्माकमिव वैदिकं मतमङ्गीकुर्युस्तदैव प्रतिमार्चनादिदोषेभ्यो विप्रमोक्ष्यन्ते नान्यथा। यावच्च यूयमात्मनो महाप्रतिमार्चनं न त्यजेत तावदन्येषामल्पमूर्त्तिपूजकानां खण्डनतो विरतिं विधत्त मूर्त्तिपूजापरिहारेण च स्वीयान्तःकरणं परिशोधयत।

(३२) ये मानवाः परमात्मनो मार्गे हन्यन्ते ते "मृताः" इति मा कथयत वस्तुतस्ते जीवन्त्येव।—सू० २ आ० १५४

स०—ननु परमात्मनो वर्त्मनि का नामावश्यकता कस्यचिन्मरणस्य परेषां हननस्य च। इदमेव कथन्नोच्यते यदिदं सर्वं स्वलाभेच्छयैव कल्पितम्—एतत्प्रलोभनेन मानवाः सम्यग्योत्स्यन्ते तेन वयमरीन् विजेष्यामहे। ते मरणान्न भेत्स्यन्ति वयञ्च लुण्ठनादिनैश्वर्यं लप्स्यामहे तदनु विषयान् भोक्ष्यामह इति।

(३३) परमेश्वरः खलु दण्डविधाने नितरां परुषः। शैतानस्य पदवीं मानुसरत स हि युष्माकं शत्रुः, केवलं स युष्मानभद्रं दौर्जन्यञ्च समुपदेक्ष्यति। अनवबुद्ध्वैव परमात्मानं दूषयत, इति वक्ष्यति।

—सू० २। आ० १६५, १६८, १६९

**स०**—अपि युष्माकं परमेश्वरो दुर्जातान् दण्डयति पुण्यात्मनश्च वर्धयति ? आहोस्वित् स केवलं यवनाननुकम्पतेऽपरांश्च नितरां निपीडयति ? एवञ्चेत् स परमेश्वर एव न शक्नोति भवितुम्। न चेद् युष्मासु पक्षपातं विधत्ते तर्हि यस्य कस्यापि धर्मस्यावलम्बिनः पुण्यात्मनोऽनुग्रहीष्यति पापकर्मणश्च निग्रहीष्यति एवञ्च कुराणमुहम्मदयोर्विश्वासः निरर्थकस्सञ्जायते। यः खलु सर्वान् प्राणिनो विमोहयति निखिलं जीवलोकञ्च विद्वेष्टि युष्माकं परमेश्वरस्तादृशं दियावलं किमर्थं नाम समुदपादयत् ? अपि स भाविनमर्थं न विजानाति स्म। विजानन्नपि मानवान् परीक्षितुं दियावलं व्यरचयदिति चेदुच्येत तदप्यसमञ्जसम्। परीक्षणं ह्यल्पज्ञस्य कर्म, सर्वज्ञस्तु निखिलजीवानां शुभाशुभकर्माणि याथार्थ्येन सर्वदैव वेत्ति। अपि च दियावलः सर्वान् मोहयति कस्तर्हि दियावलमलोभयत् ? दियावलः स्वत एव व्यामुग्ध इति चेदन्येऽपि तर्हि स्वयमेव व्यामोढुं शक्नुवन्ति किं तर्हि मध्ये दियावलोपन्यास आवश्यकः ? अथ यदि परमात्मनैव दियावलो व्यामोहितः तर्हि सः शैतानस्यापि शैतान आसीत्। नेदृशानि कर्माणि परमात्मनो भवितुमर्हन्ति। अविद्यादुःसङ्गतो भ्रान्ता एव परान् प्रलोभयन्ति।

(३४) स्वयं मृताः प्राणिनः, रुधिरम्, किरिमांसम्, यच्च परमेश्वरव्यतिरिक्तायान्यस्मा उपकल्पितं तत्सर्वं युष्मभ्यं प्रत्यादिश्यते।

—सू० २। आ० १७३

**स०**—अत्रेदं विचारणीयं कोऽपि जन्तुः स्वयं म्रियेतान्येन वा घात्येतोभयथापि साम्यमेव। आम्, अस्त्यनयोरल्पीयान् भेदः परं न स मृतकत्वे किञ्चिदुपकरोति। यदा च केवलं वराहपिशितं प्रतिषिद्धं किं तदानीं मानवानामिदं भक्षणीयम् ? अपि प्रशस्यः परमात्मनो नाम्ना प्राणिनां वधः ? शत्रुप्रमुखानां वा निपीडनम् ? एतेन परमात्मनो नाम कलङ्कितं सञ्जायते। ननु परमेश्वरः प्राग्जन्मवर्तिपाप्मनामसद्भावेऽपि यवनैः प्राणिनः कथं पीडयामास ? अपि नास्ति तेषु सानुकम्पः ? तान् वात्मनस्तनयान् न मन्यते ? मर्त्यानां महोपयोगिगवादिप्राणिनां हत्यादेशेन स स्वयमेव प्राणिनां वधेन जगद् विनाशयतीति मन्तव्यम्। ततश्च हत्यापापेनात्मानं कलङ्कयति। नेदृशानि कर्माणि परमात्मनस्तद्ग्रन्थस्य वा भवितुमर्हन्ति।

(३५) उपोषणयामिनीषु युष्माकं स्वप्रेयसीसमागमोऽभ्यनुज्ञायते। ता हि युष्माकं परिधानं यूयञ्च तासां परिधानम्। यूयं तासु व्यभिचारचौर्यमाचरथेति परमेश्वरो विजानाति। स युष्मानक्षमत। साम्प्रतं (उपोषणदिवसेषु रात्रिसमये) तासु सम्यग् विहरत। परमात्मना विलिखितञ्च सन्तानरूपं फलं लभध्वम्। यावत्क्षपायाः कृष्णतन्तुः प्राभातिके शुभ्रतन्तौ परिणतो न लक्ष्येत तावद् यथेच्छं भक्षणादिकं कुरुत।—सू० २। आ० १८७

**स०**—अत्रेदं प्रतीयते यद् यवनधर्माविर्भावसमये ततः पूर्वं वा कश्चिदरबदेशीयः पौराणिकं कञ्चन चान्द्रायणव्रतस्य विधिमप्राक्षीत् स च तदुपदिष्टा, व्रतस्यास्य शास्त्रविहितां पद्धतिं—यत्र हि चान्द्रमसकलाया वृद्धिक्षयानुसारेण कवलानामुपचयापचयौ मध्याह्नभोजनञ्च विहितानि—विस्मृत्य चन्द्रदर्शनानन्तरं भक्षणीयमिति विधिं प्राचारयत्। यवनैस्तदेव चान्द्रायणव्रतमित्थं परिदूषितवर्त्मना परिगृहीतम्। परमत्र व्रते योषासमागमो वैदिकसरणौ नितरां प्रतिषिद्धचते यवनानां परमात्मना तु सोऽप्यभ्यनुज्ञातः। अयमेवानयोर्भेदः। ननु कीदृशं व्रतमिदं यत्र दिवा न भुज्यते रात्रौ च बहुकृत्वः समाश्यते। एतच्च सृष्टिक्रमविरुद्धम्।

(३६) परमात्मनः पथि ये युष्माभिर्युद्धचन्ते यूयमपि तैर्युद्धचध्वं व्यापादयत च तान् यत्र क्वापि यूयं तानधिगच्छेत। वैमत्यं हि विशसनादप्यधमम्। विरोधावसानपर्यन्तञ्च योद्धव्यम्। तांश्च तत्प्रदेशान्निःसारयत यतो यूयं तैर्निस्सारिताः।—सू० २ आ० १६०, १६१, १६३, १६४

**स०**—यदि नाम कुराणग्रन्थे यावनो जगदीश्वरो नेदृशान् विषयान् प्रत्यपादयिष्यत्तर्हि न जातु यवनैरन्यमतावलम्बिष्वेवमत्याचारो व्यधास्यत। निरागसां च संहननेन तेषु महत्पापमवस्थितम्। ते च स्वमताग्रहणमेव धर्मनिन्दनं (कुफ्र) प्राहुः। अत एव यवना स्वधर्मनिन्दकानां वधं शुभं मन्यन्ते। ते ह्यजस्रमाहुः—यः कश्चनास्मद्धर्मं नाङ्गीकरिष्यते तं वयं व्यापादयिष्याम इति। तथैव च तेऽन्ववातिष्ठन्तानुतिष्ठन्ति च। स्वधर्मनिमित्तं च युद्धचमाना राज्यादिभिरप्यहीयन्त। धर्मोऽयं परधर्मावलम्बिनः प्रति महन्नैष्ठुर्यमुपदिशति। अपि स्तेयस्य स्तेयमेव प्रतीकारः? कश्चन कुम्भीलकोऽस्मद्धनमपजहारेति किं वयमपि तद्गृहे सन्धिं छिन्द्मः? एतद्धि सर्वथैवान्याय्यम्। यदि नाम कश्चिद् मूढधीरस्मानभिशपेत्किं वयमपि विनिमयेन तमभिशपेम? नेदृश्यो वार्त्ताः परमात्मनो विपश्चितो भक्तस्य, परमेश्वरप्रणीतग्रन्थस्य वा भवितुमर्हन्ति।

(३७) परमेश्वरो विप्लवं न कामयते। अयि श्रद्धालवो मानवाः! यूयं सद्धर्मं (यावनधर्मं) प्रविशत—सू० २ आ० २०५, २०८

**स०**—परमेश्वरः कलहं चेन्न साधु मन्यते किमिति तर्हि स स्वयमेव यवनान् विवदितुं प्रेरयति? कलिप्रियांश्च तान् सखीयति? यवनधर्मप्रवेशेनैव किं परमेश्वरः सन्तुष्यति? यद्येवं स केवलं यवनाननुगृह्णाति अतः सकलस्य जगतोऽधिपतिर्भवितुं न शक्नोति। एतेन स्पष्टं प्रतीयते नैष कुराणग्रन्थः परमात्मनो वाक्यं नापि तत्र वर्णितः परमेश्वरः परमेश्वरो भवितुमर्हति।

(३८) परमेश्वरो यथेच्छं यमभिलषेत्तस्मा अनन्तमनुग्रहं (भोजन-वस्त्रादिकं) प्रयच्छति ।—सू० २ । आ० २१२

स०—किं परमेश्वरोऽस्मत्सुकृतदुरिताभ्यां विनैव स्वौदार्यं प्रकाशयति? एवं चेत्को नु विशेषः पापपुण्ययोः ? सुखदुःखप्राप्तिर्हि ईश्वरेच्छामवलम्बते । अतएव यवना धर्मविमुखाः सन्तो यथेष्टं पापादिकं कुर्वते । केचिद् यवनेष्वपि कुराणवर्णितानीदृशाचारानप्रमाणयन्तो धर्मजीवनं व्यत्यापयन्ति ।

(३९) (अयि ईश्वरदूत !) केचित्त्वामङ्गनानामार्तवविषये पृच्छन्ति, कथय तदशौचमिति । रजोदिवसेषु ताभ्यः पृथगवतिष्ठध्वम्, यावच्च योषितो नीरजस्का भवेयुस्तावत्तदन्तिके न गन्तव्यम् । यदा च ता निर्णिक्तवाससः सम्पद्येरन् तदा परमेश्वरादेशविधिना ता अभिगन्तव्याः । युष्माकं भार्या वः क्षेत्राणि । यथेच्छमतः स्वक्षेत्रेषु विहरत । न च परमेश्वरो युष्मान् सशपथ-भाषणेषु निगृह्णाति ।—सू० २ । आ० २०९, २२२, २२३, २२५

स०—अत्र पुष्पवतीसङ्गमप्रतिषेधः संश्लाघ्यः । योषितां क्षेत्रत्ववर्णनं तासु यथेच्छविहारश्च नाभिनन्दनीयः, एवं हि मानवा विषयिणः सम्पद्यन्ते । परमेश्वरो निरर्थकशपथेष्वपि न निगृह्णाति चेत् सर्वेऽलीकभाषिणो भवि-ष्यन्ति । समयाँश्च भेत्स्यन्ति । ततश्च युष्माकं परमेश्वरो मृषापथप्रवर्तकः सम्पत्स्यते ।

(४०) अस्ति तादृशः कोऽपि पुमान् यः प्रसन्नचेतसा परमेश्वराय ऋणं प्रयच्छेत् । परमेश्वरस्तदृणं भूयोभूयः द्विगुणं करिष्यति ।

—सू० २ । आ० २४५

स०—किमर्थं ननु परमेश्वर ऋणमादत्ते[1] ? येन सर्वमिदं विश्वं विर-चितं स मर्त्येभ्य ऋणमादत्त इति कथं सम्भाव्येत ? एवं ह्यविमृश्यैव मूढधिया वक्तुं शक्यते । अपि तस्य कोषो रिक्तोऽभवत् ? अपि नाम स वाणिज्यमाचरन् परिक्षीणोऽ (ऋणशोधनाक्षमो) भवद्येन ऋणमादातुमुद्यतः ? एकस्य द्विगुणप्रदानप्रतिज्ञानं किं श्रेष्ठिनां पन्थाः ? एवं हि परिक्षीणैः धना-गमात्समधिकव्ययैर्वानुष्ठीयते न तु परमात्मना ।

(४१) केचित्तेषु श्रद्धालवोऽपरे च नास्तिका अभवन् । परमेश्वर-श्चेदेषिष्यत् ते मिथोऽयोत्स्यन्त परं यथा तस्मै रोचते तथा कुरुते ।

—सू० २ । आ० २५३

---

१. अस्यैवायतस्य तफसीरहुसैनी भाष्ये विलिखितम्—"मुहम्मदमुपागम्य मानव एकोऽपृच्छत्—"हे रसूलल्लाह ! किमर्थं खुदा ऋणं याचते ?" इति । मुहम्मदः प्रत्युवाच, युष्मान् स्वर्गं प्रापयितुम् । सोऽवदत् "यदि भवान् मम प्रतिभूर्भवेत्, तदाह-मृणं प्रदेयाम्", मुहम्मदश्च तस्य प्रतिभूरभवत् । इत्थं नहि खुदा विश्वस्तोऽपितु तत्प्रेषितदूत एव विश्वासपात्रमभूदिति कियतीयं प्रवञ्चना ।

**स०**—सर्वमप्यायोधनं यदत्र जगति सञ्जायते ईश्वरेच्छयैव भवति किम् ? अपि स स्वेच्छया पापमपि शक्नोति कर्तुम् ? शक्नोति चेन्नास्ति स परमेश्वरः। नहि साधवः शान्तिभङ्गेनोपप्लवं जनयन्ति एतेन नायं कुराण-ग्रन्थः परमेश्वरनिर्मितो नापि कस्यचिद्विपश्चितः कृतिरिति प्रतीयते।

**(४२)** द्यावापृथिव्योर्वर्तमानं सर्वमपि तदर्थमेव। कृत्स्नापि रोदसी तत्पीठेनापिहिता।—सू० २। आ० २५५

**स०**—द्यावापृथिव्योर्वर्तमानं कृत्स्नमपि वस्तुजातं परमात्मना सकल-प्राणिनां कृते निर्मितम्। स हि पूर्णकामत्वान्न किमप्यपेक्षते। आसन्दीवत्तया च स परिच्छिन्नः संपद्यते, परिच्छिन्नस्य चेश्वरत्वं व्याहन्यते परमेश्वरो हि व्यापको न तु परिच्छिन्नः।

**(४३)** यतः परमेश्वरश्चण्डरोचिषं प्राचीहरितः समानयति ततस्त्व-मवाचीदिशः समानय। नास्तिकः सम्भ्रान्तोऽभवद्, यतो हि परमेश्वरः पाप-कर्मिणः पन्थानं न दर्शयति।—सू० २। आ० २५८

**स०**—निरीक्ष्यतामिदमज्ञानविजृम्भितम् ? न हि सूर्यः पूर्वतो वारुणीं दिशं ततो वा प्राचीं दिशं समुपैति स हि केवलमात्मनः परिधौ परिभ्रमति। एतेन कुराणग्रन्थप्रणेतुर्भूखगोलविद्ययोरज्ञता सुतरां प्रकाशिता भवति। अथ यदि यावनः परमेश्वरः पापिनो मार्गं न दर्शयति नास्ति तर्हि पुण्यात्मभ्योऽपि तत्प्रयोजनं ते हि स्वत एव धर्म्ये पथि पदमादधति। पथभ्रष्टेभ्य एव मार्ग-दर्शनं विधीयते तस्मात्स्वकर्तव्यासम्पादनेन कुराणग्रन्थप्रणेतुरयं महान् दोषः।

**(४४)** स प्राह चतुरः पतत्रिणः समादाय स्वान्तिकमुपानय, तेषाञ्च प्रत्येकस्य चतुरश्चतुरः खण्डान् कुरु। एकैकं भागं प्रतिपर्वतं निधेहि। अनन्तरं तानाह्वय, ते सपद्येव धावन्तस्तवान्तिकमुपैष्यन्ति।—सू० २। आ० २६०

**स०**—साधु, साधु, दृश्यतामयं यावनः परमेश्वर ऐन्द्रजालिकवत् लीलाः संकुरुते। किमीदृशैरेव व्यवहारैः परमात्मनः परमेश्वरत्वमवतिष्ठते। बुद्धिमन्तः खल्वीदृशपरमेश्वरं दूरत एव प्रणम्य पृथगवतिष्ठन्ते केवलं मूर्खा एव तत्र विश्वसन्ति। एवञ्च यवनानां परमेश्वरस्य सर्वत्र यशःस्थाने दुष्कीर्तिरेव प्रसरिष्यति।

**(४५)** परं परमेश्वरो यथाकामं यतः प्रसीदति तस्मै नीतिं प्रयच्छति।
—सू० २। आ० २६९

**स०**—यदा हि स यस्मै कामयते तस्मै नयमुपदिशति तदा यतो न प्रसीदति तमनयवर्त्मना नेष्यति, नायं परमेश्वरोचितः संव्यवहारः। यः खलु पक्षपातं विहाय सर्वान् धर्म्यपथमादिशति स एव परमेश्वर आप्तो वा भवितुमर्हति।

(४६) ये कुसीदमुपार्जयन्तोऽश्नन्ति, नहि ते शवस्थितिभ्यः (श्मस्थानेभ्यः) समुत्थास्यन्ति समुद्धरिष्यन्ते वा ।

—सि० ३ । सू० २ । आ० २७५

स०—किं ते श्मस्थानेष्वेव (शवगृहेष्वेव) स्थास्यन्ति ? स्थास्यन्ति चेत् कियदवधिपर्यन्तम् ? नहि—असम्भवं संकथनमिदमीश्वरप्रणीतपुस्तके—सम्भवितुं शक्यम्, किन्तु बालबुद्धिविलसितमेवैतत् ।

(४७) स स्वेच्छया यं कमपि क्षंस्यते निग्रहीष्यति वा यतः स सर्वेभ्यो बलवत्तरः ।—सू० २ । आ० २८४

स०—अपि युष्माकं परमेश्वरः क्षन्तुमर्हानक्षममाणोऽक्षम्यांश्च मर्षयन् निष्ठुरशासनो लोकपाल इव प्रजा भृशं निपीडयति ? यदा च परमेश्वरो यथाकामं कमपि पुण्यवन्तमपरञ्च पापिनं विदधाति तदा न केनाप्यात्मना पुण्यपापवता भाव्यम्, नापि केनापि परमात्मनैव तथानुष्ठीयमानतया पुण्यपापयोः फलं सुखदुःखात्मकं भोक्तव्यम् । यथा हि लोकेऽपि सेनाप्रणेतुरादेशेन कस्यचिद्विशसिता रक्षको वा सैनिको न तत्फलेन युज्यते तथैवात्रापि भवितव्यम् । (जीवैः सुकृतदुरितफलं न भोक्तव्यम्) ।

(४८) अयि ईश्वरप्रेरिताः ! कथयत तान्—पुण्यवद्भ्यः किमतः परं शुभसन्देशमाहरामि यत्तत्र त्रिदिवे सन्ति भूयांसि केलिकाननानि येषामधस्तात्कृत्रिमाः सरितः प्रवहन्ति । यत्र च ते नित्यं स्थास्यन्ति । तत्र (स्वर्गे) निरवद्या मत्तकाशिन्योऽप्सरसो विद्यन्ते । परमेश्वरः स्वप्रसादेन स्वानुचराननुगृह्णाति ।—सू० ३ । आ० १५

स०—नन्वयं यवनानां स्वर्ग उत वेश्याविलासमन्दिरम् ? अयं परमेश्वर उच्यतां कामवृत्तो वा ? केऽपि कृतधियो नेदृशदुराचारवर्णनपरं ग्रन्थं परमात्मनिर्मितं मन्तुमर्हन्ति ? कथमयं पक्षपातं विधत्ते ? यदि नामाप्सरसः सदैव स्वर्गे निवसन्ति किं ता अत्र जन्म लेभिरे इतश्च स्वर्गं गताः ? आहोस्वित्तत्रैव समुत्पन्नाः ? अत्रैवोत्पद्य प्रलयवासरात्पूर्वमेव तत्र प्रयाताश्चेत् किमिति तद्भर्तॄनपि नाकारयामासुः ? प्रलयवासरे च सर्वेषां न्यायः सम्पत्स्यत इति नियमः कथं समुल्लङ्घितः ? अप्सरसस्तत्रैव समुत्पन्नाश्चेत् प्रलयवासरं यावत् कथं जीवनं व्यत्यापयिष्यन्ति ? तदर्थं तत्र मानवा अपि सन्ति यदि कुतः पुनरयमितः स्वर्गतेभ्यो भार्यां प्रदास्यति ? अप्सरस इव मानुषानपि किमर्थं नित्यस्थायिनो न निर्मितवान् ? एतेन यवनानां परमात्मनोऽन्यायकारित्वं मौर्ख्यं च प्रतीयते ।

(४९) असंशयं परमात्मना प्रदर्शितः सत्यधर्म इस्लाम एव ।

—सू० ३ । आ० १९

स०—अपि परमेश्वरो यवनानामेव नान्येषाम् ? अपि पूर्वं त्रयोदश-

शतसमाभ्यो नासीत् किमप्यैश्वरीयं मतम् ? एतेन साधु सुव्यक्तं भवति यदयं कुराणग्रन्थो नास्ति परमात्मनो निर्मितिरपि तु कस्यचित्पक्षपातैकदृशः कृतिरस्तीति ।

(५०) प्रत्येकस्मै प्राणिने तदुपार्जितमशेषं प्रदास्यते । नापि केनचित् सहान्यायः करिष्यते । ब्रूहि—अयि परमात्मन् ! त्वमेव सर्वेषामधिपतिः । यस्मै वाञ्छसि प्रयच्छसि स्वेच्छया च कस्यचिदपहरसि । यं कमपि स्वाभिलाषेण मानयसि अपरञ्च विमानयसि सर्वं खलु त्वदायत्तम्, सर्वेभ्यस्त्वमेव प्रभवसि । त्वमेव निशां वासरे, वासरं च निशायां विपरिणमयसि । त्वमेव सचेतनं मृतं मृतञ्च चेतनावन्तं सम्पादयसि । त्वमेवात्मनो रुच्या यस्मै कस्मैचिदनन्तवर्तनं (जीविकासाधनमन्नादिकं) विश्राणसि । यवनैर्नास्तिकैः सह सख्यं नाचरणीयं केवलं यवनैरेव सुहृत्तया वर्त्तितव्यम् । यश्चैवं विदधाति तेन परमात्मनः किमपि नाशंसनीयम् । पुनश्च ब्रूहि यदि यूयं परमेश्वरमभिवाञ्छथ तर्हि मामनुसरत । परमेश्वरो युष्मान् स्नेक्ष्यति पापानि च वः क्षमिष्यते यतः स करुणामयः ।—सू० ३ । आ० २५—२८, ३१

**स०**—यदि प्रत्येकस्मै तदुपार्जितक्रमेणाशेषकर्मफलं प्रदास्यते तर्हि तद्दुरितानि कथं क्षन्तुं शक्यन्ते । पापानि चेत् क्षम्यन्ते कथं तैस्तत्फलं लभ्यते ? कर्मणां क्षमाभावः फलप्राप्तिश्चेति विप्रतिषिद्धमेतत् । दुरितानां मर्षणञ्चान्यायसेवितः पन्थाः श्रेयःकर्मणामभावे राज्यप्रदानमप्यज्ञानविजृम्भितम् । कथं नाम सचेतना मृतकाः, मृतकाश्च प्राणभृतो भवितुमर्हन्ति ? नहि परमात्मनो व्यवस्थान्यथीयति । यवनधर्मविमुखानां नास्तिकत्वव्यपदेशोऽपि नैतेषां दुराग्रहमाविष्करोति ? अन्यधर्मावलम्बिषु साधुभिरपि सख्यं नापादनीयं यवनेषु पुनर्दुरात्मभिरपि साधुतयैव व्यवहर्त्तव्यमित्यनुशासनं परमेश्वरं तदधिकारतो भ्रंशयति । एतेनायं कुराणग्रन्थस्तदीयः परमेश्वरो यवनाश्च पक्षपातैकदृशोऽज्ञानविमोहितचेतसश्च संलक्ष्यन्ते । अन्यत्किञ्चिदवधीयताम्—मुहम्मदमहाशयः कीदृशः पटुमतिरासीत्—स हि संचष्टे "ये मामनुसरन्ति परमेश्वरोऽपि तान् स्निह्यति" क्षमते च तेषामागांसि । एतद्धि मुहम्मदमहाशयस्यान्तःकरणं नासीन्निर्मलमिति अवगमयति । स्वार्थसंसाधनाय केवलमयं कुराणग्रन्थस्तेन विरचितोऽन्येन वा निर्मापितः ।

(५१) तदा देवदूताः प्राहुः—अयि मरियम् ! त्वां परमेश्वरो वृतवान्, परिपूतवाँश्च सकलभूमण्डलप्रमदासु त्वामेव वृतवान् ।

—सू० ३ । आ० ४१

**स०**—यदा खल्विदानीं परमेश्वरस्तद्दूता वा मर्त्यैरालपितुमधस्तात् नावतरन्ति तदा प्राचीनसमये समायान्ति स्मेति कथं विश्वसिमः । प्रत्नमानवाः पुण्यात्मानोऽभवन् नेदानींतना इति चेदुच्येत—तन्न मन्यामहे—

प्रत्युत क्रिश्चीनयवनधर्माविर्भावसमय एव तत्तद्देशेषु विद्याविरहिताऽज्ञानिनश्च प्राचुर्येण न्यवसन्, अतएव तत्र एतादृशा विद्याविज्ञानशून्यधर्माः प्रचारं लेभिरे। साम्प्रतञ्च सर्वदेशानां विद्वद्भूयिष्ठत्वात्प्रसर्तुं न शक्नुवन्ति। प्राचीना अप्यन्तःसारशून्या धर्माः शनैः शनैरस्तं प्रतियन्ति का कथा पुनस्तेषां प्रसारस्य।

(५२) स तमुवाच 'भव' इति। स बभूव। नास्तिकाः परमेश्वरं वञ्चयामासुः, स च तान् वञ्चयामास। परमेश्वरो ह्यतितरां दाम्भिकः।

—सू० ३। आ० ४७—५४

स०—ननु परमेश्वरः कमुवाच ? नहि यवनैस्तदतिरिक्तं किञ्चिदन्यदभ्युपेयते। तद्वचनेन च कः समुत्पन्नः ? यवनैरस्योत्तरं सप्तजन्मस्वपि दातुं न शक्यते नह्युपादाननिमित्तं विना कर्हिचित्कार्यमुत्पद्यते। "कारणमन्तरेणैव कार्यमुत्पद्यते" इति वचनं "विनैव जनकाभ्यामहमुत्पन्नः" इति वचोऽनुकरोति। यः परैः प्रतार्यते स्वयञ्च दम्भमाचरति स कदापि परमेश्वरो न भवितुमर्हति। दूरमास्तां परमेश्वरत्वं स साधुजनोऽपि भवितुं न शक्नोति।

(५३) परमेश्वरः त्रिसहस्रदेवदूतैर्युष्मभ्यं साहाय्यं प्रयच्छेदिति किं न पर्याप्तम् ?—सू० ३। आ० १२०

स०—यः पुरा त्रिसहस्रदेवदूतैर्यवनानां साहाय्यमनुतिष्ठति स्म स इदानीं तेषामाधिपत्ये विनष्टे प्रत्यहं च क्षीयमाणे कथं न साहाय्यं प्रददाति ? तस्मादिदं मूर्खान् प्रलोभ्य स्वायत्तीकर्तुं प्रवञ्चनामात्रम् ?

(५४) नास्तिकानां विप्रतीपं नः साहाय्यं कुरु। परमेश्वर एव युष्माकमधिपतिः स एव सहायेषु प्रशस्यतमः। यदि यूयं परमात्मनो मार्गे विहता भवेयुः। परमात्मनो दया नितरां श्रेयसी।

—सू० ३। आ० १४७, १५०, १५७

स०—साम्प्रतं यवनानां भ्रमो निरीक्ष्यताम्—परमतावलम्बिनः संहर्तुं परमेश्वरं प्रार्थयन्ते। अपि परमेश्वरो (नितरां) सरलो येनैषां प्रार्थनामङ्गीकुर्यात् ? यदि नाम यवनानां परमात्मैव सहायः कथं तर्हि तेषां कार्याणि विनश्यन्ति। परमेश्वरोऽपि तन्मोहपाशबद्ध इव संलक्ष्यते। नहीदृशः पक्षपातयुतो धर्मात्मनां कर्हिचिदुपास्यः सम्भवितुमर्हति।

(५५) अपि च परमेश्वरो गुप्तार्थान्न वेदयति। किन्तु स्वदूतानां यं कमपि वृणुते। अतस्तस्मिंस्तद्दूतेषु च विश्वासमापादयत।

—सू० ३ आ० १७९

स०—यवनाः खलु परमेश्वरव्यतिरिक्तं नान्यं कमपि विश्वसन्ति। नापि परमात्मनः कमप्यर्चनांशहरं मन्यन्ते कथं तर्ह्यत्र पैगम्बरमहाभागेऽपि परमात्मनीव विश्वासः कार्य इत्युपदिष्टम् ? अत एव पैगम्बरोऽ—

(परमात्मना समम्)—प्यर्चनांशग्राही सम्पन्न एवञ्च परमात्मनोऽद्वितीयत्वं नावशिष्यते। अनेन केवलं मुहम्मदमहाभागस्य पैगम्बरत्वं प्रतिपाद्यत इति चेदुच्येत तर्हि का आवश्यकता मुहम्मदमहाभागस्येति प्रश्नः समुदेति। यदि तमात्मनो दूतसंविधानमन्तरेण परमेश्वरः स्वकार्याण्यनुष्ठातुं न क्षमते तत् तस्याक्षमत्वं सुतरां साधितं भवति।

(५६) अयि श्रद्धालवः! (ईमानवालो) धारयन्तु धैर्य्यम्, सकलं वस्तुजातं तदुचितस्थानेषु संदधताम्, संग्रामे च निरता भवन्तु। बिभ्यतु परमात्मनो येन भवन्तो मोक्षं लभेरन्।—सू० ३ आ० २००

स०—अयं कुराणवर्णितः परमेश्वरस्तद्दूतश्चोभावपि कलहप्रियावास्ताम्। यः खलु योद्धुमादिशति स शान्तिभङ्गकरः सञ्जायते। ननु नाममात्रेण परमात्मनो भयेन मोक्षो लभ्यते उताधर्म्यंकलहादिभयेन? आद्यश्चेद्भयाभययोर्न कोऽपि विशेषः। द्वितीयश्चेदोमिति ब्रूमः।

(५७) इमाः खलु परमात्मनो राज्यपर्यन्तभूमयः। यः परमात्मतद्दूतयोरादेशं वक्ष्यति स स्वर्गमवाप्स्यति। यत्र कुल्याः प्रवहन्ति अयमेव च मानवजनुषो महान् लाभः। यश्च तयोराज्ञामुल्लङ्घयिष्यति स तदीयप्रान्तभुवो बहिर्यास्यति। स सततस्थायिनि हविर्भुजि धक्ष्यते शाश्वती पीडा च तद्दुःखं वर्धयिष्यति।—सू० ४। आ० १३, १४

स०—परमात्मैव मुहम्मदमहाभागं स्वांशभागिनमकरोत्। एतद्धि तेन स्वयमेव कुराणग्रन्थे समुपन्यस्तम्। परमेश्वरश्च मुहम्मदमहाभागे सुदृढमनुरक्तो येन स्वर्गेऽपि तं स्वभागहारिणमकल्पयत्। यवनानां परमेश्वरः कस्मिंश्चिदल्पीयस्यपि वस्तुनि नास्ति स्वायत्तस्ततस्तस्य स्वात्मनिर्भरत्वकथनं नितरामनर्थकम्। नहीदृशाः संव्यवहाराः परमेश्वरपुस्तके भवितुमर्हन्ति।

(५८) परमेश्वरस्त्रसरेणुपरिमितमप्यन्यायं नाचरति सत्कर्मणाञ्च द्विगुणं फलं प्रयच्छति।—सू० ४। आ० ४०

स०—यदा खलु त्रसरेणुपरिमितमप्यन्यायं नानुतिष्ठति किमिति द्विगुणं पुण्यफलं विश्राणयति? कथं च यवनपक्षपातं विधत्ते? कर्मणामननुरूपफलप्रदानेन परमेश्वरोऽन्यायाचारी सम्पद्येत।

(५९) यदा च त्वदन्तिकाद्बहिर्निर्यान्ति तदा तेषां मध्ये केचन नक्तं तव वचनप्रतिकूलं सम्मन्त्रयन्ते। परमेश्वरश्च तन्मन्त्रणां विलिखति। यद्यपि परमेश्वरस्तान् (नास्तिकान्) तत्कर्मदोषेण विमोहितवान्। अपि यूयं वाञ्छथ यत् परमात्मना विमोहितान् सद्वर्त्मना नयेम इति? परं तद्विमोहितमानवाः सद्वर्त्म लब्धुं कदाचिदपि न शक्ष्यन्ति।—सू० ४। आ० ८१, ८८

स०—यवनानां परमेश्वरो यदैवं विलिखन्गणनापुस्तकं निर्माति तदा

तस्य कुतः सर्वज्ञत्वमवशिष्यते न हि सर्वज्ञस्य किञ्चिल्लेखप्रयोजनम्। यच्च यवनाः संचक्षते "दियावल एव सर्वेषां मोहापादनेन दुर्वृत्तः" इति। परं यदा परमेश्वर एव प्राणिनो विमोहयति कस्तर्हि परमात्मदियावलयोर्विशेषः ? इयान् भेदो वक्तुं शक्यते यत् परमेश्वरस्तयोर्महत्तरो दियावलः। यवनानामेव खल्वेष समयः "यो हि मानवान् प्रविलोभयेत् स एव दियावलः" इति। इत्थं च तैः परमेश्वरोऽपि दियावलः सम्पादितः।

(६०) यदि ते स्वहस्तान् न नियच्छेयुः, धरत तान्। यत्र क्वापि त उपलभ्येरन् तत्रैव व्यापादयत। न केनापि यवनेन यवनो निहन्तव्यः। परं यदि कश्चन भ्रमेण यवनं व्यापादयेत् तदैकं यवनदासं विप्रमुञ्चेत् तद्रक्तमूल्यञ्च निहतबन्धुभ्यः समर्पयेत् परं यदि तद्बान्धवाः क्षमेरन्। अथ यदि निहतो जनो युष्मत्प्रत्यर्थिभूतो भवेत् तदा केवलमेको यवनदासो दासत्वेन विप्रमोक्तव्यः (तदीयरुधिरमूल्यं न दातव्यम्) यदि कश्चिद् यवनं विज्ञानपूर्वकं हन्यात् तदा निरय एव तन्निष्कृतिः तस्मिंश्च परमेश्वरः कोपाकुलः सन्तिष्ठते।—सू० ४। आ० ९१—९३

स०—अयं महापक्षपातो निरीक्ष्यताम्। अयवना यत्र कुत्रापि निहन्तव्याः, अज्ञानेनापि यवनवधे प्रायश्चित्तमाचरणीयम्, अयवनघातेन च स्वर्गो लभ्यत इति कुराणग्रन्थोपदेशो दूरतः परिहरणीयः। ईदृशो ग्रन्थाः, एतादृशो देवदूताः, एवंविधानि च मतानि ज्यानिमन्तरेण नान्यत्किमपि विदधति। एतादृशानामभाव एव वरीयान्। विचक्षणैरीदृक्प्रमादबहुलधर्मान् परित्यज्य वेदविहितान्येव कर्माण्यनुष्ठेयानि यत्र लेशतोऽपि नास्ति किञ्चिदसत्यम्। अपि च एत आचक्षते—यवनघातको निरयं गच्छति, अन्ये पुनर्भाषन्ते यवनवधेन स्वर्गमुपेयादिति, भवानेवात्र पृच्छ्यते कमनयोः सत्यत्वेन विश्वसिमः ? अस्मन्मते तु तादृशमूढधियां कल्पनाजालप्रसूतधर्मपरिहारेण सर्वैर्वैदिकः पन्था अनुसरणीयः। यत्र हि आर्य्यैः साधुभिः क्षुण्णवर्त्मना गमनं, दस्युसेवितमार्गपरिहारश्च वर्णितः।

(६१) अपि च यः सद्वर्त्माविर्भावसमनन्तरमपि रसूलं प्रतीपायते, अनुसरति च विश्वासवत्सरणिव्यतिरिक्तमन्यं कमपि पन्थानम्, वयमसंशयं तं निरयगामिनं विधास्यामः।—सू० ४। आ० ११५

स०—निरीक्ष्यतामिदानीं परमेश्वरस्तद्दूतयोः पक्षपातः। मुहम्मदप्रभृतयो विदन्तिस्म ननु यदि नाम वयं परमात्मनो व्यपदेशेन नैवं लेखिष्यामो न तर्ह्यस्माकं धर्मः प्रचारं लप्स्यते नापि वयं पदार्थान् लप्स्यामहे कथं पुनर्विषयानुपभोक्ष्यामह इति। इदं हि तेषां स्वार्थसाधने, परार्थविघटने च वैचक्षण्यं द्योतयति। अत एव ते नासन् खलु आप्ताः। नह्येषां वचः कृतधियैर्जातु मन्तुं शक्यते।

(६२) यः कश्चन परमेश्वरे, तद्दूतेषु, तद्ग्रन्थेषु प्रलयवासरे वा न विश्वसिति, असंशयं स पथप्रच्युतः। किञ्च ये पूर्वं विश्वस्तास्तदनु नास्तिका अभवन् ततो विश्वासमापन्ना भूयश्च नास्तिका अभवन् परमेश्वरस्तान् न कर्हिचित्क्षँस्यते नापि मार्गं दर्शयिष्यति।—सू० ४। आ० १३६, १३७

स०—अपि परमेश्वरोऽधुनाप्यद्वितीयो भवितुमर्हति ? तस्याद्वितीयत्व-प्रतिपादनं भूयसां पैगम्बरप्रमुखानां तदंशभागित्वकथनञ्च किं मिथो न विरुध्यते ? किं परमेश्वरः त्रिः क्षमां विधाय पुनः कञ्चन न क्षमते ? अपि परमेश्वरस्तान्—ये तं तद्दूतान् वा वारत्रयाधिकं नाङ्गीकुर्वन्ति मार्गं न दर्शयति ? यदि सर्वे चतुःकृत्वोऽपि (कुफ्रं) कुर्युः तर्हि कुफ्रस्य बाहुल्यं स्यात्।

(६३) निःसंशयं परमेश्वरो दुर्वृत्तान् नास्तिकाँश्च निरये समाहरिष्यति। अपुण्यकृतः परमेश्वरं परमेश्वरश्च तान् प्रतारयति। अयि श्रद्धालवो जनाः ! यवनान् परित्यज्य नास्तिकान् मित्राणि माकार्ष्ट।

—सू० ४। आ० १४०, १४२, १४४

स०—यवनाः स्वर्गमपरे च निरयं प्रतियन्तीति कथमवगम्यते ? यः खल्वपरैः प्रतार्यंते यश्चापरान् प्रतारयति तादृशः परमेश्वरोऽस्मत् पृथगव-तिष्ठताम्। स वञ्चकैरेव सख्यमाचरतु। कितवाश्च तेन सह मैत्रीमापाद-यन्तु। यतो हि—"यादृशी शीतलादेवी तादृशः खरवाहनः"। येषां परमात्मैव परप्रतारकः कथं नाम तेऽन्यान् न प्रतारयन्तु ? दुर्वृत्तेनाऽपि यवनधर्माव-लम्बिना सख्यं तद्व्यतिरिक्तेण साधुनाऽपि शात्रवं किं कस्यचित् प्रशस्यता-मर्हति ?

(६४) अयि मानवाः ! युष्माकमन्तिकं परमात्मनः सकाशात् सत्येन सह देवदूतः (पैगम्बरः) प्रायात् विश्वसित तम्। परमेश्वरः सर्वेषां समर्थो-ऽद्वितीयः प्रभुः।—सू० ४। आ० १७०, १७१

स०—यदा ह्यत्र पैगम्बरेषु विश्वासापादनं समुपवर्णितं तर्हि देवदूता अपि परमेश्वरोपासनांशभागिनः समभवन्न वा ?। परमेश्वरस्यैकदेशित्वेनैव तद्दूतास्ततो गतागतं कुर्वते परिच्छिन्नस्य चेश्वरत्वं कथङ्कारं सम्भवेत् ?। एकस्मिन्नेव कुराणग्रन्थे परमात्मनः क्वचिदेकदेशित्वं क्वचिच्च व्यापकत्वं प्रतिपाद्यते, अतः पूर्वापरविरुद्धत्वान्नायं कुराणग्रन्थः कस्यचिदेकस्यापितु भूयसां कृतिरित्यनुमीयते।

(६५) स्वयंमृतम्, रुधिरम्, वराहपिशितम्, परमेश्वरव्यतिरिक्ता-न्यस्मा उपकल्पितम्, कण्ठं निपीड्य व्यापादितम्, अभिघातेन कुतश्चित् पातेन वा गतासुं, पश्वन्तराणां शृङ्गाहतम्, यच्चान्यवन्यपशुभिर्भोज्यतां नीतं युष्मभ्यं तत्सर्वं प्रत्यादिश्यते।—सू० ५। आ० ३

स०—अपि केवलमियन्त एव प्राणिनः प्रतिषिद्धाः ? अन्ये भूयांसः

पशवः तिर्यञ्चः पतङ्गादिक्षुद्रजन्तवश्च यवनाशनेऽभ्यनुज्ञायन्ते ? एतेनायं कुराणग्रन्थः केनचिन्मर्त्येनैव निर्मितो ननु परमेश्वरेणेति साधु सिद्धयति ततश्च नायं प्रामाण्यमर्हति।

(६६) परमात्मने समीचीनमृणं प्रयच्छत। निःसंशयमहं युष्मान् दुरितेभ्यो विप्रमोक्ष्ये। स्वर्गं च वः प्रहेष्यामि।—सू० ५। आ० १२

स०—अहो यवनानां परमात्मनः सद्मनि मनागपि धनं नावशिष्टमिति प्रतीयते कथमन्यथा स ऋणं याचेत ? कथं च युष्मत्पापानि विधूय वः स्वर्गं प्रहेष्यामीति तान् विमोहयेत् ? वस्तुतस्तु परमात्मनो व्यपदेशेन मुहम्मद-महाशयः स्वार्थं साधयामास।

(६७) स्वेच्छया यं कमपि क्षमते निपीडयति वा। यत् पूर्वं कस्मा अपि न विश्राणितं तद् युष्मभ्यं विश्राणितम्।—सू० ५। आ० १८, २०

स०—यवनानां परमेश्वरोऽपि स्वकामतो दियावलवत् कमपि पापाचारमन्यं च पुण्यवन्तं सम्पादयति एवञ्च स एव स्वर्गं निरयं वा गच्छतु यतोह्येवं स एव पुण्यपापयोः कर्त्ता सम्पद्यते। जीवो वै पुनः परायत्तः। यथा हि सेनाध्यक्षनिदेशेन सैन्यं कमपि प्राणैर्वियोजयति कमपि चानुपालयति सैन्ये नोत्तरदायित्वं सञ्जायते। तथैवात्रापि परमात्मनिदेशेन पुण्यपापे समाचरन्नपि पूरुषस्तत्फलेन नोपयुज्येत।

(६८) परमात्मनस्तद्दूतस्य चादेशमनुपालयत।—सू० ५। आ० ९२

स०—एतद्धि परमात्मनोऽद्वितीयत्वं व्यासेधति, पुनः कथं सोऽद्वितीयोऽभ्युपगम्यते।

(६९) अतिक्रान्तं परमेश्वरोऽक्षमिष्ट। यः पुनर्भूयः समाचरिष्यति ततः स वैरं निर्यातयिष्यति।—सू० ५। आ० ९५

स०—अनुष्ठितपापानां क्षमाप्रदानं तदनुष्ठानसमनुज्ञाप्रदानेनैनसां प्रवर्धनम्। यद्धि पुस्तकं पापक्षमाप्रदानं वर्णयेन्न तत् परमेश्वरस्य विदुषो वा कस्यचित् निर्मितिर्भवितुमर्हति यतः केवलं तत् पापानि प्रवर्धयति भविष्यदघप्रतिबन्धाय पुनः परमात्मनः प्रार्थनं, पूर्वानुष्ठितेषु परितापश्च युज्यतेतराम्। परित्यागमन्तरेण पश्चात्तापमात्रेण न कोऽपि लाभः ?

(७०) ननु कस्ततोऽधिकः पापीयान् यः परमेश्वरं मुधैव दूषयन्नभिधत्ते यन्मय्यपि परमात्मनः श्रुतिप्रकाशः समभवदिति परं न तत्र किञ्चिदप्यवातरत्। यथा च परमेश्वरो निजसन्देशान् प्रहिणोति तथैवाहमपि सन्देशानाहरामीति।—सू० ६। आ० ९४

स०—यदा मुहम्मदमहाभागो "मयि परमात्मनः सन्देशवाचो-(आयतें)-ऽवतरन्तीति व्यपदिशति स्म तदान्योऽपि कश्चिद् धूर्तस्तथैव लीलां व्यतनुत "मय्यपि ऐशसन्देशाः प्रादुर्भवन्ति मामपीश्वरप्रेरितं (पैगम्बरम्)

मन्यध्वमिति"। तदा स्वप्रत्यर्थिनं पराजेतुमात्मयशः प्रथयितुञ्च मुहम्मद-महाशयेन एष उपाय आश्रितो भवेत्।

(७१) युष्मानहमुदपादयं ततो व आकृतीरकल्पयम्, तदनु यूय-मादमं साष्टाङ्गपातं नमस्कुरुत इत्यादिशम्। मद्वचनेन सर्वे प्रणेमुः परं दियावलो न प्रणतवान्। परमेश्वरस्तमुवाच "कस्त्वामवारयद् येन मया-दिष्टोऽपि त्वं तं न प्राणंसीः"। स आह "वरीयानहं तदपेक्षया यतस्त्वं मां जातवेदसस्तञ्च रजसः समुदपादयत्"। परमेश्वर उवाच "निर्याह्यतः प्रदेशान्नैष तवाहङ्कारोऽत्र युज्यते।" स आह—"यावन्मानवाः शवागारेभ्य उत्थाप्येरंस्तावत् मह्यमवकाशं प्रयच्छ।" परमेश्वरः प्रत्यवादीत् "त्वम-संशयमभ्यनुज्ञातोऽसि"। स प्रत्यभाषत "सशपथमहं ब्रवीमि त्वं माममोह-यदतोऽहं निःसंशयं तदर्थं तवाजिह्मवर्त्मनि स्थास्यामि त्वं च तेषां बहून् धन्यवादकर्तॄन् न लप्स्यसे"। परमेश्वर उवाच—गच्छ त्वमितः प्रदेशात् ये केऽपि तेषां त्वामनुयास्यन्ति तैः सर्वैः निरयं प्रपूरयिष्यामि।

—सि० ७। आ० ११—१८

**स०**—अयि पाठकाः! साम्प्रतं परमेश्वरदियावलयोर्विवादं समाहितेन चेतसा शृण्वन्तु—

अयं दियावल आसीत् खलु दाससन्निभो देवदूतः। सोऽपि परमेश्वरा-न्नाभैषीत् नापि परमेश्वरस्तदात्मानं शशाक परिपावयितुम्। अतोऽप्य-धिकतरः परमात्मनोऽयं प्रमादः—यदयं तादृशं परप्रतारकं दियावलं मुक्तवान् दियावलस्तु सर्वेषां प्रविलोभको वर्तत एव परं परमेश्वरस्तस्यापि प्रतार-कस्तेन परमेश्वरः "शैतानः" इति सुव्यक्तं भवति। दियावलो हि "त्वं मां नष्टपथमकार्षीदिति" प्रत्यक्षमाचष्टे। एतेन परमात्मनि पवित्रतापि न प्रतीयते। सकलदुरितप्रवर्तकत्वञ्च तत्र व्यवतिष्ठते। एवंविधपरमेश्वरो यवनानामेव भवितुमर्हति न त्वन्येषां साधुजनानाम्। किञ्च यवनानां परमेश्वरो देवदूतैर्मनुष्यवत् संलापेन शरीरी, अल्पज्ञो, न्यायशून्यश्च सम्पद्यते अतएव कृतधियो यवनधर्मं नानुमोदन्ते।

(७२) असंशयं परमेश्वरो युष्माकमधिपतिर्यो हि द्यावापृथिव्यौ षड्वासरेषु व्यरचयत् ततः स्वर्सिहासनं भेजे (सप्तमं त्रिदिवम्)। परमात्मा-नञ्च विनयेनाकारयत।—सू० ७। आ० ५४, ५५

**स०**—ननु यः षडहःसु जगन्निर्माय स्वर्गे सिंहासनमधिरूढो विश्रामं कुरुते अपि स सर्वशक्तिमान् व्यापकश्च भवितुमर्हति? सर्वशक्तिमत्त्व-व्यापकत्वयोरभावाच्च स परमेश्वरत्वेनैव हीयते। अपि बधिरो युष्माकं परमेश्वरो येनाह्वानेनाकर्णयति? सर्वमिदमनीश्वरस्य व्यवहारः। तथा च नायं कुराणग्रन्थः परमेश्वरनिर्मितो भवितुमर्हति। अथ यदि षड्वासरेषु

जगद्विरच्य सप्तमेऽह्नि विश्राममतनुत तन्नूनं श्रान्तोऽभवत्। साम्प्रतं स्वपिति जागर्ति वा ? जागर्ति चेदिदानीं किमप्यनुतिष्ठति ? निश्चेष्टो वा वृथैवेतस्ततो विहरन् परिभ्रमति ?

(७३) कलहायमाना भुवि मा परिभ्रमत ।—सू० ७ । आ० ७४

स०—अयं समुपदेशः समीचीनः। परमत्रैव (कुराणग्रन्थे) यवनैर्नास्तिकैः सह योद्धव्यं हन्तव्याश्च त इत्यपि विलिखितं तत्र भवद्भिरेवोच्यतामत्र पूर्वापरविरुद्धत्वदोषः समस्ति न वेति ? एतेन "यदा मोहम्मदमहाशयः क्षीणबलोऽभवत्तदा गत्यन्तराभावादेष उपाय आश्रितस्तेन, सञ्जातबलश्च कलहं प्रवर्तयामास" इति प्रतीयते। तस्मात्पूर्वापरविरुद्धत्वेनोपदेशद्वयमपि वास्तवं न भवितुमर्हति।

(७४) ततः स स्वयष्टिं प्राक्षिपत् स च व्यक्तमजगरः समजायत।
—सू० ७ । आ० १०७

स०—एतद्धि "परमेश्वरमोहम्मदावपीदृशालीकवार्तां विश्वसितः स्म" इति प्रमाणयति। एवञ्चोभावपि तौ नास्तां कृतधियौ। केनापि प्राकृता नियमा विपर्यासयितुं न शक्यन्ते नहि चक्षुषा निभालनं श्रवसा च श्रवणं कोऽप्यन्यथयितुं शक्नोति। अतएवैन्द्रजालिकमेतत्।

(७५) अहं तेषामुपरि जलोपप्लवं, शिरिव्रजं, यूकावृन्दं, दर्दुरान्, रुधिरञ्च प्राहिणवम्। अतश्च तान् प्रतिहिंसया सरिति न्यमज्जयम्। इस्रायेलतनयाँश्चाम्बुधेः पारमुदतारयम्। असंशयं तदङ्गीकृतं मतमलीकं तेषां कार्यमपि मिथ्यैव।—सू० ७ । आ० १३३, १३६, १३८, १३९

स०—यथा कश्चिद्दाम्भिकः कमपि भीषयेत्—"अहं त्वां दंशयितुमाशीविषान् प्रहेष्यामीति" तथैवेदमपि सुतरां वर्तते। यः खलु काँश्चिदम्बुधौ निमज्जयेदपराँश्च ततः पारं गमयेत् स कथङ्कारं न भवेत् पापिनां प्रवरः ? यः परमतं—यद्वचनेके जना विश्वसन्ति—असत्यमाचष्टे, आत्मनश्च श्रेयस्त्वं प्रतिपादयति को नु धर्मस्ततोऽधिकमसत्यो भवितुमर्हति ? नहि कस्मिन्नपि धर्मे सर्व एव मानवा दुर्वृत्ताः साधवो वा भवन्ति। अयं पक्षपातव्यवहारो मूढधियां विचेष्टितम्। प्राचीनसंहिता-(तौरेत)-प्रतिपादितो धर्मो व्यलीकतां गत उतान्यः कोऽपि धर्मो यस्यात्र मृषात्वं प्रतिपाद्यते ? अन्यश्चेत्तर्हि कः स आसीत् यस्य नामधेयं कुराणग्रन्थे भवेत्।

(७६) त्वं मां कथमपि द्रष्टुं न शक्ष्यसि। किन्तु यदा परमेश्वरः स्वात्मानं पर्वते प्रादुरभावयत् तदा स गिरिस्तिलशो विशीर्णतां गतः। मूषश्च निःसंज्ञोऽपतत्।—सू० ७ । आ० १४३

स०—चक्षुर्विषयभूतस्य न कर्हिचिद् व्यापकत्वं सम्भवति। यः पुरे-

दृशाश्चर्य्याण्यन्वतिष्ठत् स किमिति साम्प्रतं न तानि दर्शयति ? अतः सर्वथा सृष्टिक्रमविरुद्धत्वादिदं प्रमाणपदवीं नारोहति ।

(७७) सायं प्रातः स्वप्रभुं विनयेन भिया च चेतसि मन्द्रस्वरेण संचिन्तय ।—सू० ७ । आ० २०४

स०—एकस्मिन् कुराणग्रन्थे क्वचित्तारस्वरेण परमात्मन आह्वानं क्वचिच्चोपांशु तद्भावनं विन्यस्यते प्रतिब्रूहि तत्र कतरत् सत्यं मन्महे ? मिथो विरुद्धं हि वचः प्रमत्तगीतमनुकरोति । भ्रमेण क्वचिद्विरुद्धत्वं संजायेत चेत्तस्याभ्युपगमे न किंचित्परिहीयते ।

(७८) ते त्वामपहारविषयेऽनुयोक्ष्यन्ते । कथय—लोप्त्राणि परमात्मनो दूतस्य च वर्तन्त अतो बिभीत परमात्मन इति ।—सू० ८ । आ० १

स०—एते परधनान्यपहरन्तो दस्यूनां वृत्तमनुतिष्ठन्तः पराँश्च तथा कर्तुमुपदिशन्तोऽप्यात्मनः परमेश्वरत्वं देवदूतत्वं विश्वासत्वञ्चोद्घोषयन्ति किमतः परमाश्चर्यम् ? परमात्मनो भयं दर्शयन्तः परान् विलुण्ठन्ति "तथाप्यस्माकमेव मतं श्रेयः" इति भाषमाणा मनागपि न लज्जन्ते । दुराग्रहं विहाय सत्यं वैदिकं मतं नाभ्युपयन्ति किमतोऽधिकं भवेदनौचित्यम् ?

(७९) नास्तिकान् समूलमुन्मूलयत । अहञ्च युष्माननुगच्छद्भिः सहस्रदेवदूतैः सह साहाय्यं करिष्ये । असंशयमहं नास्तिकानां चेतसि भीतिमुत्पादयिष्यामि अतस्तेषां ग्रीवासु प्रतिसन्धि च प्रहरत ?

—सू० ८ । आ० ७, ९, १२

स०—यवनधर्ममनभ्युपगच्छतां मूलानि छेत्तुमादिशँस्तेषां परमेश्वरः पैगम्बरश्च अहो क्रियान्निष्ठुरः ? अपीदृशः परमेश्वरो यः खलु नास्तिकानां शिरश्छेत्तुमङ्गानि च तेषां कर्त्तयितुं यवनानादिशेत् साहाय्यञ्च तत्कर्मणि प्रयच्छेत्—कथमपि दशग्रीवतो वरीयान् भवितुमर्हति ? वस्तुतः सर्वोऽप्ययं प्रपञ्चः कुराणग्रन्थप्रणेतुरेव नतु परमात्मनः । अथ चेत् परमेश्वरस्यैवैतन्न्यायविलसितं तर्हि तादृशः परमेश्वरोऽस्मद् वयञ्च ततः पृथगवतिष्ठेमहि ।

(८०) परमेश्वरो यवनैः सह वर्तते । अयि श्रद्धालवः । परमात्मरसूलयोर्निदेशमनुपालयत । अयि श्रद्धधानाः ! परमात्मनस्तत्प्रेरितस्य च चौर्य्यं मा कुरुत । नाप्यात्मनः प्रतिज्ञाभङ्गमाचरत । परमेश्वरः कपटप्रबन्धमन्वतिष्ठत् स च दाम्भिकानामग्रेसरः ।—सू० ९ । आ० १९, २४, २७, ३०

स०—अपि परमेश्वरो यवनानां पक्षपातं विधत्ते ? एवञ्चेन्नूनमन्यायमाचरति स हि कृत्स्नस्य जगतः प्रभुः, किं परमेश्वरः आह्वानमन्तरेण न शृणोति ? वधिरः किमु ? अपि च रसूलस्य तदंशहारित्वकल्पनं नास्ति जघन्यं कर्म ? क्वास्ति परमात्मनः कोषो येन स तदपहारशङ्कयाऽतितरां बिभेति ? अपि परमेश्वररसूलौ विहायान्येषां धनापहरणं श्रेयः ? एवं हि

केवलं पापीयांसो दुर्वृत्ता वोपदेष्टुमर्हन्ति। ननु यः स्वयं कपटमाचरति दाम्भिकाँश्च जुषते स कथं मायिकः पापीयाँश्च न भवेत्? तस्मान्नायं कुराणग्रन्थः परमेश्वरप्रणीतोऽपितु केनचिद्दाम्भिकेन निर्मितो भवेत्, कथमन्यथेदृशायुक्तव्यवहारास्तत्र समुपलभ्यन्ते।

(८१) अतस्तै-(नास्तिकैः)-स्तावद्योद्धव्यं यावत्तेषां बलं विनाशं नेयात्, यावच्च परमात्मनः पवित्रधर्मः सर्वत्र लब्धप्रसरो न भवेत्। इदं चापि वेद्यम्—यूयं यत्किञ्चदपि लोप्त्रमासादयथ तस्य पञ्चमांशः परमेश्वररसूलयोर्वर्त्तत इति।—सू० ८। आ०—३९, ४१

स०—कोऽपरो यवनानां परमेश्वरादित्थमन्यायेन युध्येत, परान् योद्धुमुपदिशेत् शान्तिं च विनाशयेत्। साम्प्रतं मतमिदं पर्यालोचनीयं यत् परमात्मनो रसूलस्य च कृते निखिलं जगल्लुण्ठयितुं शिक्षयति। अप्येतन्नास्ति दस्यूनां कर्म? लोप्त्रधनांशहरत्वेन परमेश्वरो लुण्ठकः समजनीति मन्ये। ईदृशदस्युभ्यः साहाय्यप्रदानेन चात्मनः परमेश्वरत्वं कलङ्कयति। आश्चर्याविष्टानि नश्चेतांसि यदेवंविधं पुस्तकं, ईदृशः परमेश्वर एतादृशश्च पैगम्बरः शान्तिभङ्गेन जनसमाजं निपीडयितुं कुतः समायात्? यदि नाम इदृशमतानि जगति न प्रासरिष्यँस्तर्हि कृत्स्नं जगत् शान्तिमयं जीवनं व्यत्यापयिष्यत्।

(८२) अपि च अयि ईश्वरप्रेरित! त्वं देवदूतैर्व्यापाद्यमानान् नास्तिकान् द्रक्ष्यसि यदा ते तेषामाननपृष्ठदेशेषु प्रहरन्ति ब्रुवन्ति च "अनुभवत निरययातनामिति"। ते ह्यस्माभिस्तद्दुरितैर्विनाशिताः फेराहजननिवहश्च सागरे मज्जितो यूयं तद्विनाशाय यथाशक्यं संविधानमाचरत।—सू० ८। आ० ५०, ५४, ६०

स०—ननु साम्प्रतं कुत्र स्वपन्ति युष्माकं देवदूताः ये हि रशियाह्वेन रोमजनपदं हरिवर्षेण च मिश्रदेशमवमर्दितं पश्यन्तोऽपि न किञ्चिद् ब्रुवते। यदि नाम परमेश्वरः पूर्वं स्वाश्रितप्रत्यर्थिनो निमज्जयन् व्यापादयंश्चासीत्तर्हि कथं नेदानीं तथानुतिष्ठति? न हि साम्प्रतं तथा समीक्ष्यते तस्मात्पुरापि न किमपि व्यधादिति सुतरां सिद्ध्यति। अहो कीदृशोऽयं निन्द्य आदेशो यत् परमतावलम्बिनो व्यथयितुं यथाशक्यं सर्वमाचरत इति" नहीदृशं शासनं कस्यचित् दयालोर्विदुषोऽपि सम्भवति परमेश्वरस्येति तु किमु वक्तव्यम्? तथापि यवनैरात्मनः परमेश्वरस्य दयालुत्वं न्यायकारित्वयोर्डिण्डिमो घोष्यते। वस्तुतो न्यायदयादिसद्गुणास्तेषां परमात्मनः पृथग् वसन्ति।

(८३) हे नब्रे! परमेश्वरस्तव त्वदनुयायिनाञ्चावलम्बः। अयि सिद्ध! यवनान् योद्धुमुत्साहय युष्मासु मानवानां विंशतिरपि युद्धदुर्मदा प्रत्यर्थिनां शतद्वयं पराजेष्यते, अतो लुण्ठितधनेनाभ्यवहारमाचरत तद्धि

न्यायोपार्जितम्। अपि च बिभीत परमात्मनो यतः खलु स आगसां मर्षको दयालुश्च वर्त्तते।—सि० ८। आ० ६४, ६५, ६९

स०—ननु उत्पथप्रवृत्तानामपि स्वोपासकानां साहाय्यं करणीयमिति कीदृशोऽयं न्यायः, वैचक्षण्यं, धर्मश्च ? यश्चापि प्रजासु शान्तिभङ्गेन कलिं प्रवर्त्तयेत्, लोप्त्रधनानां च न्यायोपार्जिततां प्रतिपादयेत् पुनस्तस्यैव क्षमाशीलत्वादिकप्रतिपादनमहो महानयमनर्थः। ईदृशाः संव्यवहाराः किमु परमात्मनः साधुजनस्यापि कस्यचिन्न भवन्ति। ईदृशैरेव लेखादिभिः कुराणग्रन्थस्य परमेश्वरप्रणीतत्वं न कर्हिचिन्मन्तुं शक्यते।

(८४) ते तत्र सततं स्थास्यन्ति यतस्तत्र परमेश्वरस्य महत्पारितोषिकं वर्त्तते। अयि श्रद्धालवो जनाः ? ये धर्मादपि नास्तिकत्वं प्रियं मन्यन्ते तादृशान् पितॄन् भ्रातॄनपि मित्राणि माकार्षुः। अनन्तरं परमेश्वरेणात्मनोऽभयवाचो रसूले यवनेषु चावतारिताः। स देवदूतानां सैन्यं प्राहिणोत् यत् युष्माभिर्न विलोकितम्। ततो नास्तिकानतितरां जघान इदमेव हि तेषां पारितोषिकं भूयोऽपि परमेश्वरः स्वेच्छया यं कमपि वरिष्यति तदभिमुखं परावर्त्स्यति। ये च परमेश्वरं न विश्वसन्ति तैः समं योद्धव्यम्।

—सू० ९। आ० २२ २३, २६, २७, २९

स०—ननु स्वर्गवासिनामन्तिके वसतः परमात्मनो व्यापकत्वं कथङ्कारं सम्भवेत् ? असर्वगतस्य च परमात्मनः सृष्टेर्निर्मातृत्वं न्यायाधीशत्वं च न सम्भवति। जनकजननीभ्रातृसुहृदो रहयितुमुपदेशो नितरामन्यायः। आम् यदि ते किमप्यसदाचरितुमादिशेयुस्तन्नूनं तेषां शासनं न परिपालनीयं परं तथापि नित्यं तेषु शुश्रूषयैव वर्तितव्यम्। अथ यदि परमेश्वरः पूर्वं यवनेषु सदयोऽभवत्, तत्साहाय्याय च देवदूतानां वरूथिनीं प्रहिणोति स्म तत् कथमिदानीं तथा नाचरति ? किञ्च पुराकाले नास्तिकान् दण्डयन्नासीत्, स्वयञ्च परावर्त्तते स्म कथं साम्प्रतमपि तदेव नानुतिष्ठति ? अपि परमेश्वरः स्वोपासकेषु युद्धमन्तरेणात्मविश्वासं जनयितुं न शक्नोति ? ईदृशं परमेश्वरं वयं दूरतो नमस्कुर्मः। नायमीश्वरोऽपितु कश्चन कौतुकी।

(८५) परमेश्वरो युष्मभ्यं कमपि निग्रहं (दण्डप्रणयनम्) स्वतोऽस्मद्धस्तेन वा प्रेषयेदिति वयं प्रतीक्षामहे।—सू० ९। आ० ५२

स०—अपि यवना एव परमात्मनो नगररक्षिणः (पुलिस) समभवन् येन स परमतावलम्बिनो निजहस्तेन यवनकरेण वा संगृह्णाति,। असंख्येयान्ये जना अपि परमात्मनोऽप्रिया यवनाश्च पापिनोऽपि सम्मताः ? एवञ्चेन्नूनं यवनानां परमेश्वरोऽतीव प्रजापीडकः संलक्ष्यते। मूढधियो मतमिदं स्वीकुर्वन्तु नाम परं यवनेषु प्रज्ञावन्तोऽपि निर्मूलमतमाद्रियन्त इति महदाश्चर्यम्।

(८६) परमेश्वरेण श्रद्धालुमानवेभ्योऽङ्गनाभ्यश्च केलिकाननानि प्रतिश्रुतानि येषामधस्तात्सरितः प्रवहन्ति। यत्र ते सततं स्थास्यन्ति। यत्र चादनविनोदकाननेषु सुरम्यहर्म्याणि विराजन्ते। परं सर्वतोऽधिकं तत्र परमात्मनः सम्प्रसादो वर्तते। इदमेव च परमसुखम्। ते परमात्मानमुपहसन्ति परमात्मना च त उपहस्यन्ते।—सू० ९। आ० ७२, ७९

स०—अत्र मोहम्मदमहाभागः परमात्मनो व्यपदेशेन स्वार्थसाधनाय मानवान्प्रलोभयति। यदि हि स मानवान्वशीकर्तुमिदमामिषं न प्राकल्पयिष्यत्कस्तर्हि तत्पाशबद्धोऽभविष्यत्। अन्यमतावलम्बिनोप्येवमनुविदधति। मानवास्तु मिथः परिहासं कुर्वत एव परं केनचित् सह परमात्मनः परिहासो नितान्तमनुचितः। अयं कुराणग्रन्थो विनोदिसंकथाराशिः संलक्ष्यते।

(८७) निखिलमिदं वस्तुजातं रसूलाय तदनुगामिभ्यश्चोपकल्पितं यैरात्मनो धनजीविते परमात्मनः कृते प्रत्यर्पिते। परमेश्वरश्च तच्चेतांसि मुद्रयाङ्कितवान्, यदेते न विजानन्ति।—सू० ९। आ० ८८, ९३

स०—पश्यत स्वार्थसिन्धोर्व्यवहारम्। केवलं त एव साधवो ये मोहम्मदमहाशये विश्वासमापन्नाः। अपरे च यैस्तत्र न विश्वस्तं ते पापीयांसः? अपीदं नास्ति पक्षपातयुतमविद्यापूर्णञ्च? यदा च स्वयं परमात्मैव तेषां चेतांसि मुद्रयाङ्कितवान्, तदा ते मनागपि पापाचारे नापराध्यन्ति अपि तु स एवा-(परमेश्वरः)-पराध्यति। स हि तदन्तःकरणानि सम्मुद्रय तपस्विनस्तान् शुभाचारेभ्यो निवारयामास।

(८८) तद्द्रव्याणां भैक्ष्यमादत्स्व—तद्ग्रहणेन हि त्वं तान् पावयसि। तदर्थं च त्वं विधेहि प्रार्थनां यतस्तव प्रार्थनया तेषां मनांसि विश्वसन्ति। परमेश्वरो नियतं यवनानां जीवितं धनानि चक्रीणात् तद्विनिमये च तेभ्यः स्वर्गं प्रदास्यति येन ते परमात्मनः पथि युद्ध्येरन्, परान् हन्युः, स्वयञ्च विहता भवेयुः।—सू० ९। आ० १०३, १११

स०—अहो मनोहरमिदं चित्रम्? अत्र हि मोहम्मदमहानुभावो गोकुलवासिगोस्वामिनोऽनुचकार। तेऽपि हि परधनमादाय तानेव परिपावयन्ति। अयि (यवन) परमात्मन्! भवता नु शोभनो व्यापारः प्रवर्त्तितः। यत्र यवनैर्दीनचेतसां प्राणग्रहणमेव लाभ उपकल्पितः। अपि च यवनानां परमेश्वरस्तपस्विनस्तान् घातयित्वा निष्करुणयवनेभ्यः स्वर्गप्रदानेन न्यायदये सर्वथैव तत्याज। स्वीयपरमेश्वरत्वञ्च सन्दूष्य धीमतां धार्मिकाणां समाज आत्मानमधरीचकार।

(८९)—अयि श्रद्धालवः! (यवनाः) स्वप्रतिवेशिनास्तिकैरपि योद्धव्यम् कामं ते युष्मान् कर्कशान् जानन्तु। अपि यूयं न पश्यथ यत्ते

प्रतिवत्सरं सकृद्द्विर्वा विपद्भिरभिभूयन्ते तथापि ते ततो न परावर्तन्ते नाप्युपदेशं गृह्णन्ति ।—सू० ९ । आ० १२३, १२६

**स०**—निरीक्ष्यतामयमुपदेशः। अत्र हि परमेश्वरो यवनान् "कामं केऽपि प्रतिवेशिनो भृत्या वा भवन्तु यथावसरं तैर्युद्धं विशसनं वा तेषां करणीयमिति" शिक्षयति। एतत्कुराणलेखं निभाल्यैव यवनैर्भूयसेदृशं दुष्कर्मजातमनुष्ठीयते परमिदानीं यवनैः कुराणप्रतिपादितदूषणानि त्यज्येरँश्चेत् साधु भवेत् ।

(९०) परमेश्वर एव नियतं युष्माकमधिपतिः। येन षडहोभिराकाशानि भूमिश्च निर्मिता। ततो निखिलं जगत्प्रशास्तुमात्मसिंहासनम-(सप्तमं त्रिदिवम्)-ध्यरुक्षत् ।—सू० १० । आ० ३

**स०**—आकाशं ह्यनिर्मितमनाद्येकञ्च तन्निर्माणप्रतिपादनेन कुराणकर्तुर्विद्यानभिज्ञत्वं सुतरां प्रतीयते। अपि परमेश्वरो जगन्निर्माणाय षड्वासरान् व्यापृतस्तिष्ठति ? यदा हि 'मन्निदेशेन जायताम्' 'अजायत चेति' अत्रैव प्रदेशान्तरे समुपन्यस्यते तन्न कर्हिचिद् षड्वासरेषु जगदिदं निर्मितमिति सत्यं भवितुमर्हति। नाप्ययं परमेश्वरो व्यापकः संलक्ष्यते कथमन्यथा सप्तमं त्रिदिवमधिरोहति ? यदा च परमेश्वरो निजकर्मण उपायमनुचिन्तयति तन्नूनं सोऽपि मानव इव सञ्चेष्टते ! नहि सर्वज्ञः क्वचित्स्थितः किमपि चिन्तयति। एतेनायं कुराणग्रन्थः परमेश्वरानभिज्ञैः कैश्चिद् वनेचरैर्विरचित इति प्रतीयते ।

(९१) यवनेभ्य एव शिक्षादये ।—सू० १० । आ० ५७

**स०**—अप्ययं परमेश्वरो यवनानामेवानन्यसाधारणो नान्येषाम् ? अपि स पक्षपातेन व्यवहरति ? येन यवनेष्वेव दयेत नान्यजनेषु। यदि नाम यवनशब्देन प्रत्ययभाजोऽभिप्रेयन्ते तन्न तत्कृत उपदेशस्य किमपि प्रयोजनम्। यवनव्यतिरिक्ताश्च तेन नोपदिश्यन्ते ततः परमात्मनो विद्यैव निरर्थिका सम्पद्यते।

(९२) स परमेश्वरो 'युष्माकं कतमः कर्मभिः श्रेयानिति युष्मान् परीक्षते। अपि च यदि त्वमात्थ—"मरणानन्तरमवश्यं किल यूयमुत्थापयिष्यध्वे" ।—सू० ११ । आ० ७

**स०**—युष्माकं परमेश्वरः कर्माणि परीक्षमाणः सर्वज्ञत्वेन परिहीयते। मरणानन्तरमुत्थापयति चेत् त उत्थितारो नियतवेलमात्मनः कर्मणां निर्णयं प्रतीक्षमाणास्तिष्ठन्तीति साधु प्रतीमः। अपि च उपरता न प्राणन्त्विति निजनियमव्यतिकरेण परमात्मनि कलङ्कः सञ्जायते।

(९३) किञ्चोक्तम्—अयि भूमे निगिर स्वीयपानीयम्। अयि नभः !

विरम। जलञ्चाशुष्यत्। हे मानवाः! इयं परमात्मनः क्रमेलिका युष्मत्कृतेऽभिज्ञानम्। परमेश्वरभुवि सर्वत्रैनां परिभ्रमितुं मुञ्चत।

—सू० ११। आ० ४४, ६४

स०—अहो कीदृशोऽयं शैशवप्रलापः। अपि रोदसी कर्हिचिद्वाचमाकर्णयितुं शक्नुतः? परमात्मनो महाङ्गिका चेदस्ति महाङ्गोऽपि तर्हि नियतं भविष्यति। एवञ्चाश्वहस्तिरासभप्रभृतयोऽपि भविष्यन्ति? किं क्रमेलिकया परक्षेत्रसमादनं शोभते परमेश्वरस्य? किमुष्ट्रीमारोहत्यपि? एवञ्च परमात्मनोऽपि सद्मनि सांसारिकाधिपतेरिव गृहेष्वाडम्बरः समजनि।

(६४) यावद् द्यावाक्षमे स्थास्यतस्तावत्तेऽपि तत्र निवत्स्यन्ति। सौभाग्यवन्तश्च यावद् रोदसी स्थास्यतः तावत् स्वर्गे स्थास्यन्ति।

—सू० ११। आ० १०८, १०९

स०—ननु यदा सर्व एव प्राणिनः प्रलयसमनन्तरं निरयं स्वर्गं वोपैष्यन्ति तदा द्यावापृथिव्यौ किमर्थं स्थास्यतः? पुनश्च--यदा द्यावाक्षमयोः स्थितेः स्वर्गनिरयनिवासावधिः कल्प्यते तदा नित्यं त्रिदिवे निरये वा निवत्स्यन्तीति वर्णनमसत्यं समभवन्न वा? अयं ह्यविदुषां प्रलापो नहि जातु ईश्वरो विपश्चितो वैवं प्रतिभाषन्ते।

(६५) यदा योषेफः स्वजनकमाह हे पितः! अहं खलु स्वापेषु एकादशनक्षत्राणि, सूर्यं चन्द्रमसञ्चाद्राक्षम्।—सू० १२। आ० ४—५७

स०—प्रकरणमिदं पितापुत्रयोः संवादरूपाख्यायिकया परिपूर्णम्। अतोऽयं कुराणग्रन्थो नेश्वरप्रणीतोऽपितु केनचिन्मर्त्येन मानवानामैतिह्यं विलिखितम्।

(६६) स खलु परमेश्वरो येन नभः स्तम्भमन्तरेणैवोन्नामितम्। यूयं च तत् समीक्षितुं शक्नुथ। ततः स्वीयसिंहासनं भेजे। सूर्याचन्द्रमसौ चादेशपालकौ व्यधात्। स एव भूमिमस्तृणोत्। वर्षाश्च गगनाङ्गनादधोऽवतारयामास ततः स्रोतांसि प्रवोढुमारेभिरे। परमेश्वरः स्वेच्छया यस्मै कस्मा अपि भोजनसम्भारं प्रकाशयति अपहरति वा।

—सू० १३। आ० २, ३, १७, २६

स०—यवनानां परमेश्वरो नूनं मनागपि पदार्थविद्यां न विजानाति स्म कथमन्यथा नभसः स्तम्भधारणसंकथां व्यलिखत्। नहि नभो गुरुत्वाभावात्स्तम्भैर्ध्रियते। नाप्येषां परमेश्वरः सप्तमत्रिदिवनिवासितया सर्वशक्तिमान् सर्वव्यापकश्च सम्भवति। अपि च यवनपरमेश्वरः पर्जन्यविज्ञानं व्यज्ञास्यच्चेत् 'आकाशाद्वार्यधस्तादवतारितमितिवत् भुवोऽम्भांस्युपरिष्टान्नीतानीत्यपि व्यलेख्यत्। एतेन कुराणकर्त्तुर्मेघविज्ञानाभिज्ञत्वं सुतरां

सिद्धयति। अपी च शुभाशुभकर्माणि विनैव सुखदुःखञ्चेत्प्रयच्छति तर्ह्यसंशयं सोऽन्यायाचारी मूर्खश्च वर्त्तते।

(९७) यं कमपि स्वकामतः परमेश्वरो विपथे निपातयति यश्च तदभिमुखं प्रवर्त्तते तमात्मनः पन्थानं दर्शयति।—सू० १३। आ० २७

स०—मानवानां विमोहके परमेश्वरे शैताने च को नु विशेषः? परप्रतारणया यदा दियावलः सद्भिर्विगर्ह्यते तदा तथैवाचरन् परमेश्वरोऽपि न कथं विगर्ह्यताम्? कथञ्च प्रवञ्चनांहसा निरयगामी न जायेत?

(९८) तत इत्थमेवारब्यभाषायां कुराणग्रन्थमिममधस्तात्प्राहिणवम्। यदि ज्ञानलाभसमनन्तरमपि यूयं तेषां समीहानुसरिष्यथ। केवलं सन्देशप्रापणं युष्माकमनुसन्धानञ्चास्माकमधिकारः।—सू० १३। आ० ३७, ४०

स०—कुराणग्रन्थः कुतोऽवातरत्? परमेश्वरः किमुपरि गगने निवसति? एवञ्चेत् स एकदेशितया न कर्हिचित्परमेश्वरो भवितुमर्हति। परमेश्वरो हि सर्वत्रैकरसं व्यापको वर्त्तते। सन्देशप्रापणं वार्त्ताहरस्य व्यवसायः। मनुष्यवदेकदेशिन एव च वार्त्ताहरेण प्रयोजनम्। आयव्यय-परिसंख्यानञ्च मानवानां कार्यं नतु सर्वज्ञस्य परमात्मनः। एतेनायं कुराण-ग्रन्थः कस्यचिदविदुषो निर्मितिरिति प्रतीयते।

(९९) सूर्याचन्द्रमसौ च परिभ्रमणशीलावकार्षीत्। असंशयं मानवोऽन्यायकारी पापीयाँश्च।—सू० १४। आ० ३३, ३४

स०—अपि केवलं सूर्याचन्द्रमसावेव प्ररिभ्रमतो नत्वियं मेदिनी? यदि नामेयमुर्वी न परिभ्रमेत् तदाहोरात्रं कियतां संवत्सराणां भवेत्। किञ्च नियतं यदि मानवा अन्यायकारिणः पापीयांसश्च भवन्ति तर्हि मुधैव कुराण-मुखेन त उपदिश्यन्ते यतो हि येषां पापाचारे नैसर्गिकी प्रवृत्तिस्ते जात्वपि पुण्यात्मानो न भविष्यन्ति। परमत्र लोकेऽहर्निशमुभावपि (पुण्यात्मानः, पापीयांसश्च) समीक्षामहे, तस्मादीदृशोपदेशदायि पुस्तकं परमात्मनो भवितुं नार्हति।

(१००) यदाहं तं (आदमं) पूर्णतया निर्माय तस्मिन् मदीयात्मानं विनिवेशयेयं तदा यूयं तं साष्टाङ्गपातं प्रणमत। दियावलः प्राह—"अयि मम प्रभो! यतस्त्वं माममोहयदतोऽहमपि पृथिव्यां तवशासनव्यतिक्रमाय मानवान् मोहयिष्यामि।—सू०। १५। आ० २९, ३९

स०—ननु यतः परमेश्वरः स्वीयात्मानमादिमपुरुषे (आदमे) व्यनिवेशयदतः सोऽपि परमेश्वरः सम्पन्नः। इतरथा हि कथं तेन स प्रणिपातादिपरिचर्याविधौ स्वांशहर उपकल्पितः? यदा दियावलस्यापि प्रविलोभकः परमात्मैव तदा कथं न स शैतानस्यापि ज्येष्ठो बन्धुर्मन्यताम्। यूयं हि प्रविमोहकं दियावलं व्याहरथ, परमेश्वरश्चापि दियावलं व्यमोहयत्।

किञ्च परमेश्वरस्य पुरतः "अहं सर्वं जननिवहं मोहयिष्यामीति" स्पष्टमुदीरयन् दियावलः कथं दण्डयित्वा कारायां न निक्षिप्तो न वा व्यापादितः ?

(१०१) वयञ्च प्रत्येकस्मिन् जननिवहे पैगम्बरमेकं प्राहैष्म। यदा वयं किमपि वस्त्वभिलषेम तदास्माभिः केवलमेतावदुच्यते "भव" इति, तच्च भवति।—सू० १६। आ० ३८, ४०

स०—ननु यदा निखिलदेशवासिषु पैगम्बराः प्रेषिताः कथं तर्हि तदनुयायिनो नास्तिका व्यपदिश्यन्ते ? किमन्येषां देवदूता न समादरणीयाः ? महानयं पक्षपातः। सर्वत्रैवेश्वरदूताः प्रेषिताश्चेत् कतमो न्वार्यावर्ते प्रेषितः ? नेदं बुद्धिमद्भिर्मन्तुं शक्यते। परमेश्वरो वाञ्छति, आचष्टे च—हे महि ! भवेति, परमचेतना सा न कर्हिचिच्छ्रोतुमर्हति (अश्रुतत्वाच्च) परमात्मन आदेशः कथमनुष्ठितो भविष्यति। यूयं च परमेश्वरव्यतिरिक्तं किमपि नाभ्युपेथ तथा च तदादेशः केनाश्रावि ? कश्चाजायत ? सर्वमिदमज्ञानविजृम्भितं मूर्खा एवैवंविधवार्तासु विश्वसन्ति।

(१०२) ते परमात्मनः कृते दुहितॄः समकल्पयन्। परमात्मनः शपथेनाचक्षे "पूर्वमेव बहून् पैगम्बरान् सर्वदेशेषु प्राहिणवम्।

—सू० १६। आ० ५६। ६५

स०—दुहितृभिः परमेश्वरः किं विधास्यति ? मानवानामेव ताभिरर्थः। कथं दुहितर एव नियुज्यन्ते नतु सूनव उच्यतां कोऽत्र हेतुः ? सशपथभाषणमलीकभाषिणां कार्यं नतु परमात्मनः। बहुधा किल लोकेऽभिसमीक्षामहे यत्—मृषाभिधायिन एव शपथकृतो भवन्तीति। सत्यवादिनः किमर्थं शपथं कुर्वीरन् ?

(१०३) इमे खलु ते मानवा येषां हृदयानि श्रोत्रे चक्षुषी च परमेश्वरो मुद्रयामास, एते हि प्रमादिताः प्रत्येकस्मै प्राणिने तत्कर्मानुरूप्येण पूर्णं प्रतिफलं प्रदास्यते। तैः सहान्यायो न विधास्यति।

—सू० १६। आ० १०८, १११

स०—परमात्मनैव सम्मुद्रितान्तःकरणास्तपस्विनो निरपराधमेव ते विहताः, यतस्ते परायत्ताः। अहो महदपराद्धं ननु यवनानामीश्वरेण। तथापि कर्मानुरूप्येण फलं प्रदास्यत इति प्रतिभाषमाणा मनागपि न लज्जन्ते। कथं नाम ते (आत्मानः) फलानि भुञ्जीरन् नहि तैः स्वातन्त्र्येण कर्माण्यकारिषत अपि तु परमात्मनः प्रेरणया, ततस्तेनैव तत्फलमपि भोक्तव्यम्। अपिच—ननु यदा कृतकर्मणामनुरूपं फलं प्रदीयते तदा परमेश्वरः कं क्षमते ? यदि च परमेश्वरः पापानि क्षमते तदा तस्य न्यायः परिहीयते। परमेश्वरो जात्वप्यसावधानतया न विचेष्टते। एवं हि केवलं बाला एव व्यवहरन्ति।

(१०४) वयञ्च निरयं धर्मशून्यानां कृत उद्धारमकल्पयाम।

प्रत्येकस्य मानवस्य भाग्यं तद्ग्रीवायामबध्नीम यद्धच्युद्घाटच द्रक्ष्यति। किञ्च नूहसमनन्तरं न जानेऽस्माभिः कियन्तो मानवव्रजाः समूलमुन्मूलिताः।
—सू० १७। आ० ८, १३, १७

**स०**—यदि नाम त एव धर्मशून्याः सन्ति ये कुराणग्रन्थम्, देवदूतान्, कुराणप्रतिपादितं परमात्मानम्, सप्तस्वर्गान् निमाजादिकञ्च नाभ्युपयन्ति, त एव च निरयगामिनो भवन्ति तर्हि वयमसंशयं वक्तुं शक्नुमो यदिदं सर्वमपि पक्षपातव्यतिरिक्तं किञ्चिदपि नास्तीति। नहि केवलं यवनधर्मावलम्बिन एव साधवोऽन्ये च दुरात्मानो भवितुमर्हन्ति। अहो कीदृगिदं बालविलसितं यत्—सर्वेऽपि मानवाः स्वभाग्यान्यात्मनो ग्रीवायां परिबध्य भ्रमन्तीति। न वयं कस्यापि कण्ठे तत्कर्मपुस्तकं पश्यामः। कर्मणां फलप्रदानमेतेना-(कर्मपुस्तकादिवचनजातेन)-भिप्रेयते चेन्मानवानामन्तःकरणचक्षुःप्रभृतीनां मुद्रयाङ्कनकोलाहलः किमिति मुधैव समकारि ? किञ्च परमेश्वरः प्रलयवासरे-(कर्म)-पुस्तकं निस्सारयिष्यति चेत् क्वास्ति तर्हि साम्प्रतं तत्पुस्तकम् ? अपि नाम परमेश्वरः श्रेष्ठीव प्रतिदिनं निखिलमनुजानां कर्माणि विलिखन्नास्ते ? अत्रेदं विचिन्तनीयम्—यदि प्राग्जन्म एव यवनैर्नाङ्गीक्रियते तदा तदभावात्कर्मणामप्यभावात् कुतः कर्मपुस्तकं निर्मीयत ? कर्मान्तिरेणैव विलिख्यते चेत् तैः सहान्यायेन व्यवह्रियते यतः शुभाशुभकर्मभिर्विनैव कथं तेभ्यः सुखदुःखे विश्राणिते ? स्वेच्छया स व्यवहृते शक्नोतीति चेदभिधीयत एवमपि तेनान्यायः समनुष्ठितः। यतः खलु सदसत्कर्मातिरेकेण कस्मैचिन्न्यूनाधिकभावेन सुखदुःखप्रदानमेवान्यायः। अपि च तदानीं स्वयं परमेश्वरः पुस्तकं श्रावयिष्यति उत कश्चिदन्यस्तदनुचरः ? यदा च परमेश्वरो महता कालेन प्रतीक्षमाणानात्मनो विनैवापराधेन संहरति तर्हि सोऽन्यायाचारः समजनि। अन्यायपथवर्ती च कर्हिचिदपि परमेश्वरो भवितुं न शक्नोति।

(१०५) अहञ्च समूदायोष्ट्रिकां सुप्रकाश-(दृग्गोचरं)-मभिज्ञानं प्रायच्छम्। प्रतारय यं शक्नोषि प्रतारयितुम्। एकस्मिन्नहनि वयं कृत्स्नमानवान् तत्पुरोगमान् (पेशवा) पुरस्कृत्याकारयिष्यामः। येषां सव्येतरकरे तत्कर्मपुस्तकं प्रदास्यते।—सू० १७। आ० ५९, ६४, ७१

**स०**—अहो परमात्मनः सत्तायाः साधकेषु साश्चर्याभिज्ञानेषु क्रमेलिकाप्यन्यतमाभिज्ञानं वर्तते। परमेश्वर एव मानवान् प्रतारयितुं दियावलमादिशच्चेन्नूनं स एव शैतानस्याप्यध्यक्षो निखिलदुरितप्रवर्तकश्च वर्तते। एतादृशस्य परमात्मेति व्यपदेशो नियतं मूढधियां विलसितम्। यदि परमेश्वरो व्यवहारनिष्पत्तये पैगम्बरं तदनुगामिनश्च प्रलयवासर आह्वास्यति तदाप्रलयं ते पर्यवेक्षणे स्थास्यन्ति। तच्च सर्वेभ्य एव कष्टप्रदम्। अतएव चाञ्जसैव

व्यवहारनिर्णयो न्यायाधीशानां परमं कर्त्तव्यम्। एष हि पोपादेव्या न्यायः समभवत्। यथा कश्चिद् न्यायाधीश आचक्षीत—"यावत् पञ्चाशद्वर्षाणां दस्यवो नागरिका वा न समेष्यन्ति तावदहं व्यवहारान्न निर्णेष्यामीति"। एतदपि तथैव सञ्जातम्। एकः खलु पञ्चाशद्वर्षाणि यावत् कारायामवात्सीत् अपरस्य च ग्रहणसमकालमेव न्यायो विनिर्णीतः। नैष न्यायः समाख्यायते। यदि यूयं न्यायस्वरूपमभिप्रेक्षितुमभिलषथ तर्हि वेदान् मनुस्मृतिञ्च पश्यत ये ह्यजस्रमुद्घोषयन्ति "यन्न्यायविनिर्णये मनागपि विलम्बो न संजायते सर्वेषाञ्च प्राणिनां तत्तत्कर्मानुसारेण न्यायोऽनुष्ठीयत" इति। पुनश्च देवदूतानां साक्ष्यर्थमाकारणात्परमात्मनः सर्वज्ञता परिहीयते। अप्येतादृशं पुस्तकं जात्वपीश्वरप्रणीतम्, उपदेष्टा चास्य परमेश्वरो भवितुमर्हति ?

(१०६) त एव खल्वेते जना येषां कृत अदनकाननानि सन्ति। येषां छायासु सरितः प्रवहन्ति। यत्र ते चामीकरवलयैरलङ्करिष्यन्ते, सिंहासनेषूपवर्हावलम्बेन स्थास्यन्ति। अहो कियन्मनोहरं प्रतिफलं कीदृक्च सुमनोरमः पर्यङ्कः।—सू० १८। आ० ३१

**स०**—अहो कियन्मनोहरं स्वर्गचित्रं चित्रितं ननु कुराणग्रन्थे। यत्र हि काननानि, भूषणानि, वसनानि, पीठोपधानानि च प्राणिनामानन्दाय नित्यं सन्निधीयन्ते। यदि कश्चिद्धीमान् किमप्यवहितेन चेतसा विचिन्तयेत्तर्हि स किञ्चिदपि तत्र यवनानां स्वर्गे विशेषं नोपलभेत। आम्, इतः केवलं तत्रान्यायोऽधिकः समुपलभ्यते। तथा च परिमितकर्मणां फलमनन्तं लभ्यते। यथा हि नित्यं मधु भुञ्जानस्य तदेव कियता कालेन गरलमिवारुचिकरं सम्पद्यते तथैवाहर्निशं सुखमश्नतो जनस्य सुखमपि दुःखायते, तस्माद् महाकल्पपर्यन्तं ब्रह्मानन्दमुपभुज्य पुनः संसारावर्तनमेव सत्यः सिद्धान्तः।

(१०७) इमास्ताः पुरो या अस्माभिः क्षयं यापिताः, यदा ता अन्यायशीला अभवन्। तदनु वयं तद्विनाशसन्धानमकुर्महि।—सू० १८। आ० ५९

**स०**—अपि कदाचित् कृत्स्नमपि नगरमेनस्वि भवितुमर्हति ? यतः खलु परमेश्वरस्तासां (पुरम्) दुरितानि सम्प्रेक्ष्यैव तद्विनाशं प्रत्यजानीतातः सुतरां स सर्वज्ञतायाः प्रच्यवते। किं पूर्वतः एव न व्यजानात् ? (प्रभूतनगरीणां विनाशादेव) निष्कृपोऽपि संलक्ष्यते।

(१०८) तस्य बालस्य जनकौ विश्वस्तावभवताम्। ततो वयमबिभीम "न जातु दारकः पितरावुन्मार्गगामिनौ धर्मशून्यौ च विदध्यात्"। मरीचिमालिनोऽस्तप्रदेशमुपययौ। स च भानुमन्तं कृष्णपङ्कप्रस्रवणे निमज्जन्तमद्राक्षीत् ते प्राहुः—"अयि ऐजुल करियन्! नियतं यागुमागू खल्वस्माकं भुवः प्रदेशमवसादयतः।—सू० १८ आ० ८०, ८६, ९४

स०—अहो कियानयं परमात्मनो व्यामोहः। सोऽबिभेत् यत्—"कदाचित् शिशुजनकौ तत्प्रभावेण मदीयमार्गाद्विमोह्य न परावर्त्येतामिति"। नेदं जात्वपि परमात्मनः स्वभावमनुरुध्यते। कुराणग्रन्थप्रणेतुरितोप्यधिकतरं मौर्ख्यं समीक्ष्यताम् स हि सूर्य्यं नक्तं कासारनिमग्नमुषसि पुनस्तत उत्थितमवबुध्यते। वस्तुतस्तु भुवो बृहत्तरस्तिग्मदीधितिः कथं सरिति कासारे सरितां पत्यौ वा निमङ्क्तुमर्हति ? अयं कुराणग्रन्थप्रणेता मनागपि भूखगोलविद्यां न जानाति स्मेति सुव्यक्तं प्रतीयते कथमन्यथैवं स विद्याविरुद्धमलिखत् ? एतद्ग्रन्थमन्तारोऽप्यनधीतविद्या एव संलक्ष्यन्ते तेऽपि कथमन्यथेदृशालीकविषयपरिपूर्णं पुस्तकं विश्वसन्ति ? साम्प्रतं परमात्मनोऽन्यायवर्त्म दृग्गोचरीक्रियताम्। यद्यपि स स्वयमेव भुवं निर्माय प्रशासति तथापि पृथिव्यामुपद्रवं विदधानौ यागुमागू न व्यसेधति। नेदं परमात्मनः स्वभावेन संवदति ईदृशं पुस्तकं केवलमारण्यका विश्वसन्ति नतु विपश्चितः।

(१०९) (अयि देवदूत !) कुराणग्रन्थवर्णितां मरियमः संकथामनुस्मर। यदा हि सा स्वजनेभ्यो वियुज्य पूर्वस्यां दिश्युपाविशत्तेभ्यश्चात्मानमन्तर्धापयितुमावरकं चकार। वयञ्च तत आत्मानं तदन्तिके प्राहिण्म। स चास्माकमन्तरात्मा तत्पुरतो मानवाकृतावुदस्थात्। सा प्रोवाच "त्वञ्चेत्पुण्यशीलस्तर्ह्यहं दयाम्बुधेः परमात्मनः शरणं प्रपन्नास्मि। स (अन्तरात्मा) प्रत्यवादीत् "अहं खलु तव प्रभुणा तुभ्यमेकमपत्यं प्रदातुं प्रेषितः" इति। सा पुनरुवाच—"अकृतपुरुषसंसर्गाया मम कथमपत्यमुत्पत्तुमर्हति" नाप्यहं बन्धकी येन परपुरुषसंसर्गमुपैमीति"। तदनु मरियमन्तर्वत्नी समजायत। अनन्तरं सा तत्सत्वमादाय किञ्चिद्विविक्तनिकेतनमधितष्ठौ।

—सू० १९ आ० १६—२०, २२

स०—परमेश्वरस्यात्मानो देवदूतास्ततः (परमात्मनः) कथं पृथग् भवितुमर्हन्तीति धीमद्भिरेव विभावनीयम्। कुमारिकायां मरियमि पुत्रोत्पादनमपरं दुश्चेष्टितम्। पुरुषसङ्गमनिच्छन्त्यपि सा परमात्मनिदेशतो देवदूतेन ससत्वा समकारीति कियदनुचितमिति कृतधिय एव विदाङ्कुर्वन्तु। अत्र प्रकरणेऽन्यान्यपि भूयांसि जुगुप्सितवृत्तानि वर्तन्ते, तान्यस्माभिर्विलेखितुमनुचिततया न विलिख्यन्ते।

(११०) अपि त्वं नाद्राक्षीर्यद् वयं धर्मशून्यान् पापाचाराय प्रोत्साहयितुं दियावलान् प्राहैष्म।—सू० १९ आ० ८३

स०—यदा परमात्मैव जनप्रतारणाय दियावलान् प्रहिणोति न तदा तैर्विप्रलब्धा मानवा नापि ते किञ्चिदप्यपराध्यन्ति न चापि ते दण्डभागिनो भवितुमर्हन्ति, यतः किल सर्वमप्येतत्परमात्मनो निदेशेनैव क्रियते। अतः फलमप्यस्य तेनैव भोक्तव्यम्। यदि नाम स सर्वथा न्यायेन व्यवहरति तर्हि

स स्वयमेवैतद्दुरितफलं निरयमश्नीयादथ चेन्न्यायवर्त्म परित्यज्यान्यायेन व्यवहरति तर्ह्यन्यायाचारः समजनि। अन्यायमनुष्ठातारञ्चैव पापं संगिरन्ते।

(१११) असंशयं क्षमे खल्वहमनुशयविधुरं विश्वासिनं पुण्यवन्तं सन्मार्गगामिनञ्च मानवम्।—सू० २० आ० ८२

स०—"सानुतापस्य पुंसः पापानि क्षाम्यन्ते" इति यत् कुराणग्रन्थे समुपन्यस्यते तदिदं सर्वान् पापिनो विदधाति अनेन हि पापवन्तो भूयोऽपि पापमाचरितुमुत्सहन्ते तस्मादिदं पुस्तकं प्रणेता चास्य पापिनः पापाचारे प्रोत्साहयति। अतएव नेदं परमेश्वरप्रणीतं नाप्यत्र वर्णितः परमेश्वरः परमेश्वरो भवितुमर्हति।

(११२) किञ्चाहं भुवः स्थैर्य्यमापादयितुं तत्र पर्वतान् न्यवेशयम्।
—सू० २१ आ० ३१

स०—कुराणग्रन्थकारो भुवः परिभ्रमणादिकं चेत् व्यज्ञास्यन्न तर्हि कर्हिचित् "पर्वतनिवेशेन महीयं न कम्पत" इत्यलेखिष्यत्। भुवि पर्वताना-मभावे वसुन्धरेयमकम्पिष्यत इति तैरुह्यते परं कथं तथापि भूकम्पेष्वियं प्रकम्पते?

(११३) अपि च तस्याः स्मरत यया गुह्याङ्गानि गोपितानि। अहञ्च तस्यामात्मानं प्रावेशयम्।—सू० २१। आ० ९१

स०—इत्थमश्लीलतया केनचित् सभ्येनापि नोदीर्यते किमुत परमेश्वरेण। यदा च मानवेष्वपीदृशवार्तानां विलेखनं न प्रशस्यते। तदा परमात्मना कथं विलेखितुं युज्येत? एवमादिविषयैः कुराणग्रन्थः सन्दूष्यते। यद्ययं सर्वथा साध्वेवोपदिशेत्तर्हि वेद इव सर्वैरादृतो भवेत्।

(११४) अपि त्वं नापश्यः—यत् सर्वप्राणिनः—त्रिदिवौकसो भूवासिनो वा परमात्मानं प्रणमन्ति (न केवलमेत एवापितु) सूर्य्यचन्द्रनक्षत्रपर्वत-वृक्षपशवोऽपि (प्रणमन्ति)। तत्र (स्वर्गे) ते सौवर्णवलयैर्मौक्तिकैर्वा भूषणैर्भूषयिष्यन्ते। तेषां वासांसि च कौशेयानि भविष्यन्ति। ये खलु मां परिवृण्वन्ति तिष्ठन्ति च तदर्थं मदीयनिकेतनं परिमार्जय। तदनन्तरं मानवा मिथोऽन्योऽन्यव्यतिक्रमं विस्मरेयुः। निजसङ्कल्पं पूरयेयुः। प्रान्तनिकेतनस्य च प्रदक्षिणां कुर्वीरन् परमात्मनो नामधेयञ्चानुस्मरेयुः।
—सू० २२। आ० १८, २३, २६, २९, ३४

स०—नन्वचेतनाः—ये परमात्मानं जात्वपि वेत्तुं न शक्नुवन्ति कथं तस्य भक्तिं संविधातुं शक्नुयुः? अनेन पुस्तकमिदं न परमेश्वरप्रणीतमपि तु केनचित् व्यामुग्धेन निर्मितमिति सुव्यक्तं भवति। अहो सुरम्यः खल्वयमेषां स्वर्गो यत्र स्वर्णमुक्तामयानि भूषणानि कौशेयवासांसि च परिधातुं सम्प्राप्यन्ते। तथाप्ययं स्वर्गोऽत्रत्यधनिनां निकेतनेभ्यो न किञ्चिदपि

विशिष्यते। किञ्च यदा स्वर्गः परमात्मनो गृहं वर्तते तदा स तत्रैव निवत्स्यति पुनः कथं नेदं प्रतिमार्चनं सञ्जातम् ? कथं चान्यप्रतिमार्चकान्निराकुर्वन्ति ? यदा च परमेश्वरः स्वयमुपायनमादत्ते, स्वगृहं प्रदक्षिणीकर्त्तुमादिशति, पशूंश्च घातयित्वाऽऽदयति तर्हि कथमयं परमेश्वरो भैरवदुर्गादिदेवता नानुकरोति या हि मन्दिरेषु पौराणिकैरर्च्यन्ते। एषां परमेश्वरश्चैवं महाप्रतिमार्चनस्य प्रवर्तकः सञ्जायते। यतो हि मस्जिदं प्रतिमाभ्योऽपि महती प्रतिमा, अतो यवनानां परमेश्वरो यवनाश्च पौराणिकजनापेक्षयापि महान्तः प्रतिमापूजका वर्तन्ते।

(११५) प्रलयवासरे निःसंशयं यूयमुत्थापयिष्यध्वे।

—सू० २३। आ० १६

**स०**—ननु शवाः प्रलयपर्यन्तं शवागारेष्वेव निवत्स्यन्ति उत क्वचिदन्यत्र ? तत्रैव निवत्स्यन्ति चेत् पुण्यवन्तोऽपि दुर्गन्धमये देहे निवसन्तो दुःखमुपभोक्ष्यन्ते। ततश्च न्यायत्वेनोद्घुष्यमाणोऽयमन्याय एव। अपि च दुर्गन्धबाहुल्यात् व्याध्युत्पादकतया यवनास्तत्परमेश्वरश्च पापभाजो भविष्यन्ति।

(११६) एकस्मिन्नहनि तेषां रसना पाणिपादं ते तथाऽकुर्वन्निति साक्ष्यं प्रदास्यन्ति। परमेश्वरो द्यावापृथिव्योर्ज्योतिः। प्रकाशस्यास्य निदर्शनमिदं भवितुमर्हति—क्वचिदेकत्र प्रतिमाधारे दीपः सन्निहितो दीपश्च काचमञ्जूषायां स्थापितः स च काचो नक्षत्रमिव विद्योतते। तद्दीपिकायां च जिततरोस्तैलं प्रज्वलति सोऽपि जिततरुर्न पूर्वस्यां नापि पश्चिमस्यां दिशि व्यवतिष्ठते। तत्तैलं स्वच्छतया वह्निसम्पर्कमन्तरेणापि प्रज्वलति। अयं प्रकाशः प्रकाशान्तरेण संयोज्यते। परमेश्वरः स्वेच्छया यं कमपि ज्योतिरिदं दर्शयति।—सू० २४। आ० २४, ३५

**स०**—करचरणादयोऽचेतनत्वान्न कर्हिचित्साक्ष्यं दातुमर्हन्ति। सृष्टिक्रमविरुद्धत्वादिदं सर्वथैवासङ्गतम्। अपि सौदामिनी युष्माकं परमेश्वरः ? उपरितननिदर्शनं परमात्मनो निराकारत्वान्न तत्र कर्हिचित्सङ्गच्छते केवलं साकारपदार्थेष्वेव सङ्गन्तुमर्हति।

(११७) परमेश्वरः कृत्स्नमपि सत्त्वजातमद्भिरेवाजीजनत्। केचित्तत्रोरसा सर्पन्ति। अपरे च पद्भ्यां व्रजन्ति। यः कश्चन परमात्मनो रसूलस्य चादेशं पालयेत्। ब्रूहि—"परिपालयत परमेश्वरादेशमनुरुध्यध्वे तद्दूतनिदेशञ्च। पैगम्बराज्ञानुष्ठीयतां येन यूयं तत्कृपाभाजनं भवेत।

—सू० २४ आ० ४५, ५२, ५४, ५६

**स०**—ननु कीदृशमिदं तत्त्वज्ञानं यत्र हि विद्यमानेष्वपि देहिनां देहेषु निखिलतत्त्वेषु केवलमद्भिरेव तच्छरीराणि निर्मितानीति प्रतिपाद्यते। यदा च परमात्मन आदेशेन सह रसूलस्यापि समादेशः पालनीयस्तर्हि स

परमेश्वरांशभागी समभवन्नवेति युष्माभिरेवोच्यताम्। अथ चेदेवमङ्गीक्रियेत कथं तर्हि परमात्मनोऽद्वितीयत्वं कुराणग्रन्थे समुपन्यस्तं किमर्थञ्च यूयं तदभ्युपेथ ?

(११८) यस्मिन्पुनर्वासरे नभो मेघमण्डलैः सह विदीर्णं भविष्यति देवदूताश्चाऽवतारयिष्यन्ते, ततो नास्तिकनिदेशं मानुरुध्यध्वमपितु महता विरोधेन तैः सह कलहमाचरत। परमेश्वरश्च तेषां दुरितानि पुण्येषु विपरिवर्तयति। यश्चानुतापं विधाय सत्कर्माणि कुर्वीत नियतं स परमात्मनः साम्यमुपैति।—सू० २५। आ० २५, ५२, ७०, ७१

स०—आकाशमण्डलं तोयवाहैः समं विदीर्यंत इति कदापि सत्यं भवितुं नार्हति। नह्याकाशो मूर्त्तिमद्द्रव्यम्। यदि नाम तथा स्यात्तर्हि शकलीभवेदपि। अयं यवनानां कुराणग्रन्थः शान्ति विनाश्योपद्रवं जनयति, अत एव धार्मिका विद्वांस इमं नाद्रियन्ते। अहो पापपुण्ययोः परिवर्तनमपि शोभना न्यायसरणिः ? अपि पुण्यपापे तिलमाषौ येन तयोर्मिथो विनिमयः सम्भाव्येत ? केवलमनुशयेनैव पापानि मुच्येरन् परमेश्वरश्च लभ्येत चेन्न कोऽपि पापवर्त्मनो बिभीयात्। तस्मात्सर्वमिदमज्ञानविजृम्भितम्।

(११९) अहं मूषं श्रुतिप्रकाशेन समादिशं यत्—"त्वं यामिन्यामेवास्मद्भक्तैः सह प्रतिष्ठस्व यतो युष्माकमन्वेषणं विधास्यते"। ततः प्रियानः (फिरआनः) सैन्यं समाहर्त्तुमध्यक्षं नगरं प्राहिणोत्। स एव पुमान् येनाहमुत्पादितो मम पन्थानं दर्शयति। यश्च मह्यं वार्यन्नादिकं व्यश्राणयत् स एव प्रलयवासरे मम दुरितानि क्षंस्यत इत्यहमाशासे।

—सू० २६। आ० ५२, ५३, ७८, ७९, ८२

स०—ननु यदा परमात्मना प्रथमं मूषाय निजपुस्तकं प्रहितं कथं पुनर्दायूदयीशुमुहम्मदमहाभागेभ्यः प्रैषयत् परमात्मनो हि ज्ञानं नित्यमेकरसं निर्भ्रमञ्च तिष्ठति। परमुत्तरकालीनकुराणपर्यन्तग्रन्थानां प्रेषणं पौर्विकपुस्तकानामपूर्णतां भ्रान्तिमत्त्वञ्च व्यनक्ति। यदि हि नामाद्यं पुस्तकत्रयं सत्यं वर्तते तर्ह्ययं कुराणग्रन्थो मृषात्वमापद्यते नहि मिथो विरुद्धं ग्रन्थचतुष्टयं सर्वथा सत्यं भवितुमर्हति। परमात्मनैव चेज्जीवा उत्पादितास्तर्हि ते कदाचिद् विनाशमप्युपैष्यन्ति। परमेश्वर एव सर्वान् मनुष्यादिप्राणिनोऽन्नादिकं प्रयच्छति चेन्न केनापि व्याधिनिपीडितेन भवितव्यम्। सर्वेभ्यश्च समानमेव भोजनं प्रदेयं नतु पक्षपातेन कस्मैचिद्विशिष्टमपरस्मै च साधारणं भोजनं प्रदातव्यम् यथाद्यत्वे भूमिपालेभ्यो महार्घमकिञ्चनेभ्यश्च सामान्यं भोजनं प्रदीयते। यदि परमेश्वर एव भोजयिता पाययिता पथ्यादीनां कारयिता च वर्तते तर्हि रोगैरेव नोत्पत्तव्यं परं यवना अप्यामयाक्रान्ताः संलक्ष्यन्ते। परमात्मैव रोगान्विनाश्यारोग्यतां सम्पादयति चेन्न तर्हि यवनशरीराणि

व्याधिभिर्निपीडच्येरन् ? अथ चेत्तेऽपि व्याधिभूमयो भवन्ति नास्ति तर्हि परमेश्वरः पूर्णो भिषक्। अस्ति चेत् कथं यवनशरीराणि रोगैर्विदूयन्ते ? अपि च—परमेश्वरः प्राणिनो व्यापादयति जीवयति चेत्स एव तत्फलाभ्यां पुण्यपापाभ्यां संयुज्येत ? पूर्वजन्मनि समनुष्ठितकर्मणामनुसारेण व्यवस्थां सम्पादयति चेत्स किञ्चिदपि नापराध्यति। परमेश्वरश्चेत्पापानि क्षमते प्रलयवासरे च न्यायमनुतिष्ठति तर्हि स स्वयमेव दुरितानां प्रवर्धकतया पापः सम्पद्येत। अथचेन्न क्षमते तत्कुराणग्रन्थप्रतिपादनं कथमसत्यं न भवेत् ?

(१२०) त्वमप्यस्मद्विधः केवलं मानव एव सत्यञ्चेद्वक्षि किमप्यभिज्ञानं दर्शय (सालहः) समवोचत्—इयमुष्ट्रिकैवाभिज्ञानमियं ह्यहोरात्रयोः सकृदेव जलं पिबति।—सू० २६। आ० १५४, १५५

स०—क्रमेलिका प्रस्तरेभ्यो निःसरतीति न कोऽपि प्रत्येतुं शक्नोति। ते हि वनेचरा आसन्नत एवात्र प्रत्ययमादधुः। अपि चोष्ट्रिकाभिज्ञानव्यवहारो वनेचराणां ननु परमात्मनः। यदि नामेदं पुस्तकमीश्वरप्रणीतमभविष्यन्न तर्हीदृशालीकविषया अत्राभविष्यन्।

(१२१) अयि मूष ! अहं खलु नयप्रवीणः सबलः परमेश्वरोऽस्मि प्रक्षिप निजयष्टिकाम्। यदा मूषो यष्टिकामुरगमिव प्रसर्पन्तीमद्राक्षीत् तदा स परावृत्य पलायाञ्चक्रे। परमेश्वरः प्रोवाच। अयि मूष ! मा भैषीर्नहि पैगम्बरा मत्तो बिभ्यति। परमेश्वरो न केवलं परमेश्वरोऽपि तु स सुविशालसिंहासनस्य प्रभुः। अस्मद्विरोधमनाचरन्तो मच्छरणमुपेत। मन्निदेशं परिपालयन्तः समुपेत मत्समक्षम्।

—सू० २७। आ० ९, १०, २६, ३१

स०—अत्राप्यवधेयम्—परमेश्वरः स्वयमेवात्मानं सबलं प्रतिपादयति। साधवोऽपि स्वमुखेन नात्मानं श्लाघन्ते किमुत परमेश्वरः श्लाघेत, अतएव स इन्द्रजालेन वनेचरान् विमोह्य तेषां प्रभुर्बभूव। नह्येवमीश्वरग्रन्थे कर्हिचित्सम्भवति। यदि नाम परमेश्वरो महतः सिंहासनस्य—सप्तमत्रिदिवस्याधिपतिर्विद्यते तर्हि परिच्छिन्नतयेश्वरत्वेनैव हीयते। अभिद्रोहो जघन्यं कर्म चेत् परमात्मनः प्रेरणया बहून् घातयन्नपि किमिति मुहम्मदः परमेश्वरश्च स्वस्तुतिपरं पुस्तकं व्यलिखत ? अयं कुराणग्रन्थः पुनरुक्तिपूर्वापरविरुद्धादिदोषैः परिपूर्णः।

(१२२) पर्वतानभिसमीक्ष्यत्वम् "इमे दृढं प्रतिष्ठिताः" इत्यनुमिनोषि परं तेऽपि वारिवाहा इवेतस्ततोऽपसर्पन्ति। स प्रत्येकं वस्तु सुदृढं स्थापयतीति परमात्मनो नैपुण्यम्। यच्च यूयं विधत्थ तत्सर्वं परमेश्वरो विजानाति।

—सू० २७। आ० ८८

स०—मेघानामिव गिरीणामितस्ततः परिभ्रमणं कुराणग्रन्थप्रणेतुरेव

देशे सम्भवति न त्वन्यत्र कुत्रचित्। परमात्मनो जागरूकतात्वेनैव प्रतीयते यत् स राजद्रोहिणं दियावलं संगृह्य शासितुं न शशाक। यः खल्वेकमपि (विद्रोहिणमद्ययावन्नाऽपारयत् शासितुं) किमतः परं तस्य प्रमादो भविष्यति ?

(१२३) (तदा) मूषस्तं मुष्टिप्रहारेणाहत्य पञ्चत्वं निनाय। ततः स प्रोवाच अयि मम प्रभो ! नियतं मया स्वात्मने महदपराद्धम्, क्षमस्व माम्। अनन्तरं स परमात्मना क्षान्तः, यतः खलु परमेश्वरः क्षमां विधातुं नित्यमुद्यतो दयालुश्च वर्तते। परमेश्वरः स्वेच्छया यं कमपि निर्माति स्वातन्त्र्येण च यं कमपि संवृणुते।—सू० २८। आ० १५, १६, ६८

स०—अयि पाठकाः ! पुनः किञ्चिदवधीयताम्—अपि यवनक्रिश्चीनमतावलम्बिनां परमेश्वरो देवदूतो मूषश्चोभावपि न स्तोऽन्यायकारिणौ ? ययोरेकतरो (मूषः) जनान् व्यापादयति अपरश्च तद्दुरितं क्षमते। स्वेच्छयैव किं स यथाकामं सर्वमुत्पादयति ? अपि स्वेच्छयैव तेन कश्चिद् विशांपतिरपरश्चाकिञ्चनः, एको बुधोऽन्यश्च जडधीरुत्पादितः ? अथ चेदेवं नायं कुराणग्रन्थः सत्यो नाप्यत्रवर्णितः परमेश्वरो भवितुमर्हति।

(१२४) जनकौ प्रति दयया व्यवहर्त्तुं मया मानवाः समादिष्टाः। परं यदि तावस्माकमंशहरं कमपि विनिश्चित्याग्रहं कुर्वीयाताम्, तर्हि तयोराज्ञां मा पालयत। वयमितो नूहं तदीयजातिं प्रति प्राहिण्म स च तेषु पञ्चाशदधिकनवशतं वत्सरानुवास।—सू० २६। आ० ८, १४

स०—जनकयोः शुश्रूषणं समीचीनमेव। एतदपि सुप्रशस्तमेव यत् यदि तौ "यूयं परमात्मनः कमपि दायहरं मन्यध्वमित्यादिशेतां तर्हि तयोर्निदेशं माङ्गीकुरुत" इति। परं यदि पितरावलीकभाषणादिकमुपदिशेतां तर्हि किं तयोराज्ञा अङ्गीकरणीयाः ? तस्मादयमादेशोंऽशतः सत्यम् ? किं नूहप्रमुखान् पैगम्बरानेव परमेश्वरः संसारे प्रहिणोति ? कस्तर्ह्यन्यजीवान् प्रेषयति ? अथ चेत् स सर्वानेव प्रहिणोति तर्हि कथं न सर्व एव पैगम्बरत्वं लभन्ते। अपि च यदा पुरा मानवैः सहस्रवर्षाणामायुर्लभ्यते स्म कथं न तर्हि साम्प्रतं तावदायुस्तैः सम्प्राप्यते ?

(१२५) परमेश्वरः प्रथममुत्पाद्य तानसून् प्रापयति (सोच्छ्वासान् करोति) तदनु भूयोऽपि ते परमेश्वरं प्रतिनिवर्त्स्यन्ति। कल्पान्तदिवसे दुरात्मानो निराशयान्तःसन्तप्ता भविष्यन्ति सत्कर्मिणः पुनर्विश्वासमापन्नाः काननेषु भूषयिष्यन्ते। यद्यहं जवानिल (आँधी) प्रेषयेयं ते चात्मानः कृषिं कपिशामीक्षेरन्। परमेश्वरश्च नास्तिकानामन्तःकरणानि मुद्रयाङ्कयति।
—सू० ३०। आ० ११, १२, १५, ५१, ५८

स०—ननु यदि परमेश्वरः केवलं वारद्वयमेव जगत्सृजति तर्हि पूर्वमुत्पत्तेर्द्वितीयसर्जनावसाने च निश्चेष्टोऽवतिष्ठते किम् ? प्रथमद्वितीयोत्पत्ति-

समनन्तरं तदीयसामर्थ्यमपि व्यर्थमेव सञ्जायते ? न्यायवासरे पापिनो निराशया व्याकुला भवन्ति चेत् शोभनम् । अप्यस्य तात्पर्यमिदं तु नास्ति यत् "यवनव्यतिरिक्ताः सर्वे एव मानवाः पापिन इति धिया भग्नाशाः क्रियेरन्" ? यतः खलु कुराणग्रन्थे बहुत्र पापिभिर्यवनव्यतिरिक्ता एव निर्दिश्यन्ते । केलिकाननेषु विहारो भूषणादिभिश्शोभनमेव च यवनानां स्वर्गश्चेत्तर्हि सोऽपि जगदिदमनुकरोति । एवञ्च तत्र मालिस्वर्णकारा अपि भविष्यन्ति । परमात्मैव वा तत्कार्यमनुतिष्ठति ? अपि च यदि कैश्चित्स्वर्गवासिभिरल्पालङ्करणानि लभ्यन्ते तर्ह्यवश्यं तत्र स्तेयमपि प्रवर्तते, स्तेनाश्च नियतं निरये पात्यन्ते । एवञ्च "सर्वदा स्वर्गे निवत्स्यन्तीति," कुराणोद्घोषणमलीकं सञ्जायते । परमेश्वरः कृषीवलानां कृषिमपि चेत्पर्यवेक्षते नूनं सोऽपि कृषकः सम्पन्नो नह्येतज्ज्ञानं तत्कर्मानुभवमन्तरेण सम्भवति । निखिलविद्यावत्वेन परमेश्वरः कृषिविज्ञानमपि वेत्तीति चेदभ्युपगम्येत तर्हि तादृशभयप्रदर्शनं केवलमात्मनोऽहङ्कारप्रदर्शनम् । परमात्मना सर्वेषामन्तःकरणानि सम्मुद्रितानि चेत्तदनुष्ठितपापपुण्ययोः फलं परमात्मनैव लभ्येत । सेनाप्रणेतुरादेशेन युद्धचमानस्यापि सैन्यस्य जयपराजयौ न भवतोऽपितु सेनाप्रणेतुरेव भवतस्तथैव मानवैः कृतकर्मणां फलं परमात्मनैव समधिगन्तव्यम् ।

(१२६) वैदग्ध्ययुतग्रन्थस्येमान्यभिज्ञानानि । स हि द्यावाभूमी स्तम्भमन्तरेणैवोत्पादयामास । भूमिकम्पनिवारणाय तत्र च पर्वतान् निखातवान् । अपि त्वं नाद्राक्षीः "परमेश्वरो वासरं निशायां रात्रिं चाह्नि प्रवेशयतीति" । परमात्मनोऽनुग्रहेण नावो नदीषु सन्तरन्तीत्यपि त्वं नाद्राक्षीः ? येन स स्वाभिज्ञानानि युष्मान् दर्शयेत् ।

—सू० ३१ । आ० २, १०, २९ः ३१

**स०**—साधु ! वैदग्ध्यपूर्णं पुस्तकं साधु ! यत्र सर्वथैव विज्ञानविरुद्धं "नभस उत्पत्तिस्तत्र स्तम्भाधानकल्पनं, पृथिव्याः स्थैर्याय पर्वतानां निधानञ्च संलिखितम्" । अल्पविद्योऽपि नैवं कर्हिचिद् विलिखति नाप्येवमज्ञानपूर्णं पुस्तकं मनुते । अपि च दृश्यतां किञ्चिद् वैदग्ध्यं, दिनं क्षणदां क्षणदा च वासरं प्रविशतीति कियदज्ञानविजृम्भितम् । सर्वे एव विदन्ति ननु—यत्र दिनं न तत्र रजनी, यत्र रजनी न तत्र वासर इति । तस्मादयं कुराणग्रन्थो न जातु विद्यापुस्तकं भवितुमर्हति । मानवैर्यन्त्रादिभिश्च परिचाल्यमानानां तरीणां परमात्मनोऽनुग्रहेण सञ्चलनवर्णनमपि नास्त्यज्ञानविजृम्भितम् ? यदि नामायसोऽश्मनो वा निर्माय तरीरम्बुधौ परिचालयेम तर्हि परमात्मनोऽभिज्ञानं (नौकारूपम्) निमज्जेन्न वा ? तस्मादयं ग्रन्थो न परमात्मनो नापि विदुषः कृतिर्भवितुमर्हति ।

(१२७) स परमेश्वरः स्वर्गादारभ्य पृथिवीपर्यन्तं निखिलं जगत्

प्रशास्ति। युष्माकं सहस्रसंवत्सरपरिमिते दिवसे ते तदभिमुखमेव परावर्त्तन्ते। विक्रान्तो दयालुश्च सः प्रत्यक्षं परोक्षं च सर्वं वेत्ति, तदनु तं निर्माय तस्मिन्नात्मानं प्रवेशयामास। कथय—मृत्युदूतो यो वै युष्मासु सन्निहितो युष्मान् व्यापादयिष्यति। वयञ्चेदभिलषेम तर्ह्यसंशयं प्रत्येकस्मा आत्मने तदीयशिक्षां प्रयच्छेम। परं मदीयवचांसि…यदहं जिनैर्मानवैश्च निरयं पूरयिष्यामि।—सू० ३२। आ० ४, ६, ६, ११, १३

स०—"यवनानां परमेश्वरो मानव इवैकदेशी" इति साधु सुव्यक्तं भवति नहि सर्वव्यापिन एकदेशेन प्रशासनमारोहणमवतरणञ्च सम्भवति। परमेश्वरश्चेद्दूतान् प्रहिणोति तदापि स स्वयमेकदेशी सम्पन्नः। स्वयं हि नभसि लम्बते दूतांश्चेतस्ततः प्रधावयति। अथ यदि देवदूता उत्कोचमादाय किमपि कार्यमन्यथा कुर्युः, कमपि मृतपुरुषं वा त्यजेयुः कथं तर्हि परमेश्वरोऽवगन्तुमर्हेत् ? स हि वेत्तुं शक्नोति यो वै सर्वज्ञः सर्वव्यापको वा भवेत्, परं नास्ति तादृशः सः। इतरथा हि देवदूतानां प्रेषणस्य केषाञ्चिन्मानवानां विविधप्रकारेण परीक्षणस्य च किं प्रयोजनमासीत् ? संवत्सराणां सहस्रेषु प्रबन्धविधानेन गतागतेन च सर्वशक्तिमानपि नावतिष्ठते। मृत्योरपि दूतश्चेन्नु तस्यापि व्यापादयिता कतमो मृत्युः ? अमरधर्मा स इति चेदुच्येत तर्ह्यमरत्वे परमात्मनः सहचरः संवृत्तः। केवलमेको देवदूतो यौगपद्येन निरयं पूरयितुं मानवान् शिक्षयितुञ्च न शक्नोति ? अथ चेत् परमेश्वरः पुण्यपापाभ्यां विनैव स्वेच्छया मानवैर्निरयं प्रपूर्य तान् क्लिशयति क्रीडाकौतुकञ्च पश्यति नूनं तादृशः परमेश्वरो नितरामन्यायाचारी निर्दयश्च वर्त्तते। एतादृशोपदेशसंयुक्तं पुस्तकं परमेश्वरस्य विदुषो वा कृतिर्भवितुमर्हति ? निर्दयो न्यायपथप्रच्युतश्च जात्वपि नार्हति परमेश्वरो भवितुम्।

(१२८) कथय युष्माकं न कर्हिचिदपि हिताय भविष्यति, (मृत्योर्युद्धाद् वा पलायनम्) अयि देवदूताङ्गनाः ? या काचिद् युष्मासु निर्लज्जतया समेष्यति तस्या दण्डो द्विगुणं करिष्यते एतच्च परमात्मने सरलम्।

—सू० ३३। आ० १६, ३०

स०—मोहम्मदमहाभाग इदमेतदर्थमलिखदलेखयद्वा येन संग्रामात् कोऽपि न पलायेत, अस्माकं विजयो भवेत्, सैन्यं मृत्योरपि न बिभीयात्, समृद्धिः प्रवर्धेत, धर्मश्च सर्वत्र प्रसरेत्। अथ यदि देवदूताङ्गना निर्लज्जतया नागच्छेयुस्तर्हि किं देवदूतस्तथाचरेत् ? भार्यासु दोषः परापतेन्नतु देवदूत इति न्याय्यमेतत् ?

(१२९) स्वगृहेष्वेव तिष्ठत…परमात्मनस्तदीयदूतस्य चादेशमनुरुध्यध्वम्, यदा किल जैदस्तया सह विषयेऽस्मिन् निरवधारयामास—तदा वयं तां तेन पर्यणैष्म येन विश्वासमापन्नेष्वङ्गनानां सङ्कोचो माभूद् यदा ते

ताभिर्निरवधारणं कुर्युः परमात्मन आदेशञ्चाप्नुयुः तदा परिणयेरन्। परमात्मना समाज्ञप्ते नास्ति देवदूतस्य कोऽपि दोषः। मोहम्मदमहाभागश्च नास्ति कस्यापि जनकः। विश्वासमापन्ना च योषिदनुज्ञाता येश्वरप्रेरिता-यात्मानं प्रयच्छति। यां काञ्चित् स्वेच्छया त्वं परित्यजेः, अपरां च यथाकामं गृहाण, नास्ति त्वयि किञ्चिदपि पातकम्। अयि विश्वासमापन्ना जनाः! देवदूतस्य सद्म मा प्रविशत।—सू० ३३। आ० ३३,३७,३८,४०,५०,५१,५३

स०—नन्वयं महानन्यायो यत् योषितो वन्दिन्य इव गृहेष्ववरुद्धा भवेयुः पुमाँसश्च स्वेच्छया यत्र तत्र विहरेयुः। अपि योषितां चेतः परिपूतवायौ विशुद्धप्रदेशेषु परिभ्रमितुं जगतो नैकवस्तूनि समीक्षितुञ्च नाभिलषति? अनेनैव दोषेण यवनकुमाराः स्वैरिणो विषयिणश्च भवन्ति। परमात्मन-स्तदीयसंदेशहरस्य चैकोऽविरुद्ध आदेश उत मिथो विरुद्धा भूयांसः समादेशाः। तत्र यदि समान आदेशस्तह्युभयोर्निदेशः पाल्यतामिति कथनं व्यर्थमेव, अथ यदि मिथो विरुद्धाः पृथक् पृथक् च तर्हि तत्रैकं शासनं सत्यमपरञ्चालीकं भविष्यति, एवञ्च तयोरेकः परमेश्वरोऽन्यश्च दियावलः सम्पत्स्यते, भागहरत्वञ्च सञ्जनिष्यते। धन्यः खलु कुराणवर्णितः परमेश्वरः, पैगम्बरः कुराणग्रन्थश्च। परार्थं विनाश्य स्वार्थसाधनतत्परेणैवेदृश्यो लीलाः संविधी-यन्ते। एतेन मोहम्मदमहाभागस्य विषयित्वमभिव्यक्तं भवति अन्यथा हि लेपालकस्य भार्यां पुत्रवधूं कथं पत्नीत्वेन परिगृह्णीयात्? परमेश्वरोऽपि तथाचरतः पक्षपातञ्चकार, अन्यायं च न्यायं व्यदधात्। मानवेषु वनेचरोऽपि पुत्रवधूं न परामृशति। पैगम्बरस्य विषयोपभोगे मनागप्यप्रतिबन्धः कियान-न्यायः? अथ चेन्नविः कस्यापि जनको नासीत् तर्हि लेपालकः कस्य सूनुर-भवत्? यदा च मोहम्मदमहाशयः पुत्रवधूमपि भार्यात्वेन नात्याक्षीत् तदाऽन्या न परामृशदिति कथं सम्भाव्यम्? इत्थं चातुर्येणापि पापाचारं गर्हता न कर्हिचिद् विप्रमोक्तुं शक्यते। पराङ्गनापि यदि नबिमभिलषन्ती तेन पाणिग्रहणमिच्छेत्तर्हि किं तदपि साधीयः? अयं पुनर्महाधर्मो यत् पैगम्बरमहाशयः स्वेच्छया यां काञ्चिदपि योषितं त्यक्तुमर्हेत् परं तदीयभार्या नबेः सापराधत्वेऽपि तं त्यक्तुं न शक्नुयुः। पैगम्बरमहाशयस्य सद्मनि व्यभिचारधिया यथान्यैर्न प्रवेष्टव्यं तथा तेनापि कस्यचिन्निकेतने न प्रवेष्टव्यम्। नबिमहाभागः परनिकेतनेषु यथाकामं विहरन्नपि समादरणीयो भवेदिति न्याय्यमेतत्? कस्तादृशो बालिशो यो वै कुराणग्रन्थं परमेश्वर-प्रणीतं, मोहम्मदमहाशयं पैगम्बरं, कुराणवर्णितञ्चेश्वरं परमेश्वरं मन्येत? अरबदेशवासिनो युक्तिशून्यमधर्म्यं मतमिदं स्वीचक्रुरिति महदाश्चर्यम्?

(१३०) नैतद्युष्माकं समुचितं यद् यूयं परमात्मनः सन्देशहरं पीडयेत तदसान्निध्ये च तदीयभार्याः कदाचिदपि परिणयेत एतद्धि परमात्मनः समक्षे

महापातकम् । ये केचन परमेश्वरं तत्सन्देशवाहकं च दुन्वन्ति नियतं ते परमात्मना धिक्क्रियन्ते । ये च यवनान्, यवनाङ्गनाश्चातदर्हा अपि पीडयन्ति तैरनुचितमाचर्यते, मिथ्याभिशापः पातकञ्चादीयते । अभिशप्ता यत्र लभ्येरन् तत्रैव ध्रियेरन्, व्यापाद्येरंश्च । अयि प्रभो ! अस्माकं द्विगुणदण्डेन तान् दण्डय, महच्छापेन तानभिशप ।—सू० ३३ । आ० ५३, ५७-५८, ६१, ६८

स०—अहो यवनानां परमेश्वरः स्वीयसामर्थ्यं कथमपक्षपातेन दर्शयति ? परमेश्वरसन्देशहराय क्लेशप्रदानान्मानवानां वारणं न्याय्यमेव परं तथैव पैगम्बरेणान्यनिपीडननिषेधोऽपि युक्त आसीत् कथं स तथा न व्यधात् ? अपि कस्मैचन क्लेशप्रदानेन परमेश्वरोऽपि दूयते ? दूयते चेन्न स परमेश्वरो भवितुमर्हति । परमात्मने तदीयसन्देशवाहकाय च क्लेशप्रदाननिषेधेन किं नैतत्सिद्धयति यत् तौ यथाकामं यं कमपि दुन्वीयाताम् ? अप्यपरेषां सकलप्राणिनां परिपीडनं समुचितम् ? अथ चेत् यवनानां यवनयोषिताञ्च निपीडनं गर्ह्यं तर्हि तदतिरिक्तजनार्दनमपि सुतरामन्याय्यम् । अन्यथायमपि तदुपदेशः पक्षपातसंयुक्तः । महीमण्डलेऽस्मिन् परमेश्वरस्तत्सन्देशहरा इवान्येऽल्पीयांस एव मानवा निष्ठुरा भविष्यन्ति । कुराणग्रन्थ इव यदि कश्चिदन्योपि समादिशेद् यवना यत्रैव लभ्येरन् तत्रैव धृत्वा व्यापाद्येरन्निति किमेतेन यवनाः सन्तप्तचेतसो न भविष्यन्ति ? अतो पैगम्बरप्रमुखाः कीदृग्निष्ठुरचेतसो ये हि स्वव्यतिरिक्तान् द्वैगुण्येन पीडयितुं परमेश्वरं प्रार्थयन्ते, इदमपि कथनं पक्षपातयुतं स्वार्थसाधनतत्परमधर्म्यं च । अतएवाद्यापि यवनेषु भूयांसो दुरात्मानस्तथाचरणे मनागपि न बिभ्यति । "शिक्षां विना मानवः पशुवद्विचेष्टते" इति यथार्थमेवैतत् ।

(१३१) स खलु परमेश्वरो यो वै पवनान् प्रेषयति, मेघानुन्नयति वयञ्च तान् (वृष्टिविज्ञानेन) मृतानां पुरं प्रति प्रेरयामः, अतोऽस्माभिरियं मही तन्मरणानन्तरं सोच्छ्वासिता । इत्थमेव शवागारेभ्यो निष्क्रमणीयम् । येन वयं स्वानुग्रहेण सर्वदा वासाय निकेतनेष्ववतारिताः । यत्र वयं परिश्रमेणामयैर्वा नाभिभूयामहे ।—सू० ३५ । आ० ९, ३५

स०—अहो परमात्मनः कीदृशं विज्ञानम्, स हि पवनान् प्रेषयति, मेघानुत्थापयन्परिभ्रमति, साधनैरेतैश्चोपरतान्प्राणयति । नेदं कार्यं कर्हिचित् परमात्मनो भवितुमर्हति तत्कार्यं हि सर्वदैकरसं सञ्जायते । निर्माणं विना गृहाणि न स्थातुं प्रभवन्ति, निर्मितञ्च वस्तु न जातु नित्यमवतिष्ठते, देहवान् खलु श्रमव्यतिरेकेण दूयते व्याधिभिश्च परिभूयते । योषितैकयापि कृतसमागमो यदा रोगैर्न विप्रमुच्यते तदा भुक्तानेकाङ्गनस्य का दुरवस्था भविष्यतीति सुधीभिरेवाकलनीयम् । तस्मात् यवनानां स्वर्गनिवासोऽपि सर्वदा सुखप्रदो न शक्नोति भवितुम् ।

(१३२) शपेऽहं बोधावहकुराणग्रन्थेन, त्वं हि परमात्मनः सन्देशवाहकेष्वेकतमः। ऊरुविक्रमदयालुपरमात्मना ऋजुपथ प्रदर्शयितुमवतारितः।

—सू० ३६। आ० २—५

**स०**—यद्ययं कुराणग्रन्थः परमेश्वरविरचितोऽभविष्यत् कथं तर्ह्यनेन सोऽशप्स्यत ? अथ चेन्नबिः परमात्मनो वार्तावह आसीत् कथं तर्हि (लेपालकस्य) तनयस्य वधूप्रेम्णि समासजत् ? कुराणानुयायिनः सरलमार्गावलम्बिन इत्युक्तिमात्रम्, स एव ह्यवक्रः पन्था यत्र सत्यस्य मननं, सत्यभाषणं, सत्याचारः, निष्पक्षपातं, न्यायधर्मानुष्ठानं, तद्विरुद्धपरित्यागश्च समुपदिश्यते। एतच्च न कुराणग्रन्थे, न यवनेषु नाप्येषां परमात्मनि समवलोक्यते। अथ यदि पैगम्बरो मोहम्मदमहाशयः सर्वेषु विक्रान्तोऽभविष्यत्तर्हि सर्वेभ्यो विद्वत्तमः शुभगुणसम्पन्नश्च कथं नाभवत् ? कटुबदरीफलविक्रेत्र्या स्वफलानां-मिथ्या मधुरत्व कथनमिव मिथ्या प्रशंसनमेतत् ?

(१३३) सञ्जात एव तुर्यनादे सर्वे एव हि ते शवस्थाने-(स्थिति)-भ्यस्तुरन्तं समुत्थाय स्वस्वामिनमुपधाविष्यन्ति। पद्गतिश्चैषां साक्षिरूपेण स्थास्यति "कियद्विधस्तेषामाजीविकार्जनप्रकारः" इति। ईश्वरादेशव्यतिरिक्तस्य नान्यस्य कस्यचिद्वस्तुनः क्वचित्प्रभुत्वम्। यदा ह्येव स किञ्चिन्निश्चिनोति तदैव स केवलं समादिशति, अथ च सर्वं सम्पद्यते।

—सू० ३६। आ० ५१, ६५, ८२

**स०**—शृणुत साम्प्रतमनर्थकप्रलापान्, अपि चरणान्यपि साक्ष्यं प्रदातुमर्हन्ति ? परमेश्वरातिरिक्तः कस्तदानीमासीत् यो वै समादिष्टः ? केनाश्रावि ? कश्च समुत्पन्नः ? तदानीञ्चेत्किञ्चिदन्यन्नासीत् तर्हीदं मृषा भवति, अथ चेदासीत् किञ्चिदन्यदपि तर्हि परमात्मनो भिन्नं किमपि नासीत् तेनैव सर्वमिदमुदपादीति मिथ्या सम्पद्यते।

(१३४) मद्यपायिन आनन्दयितुं शुद्धसीधुचषकं सर्वतो भ्रामिष्यते। तेषामन्तिकेऽधःकृतेक्षणाः शोभनदृश उपवेक्ष्यन्ति, ध्रुवमेतानि (अक्षीणि) तिरोहिताण्डानि। अपि वयं न मरिष्यामः ? असंशयं लूतः पैगम्बरेष्वन्यतमः। पृष्ठतोऽनुयायिनीं वृद्धामेकां विना सोऽशेषतत्परिवारश्चास्माभिर्मोक्षं प्रापितः। तदनु वयमन्यानवधिष्म।

—सू० ३७। आ० ४५, ४६, ४८, ५८, १३३-१३६

**स०**—यवनाः किलात्र क्षितौ मद्यपानं पातकमित्युद्घोषयन्ति परमेषां स्वर्गे मैरेयसरितः प्रवहन्ति। कथञ्चिदत्र सीधुपानं परित्याजितमिति समीचीनमेव परमेषां त्रिदिवे महान् व्युत्क्रमः। प्रभूताङ्गनावशात् तत्र कस्यापि चेतः शान्ति नाप्स्यति। महान्तश्च व्याधयोऽपि जायन्ते। स्वर्गवासिनश्चेच्छरीरिणो नियतं मृत्युमुपैष्यन्ति। अथ चेद्देहविवर्जिता न विषयानुपभोक्तुं

शक्यन्ते। एवञ्चैतेषां स्वर्गलाभ एव निष्फलः सम्पद्यते। लूतञ्चेत्पैगम्बर-मभ्युपेथ तर्हि बाइबिलवर्णित "तदीयदुहितरस्तत्समागमेन पुत्रद्वयमासे-दुरित्यपि स्वीकुरुथ न वा ?" स्वीकुरुथ चेत्, एतादृशस्य पैगम्बरत्वाभिमननं मौर्ख्यमेव। तस्मै तत्सहचरेभ्यश्च मोक्षदायकः परमेश्वरोऽपि तत्समानः, नहि वृद्धोपाख्यानाख्यायकः पक्षपातेन परेषां घातकश्च कर्हिचिदपि परमेश्वरो भवितुमर्हति ? एतादृशः परमेश्वरो यवनानामेव सद्मसु निवस्तुमर्हति नत्वन्यत्र।

(१३५) शाश्वतनिवासायोद्यानभवनानि विद्यन्ते येषां द्वाराणि तदर्थमपावृतानि। ते च तत्र सोपवर्हं संवेक्ष्यन्ति, नानाविधफलानि पानीय-वस्तूनि चानाययिष्यन्ति। अधःकृतेक्षणास्तत्समवयोजुषस्तदन्तिके समुप-वेक्ष्यन्ति। सर्वे देवदूताः प्राणमन्। परं दियावलो नाङ्गीचकार, स हि सगर्वः सन् नास्तिकोऽभवत्। अयि शैतान ! यमहं पाणिद्वयेन निरमां तदभिवाद-नात्कस्त्वां न्यवारयत् ? कथञ्च गर्वमावहसि, अपि त्वं महाधिकारेष्वन्यतमः कश्चित् ? स प्रत्युवाच—"वरीयान् खल्वहं तदपेक्षया त्वं हि मां जातवेद-सस्तञ्च मृदः समुदपादयः"। परमेश्वरस्तं प्राह—"अतस्त्वमितस्त्रिदिवाल-यान्निःसर त्वं हि केनचित्प्रतारितोऽसि। प्रलयवासरपर्यन्तं त्वयि ममाभि-शापः"। स पुनराह—"अयि मम प्रभो ! शवोत्थानदिवसं यावत् मां परि-त्यज"। परमेश्वरः प्राह—"विज्ञातसमयं यावत् त्वमवकाशलब्धेष्वन्यतमः"। दियावलः प्राह—"तव प्रतिष्ठया शपेऽसंशयमहं तान् व्यामोहयिष्यामि"।

—सू० ३८। आ० ५०, ५२, ७३-८२

स०—यदि तत्र स्वर्गे कुराणग्रन्थवर्णनानुरूपाणि कुल्योद्यानभवनानि विद्यन्ते तर्हि तानि नानन्तकालादासन्, नाप्यनन्तकालं स्थातुमर्हन्ति। संयोगादुत्पन्नो हि पदार्थः संयोगात् पूर्वं न भवति, अवश्यम्भाविनो वियोग-स्यान्ते च विनश्यति। उद्यानादिवस्तूनामभावे च तन्निवासिनः कथं निवस्तु-मर्हन्ति ? वैकुण्ठे उपधानफलपेयवस्तूनि लप्स्यन्त इति लेखेन यवनमतप्रारम्भ-समयेऽरबविषयो नासीद्विशेषसम्पन्न इति सुतरां सिद्ध्यति। अत एव मोहम्मदमहाशय उपवर्हादिलाभकथामाख्यायाकिञ्चनान् स्वमते विमोह-यामास। योषितां प्रदेशेषु क्वास्ति शाश्वतं सुखम् ? अङ्गनाश्च कुतस्तत्र समायन् ? आहोस्विद् वैकुण्ठवासिन एव ताः ? देशान्तरा-च्चेदागता अवश्यं प्रतिनिवर्त्स्यन्ति, वैकुण्ठ एव चेत्सततं निवसन्ति प्रलयवासरात्पूर्वं किमकुर्वन् ? अपि निर्व्यापारमेव स्वायुर्व्यत्यापयन्ति ? साम्प्रतं परमात्मन-स्तेजो निरीक्ष्यताम्—"परमात्मन आज्ञां वहन्तः सर्वं एव देवदूता आदम-महाशयं प्राणमन् परं दियावलो नाङ्गीचकार। परमेश्वरो दियावलं प्राह अहमिमं पाणिद्वयेन निरमां त्वं माभिमंस्थाः" इति। एतेन "कुराणग्रन्थ-

वर्णितः परमेश्वरो हस्तद्वयवानासीदिति" सुव्यक्तं भवति, अतएव स व्यापकः सर्वशक्तिमान् वा भवितुं नार्हति। अपि च आदमतः श्रेयानहमिति तथ्येऽपि दियावलवचसि स कथं चुक्रोध ? अप्यन्तरिक्ष एव परमात्मनो निकेतनं न तु पृथिव्याम् ? एवञ्चेत् किमर्थं कावाप्रदेशः परमात्मनो निकेतनं पूर्वमभिहितम् ? परमेश्वरः कथं कमपि स्वस्मात् सर्गाद्वा वियोजयितुमर्हति ? यतः सर्वमपीदं ब्रह्माण्डं परमेश्वरस्यैव। एतद्धि 'कुराणग्रन्थपरमेश्वरः केवलं वैकुण्ठस्यैवोत्तरदायक आसीदिति' स्पष्टं व्यनक्ति। परमेश्वरो दियावलमभिशप्य धिक्कृत्य च कारायां निचिक्षेप। दियावलः प्राह। "अयि प्रभो परिमुञ्च मां प्रलयवासरं यावत्।" परमेश्वरश्च तं चाटूक्तिभिः परिमुमोच। तदनु स्वतन्त्रः सन् दियावलः प्राह "इदानीमहं सम्यग् मोहयिष्यामि, प्रकृतिक्षोभञ्च जनयिष्यामि।" परमेश्वरः प्रत्यवादीत् "त्वया विमोहितान् त्वाञ्च निरये पातयिष्यामि" इति। धीमन्तः! अत्र किमपि विचार्यताम्—दियावलं परमेश्वरो विमोहयति स्वत एव वा स व्यामुग्धः ? परमेश्वरश्चेत्तं व्यामुमोह स शैतानस्यापि शैतानः सम्पन्नः ? स चेत्स्वयं व्यामुग्धोऽन्येऽपि जीवात्मानः स्वतएव व्यामोक्ष्यन्ति। एवञ्च नास्ति दियावलस्य किमपि प्रयोजनम्। परिमोहिणो दियावलस्य विमोक्षेण 'परमेश्वरोऽपि तस्याधर्मानुष्ठाने सहायकः प्रतीयते'। दस्युं स्वयं स्तैन्ये प्रवर्त्य दण्डयितुरन्यायस्य कः पारावारः ?

(१३६) परमेश्वरो नियतं सकलपापानि क्षमते, स हि दयालुः क्षमाप्रदश्च। मृतोत्थानवासरे सर्वापीयं मही तन्मुष्टिसन्निहिता, आकाशाश्च तत्सव्यपाणौ परिवेष्टिताः। स्वप्रभोः प्रकाशेन महीयं विद्योतिष्यते, कर्मपत्राणि सन्निधास्यन्ते, देवदूताः साक्षिणश्चानाययिष्यन्ते, न्यायश्च विनिर्णेष्यते।—सू० ३९। आ० ५३, ६७, ६९

स०—निखिलपातकानि चेत्परमेश्वरः क्षमते तर्हि स कृत्स्नं जगत् पापे प्रवर्तयन्निर्दयोऽस्तीति वेद्यम्। एकोऽपि दुर्वृत्तो दयाक्षमाप्रदानेन पूर्वतोऽभ्यधिकं दौर्जन्यमाचरिष्यति भूयसश्चापरान् पुण्यकृतः पीडयिष्यति। अल्पापराधक्षमायामपि कृत्स्नं जगत्पातकैः पूर्णं भविष्यति। अपि परमेश्वरोऽग्निरिव प्रकाशते ? कर्मपत्राणि क्व सन्निहितानि भवन्ति ? कश्च तानि विलिखति ? पैगम्बरसाक्षिणामवलम्बेन चेत्परमेश्वरो न्यायं विधत्ते तर्ह्यसर्वज्ञोऽशक्तश्च सञ्जायते। अथ चेदन्यायं परिहरन्न्यायमेवाचरति "कर्मानुसारेणैव तर्हि कर्त्तुमर्हति तानि च पूर्वापरवर्तमानजन्मनामेव भवितुमर्हन्ति। एवञ्च पातकक्षमाविधानम्, चेतसां मुद्रयाङ्कनम्, मानवेभ्यः शिक्षाऽप्रदानम्, दियावलेन तेषां विमोहनम्, निपीडनञ्च महानन्यायः।

(१३७) पुस्तकावतारणं सामर्थ्यवतः सर्वज्ञस्य परमात्मनः सकाशात् स हि पातकानां क्षन्ता अनुतापस्याभ्युपेता च।—सू० ४०। आ० २, ३

स०—सरलचेतसो जनाः परमात्मनो व्यपदेशेन पुस्तकमिदं विश्वसेयुरित्ययं प्रपञ्चो यत्र ह्यल्पीयः सत्यमसत्यञ्च बहुलम्, तत्रसत्यमप्यलीकसंसर्गेण भवति दूषितप्रायम्। अतएवायं कुराणग्रन्थः, अत्र वर्णितः परमेश्वरः, एतदनुयायिनश्च पापानि वर्धयन्ति। स्वयमाचरन्तोऽन्यान् पापेषु प्रवर्तयन्ति। पापक्षमाविधानं हि महानधर्मः, अतएव च यवनाः पातकोपद्रवानुष्ठाने मनागपि न बिभ्यति।

(१३८) स च वासरद्वये सप्ताकाशान् निरमात्। प्रत्येकस्याञ्च दिवि तद्व्यापारमकल्पयाम तदन्तिकमुपागतेषु तेषां श्रवांसि, चक्षूँषि, चर्माणि च तद्विरुद्धसाक्ष्यं प्रदास्यन्ति, ते च निजकर्णान्, 'अस्मद्विरुद्धं कथं साक्ष्यं प्रादायि युष्माभिरिति' वक्ष्यन्ति। ते प्रतिवक्ष्यन्ति 'सर्वेषामाह्वायकेन परमात्मना वयमाकारिताः'। स ह्यसंशयं मृतान् प्राणयति।

—सू० ४१। आ० १२, २०, २१, ३९

स०—साधु! यवनाः साधु! सर्वशक्तिमानित्यभिमतो युष्माकं परमेश्वरः सप्तदिवो वासरद्वये निर्मातुमशकत्? वस्तुतः सर्वशक्तिमान् क्षणमात्रेण सर्वं निर्मातुं प्रभवति। परमात्मना श्रोत्र-चक्षुश्चर्मण्यचेतनानि निर्मितानि कथं तर्हि साक्ष्यं प्रदातुमर्हन्ति। साक्ष्यमेव चेत् प्रदापयितुमावश्यकं तर्हि कथं प्रथममेवाचेतनान्युत्पादितानि? कथञ्चात्मनो नियमविरुद्धमन्वतिष्ठत्? अतोप्यधिकतरमलीकमिदम्—'यदा ह्यङ्गानि जीवात्मनः प्रतीपं साक्ष्यमददुस्तदा ते (जीवाः) स्वीयत्वचमपृच्छन् कथं त्वमस्मद्विरुद्धं साक्ष्यमदा इति? त्वक्प्रत्यवादीत् "किमहं कुर्यां परमेश्वरस्तथाकारयत्" इति। अपि कर्हिचिदेवं भवितुमर्हति? "वन्ध्यापुत्रमुखमहमद्राक्षमिति," कस्य चिद्वच इवेदमप्यलीकमेव"। पुत्रसद्भावे हि कथं वन्ध्यात्वम्, वन्ध्यायाश्च कथं पुत्रसमुद्भवः? शवांश्चेज्जीवयति कथं तर्हि प्रथममेव तान् निहतवान्? परमेश्वरः स्वयमपि शक्नोत्युपरन्तुम्? अथ चेन्न शक्नोति कथं तर्हि शवत्वं गर्ह्यमाकलयति? प्रलयरात्रिं च यावत् मृतप्राणिनः कस्य यवनसद्मनि निवत्स्यन्ति? निरपराधाँश्च तान् कथं पर्यवेक्षणे संस्थापयामास। कथञ्च तेषामञ्जसैव न्यायनिर्णयं न व्यधात्? ईदृशैरेव व्यवहारैः परमेश्वरत्वं कलङ्कितं सञ्जायते।

(१३९) तस्य द्यावापृथिव्यौ कुञ्चिके। स स्वेच्छया कस्मैचिन्मुक्तहस्तोऽपरस्मै च बद्धमुष्टिर्भोजनं प्रयच्छति। स यत्कामयते तन्निर्माति। स यस्मै वाञ्छति तस्मै तनयां तनयं वा विश्राणयति, कस्मैचिच्चोभयजातीयं प्रयच्छति। स्वकामतश्च यां कामपि वन्ध्यां करोति। परमेश्वरस्तेन सह

संलपेदिति कोऽपि मानवो नार्हति परं मनःकल्पनया तिरस्करिणीव्यवधानेन[1] वा (संलपितुमर्हति)। स च सन्देशवाहकान् दूतान् प्रैषयत्।

—सू० ४२। आ० १२, ४९—५१

स०—कदाचित् परमेश्वरस्तालिकानां राशीन् सन्धत्ते, तेन हि सर्वदेशतालकानि मोक्तव्यानि भवन्ति। पुण्यकर्मान्तिरेणैव स्वेच्छया यं कमप्यैश्वर्यवन्तं करोतीति बालिशत्वम्। अन्यच्च (पापमन्तरेणैव) क्लिश्नातीति महानन्यायः। कुराणग्रन्थप्रणेतुश्चातुर्यं समीक्ष्यताम्। योषितोऽपि विमुह्य स्वमते समागच्छेयुरिति। यथेच्छया सर्वमुत्पादयितुं समर्थो (युष्माकं) परमेश्वरोऽन्यं परमात्मानमप्युत्पादयितुमर्हति न वा? न चेच्छक्नोति तस्य सर्वशक्तिमत्ता हीयते।

(१४०) यदा च यीशुः प्रत्यक्षप्रमाणेनेहागमत्।—सू० ४३। आ० ६३

स०—यीशुरपि परमात्मनैव प्रहितश्चेत्किमिति तदुपदेशविरुद्धं परमेश्वरः कुराणं व्यरचयत्। बाइबिलग्रन्थश्च कुराणं विसंवदते, अतः पुस्तकद्वयमपीदं परमेश्वरकृतं न वर्तते।

(१४१) धरत, तमवकर्षत निरयम्। इत्थमेव (ते तत्र) स्थास्यन्ति। वयञ्च तान् गौरीभिर्वामनेत्राभिः परिणाययिष्यामः।--सू० ४४।आ० ४७,५४

स०—अहो नु न्यायकारी परमेश्वरः प्राणिनो ग्राहयति, अवकर्षयति च। यदा च यवनानामीश्वर एवेदृशो वर्तते तदा तदुपासका निराश्रयनिर्बलान् धरेयुरवकर्षेयुर्वा किमत्राश्चर्यम्। स च संसारी जन इव परिणयमपि सम्पादयति नूनं पुरोहित एवास्ति।

(१४२) यदा यूयं नास्तिकैः सङ्गताः स्यात तदा तेषां शिरांस्यवकर्त्तयत। महद्वैशसञ्च तेषु जनयत। सुदृढञ्च तान् सन्दानयत। भूयांसि नगराणि तत्पुरः समपेक्षया यतस्त्वं निष्कासितो बलवन्त्यासन्, अस्माभिस्तानि विनाशितानि। नासीत्कोऽपि तेभ्यः साहाय्यप्रदः। अहो रामणीयकं स्वर्गस्य, यः पुण्यात्मभ्यः प्रतिश्रुतः। यत्रानाविलवारिणः, अपरिवर्त्तितरसपयसः, मद्यपानां कृते सुस्वादुमाध्वीकस्य च सरितः प्रवहन्ति। किञ्च

---

१. आयतस्यास्य तफसीरहुसैनीभाष्ये विलिखितम्—यन्मुहम्मदो महाभागः पटद्वयान्तरे स्थितः खुदाया आह्वानम् (ध्वनिम्) अशृणोत्। पटमेकं जरीजटितमपरञ्च श्वेत मौक्तिकमयमासीत्। उभयोरन्तरालं हि सप्ततिवर्षयात्रामितमासीत्। मतिमन्तो-विचारयेयुः—यदयं खुदानामधेयः परमेश्वरः, पटान्तरसंवादिनी रमणी वा काचित्? एते मूर्खजनास्तु परमेश्वरमेव दुःस्थितिमनयन्। क्वहि वेदोपनिषदादिसद्ग्रन्थेषु प्रतिपादितः परमशुद्धः परमेश्वरः, क्व च कुरआनवर्णितः पटान्तरसंवादशीलोरमणीजनसदृशः खुदा? वास्तविकमेतद् यत् अरबराष्ट्रवासिनोऽविद्वांस आसन्। कुतो हि ते उत्तमं वृत्तजातमधिगच्छेयुरिति।

परिष्कृतपूतस्य मधुनस्तरङ्गिण्यः सन्ति। तत्र च प्रभुणा प्रदत्तानि सर्वविध-फलानि तेषां कृते वर्तन्ते।—सू० ४७। आ० ४, १३, १५

**स०**—एतेनायं "कुराणग्रन्थः, तत्परमेश्वरः यवनाश्चोपद्रवजनकाः, सर्वेषां निपीडकाः स्वार्थसाधका निष्करुणाश्च वर्तन्ते" इति प्रतीयते। यथात्र विलिखितं तथैव यदि परधर्मावलम्बिनो यवनेषु व्यवहरेयुः नूनं तेऽपि तथा दुःखभाजो भवेयुर्न वा यथा ते परान् दुन्वन्ति। (यावनः) परमेश्वरश्च महान् पक्षपाती यतः किल मोहम्मदमहाभागस्य हन्तॄन् स व्यनाशयत्। निर्मल-वारिदुग्धमद्यमधूनां सरिद्भिः संयुक्तः स्वर्गः जगतोऽधिको भवितुं शक्नोति कर्हिचित्? किञ्चापि दुग्धस्य कुल्याः सम्भवन्ति? यतो वै तदल्पीयसैव कालेन दूषितं सञ्जायते। अत एव बुद्धिमन्तो कुराणमतं न मन्यन्ते।

(१४३) यदेयं मही निर्घातेन कम्पिष्यते? पर्वताः शकलीभविष्यन्ति ते च विशीर्णाः सन्तो रजोरूपाः सम्पत्स्यन्ते। ततो दक्षिणहस्तवर्त्तिनो मनुजाः, दक्षिणहस्तवर्तिनो मनुजाः कीदृशाः? वामहस्तस्थितपुरुषाः, वामहस्तस्थिताः पुरुषाः कीदृशाः सन्ति। उपरि शयनपर्यङ्काः सन्ति सुवर्णसूत्रैः खचिताः तदुपरिष्टाच्चाभिमुखमुपधानानि सन्निहितानि वर्त्तन्ते। तत्र सदावासिनः कुमाराः चषकैः (उदकपात्रैः) स्वच्छमदिरापरिपूर्णैः पानपात्रैश्च सह निवत्स्यन्ति। तेन मस्तकानि नार्दयिष्यन्ते नापि ते विरुद्धं वक्ष्यन्ते। शोभनानि फलानि पशुपक्षिणां मांसानि च वर्तन्ते। तदर्थञ्च चारुदृशः सुभ्रुवस्तत्र विद्यन्ते यासामक्षीणि स्वपुटान्तर्हितमौक्तिकसन्निभानि। महान्ति चास्तरणानि। असंशयमस्माभिरङ्गनाः समुत्पादिताः ताश्च कुमार्यः सञ्जनिताः। सौभाग्य-वत्यः समायुषश्च। तेन च स्वोदरं बिभृत। नक्षत्रपतनेनाहं शपे।

—सू० ५६। आ० ४, ६, ८, ९, १५-२३, ३४-३७, ५३, ७५

**स०**—साम्प्रतं कुराणप्रणेतुर्लीलाभिसमीक्ष्यताम्—ननु महीयं सर्वदैव कम्पते तदानीमपि च कम्पिष्यते। "अयं कुराणप्रणेता भुवं स्थिरामवागच्छ-दिति" प्रतीयते। पर्वतान् पक्षिण इव किमुड्डाययिष्यति? अथापि ये कृमयो जायेरन् तेऽपि सूक्ष्मदेहधारिणो भविष्यन्ति कथं पुनस्तेषामपरं जन्म न मन्यते? यदि नाम यवनपरमेश्वरः शरीरी न भवेत् कथं तर्हि तस्य सव्यापसव्यपार्श्वयोः स्थातुं शक्नुयुः? अथ तत्र स्वर्गे सुवर्णसूत्रखचिताः पर्यङ्काः सन्ति नूनं तर्हि तक्षस्वर्णकारादयोऽपि भवेयुः। मत्कुणाश्चापि भविष्यन्ति ये तान् नक्तं दशनेन पीडयिष्यन्ति। किं ते तत्र स्वर्गे कृतोपधाना निश्चेष्टमवतिष्ठन्ते उत किमपि कार्यं कुर्वन्ति? निश्चेष्टमवस्थिताः स्युश्चेद्यथावदन्नपरिपाका-भावात्शीघ्रमेवोपरता अपि भविष्यन्ति। अथ चेत्किमपि कार्यं कुर्वन्ति तद्यथात्र (लोके) परिश्रमेण मजूरीं विदधति तथैव तत्रापि परिश्रमेण लोकयात्रां सम्पादयिष्यन्ति। कः पुनः स्वर्गपृथिव्योर्विशेषः? न किञ्चिदपि।

यदि तत्र कुमारा अहर्निशं निवसन्ति तत्तेषां जननीजनकादयोऽपि नूनं स्युः, श्वश्रूश्वशुरप्रभृतयोऽपि च भवेयुः। एवञ्च तत्र महती नगरी पर्यवस्थिता स्यात्। पुनश्च मलमूत्रादीनां प्रवृद्धया रोगा अपि भूयांसो भविष्यन्ति। यतः किल यदा फलानि भक्षयिष्यन्ति, पानभाजनेषु पानीयं चषकेषु च मद्यं पास्यन्ति, न तेषां शिरःपीडा समुत्पत्स्यते नापि केनचित्तद्विरुद्धं वक्ष्यते यथेष्टं फलानि पशुपक्षिणाञ्च पिशितमत्स्यन्ति तदासंशयं तत्र विविधानि दुःखान्युत्पत्स्यन्ते। ये च तत्र पतत्रिणः पशवः स्युस्तेषां हत्या भविष्यति, यत्र तत्र चास्थीनि विकीर्णानि स्युः सौनिकानामापणाश्च भविष्यन्ति। अहो किमिव वर्ण्यतामेषां स्वर्गः स तु अरबदेशादपि महीयान् प्रतीयते। मद्यमांसाशिनां तेषां कृते वामलोचनाः कुमाराश्चावश्यं स्युरन्यथेदृशा मद्यपानप्रसक्ताः शिरसि सञ्जातौष्ण्येन प्रमत्ता भवेयुः। एवञ्च प्रभूतानां पुरुषाणामङ्गनानाञ्चोपवेशनाय स्वापाय च महद्भिरास्तरणैर्भवितव्यम्। यतः खलु (यावनः) परमेश्वरः कुमारीः स्वर्गे समुत्पादयति ततः कुमारानपि समवसृजति। (अत्रास्माभिरेतदुच्यते यत्) परमेश्वरेण कुमारीणां परिणयोऽस्या भुवः स्वर्गं प्रपन्नैः सह विलिखितः परं नित्यस्थायिनां कुमाराणां काभिरपि कुमारिकाभिर्नलिखितः किं तेऽपि कुमारीवत् तेभ्य एव परिणयार्थिभ्यः प्रदास्यन्ते। नात्र विषये किमपि परमेश्वरेण व्यवस्थापितं कथमत्र महानतिक्रमः सञ्जातः ? यदि समवयस्काः सौभाग्यवत्यः पतीन् सम्प्राप्य स्वर्गे निवसन्ति तन्नास्ति शोभनम्। यतो योषितामपेक्षया पुरुषाणामायुः सार्द्धं द्विगुणं वा समुचितम्। इयन्तु यवनानां स्वर्गस्य गाथा वर्तते। निरयवासिनश्च सिंहोडनामधेयतरून् भक्षयित्वोदरं भरिष्यन्ति एतेन "निरये कण्टकिनोऽपि वृक्षाः सन्तीति" प्रतीयते ततश्च कण्टकान्यपि तान् क्लेशयिष्यन्ति। सन्तप्तञ्च पयः पास्यन्ति एवमादीनि दुःखानि निरये लप्स्यन्ते। शपथाख्यानञ्चालीकभाषिणां कर्म नतु सत्यवादिनाम्। शपथपूर्वकं भाषमाणः परमेश्वरोऽप्यनृतात् पृथग्भवितुं नार्हति।

(१४४) असंशयं परमेश्वरस्तान् स्निह्यति ये तन्मार्गे युद्धयन्ते।

—सू० ६१। आ० ४

स०—साधु ! ईदृशीर्वार्ताः समुपदिश्य दीना अरबदेशवासिनः सर्वेषां शत्रुभावमापाद्य योधयित्वा च दुःखिताः। यश्च वृथैव मतमुद्दिश्य कलहं प्रवर्तयेत् तं न कोऽपि धीमान् परमेश्वरं मन्तुं शक्नोति। यः खलु मानवेषु विरोधं प्रवर्धयति स एव सर्वान् दुनोति।

(१४५) नबे ! यत्परमात्मना तुभ्यमादिष्टं कथं तदपवित्रं मन्यसे भार्याणां सम्प्रसादं कामयसे। परमेश्वरः क्षमाशीलो दयालुश्चास्ति। वस्तुतः परमेश्वरस्तस्य रक्षको यदि स त्वां परिमुञ्चेत्। तदीयप्रभुः तस्मै स्वत्तः

प्रशस्याः, यवनीः, विश्वस्ताः, सेविकाः, अनुशयविधायिनीः, भक्तिमतीः, उपवासशीलाः, पुरुषोपभुक्ताः कुमारीश्च भार्याः परिवर्तयेत् ।

—सू० ६६ । आ० १, ५

**स०**—मनागवहितेन चेतसा द्रष्टव्यम्—किमयं परमेश्वर उत मोहम्मद-महाशयस्य वाह्यान्तःप्रबन्धविधायको भृत्यः ? अत्र प्रथमायतसम्बद्धमाख्यायिकाद्वयं वर्त्तते । प्रथमा तावदियम्—मोहम्मदमहाशयाय मधूदकं (शरबत) रोचते स्म । तस्य भूयस्यो भार्याः समभवन् । एकदा तासामेकस्याः सद्मनि तत्पिबता चिरायितं तेन, तदपराः सोढुं न शेकिरे । तासां कथनेन "न वयं कर्हिचिदेतत्पास्यामः" इति मोहम्मदमहाशयः शपथञ्चकार । द्वितीया चेयम्—एकदा तस्य पत्नीनामेकस्याः पर्याय आसीत् यदा तत्र मोहम्मदमहाशयः समुपसेदिवान् तदानीं सा तत्र नासीदुपस्थिता सा हि निजपितुः सदनं गताभवत् । मोहम्मदमहाशयश्चैकां दासीमाहूय पवित्रयामास, वृत्तमिदमुपश्रुत्य भार्या भृशं रुरोष, ततो मोहम्मदमहाशयः "नाहमेवं भूयः करिष्ये" इति शपथञ्चक्रे । "न त्वयेयं वार्ता कस्मैचिदप्याख्येयेति, भार्यां जगाद । साप्येतदूरीचकार । पुनः स भार्यामपरां वृत्तमिदं जगाद । अत्रैव विषये परमेश्वर आयतमिदं प्राहिणोत् । "यदस्माभिः तुभ्यमादिष्टं कथं तदपवित्रं मन्यस इति" । अत्र धीमद्भिरेव विचिन्तनीयं—किमु परमेश्वरेणापि कस्यचिद् गृहव्यवहारा निर्णीयन्ते ? मोहम्मदमहाशयस्याचरणञ्चैतेन सुव्यक्तमेव, यतः किल यस्य बह्व्यो भार्या भवेयुः स कथङ्कारं परमात्मनो भक्तः पैगम्बरश्च भवितुमर्हति । यश्चैकां जायां पक्षपातेनापमानयेदपराश्च सम्मानयेत् स पक्षपातयुतः सन् कथं नास्त्यधर्मात्मा ? यश्च भूयसीभ्योऽपि भार्याभ्योऽसन्तुष्य दासीभी रमेत तस्य लज्जाभये धर्मश्च कुत्र स्थीयन्ते ? उक्तञ्च केनचित्—**कामातुराणां न भयं न लज्जा ।**

ये खलु कामिनो भवन्ति तेऽधर्मान्न बिभ्यति नापि लज्जन्ते । एषामीश्वरोऽपि मोहम्मदमहाशयस्य भार्याणां पैगम्बरस्य च कलहनिर्णये मध्यस्थ एवास्तीति मन्ये । अनेन बुद्धिमन्त एव विचारयन्तु "कुराणग्रन्थोऽयमीश्वरप्रणीतः कस्यचित्स्वार्थसिन्धोर्वा कृतिरस्तीति ।" मनाग्विचारेणैव स्पष्टं भविष्यति । द्वितीयायताच्च प्रतीयते यत् मोहम्मदमहाशयस्य काचिदङ्गना ततो रुष्टा भविष्यति । तस्माद् यवनपरमेश्वरेण आयतमिदं समवतार्य्य सा भीषिता भवेत् "यदि त्वं किमपि व्यतिक्रमं विधास्यसि तर्हि मोहम्मदमहाशयस्त्वां परिमोक्ष्यति तत्प्रभुश्च त्वत्तोऽपि प्रशस्या योषितः पुरुषासम्भुक्तास्तस्मै प्रदास्यति" इति । अल्पधीरपि कश्चिद्विचिन्तयितुमर्हति कर्माणीमानि परमात्मनः सन्त्युत स्वप्रयोजनसाधकस्येति ? ईदृग्विधाभिर्वार्ताभिः साधु सिध्यति यत् "परमेश्वरः किमपि न वदतिस्म केवलं देशकालौ संवीक्ष्य

स्वप्रयोजनसाधनाय परमात्मनो व्यपदेशेन मोहम्मदमहाशय एव ब्रवीति स्मेति ।" अत्र ये केचन सर्वमिदं परमात्मन्येव योजयन्ति तान् न केवलं वयमेवापितु सर्व एव धीमन्तः "एवञ्चेत् नायमीश्वरः प्रत्युत मोहम्मदमहाशयस्य कृते योषितामानेता नापितः समजनीति" प्रति वक्ष्यन्ति ।

(१४६) हे नबे ! नास्तिकैः प्रच्छन्नशत्रुभिश्च सह युद्धचस्व । ताँश्च निपीडय ।—सू० ६६ । आ० ९

**स०**—दृश्यताम्—यवनपरमेश्वरस्य लीला । स वै पैगम्बरं यवनाँश्चान्यमतावलम्बिभिः सह योद्धुमुत्साहयति । अत एव यवना उपद्रवानुष्ठाने सततं प्रवर्तन्ते । परमेश्वरो यवनेषु कृपां विदध्यात् येन ते उपद्रवं परित्यज्य सर्वैः सह मैत्रीभावेन व्यवहरन्ताम् ।

(१४७) आकाशो विदीर्णो भविष्यति । तदहनि च स ग्लास्यति । देवदूताश्च तस्य पार्श्वयोस्तदुपरि च भविष्यन्ति । तस्मिन् वासरे तव प्रभोः सिंहासनमष्टौ जनाः समुत्थापयिष्यन्ति । तस्मिन् दिने तदभिमुखमुपस्थापयिष्यध्वे । गुप्तापि काचन वार्ता न तिरोहिता भविष्यति । यस्य च कर्मपत्रं तद्दक्षिणकरे समर्पयिष्यते स "गृह्यतां पठ्यताञ्च मदीयकर्मपत्रमिदम्" इति वक्ष्यति । यस्य पुनः कर्मपत्रं तद्वामकरे दास्यते स "यदीदं कर्मपत्रं न प्रदत्तमभविष्यदिति" वक्ष्यति ।—सू० ६९ । आ० १६-१९, २५

**स०**—अहो कीदृशमिदं विज्ञानं न्यायसरणिश्च । कर्हिचिदाकाशोऽपि विदीर्यते किमु ? अपि स वस्त्रसन्निभो येन विदीर्येत ? यदि नामोपरितनलोक आकाश उच्यते तर्हीदं विज्ञानविरुद्धम् । कुराणग्रन्थप्रतिपादितपरमेश्वरस्य देहित्वे नास्ति मनागपि संशयः । सिंहासनोपवेशनम्, अष्टधीवरैस्तदुत्थापनञ्च देहित्वं विना न सम्भवति । आभिमुख्येन पृष्ठतश्च गमनागमने मूर्त्तिमत एव सम्भवतः । यदा च स मूर्त्तिमान् तदैकदेशित्वेन सर्वज्ञः, सर्वव्यापकः, सर्वशक्तिमान् भवितुं नार्हति । नापि कृत्स्नजीवानां सकलकर्माणि वेत्तुं प्रभवति । महदाश्चर्यमिदं यत्—पुण्यात्मनां दक्षिणकरे पत्रप्रदानम्, वाचनम्, स्वर्गे प्रेषणञ्च पापिनाञ्चापसव्यकरे कर्मपत्रप्रदानम्, निरयप्रेषणम्, कर्मपत्राण्यनुवाच्य न्यायविनिर्णयः । अप्ययं व्यवहारः सर्वज्ञस्य कर्हिचिद्भवितुमर्हति ? न कर्हिचित् केवलमियं सर्वापि लीला शैशवस्य ।

(१४८) देवदूता आत्मानश्च तदभिमुखमारोहन्ति तस्मिन् दिने यस्य परिमाणं पञ्चाशत्सहस्रवर्षाणाम् । यदा शवागारेभ्यो धावन्तो निस्सरिष्यन्ति प्रतिमास्थलाभिमुखमिव धावन्तीति ।—सू० ७० । आ० ४, ४३

**स०**—ननु यदि पञ्चाशत्सहस्रवर्षाणां दिनं भवति तर्हि किमिति पञ्चाशत्सहस्रवर्षाणां रात्रिर्न भवति ? तावती महती यामिनी न भवति चेत्तावन्महदहोऽपि न जातु सम्भवति । किं पञ्चाशत्सहस्रवर्षाणि यावत्

परमेश्वरः, देवदूताः, कर्मपत्रवन्तश्चोत्थिताः, उपविष्टाः, जागरिता एव वा स्थास्यन्ति। एवं सति सर्वे व्याधिनिपीडिताः सन्तो मरिष्यन्त्येव। शवागारेभ्यो निःसृत्य परमात्मनो न्यायालयं प्रति धाविष्यन्ति किमु? कथञ्च शवागारेषु तेषामन्तिक आह्वानपत्रा-(सम्मन)-ण्युपस्थास्यन्ति? किमर्थञ्च तपस्विनस्ते पुण्यात्मानः पापीयांसो वैतत्कालपर्यन्तं चारकेष्विव संयमिताः। अद्यत्वे च परमात्मनो न्यायसभाऽवसितकर्मा भविष्यति ततश्चेश्वरस्तद्दूताश्च निश्चेष्टं स्थिता भविष्यन्ति। अथवा किमपि कार्यं कुर्वते? (मन्ये) स्वस्वस्थानं प्रपन्ना इतस्ततः परिभ्रमन्तः, शयानाः, नृत्यादिकं प्रेक्षमाणाश्चानन्दजीवनं व्यत्यापयन्ति। कस्यापि राष्ट्रे नेदृशोऽविचारो भवति। ईदृशीवार्ता वनेचरान् विना कोऽन्यो मंस्यते।

(१४६) असंशयं युष्मान् कतिधा समुदपादयत्। "परमेश्वरः कथं सप्ताकाशानध उपरि व्यरचयदिति" किं युष्माभिर्न विलोकितम्। तन्मध्ये च चन्द्रमसं प्रकाशकं सूर्यञ्च दीपकं निरमात्।—सू० ७१। आ० १४-१६

स०—जीवान् परमेश्वर उदपादयच्चेन्न तेऽमरणधर्माणो भवितुमर्हन्ति। एवञ्च स्वर्गे कथं नित्यमवस्थातुं प्रभवेयुः। यदुत्पद्यते तदवश्यं विनश्यति। आकाश उपर्यधः कथं निर्मातुं शक्यते स हि निराकारो विभुश्च। वस्त्वन्तरस्य कस्यचिदाकाश इति नामधेयं चेत्तदपि तस्याकाश इति नाम निरर्थकम्। उपर्यधोभावेन आकाशान् व्यरचयच्चेन्न तन्मध्ये सूर्याचन्द्रमसौ स्थातुं कर्हिचित्प्रभवतः। अन्तराले भानुशशिनौ चेन्निधीयेतां तदैक उपरितनोऽध प्रदेशवर्त्ती चैकः प्रकाशेत द्वितीयादारभ्य सर्व एव तमसावृता भवेयुर्न चेत्थं दृश्यते तस्मात्सर्वमिदमलीकम्।

(१५०) मज्जितानि परमात्मनः कृते सन्ति। परमात्मना सह कमप्यन्यं माह्वयन्तु।—सू० ७२। आ० १८

स०—सत्यमिदञ्चेत् कथं तर्हि यवनाः "लाइलाह इलिल्लाः मोहम्मदरसूलल्लाः" इत्यस्मिन् वाक्ये मोहम्मदमहाभागं परमात्मना सहाह्वयन्ति? वार्तेयं कुराणविरुद्धा। अथ विरुद्धेति नाभ्युपगम्यते तदायं कुराणोपदेशोऽलीक इति साध्यते। मज्जितानां परमात्मनो निकेतनत्वं यवना महाप्रतिमार्चकाः समजायन्त यतः खलु यथा पौराणिका जैनाश्चाल्पीयस्याः प्रतिमायाः परमेश्वरनिकेतनाभ्युपगमेन प्रतिमापूजकाः कथ्यन्ते तथैवेमे कथं न सन्ति प्रतिमार्चकाः?

(१५१) सूर्याचन्द्रमसावेकत्रीकरिष्येते।—सू० ७५। आ० ९

स०—अपि नाम कर्हिचित् भानुशशिनौ संसक्तौ भवितुमर्हतः? कियदज्ञानविजृम्भितमेतदिति सुधियो विमृशन्तु। सूर्य्यचन्द्रयोरेव संयोजने किमासीत् प्रयोजनम्? अन्येषां लोकानां समाहरणाभावे का नाम युक्तिः?

किमीदृशा असम्भववार्ता परमेश्वरस्य भवितुं शक्नुवन्ति ? वस्तुत ईदृश्यो वार्ता अविदुषो विना कस्यचिद् विदुषोऽपि न भवन्ति किमुत परमात्मनः ।

(१५२) तेषु नित्यस्थायिनो यौवनपरिपूर्णा बालाः परिभ्रमिष्यन्ति । तान् त्वं सम्प्रेक्ष्य विकीर्णानि मौक्तिकानीति विभावयिष्यसि । ते च रजतकङ्कणैर्भूषयिष्यन्ते । प्रभुस्तान् पवित्रमद्यं पाययिष्यते ।—सू० ७६।आ० १९,२१

स०—ननु मौक्तिकवर्णाः कुमाराः किमर्थं तत्र सन्निधीयन्ते स्वर्गस्थाः तरुणमनुजानां सेवया न सन्तुष्यन्ति किमु ? किंवाङ्गनाजनस्तान् तोषयितुं न प्रभवति ? यदिदमत्र महन्निन्दितं कर्म कुमारैः सहानुतिष्ठन्ति तस्येदमेव कुराणवचनं मूलं भवेदिति किमाश्चर्यम् ? स्वर्गे च सेव्यसेवकभावेन स्वामिन आनन्दो सेवकस्य च परिश्रमेण दुःखं सम्पत्स्यते, कथं न्वयं पक्षपातः ? सेवकवत् मद्यं पाययितुः परमात्मनः कथङ्कारं गौरवं स्थास्यति ? अपि च तत्र स्वर्गे स्त्री-पुरुषयोः सङ्गमो गर्भस्थितिः सन्ततीनामुत्पत्तिश्च सञ्जायते न वा ? न भवति चेत्तद्विषयोपभोगो निष्फलतां गतः । अथ चेद् भवति ते जीवाः कुतः समागमन् ? परमात्मानमसंसेव्य च स्वर्गे कथमुदपद्यन्त ? उत्पन्नाश्चेन्नूनं तैर्विश्वासापादनं परमात्मनो भक्तिञ्च विना स्वर्गः समासादितः । केचिद्वराका विश्वासापादनेनापरे धर्ममन्तरेणैव सुखं लभेरन्—अतः परमपरः को नामान्यायो भविष्यति ।

(१५३) कर्मणामानुरूप्येण तेभ्यः प्रतिफलं दास्यते । परिपूर्णानि सन्ति पानपात्राणि । यस्मिन्नहनि रूहो देवदूताश्च पङ्क्तौ स्थास्यन्ति ।

—सू० ७८ । आ० २६, ३४, ३८

स०—यदि नाम कर्मानुसारं फलं प्रदीयते तर्हि स्वर्गे शश्वत्स्थाय्यप्सरोभ्यः, देवदूतेभ्यः, मौक्तिकोपमबालेभ्यश्च केन कर्मणा स्वर्गः प्रादायि । चषकैर्मद्यं पीत्वोन्मत्ताः सन्तः कथं न योत्स्यन्ते ? अत्र रूह इत्येकस्य देवदूतस्य नामधेयं यो वै सर्वदेवदूतेषु महीयान् । रूहमन्यदेवदूतांश्च पङ्क्तिबद्धान् विधाय परमेश्वरः सैन्यं विरचयिष्यति किमु ? तेन च सकलजीवान् दण्डयिष्यति ? तदानीमीश्वर उपविष्टः स्थितो वा भविष्यति ? प्रलयवासरं यावदीश्वरः स्वीयसकलसैन्यं समाहृत्य शैतानं धरेच्चेत्तदीयं राज्यमकण्टकं भवेत्, एतदेव चेश्वरत्वम् ।

(१५४) यदा सूर्य्यः पुटीक्रियेत । यदा नक्षत्राणि मलिनानि जायेरन् । यदा च गिरयश्चाल्येरन् किञ्च यदाकाशस्य चर्मापह्रियेत ।

—सू० ८१ । आ० १, ३, ११

स०—"वर्तुलः सूर्यलोकः परिवेष्टयेत" इति महदज्ञानविजृम्भितम् । नक्षत्राणि कथं मलिनानि भविष्यन्ति ? पर्वताश्चाचेतनत्वात्कथं प्रचलिष्यन्ति ? किमाकाशः पशुरस्ति येन तस्य चर्मापनेष्यते । महदिदं मौर्ख्यमारण्यकत्वञ्च ।

(१५५) यदाकाशो दीर्येत। यदा नक्षत्राणि विक्षिप्तानि भवेयुः। यदा सरितो विदार्येरन्। यदा च शवागारा जीवयित्वोत्थाप्येरन्।

—सू० ८२। आ० १-४

स०—अहो नु कुराणग्रन्थनिर्मातः वैज्ञानिकप्रवर! कथमाकाशं विदारयिष्यसि? कथं वा तारकाणि विक्षेप्स्यसि? अपि सिन्धवः काष्ठानि येन तान् भेदयिष्यसि? किं शवागाराः शवरूपा यत्तान् जीवयिष्यसि? सर्वा इमा वार्ता बालसन्निभाः।

(१५६) साट्टेनाकाशेन शपे। स प्रशस्तः कुराणग्रन्थो लोहाभ्यन्तरे सुरक्षितः।—सू० ८५। आ० १, २१, २२

स०—अयं कुराणग्रन्थप्रणेता भूखगोलविद्यां मनागपि नाध्यैष्ट कथमिवान्यथाकाशं दुर्गमिवाट्टवन्तमकथयिष्यत्। मेषादिराशीनट्टशब्देनाख्याति चेत्कथं नान्यान्यपि नक्षत्राण्येतच्छब्देन गृह्णाति? सर्वाण्यपीमानि न सन्त्यट्टानि परं तारकाणि। किं कुराणग्रन्थः परमात्मनः सकाशे वर्तते। अथायं कुराणग्रन्थस्तन्निर्मितस्तर्हि सोऽपि विद्योपपत्तिभ्यां शून्योऽविद्वाँश्च वर्तते।

(१५७) असंशयं ते प्रवञ्चनां कुर्वन्ति। अहमपि च कैतवं कुर्वे।

—सू० ८६। आ० १५-१६

स०—प्रवञ्चनं मकर इति समानार्थौ। किं परमेश्वरोऽपि वञ्चकः? किं वा स्तेयस्य प्रतिफलं स्तेयम्, अतथ्यस्य चातथ्यम्? यदि नाम कश्चित् तस्करः कस्यचिद्भद्रजनस्य सद्मनि चौर्य्यमाचरेत्, तर्हि किं भद्रजनेनापि तद्गृहं गत्वा चौर्य्यमनुष्ठेयम्? धन्योऽसि रे धन्योऽसि कुराणनिर्मातः?

(१५८) यदा च तव प्रभुः, श्रेणिबद्धा देवदूताश्च समेष्यन्ति। तस्मिन्वासरे च निरयस्तत्रानेष्यते।—सू० ८९। आ० २२-२३

स०—कथ्यतां भो! यवनानामीश्वरोऽपि कोटपालः सेनाध्यक्ष इव च स्वसैन्यमादाय परिभ्रमति। अपि निरयो घट इवावबुध्यते यो हि स्वेच्छयेतस्ततो नीयेत? अथ चेत्स ईदृशोऽल्पीयान् कथं तर्हि तस्मिन्नसंख्येया वन्दिनो मातुं शक्नुयुः।

(१५९) परमात्मनः पैगम्बरेण तेऽभिहिताः—परमेश्वरस्य क्रमेलिकां विरक्षत पानीयञ्च पाययत। सोऽसत्यवादीति समकृत। तस्याश्चरणौ कर्त्तितौ अतस्तेषां प्रभुणा तदुपरि मारिः प्रहिता।—सू० ९१। आ० १३-१४

स०—परमेश्वरोऽपि किमुष्ट्रिकामारुह्येतस्ततो विहरति? कथमन्यथा क्रमेलिका स्वान्तिके सन्निधापिता? किञ्च प्रलयवासरं विनैव निजनियमं परित्यज्य तेषामुपरि मारीं कथं प्रहितवान्? अथ चेन्मारीगदः प्रहितस्तत्ते दण्डिताः पुनः प्रलयक्षपायां न्यायस्य तद्रात्रेश्च भवनमसत्यं मंस्यते? अस्या

उष्ट्रिकाया लेखेन "अयं कुराणग्रन्थः केनचिदरबदेशवासिना लिखित इति सिद्ध्यति", यतः किल तत्रैव उष्ट्रं विनान्यवाहनानि न भवन्ति ।

(१६०) यदि नाम स एवं न विरंस्यति तदवश्यं वयं मस्तकेन तमाऽऽकर्ष्यामः । तन्मस्तकमलीकभाषि सदोषञ्च वयञ्च निरयदूतमाकारयिष्यामः ।—सू० ९६ । आ० १५, १६, १८

स०—परमेश्वरोऽधमपुरुषाणामाकर्षणकर्मणापि न विरतः । मस्तकमपि कर्हिचिदलीकवादि सापराधञ्च भवितुमर्हति ? अयं केवलो जीव एव यस्तथा भवितुं शक्नोति । अयं खलु जातु परमेश्वरः सम्भवति ? यो वै निरयरक्षकं काराध्यक्ष इवाह्वयति ।

(१६१) असंशयमस्माभिः कदरनिशि कुराणग्रन्थः समवतारितः । "कास्ति कदररात्रिः" इति त्वं किं वेत्सि ? देवदूताः पवित्रात्मानश्च प्रत्येकस्मै कर्मणे प्रभोः समादेशेनावरोहन्ति—सू० ९७ । आ० १, २, ४

स०—एकस्यामेव निशि सकलः कुराणग्रन्थ आविर्भावितश्चेत् "तदायतं तदानीमवातरत् । तच्च तदानीमिति शनैः शनैः कुराणग्रन्थः प्रादुर्भूतः" इति वचनं कथङ्कारं सत्यं भवितुं क्षमम् ? तमस्विनी रजनी किं ततः प्रष्टव्यम् ? आकाश ऊर्ध्वमधः किमपि न भवतीत्यस्माभिरनुपदमेव प्रत्यपादि। परमत्र विलिख्यते यद् देवदूताः पवित्रात्मानश्च प्रभोराज्ञया जगच्छासितुमधोऽवतरन्तीति । एतेन "परमेश्वरोऽपि (खुदा) मनुष्य इवैकदेशीति" स्पष्टं प्रतीयते । इदानीं यावदयं कुराणग्रन्थः परमेश्वरस्य, देवदूतानां, पैगम्बरस्य चेति त्रयाणामेव विषये ब्रूतस्म, अधुनाऽयं चतुर्थः पवित्रात्माऽपि मध्ये निपपात । न जानेऽयं तुरीयः पवित्रात्मा किं वस्तु ? अत्रत्वेते (यवनाः) चतुर्थाङ्गीकारेण क्रिश्चीनानप्यतिशिश्यिरे ते हि पितरं, पुत्रं, पवित्रात्मानञ्चेति त्रीनेव मन्वते । "न वयमेतत्त्रयं परमेश्वरं मन्महे" इति चेदुच्येत, सत्यम् । परं पवित्रात्मनः पृथक्त्वे परमेश्वरो दूताः, पैगम्बरश्च पवित्रात्मेति भणितव्या न वा ? तेऽपि सन्ति चेत्तदैकस्यैव पवित्रात्मेति नामधेयं किमर्थम् ? किञ्च परमेश्वरः सततमहोरात्राभ्याम्, तुरङ्गमादिपशुभिः कुराणग्रन्थेन च शपते शपथग्रहणञ्च नास्ति भद्रजनोचितम् ।

इदं किल कुराणग्रन्थस्य गुणदोषविवेचनं बुद्धिमतां पुरः समुपस्थापितम्, कीदृशमिदं पुस्तकमिति धीमन्त एव विभावयन्तु । अहन्तु "नेदं पुस्तकं परमेश्वरेण विदुषा वा विरचितम्, नापीदं विद्यायुक्तम् इति मन्ये ।" अल्पीयांस एव दोषा अस्माभिः प्रकाशिताः येन मानवा भ्रान्ताः सन्तः स्वजन्म वृथा न गमयेयुः । यत्किञ्चिदत्र सत्यं वर्तते तद्वेदादिविद्याग्रन्थानुकूलतया ममेव सर्वमतावलम्बिनां दुराग्रहपक्षपातविवर्जितानां विदूषां ग्राह्यमस्ति । एतदतिरिक्तं यत्किचिदत्र वर्तते तत्सर्वमविद्याभ्रमसम्मिश्रम्, मनुजाना-

मात्मनः पशुनिभान् संवर्त्य शान्ति विनाश्य मानवेषूपप्लवं सम्पाद्य च दुःखानां प्रवर्धकं वर्तते। पुनरुक्तिदोषस्य च कुराणग्रन्थो निधिरेक विज्ञेयः। सर्वंमानवेषु दयतां परमेश्वरो येन सर्वे सर्वैः सह प्रीतिपूर्वकमन्योन्यसुखविवृद्धौ प्रवर्तन्ताम्। यथाहं खल्वात्मनोऽन्येषां च मतानां दोषान् निष्पक्षपातं प्रकाशयामि सर्वे विद्वाँसस्तथैव कुर्युश्चेत्पारस्परिकविरोधं परिहाय सस्नेहमानन्देनैकमताः सन्तः सत्यं प्राप्नुयुरिति किं दुष्करम्। संक्षेपेणेदं कुराणविषये वर्णितम्। बुद्धिमन्तो धार्मिका ग्रन्थकर्तुरभिप्रायमवगम्यात्मानमुपकुर्य्युः। क्वचिद् भ्रमेणान्यथा विलिखितञ्चेत्तत्संशोधयन्तु।

साम्प्रतं केवलमिदमवशिष्यते—भूयांसो यवनाः "अस्मन्मतविषयेऽथर्ववेदे विलिखितमिति" संचक्षते, विलिखन्ति, मुद्रापयन्ति च परमथर्ववेदेऽस्य नामचिह्नोऽपि न वर्तते।

**प्र०**—अपि भवान् कृत्स्नमथर्ववेदमद्राक्षीत, अपश्यच्चेदल्लोपनिषदं पश्यतु। इयं हि साक्षात्तत्र विन्यस्ता कथं पुनः "अथर्ववेदे यवनानां नामापि नास्ति" इत्युच्यते।

## अथाऽल्लोपनिषदं व्याख्यास्यामः

**अस्माल्लां इल्ले मित्रावरुणा दिव्यानि धत्ते। इल्लल्ले वरुणो राजा पुनर्ददुः। हया मित्रो इल्लां इल्लल्ले इल्लां वरुणो मित्रस्तेजस्कामः ॥१॥ होतारमिन्द्रो होतारमिन्द्र महासुरिन्द्राः। अल्लो ज्येष्ठं श्रेष्ठं परमं पूर्णं ब्रह्माणं अल्लाम् ॥२॥ अल्लोरसूलमहामदरकबरस्य अल्लो अल्लाम् ॥३॥ आदल्लाबूकमेककम्। अल्लाबूक निखातकम् ॥४॥ अल्लो यज्ञेन हुतहुत्वा। अल्लासूर्य्यचन्द्रसर्वनक्षत्राः ॥५॥ अल्ला ऋषीणां सर्वदिव्यां इन्द्राय पूर्वं माया परममन्तरिक्षाः ॥६॥ अल्लः पृथिव्या अन्तरिक्षं विश्वरूपम् ॥७॥ इल्लां कबर इल्लां कबर इल्लां इल्लल्लेति इल्लल्लाः ॥८॥ ओम् अल्लाइल्लल्ला अनादिस्वरूपाय अथर्वणाश्यामा हुं ह्रीं जनानपशूनसिद्धान् जलचरान् अदृष्टं कुरु कुरु फट् ॥९॥ असुरसंहारिणी हुं ह्रीं अल्लोरसूल महामदरकबरस्य अल्लो अल्लाम् इल्लल्लेति इल्लल्लाः ॥१०॥**

**इत्यल्लोपनिषत् समाप्ता ॥**

अत्र प्रत्यक्षं महोमदो रसूल इत्युपवर्णितं तेन वेदमूलकं यवनमतमिति साधु सिध्यति।

**उ०**—अथर्ववेदो नावलोकितश्चेद् भवता तदस्मदन्तिकमुपेत्यादितोऽवसानपर्यन्तं निरीक्ष्यताम्, अथवा कस्यचनाथर्ववेदिनोऽभ्याशमुपेत्य विंशति

काण्डयुतो मन्त्रसंहितात्मकोऽथर्ववेदो विलोक्यतां क्वापि पैगम्बरमहाशयस्य नामधेयं स्वमतस्य चिह्नं वा न द्रक्ष्यते।

इयमल्लोपनिषद् नाथर्ववेदे, न तद्ब्राह्मणे गोपथे नापि कस्याञ्चिच्छाखायां वर्तते। इयन्तु अकबरमहाराजस्य समसामयिकेन केनचिन्निर्मितेत्यनुमीयते। अस्याः प्रणेता किञ्चिदारब्यभाषां किञ्चिच्च संस्कृतमधीतवानिति प्रतीयते अतोऽत्र कानिचित्पदान्यारब्यभाषायाः कानिचिच्च संस्कृतभाषाया विलोक्यन्ते। दृश्यताम्—"अस्माल्लां इल्ले मित्रावरुणा दिव्यानि धत्ते" इत्यादिदशाङ्कयुताया अस्या उपनिषदः प्रथमवाक्ये "अस्माल्लां इल्ले" इत्यारब्यभाषायाः पदे, "मित्रावरुणादिव्यानि धत्ते" इति संस्कृतपदानि वर्तन्ते। तथैव सर्वत्रावलोकनेन "आरब्यसंस्कृतभाषाध्येतृणा निर्मितेयमिति" सुनिश्चितम्। अस्यास्तात्पर्यनिरीक्षणेनेयं कृत्रिमा, अनुचिता वेदव्याकरणविरुद्धा च प्रतीयते। अल्लोपनिषदिव स्वरोपनिषद्, नृसिंहतापनी, गोपालतापनी इत्याद्या भूयस्य उपनिषदः पक्षपातिमतवादिभिर्निर्मिताः।

प्र०—अद्य यावन्न कोऽप्येवमवादीत्, भवानेव साम्प्रतमभिधत्ते, कथं वयं भवतो वचः स्वीकुर्मः ?

उ०—युष्मदङ्गीकरणेनानङ्गीकरणेन वास्माकं वचोऽसत्यं भवितुं नार्हति। यथाऽस्माभिरस्या अयुक्तत्वं व्यवस्थापितं तथैव यूयमथर्ववेदे, गोपथे, अस्य शाखासु प्राचीनपुस्तकेषु वा यथातथालेखं दर्शयत अर्थसाङ्गत्येन च शोधयत तदैवेयं सप्रमाणा स्यात्।

प्र०—अहो नु कीदृक् शोभनमस्माकं मतं यत्र सर्वविधं सुखं लभ्यत अवसाने च मुक्तिरधिगम्यते।

उ०—इत्थमेव सर्वमतवादिनः "अस्माकमेव मतं श्रेष्ठमन्यानि सर्वाणि विगर्हितानि, अस्मन्मतमन्तरेण नान्यमते मुक्तिर्लभ्यते इति भाषन्ते। एवं सति वयं भवतस्तेषां वा वाचमङ्गीकुर्वीमहि ? वयन्तु "सत्यभाषणाहिंसादयाप्रमुखाः शुभगुणाः सर्वमतेषु श्रेयांसः, वादविवादेर्ष्यालीकभाषणादीनि च कर्माणि सर्वत्रैव विनिन्द्यानीति मन्महे। सत्यमतं जिघृक्षवश्चेद् भवन्तस्तर्हि वैदिकं मतं स्वीकुरुत।

**इति श्रीमद्दयानन्दसरस्वतीस्वामिकृते सत्यार्थप्रकाशे**
**शङ्करदेवपाठकेन देवगिरालङ्कृते यवनमतविषये**
**चतुर्दशः समुल्लासः सम्पूर्णः ॥१४॥**

# स्वमन्तव्यामन्तव्यप्रकाशः

स एव हि सर्वतन्त्रसिद्धान्तः—अर्थात् मानव-साम्राज्यस्य सार्वजनिको धर्मः, यं सदैव (सदातः) सर्वेऽमन्यन्त, मन्यन्ते, मंस्यन्ते च। अनेनैव कारणेन तं सनातनं नित्य-धर्मं वदन्ति, यस्य विरोधे न कश्चिदपि स्थातुं शक्नुयात्। अविद्यान्धकारग्रस्ताः केनचित् संकीर्णमतेन भ्रान्ता वा जनास्तं (सनातनं नित्यधर्मम्) अन्यथाऽपिजानीयुर्मन्येरन् वा, परन्तु न कश्चिदपि सुमतिशीलोजनः सनातननित्यधर्मविषये तेषां भ्रान्तधारणां स्वीकरोति। धर्मविषये आप्तजनाः सत्यमानिनः, सत्यवादिनः, सत्यकारिणः, परोपकारपरायणाः, पक्षपातशून्याश्च विद्वांसो यत्स्वीकुर्वन्ति मन्यन्ते च तदेव भवितुमर्हंमन्येषां सर्वेषामपि मन्तव्यम्। यच्चतेषां विदुषाममन्तव्यम्, तदेव हि सर्वेषामितरजनानामप्यमन्तव्यं भवेत्, अपि च नैवं विधं कस्मिन्नपि विषये कस्मैचित् प्रमाणयोग्यम्।

अथ यद् वेदादि-सत्यशास्त्रजातं ब्रह्मातो जैमिनिमुनिपर्यन्तैर्विद्वद्भिः सम्मानितमीश्वरादिपदार्थजातञ्च वर्तते, यच्चाहमपि तथैव मन्ये, तदेव-समस्तसज्जनवृन्दसन्मुखे प्रकाशयामि (प्रकाशितं करोमि) यच्च कालत्रये सर्वैः समानतया सम्मानयितुं योग्यं तदेव मदीयमपि मन्तव्यमित्यभिजानामि। काचिन्नवीनमतपरिकल्पना, कस्यचिन्नवमतमतान्तरस्य स्थापना वा हि नहि खलु लेशमात्रमपि ममाभिमतम् (ममाभिप्रायः), किन्तु यत्सत्यं तस्य संमननं सम्माननम्, यच्चासत्यं तस्य च परित्यागः परित्याजनमेव हि वर्तते ममाभीष्टम्। पक्षपातपरायणश्चेदहमासम्, तदा आर्यावर्तदेशे प्रचलितमतेषु अन्यतमस्यैव कस्यचिदाग्रही समभवम्। नाहम् आर्यावर्त्तेऽन्यदेशेषु च प्रचलितमधर्माचरणं स्वीकरोमि, धर्माचरणञ्च परिहरामि, न चाप्येवमभिलषामि, यतोह्येवंविधमाचरणं मानवधर्माद् बहिष्कृतम्। वस्तुतः स एव मानवो मानव इत्यभिमन्तव्यो यो हि मननशीलः सन् अन्येषामपि सुखदुःखे स्वात्मवदेवानुभवति, (अनुभवेत्) परहानिलाभौ चापि स्वात्मवदेव परिगणयति (परिगणयेत्) अन्यायमाचरतो बलवतोऽपि न बिभ्येत्, धर्मात्मनश्च बलहीनादपि भयमनुभवेत्। नैतावदेवापितु स्वीयसम्पूर्णसामर्थ्येन निर्बलानां, गुणहीनानामनाथानामपि धर्मात्मनां संरक्षणं, समुन्नतिं, प्रियाचरणञ्च सदैव समाचरेत्। अधर्मिणाञ्चातिबलवतां, गुणवतां, सनाथानां, चक्रवर्तिना-

मपि सदैवावनतिं, विनाशमप्रियाचरणञ्च विदध्यात्, अर्थात् यावच्छक्यं तावदन्यायकारिणां बलहानिं न्यायकारिणाञ्च बलवृद्धिं सदैव कुर्यात्। काममत्र कियदपि दारुणं दुःखं प्राणहानिश्चापि प्रसज्येत परं नेमं मानवधर्मम् (शाश्वत-मानवधर्मम्) कदापि जह्यात्।

अत्र विषये प्रमाणभूतानि महाराजभर्तृहरि-मनुप्रभृतिविरचितानि प्रसंगोचितानि कानिचित्-श्लोकानि समुद्ध्रियन्ते। यथा—

**निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु,**
**लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम्।**
**अद्यैव वा मरणमस्तु युगान्तरे वा,**
**न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥१॥**

भर्तृहरि [नीतिशतकम् ८४]

**न जातु कामान्न भयान्न लोभाद्, धर्मं त्यजेज्जीवितस्यापिहेतोः।**
**धर्मो नित्यः सुखदुःखे त्वनित्ये, जीवो नित्यो हेतुरस्य त्वनित्यः ॥२॥**

—महाभारते [उद्योगपर्व ४०।१३]

**एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः।**
**शरीरेण समं नाशं सर्वमन्यद्धिगच्छति ॥३॥**

—मनु० [८।१७]

**सत्यमेव जयते नानृतं सत्येन पन्था विततो देवयानः।**
**येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम् ॥४॥**

—मुण्डक० [३।१।६]

**नहि सत्यात्परो धर्मो नानृतात्पातकं परम्।**
**नहि सत्यात्परं ज्ञानं तस्मात्सत्यं समाचरेत् ॥५॥** —उ० नि०

उपर्युक्तश्लोकेषु भावानुकूलं समाचरणमेव सर्वेषामभीष्टमितिभावः।

साम्प्रतं यान् यान् पदार्थान् यथा यथाऽहं मन्ये, तानेव संक्षेपेणात्र वर्णयामि। तेषां विशेषव्याख्यानञ्चास्मिन्नेवग्रन्थे तत्तत्प्रकरणे-(स्वस्व-प्रकरणे)-पूर्वमेव विहितम्। एषु प्रथमः—

(१) **ईश्वरः**—यस्य ब्रह्म परमात्मादि नामानि, यश्च सच्चिदानन्दादिलक्षणयुक्तः, गुणकर्मस्वभावाश्च यस्य पवित्राः, यो हि सर्वज्ञो, निराकारः, सर्वव्यापकः, अजन्मा, अनन्तः, सर्वशक्तिमान्, दयालुः, न्यायकारी, सकलसृष्टेः कर्ता, धर्ता, हर्ता च सकलजीवानां कर्मानुरूपं सत्यन्यायेन फलदातृत्वादिलक्षणयुक्तश्च वर्तते, स एव "ईश्वरः" इति मन्ये।

(२) **वेदचतुष्टयम्**—(विद्याधर्मयुक्तमीश्वरप्रणीतं संहितामन्त्र-भागात्मकम्) निर्भ्रान्तं स्वतःप्रमाणं मन्ये। वेदा हि चत्वारः स्वतःप्रमाण-

भूताः, न हि ते स्वप्रामाण्ये ग्रन्थान्तरमपेक्षन्ते। यथा हि—सूर्यप्रदीपादयः स्वस्वस्वरूपेण स्वतः प्रकाशकाः पृथिव्यादेश्च प्रकाशकास्तथैव चत्वारो वेदा अपि स्वतःप्रकाशकाः। ये च वेदचतुष्टयस्य ब्राह्मणग्रन्थाः (शतपथ-गोपथ-ऐतरेयसामप्रभृतयः) षडङ्गानि (शिक्षाकल्पव्याकरणनिरुक्तछन्दोज्योतींषि) षडुपाङ्गानि (न्यायवैशेषिक-सांख्य-योग-मीमांसा-वेदान्तशास्त्राणि) उपवेदचतुष्टयम्, वेदव्याख्यानरूपं सप्तविंशत्युत्तरैकादशशतसंख्याकं (११२७) ब्रह्मादिमहर्षिप्रणीतं ग्रन्थजातं तदपि परतःप्रमाणम्, अर्थात् वेदानुकूलांशरूपं प्रमाणं वेदविरुद्धञ्चाप्रमाणमिति मन्ये।

(३) **धर्माधर्मौ**—यच्च पक्षपातविरहितं न्यायाचरणं, सत्यभाषणादियुक्तमीश्वरादेशतः—वेदेभ्यश्चाविरुद्धमाचरणं—स धर्मः, यश्च पक्षपातसहितोऽन्यायाचरणरूपो मिथ्याभाषणादिपरमेश्वराज्ञाभंगो वेदविरुद्धश्च व्यवहारः सोऽधर्मः इति मन्ये।

(४) **जीवः**—यो हि—इच्छाद्वेषसुखदुःखज्ञानादिगुणयुक्तोऽल्पज्ञो नित्यश्च स एव जीवः—(जीवात्मा) इति मन्ये।

(५) **जीवेश्वरौ**—जीव ईश्वरश्च स्वरूपेण वैधर्म्येण च भिन्नौ व्याप्यव्यापकत्वेन साधर्म्येण चाभिन्नौ, अर्थात् यथा मूर्तिमद्द्रव्यं न कदापि आकाशाद्भिन्नमासीत्, न चास्ति, नापिभविष्यति च, अथ न चाप्येकरूपमासीत्, नास्ति, न भविष्यति तथैव परमेश्वरं जीवञ्च व्याप्यव्यापकम् उपास्योपासकम्, पितापुत्रादिसम्बन्धयुतञ्च मन्ये।

(६) **अनादिपदार्थत्रयम्**—त्रयोऽनादिपदार्थाः, परमेश्वरः, जीवः, (जीवात्मा) जगत्कारणभूता प्रकृतिश्चेति। एतएव नित्यपदार्था अप्यभिधीयन्ते। ये हि नित्यपदार्थाः, तेषां गुणकर्मस्वभावा अपि नित्या एव।

(७) **प्रवाहेणनादित्वम्**—संयोगजानि द्रव्यगुणकर्माणि वियोगे नावतिष्ठन्ते, परन्तु येन सह प्रथमः संयोगः, तत्संयोगसामर्थ्यं तेष्वनादिरूपेण संतिष्ठते, तेन च सह पुनरपि संयोगवियोगौ सम्पत्स्येते अतस्त्रीण्येतानि (द्रव्यगुणकर्माणि) प्रवाहेणानादीनि मन्ये।

(८) **सृष्टिः**—पृथग्द्रव्याणां ज्ञानयुक्तिपूर्वकसम्मेलनेन सम्पत्स्यमानं नानारूपत्वं सृष्टिः।

(९) **सृष्टिप्रयोजनम्**—ईश्वरस्य सृष्टिनिमित्तं गुणकर्मस्वभावसाफल्यमेव रचनाप्रयोजनम्। यथा कश्चित्कञ्चित् पृच्छति, किं निमित्तं नेत्राणाम्? दर्शनमेवेति अन्यः प्रत्युत्तरति, एवमेव सृष्टिरचनायामीश्वरस्य रचनासामर्थ्य-साफल्यम्, जीवगणस्य (जीवजगतः) कर्मणां यथावद् भोगप्रदानञ्चैव प्रयोजनम्।

(१०) **सकर्तृका सृष्टिः**—परमेश्वरः सृष्टिकर्ता, यतः सृष्टिरचनां

दृष्ट्वा जडपदार्थेषु स्वयं यथायोग्यबीजादिस्वरूपग्रहणसामर्थ्याभावाच्चावश्यमेव कश्चित् सृष्टेर्निर्माता, स हि सर्वशक्तिमान् सर्वेश्वरः ।

(११) **बन्धः**—सनिमित्तकः, अर्थात् अविद्यानिमित्तजन्यः । अनीश्वरोपासनमज्ञानादिकञ्च सर्वं पापकर्मजातं दुःखफलजनकम्, अत एवेदं बन्धरूपम्, यदनिच्छद्भिरपि अवश्यं भुज्यते ।

(१२) **मुक्तिः**—सर्वदुःखनिवृत्तिपूर्वकं निबन्धं (बन्धनरहितं) सर्वव्यापकपरमात्मनि तस्य सृष्टौ च सानन्दावस्थानं (स्वेच्छया विचरणम्, यथावधि च=नियतसमयपर्यन्तम्) मुक्तेरानन्दमुपभुज्य पुनः संसारे परावर्तनम् ।

(१३) **मुक्तिसाधनानि**—ईश्वरोपासना अर्थाद् योगाभ्यासः, धर्मानुष्ठानम्, ब्रह्मचर्येण विद्याऽत्राप्तिः, आप्तविदुषां संगः, सत्यविद्या, सुविचारपुरुषार्थौ आदीनि मुक्तिसाधनानि ।

(१४) **अर्थः**—धर्मेणैव सम्प्राप्तोऽर्थः, अधर्मेण सिद्धश्चानर्थः, अभिधीयते ।

(१५) **कामः**—धर्मेणार्थेन च संसिद्धः कामः ।

(१६) **वर्णाश्रमः**—गुणकर्मणां योग्यतया समाचरणं वर्णाश्रमभावं मन्ये ।

(१७) **राजा**—राजा स एव वक्तुं स्वीकर्तुं च योग्यः, योहि शुभगुणकर्मस्वभावैः प्रकाशमानः पक्षपातशून्यो, न्यायधर्मसेवी, समस्तप्रजासु पितृवत् व्यवहरन् सकलाश्च प्रजाः स्वपुत्रवत् मन्यमानस्तासां समुन्नत्यै सुखसंवृद्धये च सदैव प्रयतेत ।

(१८) **प्रजाः**—ता ह्येव खलु प्रजाः, याः पवित्रगुणकर्मस्वभावशीलाः पक्षपात-विरहितं न्यायधर्मं सेवमानाः, शासकस्य स्वस्य च समुन्नतिं कामयमानाः, राजद्रोहं विहाय नृपं पितरमिव मन्यमानाः स्वयं पुत्रवत् वर्तेरन् । (व्यवहारं समाचरेयुः) ।

(१९) **न्यायकारी**—यः सदा विवेकपूर्वकमनृतं विहाय मनसा वाचा कर्मणा सत्यमेव गृह्णीयात्, अन्यायकारिणः परिहरेत्, न्यायकारिणश्च प्रवर्धेत । योहि स्वात्मवत् सर्वेषामेव सुखमभिवाञ्छेत् तमेवाहं वस्तुतो न्यायकारिणं मन्ये, अर्थादेवंविधो ह्येव नरश्रेष्ठो न्यायकारीति पदमलङ्कर्तुं योग्यः ।

(२०) **देवासुरराक्षसपिशाचाः**—विदुषो ह्येव देवान्, अविदुषश्चासुरान्, पापिनो राक्षसान् (पापाचारिणो राक्षसान्) अथ चानाचारिणो हि पिशाचान् मन्ये ।

(२१) **देवपूजा**—तेषामेव विदुषां (मातृ, पितृ, आचार्य, अतिथि, न्यायकारि, नृपादिधर्मात्मजनानां पतिव्रतशीलस्त्रीणां, स्त्री-(पत्नी)-व्रत

शीलपतीनाञ्च सम्माननं सत्कारो वा वास्तविकी देवपूजा। एतद्विपरीता त्वदेवपूजैव। एतेषां चेतनमूर्तयः पूज्याः, (सम्माननीयाः सत्करणीयाश्च) इतरपाषाणादिजडमूर्तयश्च सर्वथाऽपूज्याः (उपेक्षणीयाः) इत्यभिमन्ये।

(२२) **शिक्षा**—यया विद्या, सभ्यता, धर्मात्मता, जितेन्द्रियतादिसद्गुणानामभिवृद्धिः, अविद्यादिदोषाणाञ्च परिहारो भवेत्, सैव शिक्षेति वक्तुं शक्या।

(२३) **पुराणानि**—ब्रह्मादि - ऋषिविरचितानि ऐतरेयादिब्राह्मण-पुस्तकानि तान्येवपुराणानि, इतिहास, कल्प, गाथा, नाराशंसीति नामधेयानि मन्ये, नान्यानि भागवतादिपुस्तकानि।

(२४) **तीर्थानि**—सत्यभाषण-विद्या-सत्संग-यमादि - (अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः, शौचसन्तोषतपःस्वाध्यायेश्वरप्राणिधानानि च नियमाः)-योगाभ्यासपुरुषार्थ-विद्यादानादीनि यानि यानि शुभकर्माणि दुःखसागरस्य पारे गन्तुं हेतुभूतानि तान्येव तीर्थानि अवगच्छामि, नेतराणि जलस्थलस्थानानि।

(२५) **पुरुषार्थस्य प्रारब्धतो महत्त्वम्**—यतः पुरुषार्थेनैव सञ्चित-प्रारब्धनिर्माणं भवति, तस्य (पुरुषार्थस्य) चैवोत्कर्षेण (सुचारुनिर्माणेन) प्रारब्धस्याप्युत्कर्षः (सुचारुनिर्माणम्) अपकर्षेण च (विकृत्या च) अपकर्षः (विकृतिः) भवति। अतः प्रारब्धापेक्षया पुरुषार्थस्यैव महत्त्वम्।

(२६) **सद्व्यवहारः**—मनुष्याणां सर्वैरेव मनुष्यैः सुखदुःखहानिलाभेषु यथायोग्यं स्वात्मवत् प्रवर्तनं श्रेष्ठव्यवहारं (सद्व्यवहारम्) तदितरञ्च गर्हितं मन्ये।

(२७) **संस्कारः**—संस्कारो हि सः, येन देहमन-आत्मनामुत्तमता सम्पद्येत। स हि निषेकादिश्मशानान्तःषोडशविधः। एतच्च परमं कर्तव्यम्। दाहान्तरञ्च प्रेतार्थं (मृतकार्थम्) न किञ्चिदपि कर्तव्यमवशिष्यते।

(२८) **यज्ञः**—तदेव कार्यजातं विद्वांसो यज्ञं ब्रुवन्ति, यत्र विदुषां समादरः, यथायोग्यं शिल्प-(रसायन)-आदिपदार्थविद्यानां सदुपयोगः, विद्यादिसद्गुणानां मुक्तप्रदानम्, वायुवृष्टिजलौषधीनां पवित्रीकरणेन प्राणिमात्रकृते सुखसंवर्षणकरमग्निहोत्रादिकं प्रवर्तते। यज्ञं हि श्रेष्ठतमं कर्म मन्ये।

(२९) **आर्य-दस्यवः**—आर्या हि श्रेयांसो जनाः, दुष्टजनाश्च दस्यव इति यथाभिधीयते, तथैवाहमपि मन्ये।

(३०) **आर्यावर्त्तदेशः**—यतो ह्यस्यां भूमौ प्रथमसर्गतः (आदिसृष्टेरारभ्य) आर्यजनानां निवासः, अत "आर्यावर्त्तः" इति नामधेयेयं भूमिः। सीमावधिश्चास्या उत्तरस्यांदिशि गिरिराजहिमालयः, दक्षिणस्यां विन्ध्याचलः

पश्चिमस्यामटकप्रदेशः, पूर्वस्यां दिशि च ब्रह्मपुत्रनामधेयंमहानदमवतिष्ठते। चतुर्णामेतेषां गिरिप्रदेशनद्यादीनामाभ्यन्तरवर्त्ती यावान् प्रदेशः तमेव "आर्यावर्त्तम्" अभिदधति। एतस्मिन् प्रदेशचतुष्टये सदानिवासिनश्च सर्वे ह्येव आर्यजनाः।

(३१) **आचार्यः**—यः साङ्गोपाङ्गवेदविद्यानामध्यापकः, सत्याचारस्य ग्राहयिता, मिथ्याचारस्य च त्याजयिता स एव हि "आचार्यः" इत्युच्यते।

(३२) **शिष्यः**—यः सत्यशिक्षां सत्यविद्याञ्च गृहीतुं योग्यपात्रम्, धर्मशोलो, विद्याग्रहणाभिलाषी, आचार्यस्य सदैव प्रियंकर्तुकामः, स एव हि शिष्यः।

(३३) **गुरुः**—माता, पिता (जननी, जनकः) सत्यस्य ग्राहयिता, अनृतस्य च त्याजयिता, एते गुरवः, (गुरुजनाः) उच्यन्ते।

(३४) **पुरोहितः**—यजमानस्य सदैव हितकारी (हितकरः) सत्योपदेष्टा च पुरोहितः।

(३५) **उपाध्यायः**—वेदानामेकदेशस्य वेदाङ्गानाञ्चाध्यापयिता "उपाध्यायः"।

(३६) **शिष्टाचारः**—यद् धर्माचरणपूर्वकं ब्रह्मचर्येण विद्याग्रहणम्, प्रत्यक्षादिप्रमाणैः सत्यासत्यनिर्णयानन्तरं सत्यस्यैवग्रहणमनृतस्य च परित्यागः, स एव हि शिष्टाचारः, यश्चैवमाचरति स च शिष्टजनः।

(३७) **प्रमाणम्**—प्रत्यक्षादिप्रमाणाष्टकमपि स्वीकरोमि।

(३८) **आप्तः**—यश्च खलु यथार्थवक्ता; धर्मात्मा (धर्मशीलः) सर्वेषां सुखार्थं प्रयतते तमेवाप्तजनं ब्रवीमि।

(३९) **परीक्षा**—पञ्च विधा खलु परीक्षा, (परीक्षणनिकषम्) **प्रथमा**—सर्वेश्वरकृत-ऋतनियमात्मिका तस्य दृष्टगुणकर्मस्वभावैर्वेदविद्ययाचानुरूपा। **द्वितीया**—प्रत्यक्षादिप्रमाणाष्टकसंसिद्धा। **तृतीया**—सृष्टिक्रमानुकूला। **चतुर्थी**—आप्तजनव्यवहारानुसृता। **पञ्चमी**—स्वात्मनः पावनविद्यानुसिद्धा। एताभिःपञ्चपरीक्षाभिःसत्यासत्यं निर्णीय सत्यमेवग्राह्यमनृतञ्च परित्याज्यम्।

(४०) **परोपकारः**—येन सर्वेषां मनुष्याणां दुःखदुराचारयोः परिहारः, सुखसदाचारयोश्च प्रसारः स्यात्तद्विधं कर्मैव परोपकारः।

(४१) **स्वतन्त्रपरतन्त्रत्वम्**—जीवात्मास्वकर्माचरणविधौ स्वतन्त्रः, कृतकर्मफलभुक्तौ च सर्वथा सर्वेश्वराधीनः। तथैव परमेश्वरोऽपि स्वसत्याचारादिसमाचरणे स्वतन्त्रः।

(४२) **स्वर्गः**-सुखविशेषभोगस्तत्साधनसामग्रीणां सम्प्राप्तिश्च स्वर्गः।

(४३) **नरकः**—दुःखविशेषभोगस्तत्साधनानां प्राप्तिश्चैव नरकः।

(४४) **जन्म**—शरीरं सन्धार्यात्मनः प्रगटानुभूतिरेव जन्म, तच्च पूर्वापरमध्य-(वर्तमान) भेदेन (रूपेण) त्रिविधम् ।

(४५) **जन्ममृत्यू**—आत्मना सह स्थूलदेहसंयोगो जन्म, वियोगश्च मृत्युरभिधीयते ।

(४६) **विवाहः**—ब्रह्मचर्यादिनियमपूर्वकं प्रसिद्ध्या स्वेच्छया च पाणिग्रहणं विवाहः ।

(४७) **नियोगः**—विवाहानन्तरं स्त्रीपुरुषयोर्मरणस्थितौ (वियोगे) वन्ध्यत्वनपुंसकत्वादिस्थिररोगस्थितौ वा स्त्रीपुरुषयोरापत्काले स्ववर्णस्थोत्तमवर्णस्थाभ्यां वा स्त्रीपुरुषाभ्यां परस्परसंयोगेन सन्तानोत्पत्तिकरणं नियोगः ।

(४८) **स्तुतिः**—गुणानां कीर्तनं श्रवणं ज्ञानं वा स्तुतिः, प्रीतिरादीनि स्तुतिफलानि भवन्ति ।

(४९) **प्रार्थना**—स्वसामर्थ्यप्रयोगानन्तरं सर्वेश्वरसम्बन्धेन यो विज्ञानादिलाभस्तदर्थं परमेश्वरतो याचनं प्रार्थना । निरभिमानत्वादिकञ्च प्रार्थनाफलं भवति ।

(५०) **उपासना**—परमेश्वरस्य परमपावनगुणकर्मस्वभावैरिवात्मनो-गुणकर्मस्वभावानामपि पवित्रीकरणं, परमेश्वरं सर्वव्यापकं स्वात्मानञ्च व्याप्यं विज्ञाय, ईश्वरस्य स्वात्मनः सामीप्यमात्मनश्चेश्वरसामीप्यमनुभूय योगाभ्यासेनास्या अनुभूतेरेव साक्षात्करणम् "उपासना" । ज्ञानोन्नतिरादिचोपासनाफलं भवति ।

(५१) **सगुणनिर्गुणस्तुतिप्रार्थनोपासना**—परमात्मनि स्थिता ये ये गुणास्तैस्तैर्युक्तं ये ये चाविद्यमानास्तैस्तैर्विरहितं (निर्लिप्तं) च तं (परमेश्वरं) मत्वा तस्य प्रशंसनं सगुणनिर्गुणस्तुतिः । शुभगुणग्रहणार्थमीश्वरतोऽभिलाषो दोषपरिहारार्थञ्च तस्य साहाय्ययाचनं सगुणनिर्गुणप्रार्थना । अथ च सर्वगुणसम्पन्नं दोषविरहितञ्च परमेश्वरं मन्यमानस्यात्मनस्तस्मैतदादेशेभ्यश्च विनीतसमर्पणं सगुणनिर्गुणोपासनाऽभिधीयते ।

संक्षेपेणैते स्वसिद्धान्ताः (मन्तव्याः) निर्दिष्टाः । एतेषां विशेषव्याख्यानञ्चास्मिन्नेवग्रन्थे-(सत्यार्थप्रकाशे) तत्तत्प्रकरणेषु ऋग्वेदादिभाष्यभूमिकादिग्रन्थेषु च विलिखितम् । अर्थात्-यद्यद् विषयं सर्वमान्यं तत्तन्ममाप्यभिमतम् । यथा सत्यभाषणं सर्वेभ्यः श्रेयस्करमनृतञ्चानर्थकरम् । एवं विधशाश्वतसत्यसिद्धान्तानहमपि श्रद्दधामि (स्वीकरोमि) । ये च मतमतान्तराणां परस्परविरोधिनो विवादाः, नाहं तानभिमन्ये । यत एभिरेव मतमतान्तरानुयायिभिर्मानवसमूहः स्वस्वभ्रान्तमतप्रचारेण भ्रान्तिमाधाय परस्परं विरोधीकृतः । एतत्सर्वं वृत्तजातं विखण्डयतो मे सर्वसत्यप्रचार-

प्रसारेण सर्वमानवसमूह-(मानवजगत्)-मैकमत्ये समानीय निर्द्वेषताञ्च नीत्वा परस्परप्रीतियुक्तं विधातुं सर्वलाभान्वितञ्च कर्तुं प्रयासोऽभिप्रायश्च । सर्वशक्तिमत्सर्वेश्वरानुकम्पया साहाय्येनाप्तजनानां समनुभावेन च सत्यसिद्धान्तोऽयं सर्वत्र भूगोलप्रदेशे-(सर्वस्मिन् भूमण्डले) सत्वरमेव प्रवृत्तः स्यात्, येन भूमण्डलस्थः सर्वजनसमूहः सहजभावेन धर्मार्थकाममोक्षाणां संसिद्धि विधाय समुन्नतिपथमनुसरन् हर्षनिर्भरो भवेदित्येतन्मे मुख्यं प्रयोजनम् ।

अलमतिविस्तरेण बुद्धिमद्वर्य्येषु ।

ओ३म् शन्नो मित्रः शं वरुणः । शन्नो भवत्वर्यमा ।
शन्न इन्द्रो बृहस्पतिः । शन्नो विष्णुरुरुक्रमः ।

नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्मावादिषम् । ऋतमवादिषम् । सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद् वक्तारम् । ओ३म् शान्तिः शान्तिः शान्तिः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्याणां परमविदुषां
श्रीविरजानन्दसरस्वतीस्वामिनां शिष्येण
श्रीमद्दयानन्दसरस्वतीस्वामिना विलिखितः—आचार्यरविदत्तगौतमेन देवगिरालंकृतः स्वमन्तव्यामन्तव्यसिद्धान्तः, तत्समन्वितो विरचितः सुप्रमाणयुक्तः सुभाषाविभूषितो
देववाण्यामनूदितः सत्यार्थप्रकाशोऽयं ग्रन्थश्च सम्पूर्तिमगमत् ॥